भास्करराय-ग्रन्थावली

[ द्वितीयो भागः ]

# नित्याषोडशिकार्णवः

भास्कररायप्रणीत-सेतुबन्ध-व्याख्यासंवलितः

कुलपतेः प्रो. अशोककुमारकालियामहोदयस्य प्रस्तावनया विभूषितः

सम्पादकः

डॉ. शीतलाप्रसाद-उपाध्यायः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वाराणसी

योगतन्त्र-ग्रन्थमाला

[ २४ ]

भास्करराय-ग्रन्थावली

[ द्वितीयो भागः ]

# नित्याषोडशिकार्णवः

भास्कररायप्रणीत-सेतुबन्ध-व्याख्यासंवलितः

कुलपतेः प्रो० अशोककुमारकालियामहोदयस्य प्रस्तावनया विभूषितः

सम्पादकः

डॉ. शीतलाप्रसाद-उपाध्यायः



सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वाराणसी

YOGATANTRA-GRANTHAMĀLĀ

[Vol.24]

## BHĀSKARARĀYA-GRANTHĀVALI

[ PART TWO ]

# NITYĀṢOḌAŚIKĀRṆAVAḤ

With the Commentary

**'SETUBANDHA'**

By

**BHĀSKARARĀYA**

*FOREWORD BY*

**PROF. ASHOK KUMAR KALIA**

VICE-CHANCELLOR

*EDITED BY*

**DR. SHITALA PRASADA UPADHYAYA**

Reader, Sāṅkhya-Yoga-Tantrāgama-Department

Sampurnanand Sanskrit University, Varanasi




VARANASI

2005

*Research Publication Supervisor—*
**Director, Research Institute**
Sampurnanand Sanskrit University
Varanasi.

**ISBN :** 81-7270-110-1 (Set)
**ISBN:** 81-7270-170-5 (Vol. II)



*Published by—*
**Dr. Harish Chandra Mani Tripathi**
***Director, Publication Institute***
Sampurnanand Sanskrit University
Varanasi-221 002



*Available at —*
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002



**First Edition,** 500 Copies
**Price :** Rs. 400.00



*Printed by —*
**Ratna Offsets Limited**
B 21/42 A, Kamachha
Varanasi-221 010

योगतन्त्र-ग्रन्थमाला

[ २४ ]

## भास्करराय-ग्रन्थावली

[ द्वितीयो भागः ]

# नित्याषोडशिकार्णवः

भास्कररायप्रणीत-सेतुबन्ध-व्याख्यासंवलितः

कुलपतेः प्रो० अशोककुमारकालियामहोदयस्य प्रस्तावनया विभूषितः


*सम्पादकः*

**डॉ० शीतलाप्रसाद-उपाध्यायः**

उपाचार्यः, सांख्ययोगतन्त्रागमविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी






**वाराणस्याम्**

२०६२ तमे वैक्रमाब्दे　　१९२७ तमे शकाब्दे　　२००५ तमे खैस्ताब्दे

*अनुसन्धान-प्रकाशन-पर्यवेक्षक: —*
**निदेशक:, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।

ISBN : 81-7270-110-1 (Set)
ISBN: 81-7270-170-5 (Vol. II)

❑

*प्रकाशक: —*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
***निदेशक:, प्रकाशन-संस्थानस्य***
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी-२२१ ००२

❑

प्राप्तिस्थानम् —
**विक्रय-विभाग:,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१ ००२

❑

**प्रथमं संस्करणम्** - ५०० प्रतिरूपाणि
**मूल्यम्** - ४००.०० रूप्यकाणि

❑

मुद्रक:—
**रत्ना ऑफ्सेट्स लिमिटेड**
बी २१/४२ ए, कमच्छा
वाराणसी- २२१ ०१०

# प्रस्तावना

भास्करराय-ग्रन्थावल्या द्वितीयभागात्मकं भास्कररायप्रणीत-**सेतुबन्ध**व्याख्या-संवलितं नित्याषोडशिकार्णवं तन्त्रशास्त्रानुशीलनपरायणानां मनीषिणां समक्षं समुपस्थापयतामस्माकं चेतः परमं प्रसीदति । एतत्सुमहत् सौभाग्यं यत् सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रकाशन-संस्थानेन **श्रीभास्कररायग्रन्थावली**-प्रकाशनस्य कापि सुविचारिता योजना प्रचालिता । अस्याः प्रकाशनयोजनायाः शुभारम्भोऽजायत **श्रीललितासहस्रनामस्तोत्र**स्य सौभाग्यभास्करव्याख्यायाः प्रकाश-नेन । योजनाया द्वितीयखण्डात्मकोऽयं ग्रन्थो नित्याषोडशिकार्णवटीकास्वरूपः '**सेतुबन्धः**' भास्कररायोपज्ञः ।

आचार्यश्रीभास्कररायः पूर्वाचार्याणां मतालोचनपुरःसरं सेतुबन्धाभिधं कादिमतप्रतिपादकं व्याख्यानं प्रस्तौति । हादिविद्या कादिविद्या च श्रीविद्याया द्वौ प्रभेदौ मुख्यत्वं भजेते । हादिविद्या कामेश्वरपरा, कादिविद्या च कामेश्वरीपरा स्वीक्रियते तन्त्रविद्भिः । कादिविद्यामन्त्रस्तु कामेश्वरकामेश्वर्योरुभयोरपि वाचको ललितात्रिशतीवचनात् । नित्याषोडशिकार्णवस्य प्रथमविश्रामस्याष्टमश्लोकस्य व्याख्यानावसरे महामाहेश्वरः श्रीभास्कररायः स्वयं कथयति— 'ईकाररूपैरक्षरैः प्राधान्येनोद्धारो यस्यास्तां कादिविद्यारूपां महादेवीं महाविद्यां प्रणमामि' (पृ. १५) । महादेवीयं परमानन्दरूपिणी । यतो हि परम आनन्दो मोक्षः, 'एतस्यैवाऽऽनन्द-स्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतिप्रमाणत्वात् । तं परमं रूपयति प्रयच्छति । अत एवाहुः काश्मीराः — ईकारस्य बिन्दुविसर्गात्मनः शिवशक्त्योः सामरस्यरूपस्य स्वात्मत्वेन भावनायां परमानन्दानुभवः । एतादृशं परमानन्दानुभवप्रयोजनकं वामकेश्वरतन्त्रापरनामानं नित्याषोडशिकार्णवं व्याकरोति भारतीदीक्षितोपाह्वः श्रीमद्भास्कररायः । यथा तेनैवोक्तम्—

**वामकेश्वरतन्त्रस्थे नित्याषोडशिकार्णवे ।**
**पूर्वोत्तरचतुःशत्यौ व्याचष्टे भास्करः सुधीः ॥**

(सेतुबन्धव्याख्या, १.२)

आचार्योऽयं श्रीगम्भीररायेण कोनमाम्बादेव्याः कुक्षितो जनिं लेभे । श्रीगम्भीररायः कर्णाटधरास्थिते बीजापुरनगरे तत्रत्यस्य तुरुष्कशासकस्य साचिव्यमकरोत् । तत्रैव तेन गीर्वाणगीरसिकस्य निजाश्रयदातुः प्रीत्यर्थं महाभारतं पारसीकभाषायामनूदितम् । ततः प्रभृत्येव तद्वंशीया भारतीपदाभिधां धारितवन्तः । भारतीदीक्षितोपाह्वाः श्रीभास्कररायमहोदया विद्वन्मण्डलीमण्डली-केभ्यः स्वतातपादेभ्यः श्रीगम्भीररायेभ्यः सर्वाणि शास्त्राणि समधिगतवन्तः ।

पुनश्च ते श्रीनृसिंहाध्वरिगुरोविद्याष्टादशकस्य मर्मभिदभूवन् त्रिपुरहरनगरे वाराणसीपदभाजि । श्रीशिवदत्तशुक्लचरणेषु शिवशक्त्युपासनयोः पूर्णाभिषिक्तो नगरे नगरे विभ्राम्य विहितशास्त्रार्थाः स्ववशवर्तीकृतविजययशःपताकाः समुपायनीकृतसम्मानास्ते विविधविषयसंवलितान् षट्सप्ततिमितान् ग्रन्थान् व्यरेचुः । किञ्च विंशतिमिता एव ग्रन्था इदानीं यावत्प्राकाश्यमानीता भाट्टचन्द्रिका-वरिवस्यारहस्य-शिवदण्डकप्रभृतयः । गगनाभोगपरिमितपाण्डित्यानां भास्कररायाणां तैत्तिरीयोपनिषद्भाष्य-तान्त्रिकीहोमपद्धति-प्रदोषार्चनभास्कर-वादकौतूहल-माला-मन्त्रोद्धार-नवरत्नमालिका-शाहजिप्रशस्तिप्रभृतयो ग्रन्था इदानीमपि वर्तन्तेऽमुद्रिताः । परं सौभाग्याद्धस्तलिखितग्रन्थरूपेणोपलभ्यन्ते सर्वेऽपि । तेषामेव प्रकाशनाय विश्वविद्यालयेनानेन योजना परिचालिता । तत्र दुर्भाग्यवशात् सम्पादकरूपेण नियोजिताः **पण्डितश्रीबटुकनाथशास्त्रिखिस्ते**महाशया यशःकायजीविनः सञ्जाताः । तेषां सहायको **डॉ. शीतलाप्रसाद-उपाध्यायो** भगीरथपथवर्तिनः सन्तो द्वितीय-भागात्मकं ग्रन्थममुं सुसम्पाद्यास्माकं पुरः प्रस्तौति, एतदर्थं डॉ. उपाध्यायमहोदयान् भूयो भूयोऽभिनन्दामि वर्द्धापनेन भूषयामि च ।

अतः परं ग्रन्थप्रकाशनतत्पराः प्रकाशनसंस्थाननिदेशका गुणानुरागैकपक्षधराः **डॉ. हरिश्चन्द्रमणित्रिपाठिनो**ऽपि ससहाया मयाऽभिनन्द्यन्ते जयजीववाग्भिः ।

अस्य ग्रन्थरत्नस्य भूयः प्रचारार्थं भवानीविश्वनाथयोः करकञ्जेषु समर्पयन् प्रार्थयमानो विश्वसिमि निष्प्रत्यवायं पूर्तिमुपैष्यतीयं प्रकाशनयोजना, अथ च विद्यारसरसिकानपि अनुरञ्जयिष्यति ।

**( प्रो. अशोककुमारकालिया )**
**कुलपतिः**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

**वाराणसी**
पौषकृष्णाष्टमी,
२०६२ विक्रमाब्दः
(२४-१२-२००५ खीष्टाब्दः) ।

# प्रकाशकीयम्

अथ प्रस्तूयते महदानन्दभरहृदयेन भास्कररायोपज्ञं नित्याषोडशिकार्णवस्यापूर्वं व्याख्यानं **सेतुबन्धा**भिधम् । वामकेश्वरतन्त्रस्य नित्याषोडशिकार्णवोऽयमतिगहनः फणिमण्डलव्याप्तः, तमुद्धर्तुं श्रीमद्भास्कररायेण सेतुबन्धः प्रवर्तितः । यथोक्तं तेनैव —

**वामकेश्वरतन्त्रस्थे नित्याषोडशिकार्णवे ।**
**पूर्वोत्तरचतुःशत्यौ व्याचष्टे भास्करः सुधीः ॥**
**नित्याषोडशिकार्णवनाम्नि तन्त्रे शिवैकपरतन्त्रे ।**
**अतिगहने फणिपटले स्पन्दितुमपि कः क्षमो मनुजः ॥**
**यद्यप्येवमथापि तु पूर्वाचार्यैः प्रदर्शितं सेतुम् ।**
**दृढबन्धैरुद्धर्तुं गुरुभक्त्यैव प्रवर्तितोऽस्मि बलात् ॥**

(सेतुबन्धव्याख्यायाम्, १ । २-४)

इमे भास्करराया नित्याषोडशिकादेव्या भक्ताग्रगण्यास्तान्त्रिकमूर्धन्याः काश्यामेव स्वजीवनस्य भूयांसं भागमत्यवाहयन् । एतैः प्रणीता ग्रन्थास्तत्तच्छास्त्रेषु श्रेष्ठं स्थानं भजन्ति सम्प्रत्यपि । इमे महानुभावा विविधविषयसम्बद्धान् षट्सप्तति-मितान् ग्रन्थान् रचयामासुः । भास्कररायाणां जीवनावधिः १६७५ खैस्ताब्दात् १७६८ मितखिस्ताब्दं यावदासीदिति तेषां ग्रन्थेष्वेवोपलब्धैः साक्ष्यैर्निश्चीयते । श्रीमन्तो भास्कररााया भारतवर्षस्य श्रेष्ठविभूतिष्वन्यतमाः । विपश्चिदपश्चिमाः '**भारती**' इत्युपनामभाजः सोमयाजिनः श्रीविश्वामित्रवंश्याः श्रीगम्भीरराया अस्य पिता, माता च कोनमाम्बा । श्रीनृसिंहाद् गुरोः सकलशास्त्राण्यधीतानि । एषां महानुभावानां मातापितृगुरुचरणेषु अनन्यानुरक्तिरासीत् । ग्रन्थारम्भे इमान् नाथत्रयीं मत्वा स्वकीयां श्रद्धामर्पयत् । तद्यथा—

**श्रीगम्भीरविपश्चितः पितुरभूद्यः कोनमाम्बोदरे**
**विद्याष्टादशकस्य मर्मभिदभूद्यः श्रीनृसिंहाद्गुरोः ।**
**यश्च श्रीशिवदत्तशुक्लचरणैः पूर्णाभिषिक्तोऽभवत्**
**स त्रेता त्रिपुरा त्रयीति मनुते तामेव नाथत्रयीम् ॥**

(सेतुबन्धव्याख्यायाम्-१/१)

इमे श्रीमन्तो भास्करराया: कर्णाटकप्रदेशे लब्धजन्मानस्तत्रैव कुलपरम्परा-क्रमेण पितु: सकाशात् प्राप्तसर्वविद्या: सर्वविद्याराजधानीं काशीं समागता: स्वपाण्डित्यप्रतिष्ठापनार्थम् । चिराय काश्यां जीवन्त: पण्डितमण्डलेषु लेभिरे महद्यश: । अत्रैव काश्यां प्राणैषीद् बहून् ग्रन्थान् । अयं नित्याषोडशिकार्णवोऽपि काश्यामेव निर्मापयत इति स्पष्टमेव स्वयमुल्लिखति ग्रन्थान्ते श्लोकभागे । तद्यथा —

**श्रीविश्वामित्रवंश्य: शिवभजनपरो भारती सोमपीथी**
**काश्यां गम्भीरराजो बुधमणिरभवद्भास्करस्तस्य सूनु: ।**
**क्षेत्रे श्रीसप्तकोटीश्वरपुरि शिवरात्रौ शके शर्मचापे**
**नित्याषोडश्युदन्वत्परतटगतये सेतुमेतं न्यबन्धात् ॥**

सम्प्रदायक्रमेण स्ववेदशाखां प्रख्याता: सर्वा: स्मृती: श्रौत-गृह्य-धर्मादिसूत्राणि व्याकरण-न्याय-मीमांसादीनि सर्वाणि दर्शनानि विशिष्य च नानाविधान् तन्त्रशास्त्रग्रन्थान् तन्मूलभूतान् आगमाँश्च सम्यगधीत्य भगवत्या: पराशक्तेर्विविधेषु उपासनामार्गेषु प्राप्तावबोधो भास्कररायोऽनन्यसुलभां यश:पताकामुत्तोलयत् ।

परमश्रद्धेयानां प्रो. वि. वेङ्कटाचलमहोदयानां भास्कररायग्रन्थावल्या: प्रथमभागस्य शिवसङ्कल्पेन ज्ञायते यद् भारतीदीक्षितोपनामा भास्कररायो नानाशास्त्रसंवलितान् षट्सप्ततिमितान् ग्रन्थान् जग्रन्थ । तेषु विंशतिमिता एव ग्रन्था इदानीं यावत्प्राकाश्यमानीता: । तावन्त एव ग्रन्था इदानीमप्यमुद्रिता वर्तन्ते, परन्तु सौभाग्यवशाद्धस्तलिखितग्रन्थरूपेणोपलब्धा: । इतोऽन्याश्च ग्रन्थान्तरेषु प्राप्तोल्लेख-शेषा विद्यन्ते ।

भारतीदीक्षितभास्कररायाणां सर्वे ग्रन्था देशस्य विभिन्नेषु स्थानेषु प्रकाशिता:, ये क्वचिदप्यप्रकाशिताश्च कतिपये, ते सर्वे सङ्गृह्य समग्रतया पुनरपि प्राकाश्य-मुपनेतव्या इति निरणायि सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन । तमेनं निर्णयमनुसृत्यैव भास्कररायग्रन्थावल्या: प्रथमभागरूपेण श्रीललितासहस्रनामस्तोत्रस्य सौभाग्य-भास्करभाष्यम् आचार्यश्रीबटुकनाथशास्त्रिखिस्तेमहोदयस्य सम्पादकत्वे प्रकाशितम् । सम्प्रति समग्रग्रन्थावल्यां प्रकाशनस्वप्नदर्शिनि पण्डितश्रीबटुकनाथशास्त्रि-खिस्तेमहोदये यशश्शेषे तेषां सहकर्मभिर्योगतन्त्रागमविभागस्योपाचार्यै: **डॉ. शीतलाप्रसादोपाध्यायै**र्द्वितीयो भागो नित्याषोडशिकार्णवस्य व्याख्यानस्वरूप: **'सेतुबन्ध:'** तन्त्रशास्त्रपरायणेभ्य: समुपायनीक्रियते । प्रकाशनकर्मण्यस्मिन् डॉ. उपाध्यायानां योगदानमप्यविस्मरणीयं वर्तते । इमे विद्यापथपथिका जगज्जनन्या ललिताम्बाया: प्रसादेन स्वगुरो: पथि पथिकीभूय तत्सदृशयश: समासाद्य भूयाच्छ्रेयोभाजनम् ।

सर्वोऽपि प्रकाशनोपक्रमस्तत्पूर्तिश्च विश्वविद्यालयस्यास्य कुलपतीनां प्रेरणया समुत्साहेन च सम्पद्यते, अतस्तेभ्य: कुलपतिवर्य्येभ्य: **प्रो. अशोककुमारकालिया-**

महोदयेभ्यः साधुवादमुपनयामि । पुनश्च जगन्मातुश्चरणकमलयोस्तेषामनामयं सौभाग्यं यशश्श्रीश्च भूयो-भूयः प्रार्थयामि ।

ग्रन्थमुद्रणे निसर्गशूरा रत्नामुद्रणालयस्य निदेशका **डॉ. विपुलशङ्करपण्ड्या-** श्चास्माकं साधुवादानामभिनन्दनवादानाञ्च भाजनमिति ।

अन्ते भास्कररायग्रन्थावल्या द्वितीयभागं सान्नपूर्णस्य भूतभावनस्य भगवतः श्रीकाशीविश्वनाथस्य करकमलेषु समर्प्य प्रार्थयामि यत् प्रकाशनोपक्रमोऽयं निष्प्रत्यवायं पूर्तिमुपेयात् ।

विद्वद्वशंवदः

**( डॉ. हरिश्चन्द्रमणित्रिपाठी )**
**निदेशकः**
प्रकाशन-संस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

**वाराणसी**
मार्गशीर्षपूर्णिमा
२०६२ वैक्रमाब्दः
(१५-१२-२००५ ख्रीष्टाब्दः)

# उपोद्धातः

अथ प्रस्तूयते भगवत्यास्त्रिपुरसुन्दर्या उपासनापरं **नित्याषोडशिकार्णव-ग्रन्थरत्नस्य** आचार्यश्रीभास्कररायोपज्ञं **सेतुबन्धा**भिधानमपूर्वव्याख्यानम् । ग्रन्थोऽयं गोमान्तक(गोवा)क्षेत्रान्तर्गते श्रीसप्तकोटीश्वरपुरे शर्मचापशके (सन् १७३४ ई.) शिवरात्रौ तेन समापितः । सोऽयं भास्करराय: श्रीमद्भगवत्पादानां शङ्कराचार्याणां परम्परामनुसृत्य श्रीललितादेव्या भक्ताग्रणीस्तान्त्रिकमूर्धन्यः सम्पूर्णे भारतवर्षे महतीं प्रतिष्ठां लब्धवानिति न तिरोहितं कस्यापि । अस्याचार्यस्य सप्ततिमिताः कृतयः सन्तीति विभिन्नस्रोतोभ्यो ज्ञायते । एतेषां विशिष्टग्रन्थानां प्रकाशनस्य प्रक्रमे **भास्कररायग्रन्थावली**ति नाम्नी काचन प्रकाशनयोजना सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन समारब्धा । तस्या एव द्वितीयपुष्परूपेणायं महनीयो ग्रन्थः प्राकाश्यमानीयते । यद्यपि ग्रन्थोऽयम् इतः पूर्वमपि आनन्दसागरमुद्रणालयेन प्रकाशितोऽभूत्, तथापीदानीमपेक्षितसंशोधनैः सह परिशिष्टादिनाऽपि संयोज्य सुधीजनानां करकमलयोरुपायनीक्रियते ।

आगमा मुख्यतया त्रिधा विभक्ताः — भेदप्रधानाः, भेदाभेदप्रधानाः, अभेदप्रधानाश्च । तत्रापि भेदप्रधाना दशधा, भेदाभेदप्रधाना अष्टादशधा तथाऽभेदप्रधानाः चतुष्षष्टिधा विभक्ताः सन्ति । इत्थमागमानामनेकत्वं दृश्यते । सत्यपि विभेदे एष्वागमेषु बहुत्र साम्यमपि दृश्यते । यद्यपि शैव-शाक्तदर्शनानि प्रायः सर्वाण्येवागमानाश्रयन्ते, तथापि काश्मीरशैवदर्शनस्य प्रधानं स्रोतोऽभेद-प्रधाना आगमा एव । एतेषु चतुषष्टिसंख्याकेषु सौर-भर्गशिखाप्रभृतीनां षण्णामागमानां विशिष्टं महत्त्वं विद्यते । तत्रापि पूर्वोत्तररूपेण वर्गद्वयं प्राप्यते, प्रत्येकं च वर्गे त्रयाणामागमानामुल्लेखः समुपलभ्यते । उत्तरवर्गान्तर्गतास्त्रय आगमा एव काश्मीरशैवदर्शनस्य मुख्याधारत्वेन स्वीकृताः सन्ति । ते च त्रय आगमाः सिद्धा-वामक[1] -मालिनीनामभिः प्रसिद्धाः सन्ति । एतेषां त्रिकागमाः षडर्धागमा वेत्यपि संज्ञा ।

तत्र वामकतन्त्रस्य सिद्धान्ता वामकेश्वरशास्त्रे प्रतिपादिताः सन्ति । नित्याषोडशिकार्णवोऽयं ग्रन्थ एतच्छास्त्रान्तर्गतो विद्यते । अस्योपरि उपलब्धासु व्याख्यासु सर्वप्राचीना राजानकजयरथकृता वामकेश्वरीमतविवरणाभिधाना समुपलभ्यते । अस्यां व्याख्यायां राजानकजयरथेन आचार्य ईश्वरशिवः,

---

१. आगमोऽयं जयरथकृततन्त्रालोकविवेके (पृ. ४९) 'नामक' इति नाम्ना व्यपदिष्टोऽस्ति, किन्तु स पाठः प्रामादिक इव प्रतीयते । एतद्विषये विस्तृतं विवेचनं प्रो. व्रजवल्लभद्विवेदिविरचिते 'तन्त्रागमीय धर्म-दर्शन' ग्रन्थे (भाग-१, पृ. ४२३) तथा पं. बलजिन्नाथपण्डितरचिते 'काश्मीर शैवदर्शन'निबन्धे (संस्कृत साहित्य का बृहद् इतिहास, एकादशखण्ड, पृ. २१८) द्रष्टव्यम् ।

आचार्यः कल्याणवर्मा च कश्मीरेषु त्रिपुरादर्शनस्यावतारकौ स्वीकृतौ । एवमेव आचार्यो विश्वावर्तोऽस्य दर्शनस्य प्रवर्तकरूपेण स्वीकृतः । तथा चोक्तं तेन प्रथमपटले चक्रासनस्थविद्यावर्णनप्रसङ्गे— "तत्र प्राक्पक्षोपेक्षणं चान्यैरेवं हि श्रीमदीश्वरशिवमतेन यथा इह चक्रासनोद्धारस्तथैव राजानककल्याणवर्ममतेन पर्यवसित इति यादृक् तादृक् प्रायन्यायोपन्यासकेन तावदाशयेन कृतं न विद्मः, एवं हि पर्यवसिते को दोषः स्यात् । वस्तुतो हि अस्य दर्शनस्य एतदेव आचार्यद्वयं कश्मीरेषु अवतारकम् । ततश्च श्रीविश्वावर्तमुखेनैव लक्ष्यते यत्, तदेव इदमस्मत्पर्यन्तं शिष्यप्रशिष्यक्रमेण सर्वेषामपि प्राप्तम् । एवं च तयोराप्तत्वाविशेषात् तन्मतमेव सर्वात्मना प्रमाणम् । ततश्च तुल्यप्रमाणत्वात् तन्मतयोर्विकल्पो न्याय्यः, न तु एकतरपक्षपरित्यागः । प्रत्युत श्रीमदीश्वरशिवाचार्यमतस्य बलवत्त्वं लक्ष्यते, यतः स एव श्रीरसमहोदधिश्लोकानां साक्षात्प्रवर्तयितेति सर्वत्राविगीता प्रसिद्धिः" (पृ. ४८) । अन्यत्रापि अपरस्मिन् स्थले चोक्तं तेन — "कश्मीरेषु श्रीमान् विश्वावर्त एवास्य दर्शनस्य साक्षात्प्रवर्तयितेति" (पृ. १२५) ।

यद्यपि जयरथेन स्वपूर्ववर्तिनां दीपिकाचार्य (दीपकनाथो वा)-नरवाहनदत्त-शङ्करराशि-अल्लट-ईश्वरशिवाचार्य-राजानककल्याणवर्म-विश्वावर्त-बुप्पाराहुल-अनन्तविजयप्रभृतीनामनेकेषामाचार्याणामुल्लेखः कृतो वर्तते[१], तथापि स ईश्वरशिवे एव विशिष्टमादरं प्रदर्शयति । ईश्वरशिवो रसमहोदधे रचयिता । रसमहोदधिर्नित्याषोडशिकार्णवस्य वार्तिकमिति जयरथग्रन्थादवगम्यते । ईश्वरशिवः शूरमठाधिपतिरप्यासीदिति विभिन्नप्रमाणैरवगम्यते । शूरमठस्यास्य स्थापना नवमशताब्द्यां (सन् ८५५-८८३ ई.) राज्ञोऽवन्तिवर्मणो मन्त्रिणा शूरेण कृता । जयरथेन एतच्छास्त्रस्य कुव्याख्यां विहितवतां स्वात्मानं चर्यानन्दनाथस्य शिष्यंमन्यानामनेकेषां पूर्वाचार्याणामालोचनापि कृता वर्तते— "अलं चर्यानन्दनाथोपदेशविषदप्रतिभाविभवैः सह संभाषितेन" (पृ. ३४) ।

महात्रिपुरसुन्दरीं पराशक्तित्वेन व्यपदिश्य स्वीयदर्शनोपास्यत्वं च तस्या व्यवस्थाप्य जयरथो भगवत्यास्त्रिपुरसुन्दर्याः काश्मीरशैवदर्शनसम्प्रदायेऽप्युपासना भवतीति सूचयति । तथा हि वामकेश्वरीमतविवरणे स तत्र तत्रोल्लिखति । यथा—"देहादौ बोधैकघनपरमात्मस्वरूपः प्रोक्तवक्ष्यमाणलक्षणां श्रीत्रिपुरां मातृकाशब्दव्यपदिष्टामस्मद्दर्शनप्रख्योपाख्यां श्रीमहात्रिपुरसुन्दरीं पूर्वादिदिङ्निविष्टेषु चतुर्ष्वपि पीठेषु सातत्येन वर्तमानाया अपि अनुग्रहाज्ञायाः कालबलेन प्रम्लायन्त्यास्तत्तत्सिद्धयोगिन्यादिप्रमुखेन पुनः पुनरवतारणात् कोशभूतां गञ्जप्रायामाकरभुवमित्यर्थः" (पृ. १५) । तथा चाग्रे — "परिपूर्णप्रकाशैकघनत्वात् ध्यातृध्येयभावाघटनादिति पराहंपरामर्शचमत्कारमयी शक्तिरेवास्मद्दर्शने विश्रान्तिधामतया एष्टव्या, यैव स्पन्द-

१. इमे आचार्याः प्रकाशिते जयरथकृतवामकेश्वरीमतविवरणे क्रमशः १ एवं ११५, २, ४७ एवं ५४, ५४, ४७-४८, ४८ एवं ११७, ४८ एवं १२५, १२५, १२६ पृष्ठेषु स्मृताः सन्ति ।

स्फुरत्ता-सार-ऊर्मि-हृदय-सद्भाव-संकर्षिणी-त्रिपुरादिशब्दैस्तत्र तत्र सर्वत्रोद्घोष्यते'' (पृ. १०३) । अपि च — ''सेयं पराशक्तिरेवमव्यक्ताऽपि तत्त्ववर्णशक्तित्रयात्मना व्यक्तिमागता सती अस्मद्दर्शनोपास्या श्रीत्रिपुरेत्युच्यत इति वाक्यार्थः'' (पृ. १०७) ।

नित्याषोडशिकार्णवस्योपलब्धटीकास्वन्यतमा द्वितीया टीका ऋजुविमर्शिनी । महार्थमञ्जरीकारस्य महेश्वरानन्दस्य परमगुरुराचार्यः शिवानन्दोऽस्या रचयिता । सोऽपि त्रिपुरासम्प्रदायस्य कश्मीरेषु प्रादुर्भावं स्वीकरोति[१] । सेतुबन्धेऽपि भास्कर-रायः ''एतामेव'' (४.६९-७०) इतिश्लोकयोर्व्याख्यानावसरे भगवत्पादकृतसौन्दर्य-लहर्या उपरि नित्याषोडशिकार्णवस्य प्रभावं प्रतिपादयति । एतेन प्रमाणितं भवति यदाद्यशङ्कराचार्यात् प्रागपि कश्मीरेष्वस्य तन्त्रस्य पर्याप्तः प्रचारः प्रसारश्चासीत् ।

नित्याषोडशिकार्णवस्त्रिपुरासम्प्रदायस्य महत्त्वपूर्णो ग्रन्थः । वामकेश्वर-शास्त्रनाम्नाप्यस्योल्लेखः प्राप्यते । वामकेश्वरतन्त्रं वामकेश्वरीमतं चतुश्शती-त्यादीन्यप्यभिधानान्यस्य प्राप्यन्ते । सत्स्वप्यनेकेष्वभिधानेषु यतोऽस्मिन् ग्रन्थे षोडशनित्याः सूचिताः, अतोऽयं ग्रन्थो नित्याषोडशिकार्णवपदेनापि प्रसिद्धो जातः । ग्रन्थोऽयं वामकेश्वरशास्त्रविशेष इति मन्यन्ते विद्वांसः । समग्रस्य शास्त्रस्य विषये नाद्यावधि किमपि पुष्टं प्रमाणमुपलभ्यते, येन तस्य समग्रं स्वरूपं निर्धारयितुं शक्येत । अयं हि बहुरूपाष्टकशास्त्रस्य संक्षेपभूत इति अर्थ-रत्नावलीकारविद्यानन्दवचसाऽवगम्यते । तथा हि स अर्थरत्नावलीव्याख्याने आदावेवोल्लिखति । शिवानन्दमतानुसारं योगिनीहृदयस्य नित्याषोडशिकार्ण-वान्तर्गतत्वं नास्ति । यतो हि तेन पञ्चपटलीपर्यन्तभाग एव नित्याषोड-शिकार्णवपदेन स्वीकृतः । अवशिष्टानां त्रयाणां पटलानां योगिनीहृदयमिति पृथक् संज्ञा तदभिमता, किन्तु भास्कररायसम्मतौ पूर्वोत्तरचतुश्शत्यात्मकः सर्वोऽपि ग्रन्थो नित्याषोडशिकार्णवपदेनाभिप्रेतव्यः । तथा च तदनुसारं योगिनी-हृदयस्याप्येतद्ग्रन्थान्तर्गतत्वमेव विद्यते, न तु स्वतन्त्रग्रन्थत्वम् ।

श्रीमदाद्यशङ्कराचार्यैर्हि सौन्दर्यलहर्यां ''चतुष्षष्ट्या तन्त्रैः'' (श्लो. ३१) इत्यादिना चतुष्षष्टितन्त्राण्युक्त्वा भगवत्यास्तदितरतन्त्रं ''स्वतन्त्रं ते तन्त्रं'' इत्यादिना तत्रैव प्रोक्तम् । तत्र पञ्चषष्टितमं तन्त्रं किमिति जिज्ञासायां विवदन्ते विद्वांसः । तथा हि ज्ञानार्णवाख्यं तन्त्रं स्वतन्त्रं तन्त्रमिति गौरीकान्तमतम् । अन्ये तु तन्त्रराजतन्त्रमेव पञ्चषष्टितन्त्रत्वेन स्वीकुर्वन्ति । सौभाग्यवर्धनीकारस्तु कादिमतं स्वतन्त्रतन्त्रत्वेन स्वीकरोति। एतेषां सर्वेषां मतानां परिशीलनेन स्पष्टीभवति यद् भास्कररायस्य सिद्धान्त एवात्र समीचीनः । तदनुसारं नित्याषोडशिकार्णव एव पञ्चषष्टितमतन्त्र-त्वेनाभिप्रेतः । विस्तरश्चास्मिन् विषये प्रकृतग्रन्थे (पृ. ५) द्रष्टव्यः ।

---

१. ''सम्प्रदायस्य कश्मीरोद्भूतत्वात्'' — नित्याषोडशिकार्णवः (पृ. ११४); सम्पादकः प्रो. व्रजवल्लभद्विवेदः ।

नित्याषोडशिकार्णवमधिकृत्य नैकानि व्याख्यानानि रचितानीति विभिन्नैः प्रमाणैरवगम्यते, तथाप्यद्यावधि पञ्चैव व्याख्यानान्युपलब्धानि[१]। तेषु प्रथमं जयरथकृतं वामकेश्वरीमतविवरणाख्यमिति सूचितमेव प्राक्। अस्य प्रकाशनं कश्मीरसंस्कृत-ग्रन्थावल्यन्तर्गततया (ग्रन्थाङ्कः ६६) १९४५खैस्ताब्दे जातमस्ति। शिवानन्दकृता 'ऋजुविमर्शिनी', विद्यानन्दकृता 'अर्थरत्नावली' चाप्यस्योपलब्धे व्याख्याने स्तः। ते च द्वे अपि समूले सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतो योगतन्त्रग्रन्थमालायाः प्रथम-पुष्पत्वेन १९६८खैस्ताब्दे प्रकाशिते। उक्तव्याख्यात्रयं नित्याषोडशिकार्णवस्य प्रथम-पञ्चपटलपर्यन्तमेव विद्यते। चतुर्थं व्याख्यानम् अमृतानन्दनाथकृतं षष्ठसप्तमाष्टम-पटलेष्वेवोपलभ्यते। अस्यापि प्रकाशनं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन सरस्वतीभवनग्रन्थमालान्तर्गतं (ग्रन्थाङ्कः ७) १९२३खैस्ताब्दे कृतम्। अस्माभिः प्रस्तुतमिदं व्याख्यानं भास्कररायकृतं सेतुबन्धाभिधानमितरव्याख्यापेक्षया किञ्चिद् वैशिष्ट्यमावहति। यतो हीदं सर्वेष्वप्यष्टसु पटलेषु समुपलभ्यते।

वामकेश्वरीमतविवरणे पूर्ववर्तिव्याख्याकाराणां मतानि दूषयन् जयरथ ईश्वर-प्रत्यभिज्ञा-तन्त्रालोकादिप्रामाण्येन स्वकीयं व्याख्यानमतिशाययति। अत्र मूलविद्या-समुद्धारावसरे कादिविद्या समुद्धृता। ऋजुविमर्शिन्यामपि प्रत्यभिज्ञादर्शनानुसारिणी व्याख्योपस्थापिता शिवानन्देन। तन्त्रालोकोऽत्र त्रिंशिकाशासनषडध्वसारशास्त्र-प्रभृतिभिर्नैकशः स्मर्यते। मूलविद्यासमुद्धारप्रकरणे हादिविद्या प्रतिपादिताऽत्र। अर्थरत्नावली प्राधान्येन कौलिकं मतमनुव्याख्याति स्पष्टतया। अत्रोत्तरषट्कशास्त्रं, सिद्धनाथपादः, सङ्केतपद्धतिश्चास्या व्याख्यायाः प्रधानमवलम्बनं दृश्यते। यद्यपि टीकेयं हादिविद्यामेव बहु मानयति, तथाप्यत्र तत्र तत्र स्थलेषु कादिविद्यानुसारिणीं व्याख्यामुपस्थाप्यैवानन्तरं हादिविद्या व्याख्यायते। अमृतानन्देन स्वीया व्याख्या हादिविद्यानुसारिणी कृता।

सेतुबन्धः कादिमतप्रतिपादकं व्याख्यानमस्ति। व्याख्यानेऽस्मिन् ग्रन्थकृता भास्कररायेण प्रायः सर्वेषामपि पूर्वाचार्याणां मतानि निरस्य स्वसम्प्रदायानुसारं स्वीयः सिद्धान्तः संस्थापितः। ऋजुविमर्शिनी, अर्थरत्नावली, योगिनीहृदय-दीपिका चात्र शतशः समालोच्यन्ते, न केवलं हादि-कादिसम्प्रदायभेददृष्ट्यैव, अपि तु विविधपदव्याख्यानप्रसङ्गादिष्वपि। समग्रममुं ग्रन्थं कादिपरतया व्याख्याय तेन शिवानन्दप्रभृतीनां पूर्ववर्तिनां मतानि खण्डितानि। यद्यपि जयरथव्याख्यानमपि कादिपरमेव, तथापि तन्मतमपि प्रकारान्तरेण संदूष्य भास्कररायेण स्वसम्प्रदायगतसिद्धान्तस्य वैशिष्ट्यं दृढीकृतम्।

---

१. एतदतिरिक्तं काशीनाथभट्टकृताऽन्या मातृका चक्रसङ्केतचन्द्रिकेति नाम्नाऽपि समुपलभ्यते, यस्या विस्तृतं विवरणं सारस्वतीसुषमायां पण्डितराजश्रीराजेश्वरशास्त्रिद्रविडविशेषाङ्के (पृ. ४०७) द्रष्टुं शक्यते। मातृकेयं षष्ठविश्राममात्रस्य व्याख्या।

विभिन्नव्याख्यानानां पर्यालोचनेन मूलग्रन्थस्य श्लोकसंख्यायामपि किञ्चित्तारतम्यं दृश्यते । तत्र सेतुबन्धकृतैवाधिकश्लोकानां ग्रहणं कृतमित्यपि वैशिष्ट्यमेतस्य । तच्चैतत्तारतम्यमधोलिखितविवरणेन ज्ञातुं शक्यते । अत्र व्याख्याभेदेन श्लोकसंख्या प्रदर्श्यते—

| | जयरथकृत-वामकेश्वरीमत-विवरणे | शिवानन्दकृत-ऋजुविमर्शिन्याम् | विद्यानन्दनाथ-कृत-अर्थरत्नावल्याम् | अमृतानन्दनाथ-कृतयोगिनीहृदय-दीपिकायाम् | भास्करराय-कृतसेतुबन्धे |
|---|---|---|---|---|---|
| प्रथमे | १६८ | १८८ १/२ | १७१ १/२ | ......... | २०४ |
| द्वितीये | ७८ १/२ | ७९ १/२ | ७९ १/२ | ......... | ८१ |
| तृतीये | २८ | २८ | २८ | ......... | २८ १/२ |
| चतुर्थे | ७० | ७१ | ७१ | ......... | ७३ |
| पञ्चमे | ३३ | ३३ | ३३ | ......... | ४४ |
| प्रथमे/षष्ठे वा | ....... | ......... | ........ | ८६ | ८६ १/२ |
| द्वितीये/सप्तमे वा | ...... | ....... | ....... | ८५ १/२ | ८५ १/२ |
| तृतीये/अष्टमे वा | ...... | ....... | ....... | २०४ | २१२ |

आचार्यप्रवराः शास्त्रस्यास्य मूलश्लोकानां संख्यासन्दर्भे प्रतिपटलानुसारं स्वीये सेतुबन्धे भणन्त्येवम्—"एवं प्रथमपटलेन चतुरधिकद्विशतश्लोकेन (पृ. ८९), एवमेकाशीतिश्लोकात्मकेन द्वितीयपटलेन (पृ. ११३), एवं सार्धाष्टाविंशत्या श्लोकैर्घटितेन तृतीयपटलेन (पृ. १२१), एवं त्रिसप्तत्या श्लोकैश्चतुर्थपटलेन (पृ. १४९), एवं चतुश्चत्वारिंशता श्लोकैर्मन्त्रसाधनस्यैव प्रकारो बाह्य आन्तरश्च संक्षिप्योक्तः (पृ. १६२) ।" एतावता एभिर्वाक्यैरस्याः पञ्चपटल्यास्तेन सार्धत्रिंशदधिकचतुश्शतश्लोकघटितत्वमङ्गीकृतं बाह्ययाग-प्रपञ्चत्वेन । अग्रेऽपि अन्तर्यागप्रपञ्चत्वेन ते कथयन्ति— "एवं सार्धषडशीत्या श्लोकैश्चक्रसङ्केतमुपदिश्य (पृ. २०६), एवं सार्धैः पञ्चाशीत्या श्लोकैर्मन्त्र-सङ्केतमुपदिश्य (पृ. २५२), एवं द्वादशोत्तरशतद्वयश्लोकैरष्टमः पटलः । संहत्य सप्तदशोनोत्तरचतुश्शती (पृ. ३२०) ।" उभयोश्चतुश्शत्योः श्लोकसंख्यानिर्धारणे तैरुक्तम् —"उभयोश्चतुश्शत्योर्योगेन शास्त्रस्याष्टौ शतानि सार्धत्रयोदशाधिकानि श्लोकानां भवन्ति । तेषु 'गणेशग्रहनक्षत्र' (१.१) इत्यादिका द्वादशश्लोकी मङ्गलाचरणरूपा तन्त्राद्बहिर्भूतैवेति तत्रैवोक्तम् । 'यतोऽपि' (८.२१२)

इत्यन्तिममर्धं च बहिर्भूतमित्यष्टशतीसमाख्योपपन्ना, एकश्लोकाधिक्यस्याल्पान्तरत्वात् पञ्चाशल्लिपिभिरिति व्यवहारदर्शनात् । 'तच्छक्तिपञ्चकं सृष्ट्या' (१.७७; ६.८) इति श्लोकस्य पूर्वोत्तरतन्त्रयोर्वारद्वयं पाठात्तयोरन्यतरस्य परिगणनाभावाभिप्रायेण वा तदुपपत्तिरित्यवधेयम्'' (पृ. ३२०-३२१) ।

आचार्यश्रीभास्कररायपरम्परामनुसृत्य तत्सिद्धान्तस्य सारः संक्षेपेणेत्थमवगन्तुं शक्यते— तन्त्रागमेषु श्रीविद्योपासना प्रधाना । वेदमाता त्रिपदा गायत्री श्रीविद्याया अंशभूता । तेन गायत्रीप्रतिपाद्याया ब्रह्मविद्यायाः श्रीविद्यापञ्चदश्यामेव पूर्णत्वम् । एवं द्वयोरप्येकप्रस्थानान्तर्गतत्वमेव । गायत्र्युपास्तिरेव श्रीविद्योपासनायाः प्रथमभूमिकेति स्थितिः । अत एव श्रीविद्योपासकस्य गायत्र्याराधनं श्रीविद्योपासनाद् भवत्येव ।

श्रीविद्या श्रुतिप्रतिपादिता । अस्या मन्त्रोपदेशादनुपनीतानां व्रात्यानां शूद्राणां स्त्रीणां चापि ब्राह्मणत्वापादनोक्त्या श्रुत्युक्तश्रीविद्याराधनेऽधिकारः सम्पद्यते । त्रैवर्णिकेतरस्त्रीपुरुषेषु यः कश्चिदागमोक्तेन विधानेन दीक्षितो भवति, तदा तस्य ब्राह्मणत्वं सम्पद्यते तन्त्रागमदृष्ट्या । यतो ह्यस्मिन् शास्त्रे दीक्षा न केवलं बुद्ध्यादिसंस्कारमात्रम्, अपि त्वात्मसंस्कार एव । ज्ञानविषयकोपनिषद्भागे यथा श्रौतानां संन्यासग्रहणपूर्वकं प्रवेशो भवति, तथैवात्मज्ञानविषयकतन्त्रागमशास्त्रेषु दीक्षाग्रहणपूर्वकमेव प्रवेशः । अत एव दीक्षया जीवात्मनो ब्रह्मण्यापादनं भवति । तत्र ब्राह्मणशब्दो न केवलं जातिवाचकः, अपि तु 'ब्रह्माधीते ब्रह्म वेद' इति व्युत्पत्त्या वर्णजातिहीनानुपनीतद्विजजातिस्त्रीशूद्रव्रात्यादिष्वन्यतमानामपि । अर्थात् परमकारुणिकेन गुरुणा श्रीविद्योपासनेऽनुगृहीतो यः कश्चन जीवोऽत्र ब्राह्मणपदवाच्यः ।

तत्र गुरुरूपं तु त्रिविधम्— प्रथमं दीक्षादिना शिष्यानुग्राहिका स्वगुरुमूर्तिः, तत्स्थूलं रूपम् । द्वितीयं श्रीविद्यादिमन्त्रमयं सूक्ष्मं रूपम् । सर्वव्यापकतया स्वान्तर्बहिःस्थितं तृतीयं पररूपमिति । वस्तुतस्तु ''मनुष्यचर्मणाबद्धः शिव एव गुरुर्मतः'' (कुला. १३.५४), ''गुरुहृदयनिविष्टः शङ्करोऽनुगृहीता'' इत्यादिवचनैरादिशिवस्यैव सर्वेषां शिष्यभूतानां गुरुत्वम् । तेन शिष्यभावेन प्रपन्नानां ज्ञानदानसमर्थगुरुलाभेऽप्यादिगुरोः शिवस्य प्रसादनमेव तत्र निदानम् ।

हादिविद्या-कादिविद्येतिसंज्ञकयोर्विद्ययोरेव नानाविधश्रीविद्याप्रभेदे मुख्यत्वं बहुश उपवर्णितम् । हादिविद्यायाः कामेश्वरपरत्वम्, कादिविद्यायाः कामेश्वरीपरत्वं च । तेन हादिविद्याया एव शिवादिविद्यासंज्ञया परशुरामकल्पसूत्रे रश्मिमालामन्त्रे उद्धारः । हादि-कादिविद्यागर्भितषोडश्योरपि क्रमेण कामेश्वरषोडशीत्वं श्रीविद्याषोडशीत्वमप्युक्तम् । कादिविद्यामन्त्रस्तु कामेश्वरकामेश्वर्योरुभयोरपि वाचकः, ललितात्रिशतीवचनात् । तेन कादिपञ्चदश्यां कत्रयहद्वयवाच्यकामेश्वरस्य शेषाक्षरवाच्यायाः कामेश्वर्या ह्रींकारवाच्याया उभयैक्यमय्याः शिवशक्त्यैक्यरूपिणीति ललितासहस्रनामस्तुतायाः श्रीललिता-

म्बिकायाश्च स्पष्टज्ञानार्थं श्रीचक्रपूजापद्धतौ श्रीमहाभट्टारककामेश्वरसहितश्रीमहा-भट्टारिकाकामेश्वरी ललितेत्यादिना ऊहः कृतः ।

भगवत्यास्त्रिपुरसुन्दर्याः स्थूल-सूक्ष्म-पररूपाणां क्रमशः कायिकी, वाचिकी, मानसिकी चेति तिस्र उपासनाः । एतच्चोपासनात्रयं क्रमेण बहिर्याग-अन्तर्याग-भावना (वासना वा) इति नामभिरपि प्रसिद्धम् । तत्राद्यद्वयस्य वर्णनं त्रिपुरा-तापिनीप्रभृत्युपनिषत्सु प्राप्यते । भावनायास्तु विवेचनं भावनोपनिषदि समुपलभ्यते । इयं च भावनाख्योपासना कादिमतकौलमतभेदेन द्विविधा ।

तन्त्रागमेषु पञ्चस्रोतोभेदेन देवतानां तदुपास्तिविधीनां च व्यवस्था । अधिकारि-भेदेनोपासकरुचिभेदेन च तत्तदुपासकभूमिकोचितविधीनां देवतानां तन्मन्त्राणां चोप-योगिता । अशेषवाङ्मये शिव-रुद्र-भैरवभेदेनात्र त्रैविध्यं वर्तते । तत्र शिवागमाः कामिकादिदशद्वैतोपासनाप्रधानाः, रुद्रागमाः सुप्रभेदाद्यष्टादशद्वैताद्वैतमिश्रोपासना-प्रधानाः, भैरवागमाश्चतुःषष्टिसंख्याका अद्वैतोपासनाप्रधानाः । अशेषागमेषूक्त-द्वैत-द्वैताद्वैत-अद्वैतप्रधानतया प्रक्रियात्रैविध्येन व्यवस्थापितम्, दक्षिण-वाम-सिद्धान्त-कुलसंज्ञकविधिपरम् । एतेषु चतुर्षु भैरवकुलं श्रेष्ठम् । कालीकुलमपि भैरव-कुलसमकक्षम् । त्रिकशास्त्रमपि तथैव भैरव-कालीकुलसमानभूमिकम् । महार्थ-प्रक्रिया तु कालीकुलसारभूतोपासनपर्याया । भैरवकुले प्राधान्येनानन्दभैरवा-नन्दभैरवी-अमृतेश्वरामृतेश्वरी-स्वच्छन्दभैरवाघोरेश्वरीसंज्ञकदेवतानामुपासना मुख्याः । पञ्चस्रोतोभेदेन भैरवागमे तासामेव व्याप्तिर्दृश्यते । कालीकुले महार्थप्रक्रिया प्रोक्ता, तदङ्गत्वेन पञ्चवाहादिक्रमः सृष्ट्यादिभासान्तक्रमश्च विहितः । एतामेव सरणिमनुसृत्य त्रिकशास्त्रे अपरा-परापरा-परेति देवतात्रयस्य क्रमेण नवात्मभैरव-रतिशेखरभैरव-सद्भावभैरवेति तत्तद्देवताभैरवाणाञ्च द्वैत-द्वैताद्वैत-अद्वैतप्रधानभावनापरिपोषणहेतु-नोपासनप्रक्रियोपनिबद्धा । तथा चैतदुपासकभूमिकोत्तरभूमिकारूपत्वेनैव त्रैपुर-सिद्धान्तस्तन्त्रागमेषूपपादितः । त्रैपुरकुलं तु भैरवकुलकालीकुलत्रिकादीनां सारभूतं तत्समष्टिरूपं तदुत्तीर्णं चेति रहस्यम् । त्रिपुरासिद्धान्तेऽपि द्वैत-द्वैताद्वैत-अद्वैतात्मक-त्रैविध्येनोपासकभूमिकां प्रकृत्य श्रीविद्यायास्त्रिविधोपासनं भिन्नं भिन्नमुक्तम्, तत्रापि श्रीविद्याहृदयत्वेन तस्याः सूक्ष्मरूपत्वेन च परायास्तदभिन्नत्वं सारभूतत्वं चोक्तम् । एवं निखिलनिगमागमरूपशास्त्रबीजं तद्विस्तरश्च त्रैपुरसिद्धान्ते यथायथं परिनिष्ठितः ।

तच्चैतदनितरसाधारणत्वमस्य ग्रन्थरत्नस्य समाकलय्य यथापरिज्ञानं सुसम्पाद्य अपेक्षितपरिशिष्टादिभिः सम्भूष्य सेतुबन्धव्याख्यासमुल्लसितं नित्याषोडशि-कार्णवाख्यं ग्रन्थं विदुषां करकमलेषु सादरमुपहरामि । प्रसङ्गेऽस्मिन् अस्या ग्रन्थावल्या मूलसम्पादका अस्माकं गुरुचरणा महाकवयोऽपि तन्त्रशास्त्रपारा-वारपारीणाः सुविदितनामधेया **म.म.स्व.बटुकनाथशास्त्रिखिस्ते**महाभागाः साष्टाङ्गप्रणतिततिपुरस्सरं समभिवन्द्यन्ते । तेषामेवानुग्रहलेशमासाद्य

तन्त्रशास्त्रसदृशे दुरधिगमे प्रच्छन्नविषये किञ्चिद्बालचापल्यं कर्तुम् एष जनोऽपि प्रयतते । एवमेवास्माकं परमपूज्यानां गुरुवर्याणां दिगन्तव्याप्तयशसां **प्रो. व्रजवल्लभ-द्विवेदि**महाभागानामपि चरणावभिनन्दामि, ये हि न केवलमिमं जनं तन्त्रशास्त्रं पाठितवन्तः, अपि त्वेतादृशलेखनानुसन्धानकर्मस्वपि यथोचितमार्गनिर्देशप्रदानेन भृशमुपकृतवन्तः । अस्याः प्रकाशनयोजनायाः प्रवर्तकास्तदानीन्तनाः कुलपतयः **पद्मश्रीः प्रो. वी. वेङ्कटाचल**महाभागा अवसरेऽस्मिन् अवश्यं श्रद्धया स्मर्तव्याः । तेषामेव प्रेरणया एषा महत्त्वपूर्णा योजना समारब्धा । ग्रन्थममुं प्रास्ताविक-वचोभिर्भूषयित्वा गौरवमस्य वर्द्धापितवन्तोऽस्माकं सम्मान्याः कुलपतयस्तन्त्रा-गमादिविद्याविद्योतिताः **प्रो. अशोककुमारकालिया**महाभागाः कृतज्ञतावचोभिः समभिवन्द्यन्ते । अस्य ग्रन्थस्य रुचिकरप्रकाशनकार्यं सम्पादितवतां प्रकाशन-निदेशकानां **डॉ. हरिश्चन्द्रमणित्रिपाठि**महाभागानां कृते कार्तज्ञ्यपूर्णान् साधुवादान् प्रकाशयामि । ग्रन्थस्यास्य सम्पादनकर्मणि तत्र तत्र सत्परामर्शप्रदानेन मामुप-कृतवतामनुसन्धानसंस्थाननिदेशकानां **डॉ. राजारामशुक्ल**महोदयानां कृतेऽप्याध-मर्ण्यमावहामि, कार्तज्ञ्यवचांसि च निवेदयामि । साधुमुद्रणकर्मणा ग्रन्थस्यैतस्य चारुतरत्वं विहितवतो रत्नामुद्रणालयस्वामिनः श्रीमतो **विपुलशङ्करपण्ड्या-**महोदयस्य कृतेऽपि भूरिशः साधुवादान् वितरामि । अन्ते च, अस्य ग्रन्थस्य सम्पादन-प्रकाशनादिकर्मसु परोक्षमपरोक्षं वा साहाय्यं कृतवतां गृहीतागृहीत-नामधेयानां सर्वेषां कार्तज्ञ्यं विज्ञाप्य सर्वतोभद्राय भगवतीं श्रीमहात्रिपुरसुन्दरीं सम्प्रार्थ्य विरमामि ।

विजयादशमी, संवत् २०६२
१२.१०.२००५ ई.
वाराणसी ।

विदुषामाश्रवः
**शीतलाप्रसाद उपाध्यायः**
उपाचार्यः, सांख्ययोगतन्त्रागमविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

# विषयसूची


**उपोद्घातः** i-viii

**विषयसूची** ix-xiii

**ग्रन्थभागः**

**प्रथमो विश्रामः**

अनुबन्धचतुष्टयनिरूपणम् १
त्रिपुरसुन्दर्या द्वादशश्लोकीस्तुतिः ७
चतुष्षष्टितन्त्रोद्देशः १९
नित्याषोडशकनामानि २३
श्रीचक्रस्य लेखनप्रकारः २४
चक्रस्यावान्तरभेदेन नवचक्रात्मकत्वम् ३६
श्रीचक्रस्य त्र्यात्मकत्वम् ३६
श्रीचक्रस्य महिमा ३७
श्रीचक्रसाधनम् ३८
मन्त्रोद्धारः ४५
— वशिन्यादिवाग्देवतामन्त्राः ४५
— त्रैलोक्यमोहनादिचक्रेश्वरीमन्त्राः ५१
— मूलविद्योद्धारः ५६
— चक्रपूजोपदेशः ६२
— पूजारम्भे आवश्यकाः सम्भाराः ६२
— सामान्यार्घ्यविधिः ६४
— त्रिपुरसुन्दर्याः सगुणध्यानम् ७०
— पूजनीयाया देवताया मन्त्रशेषः ७४
— चतुरश्रप्रथमरेखायां पूज्याः शक्तयः ७५
— चतुरश्रद्वितीयरेखायां पूज्या मातृकाः ७६
— षोडशदले पूज्या देवताः ८०
— अष्टदले पूज्या देवताः ८१
— चतुर्दशारचक्रे पूज्या देवताः ८१
— बहिर्दशारचक्रे पूज्या देवताः ८२

— अन्तर्दशारचक्रे पूज्या देवताः ८३
— अष्टाश्रे पूज्या देवताः ८३
— अष्टकोण-त्रिकोणमध्ये आयुधपूजा ८४
— त्रिकोणे पूज्याः शक्तयः ८५
— मुद्राविरचनम् ८६
— कामकलाध्यानम् ८६
— विसर्जनम् ८७

**द्वितीयो विश्रामः**

मन्त्रयोगनिरूपणम् ८९
— चक्र(मन्त्र)साधनम् ९५
— वश्यप्रयोगाः ९७
— मन्त्राणां विविधप्रयोगाः ९९
— विदर्भविधिः १०१
— आकर्षणप्रयोगाः १०२
— रक्षाकरप्रयोगौ १०३
— वश्यप्रयोगाः १०४
— मारणादिप्रयोगाः १०८
— समस्तसिद्धीनामेक एव प्रयोगः १११

**तृतीयो विश्रामः**

मुद्रापदनिर्वचनम् ११३
त्रिखण्डा मुद्रा ११३
सर्वसंक्षोभकारिणी मुद्रा ११४
सर्वविद्राविणी मुद्रा ११५
आकर्षिणी मुद्रा ११५
सर्वावेशकरी मुद्रा ११५
उन्मादिनी मुद्रा ११६
महाङ्कुशा मुद्रा ११६
खेचरी मुद्रा तस्याः स्तुतिश्च ११६
बीजमुद्रा ११८
योनिमुद्रा ११९

**चतुर्थो विश्रामः**

महाज्ञानप्रभाव-व्याप्त्यादिविषयकाः प्रश्नाः १२१
महाज्ञाननिरूपणम् १२२

त्रिपुराभिव्यक्तिप्रकाराः १२२
पराशक्तिमन्तरा शिवस्य शवप्रायत्वम् १२४
त्रिपुराशक्तेरन्तःसौषुम्नपरमार्गानुप्रवेशः १२६
त्रिपुरैव ब्रह्मविष्णवीशरूपिणी ज्ञानक्रियेच्छाशक्त्यात्मिका च १२७
रमते एकाकिनी त्रिपुरैव १२८
त्रिपुराबीजत्रितयसाधनं तत्प्रयोगाश्च १३०
कामकलाचक्रस्योपदेशः १३७
आयुध-मुद्राबीजानि तत्प्रभावाश्च १४३
त्रिपुराविद्यामाहात्म्यम् १४६
फलसहितचक्रराजस्यार्चनभेदाः १४७
**पञ्चमो विश्रामः**
जपहोमविषयकं विधानम् १४९
— जपोपयोगिनी माला १५०
— नवलक्षजपात्मकं पुरश्चरणम् १५१
— होमविधानम् १५२
**षष्ठो विश्रामः**
शास्त्रावतारस्तस्य गोपनीयत्वं च १६३
शास्त्रेऽनधिकार्यधिकारिनिर्णयः १६५
सङ्केतत्रयोद्देशस्तज्ज्ञानफलं च १६९
चक्रावतारनिरूपणम् १७०
— बैन्दवचक्रनिरूपणम् १७२
— बैन्दवचक्रस्य त्रिरूपत्वम् १७७
अन्तर्दशारचक्रम् १७९
चतुर्दशारचक्रम् १८०
अवशिष्टचक्राणि १८१
नवचक्रस्थिताश्शक्तयः १८२
उपास्तीनामधिकारभेदेन व्यवस्था १८३
अकुलादिस्थानेषु चक्रभावना १८४
चक्रस्य त्रिविधभावना १८७
बैन्दवाद्युन्मन्यन्तानां स्वरूपमुच्चारणकालश्च १८८
परादिवाक्चतुष्टयनिरूपणम् १९१
शान्तादीनां पीठलिङ्गवर्णावस्थाः १९२
बैन्दवनिवासिन्याः स्वसंविदस्तदतीतरूपत्वम् १९५

संविदो मुद्रारूपत्वं तन्निरूपणं च १९७
चक्रसङ्केतस्य त्रिधात्वं नवधात्वं च २०३
त्रिपुराचक्रम् २०४
नवचक्रस्वरूपं तेषां नामानि च २०४

**सप्तमो विश्रामः**

मन्त्रसङ्केतज्ञानफलम् २०६
करशुद्धिकरीप्रभृतिनवविद्यानिरूपणम् २०६
नव विद्यान्यासाः २०६
नव विद्यानामानि २०८
मन्त्रसङ्केतस्य षड्विधत्वम् २०९
— भावार्थनिरूपणम् २०९
— सम्प्रदायार्थनिरूपणम् २१७
— निगर्भार्थनिरूपणम् २३६
— कौलिकार्थनिरूपणम् २३८
— सर्वरहस्यार्थनिरूपणम् २४५
— महातत्त्वार्थनिरूपणम् २४७
परशिवस्य विश्वाभिन्नत्वम् २४८

**अष्टमो विश्रामः**

पूजानां त्रैविध्यम् २५२
षोढान्यासः २५५
श्रीचक्रन्यासः २६४
—त्रैलोक्यमोहनचक्रन्यासः २६५
—सर्वाशापरिपूरकचक्रन्यासः २६७
—सर्वसंक्षोभणचक्रन्यासः २६७
—सर्वसौभाग्यदायकचक्रन्यासः २६७
—सर्वार्थसाधकचक्रन्यासः २६८
—सर्वरोगहरचक्रन्यासः २६९
—आयुधन्यासः २७०
—चक्रन्यासः २७०
—सर्वज्ञादिन्यासादयः २७३
—नवयोनिन्यासः २७६
—श्रीविद्यान्यासः २७८
—न्यासकाण्डस्योपसंहारः २७९

| | |
|---|---|
| न्यासगणानां कालभेदेन व्यवस्था | २८० |
| आसनपरिकल्पनं बलिदानं च | २८० |
| विघ्ननिरासः | २८१ |
| मार्ताण्डादिग्रहपूजनम् | २८२ |
| बाह्यचक्रोद्धारः | २८२ |
| सामान्यार्घ्यविधानम् | २८४ |
| विशेषार्घ्यविधानम् | २८६ |
| गुरुपादुकापूजनम् | २८८ |
| प्रसादग्रहणमान्तर्होम आन्तरपूर्णाहुतिश्च | २८८ |
| श्रीचक्रपूजाविस्तारः | २९० |
| कुलदीपनिवेदनम् | ३०७ |
| जपप्रकारः | ३०८ |
| शून्यषट्क-अवस्थापञ्चक-सप्तविषुवादिभावनम् | ३१० |
| तर्पणविधिः | ३१७ |
| नैमित्तिकार्चनम् | ३१७ |
| शास्त्रोपसंहारः | ३१८ |
| **परिशिष्टानि** | |
| नित्याषोडशिकार्णवश्लोकपादानुक्रमणी | ३२३ |
| सेतुबन्धे उद्धृत-ग्रन्थ-ग्रन्थकार-क्षेत्रनामानि | ३४६ |
| सेतुबन्धोद्धृतश्लोकपादानुक्रमणी | ३५३ |
| सङ्केतपरिचयः | ३७२ |


●

# नित्याषोडशिकार्णवः
# सेतुबन्धाख्यव्याख्यानसहितः

[ श्रीगुरुपादुकाभ्यां नमः ]

**श्रीगम्भीरविपश्चितः पितुरभूद्यः कोनमाम्बोदरे**
**विद्याष्टादशकस्य मर्मभि(वि)दभूद्यः श्रीनृसिंहाद्गुरोः ।**
**यश्च श्रीशिवदत्तशुक्लचरणैः पूर्णाभिषिक्तोऽभवत्**
**स त्रेता त्रिपुरा त्रयीति मनुते तामेव नाथत्रयीम् ॥ १ ॥**

**वामकेश्वरतन्त्रस्थे नित्याषोडशिकार्णवे ।**
**पूर्वोत्तरचतुःशत्यौ व्याचष्टे भास्करः सुधीः ॥ २ ॥**

**नित्याषोडशिकार्णवनाम्नि तन्त्रे शिवैकपरतन्त्रे ।**
**अतिगहने फणिपटले स्पन्दितुमपि कः क्षमो मनुजः ॥ ३ ॥**

**यद्यप्येवमथापि तु पूर्वाचार्यैः प्रदर्शितं सेतुम् ।**
**दृढबन्धैरुद्धर्तुं गुरुभक्त्यैव प्रवर्तितोऽस्मि बलात् ॥ ४ ॥**

**नित्याषोडशिकाम्भोधेः परं पारं यियासवः ।**
**विश्रामैरष्टाभिर्युक्तं सेतुबन्धं भजन्त्विमम् ॥ ५ ॥**

**आ प्राचः कामरूपाद्द्रुहिणसुतनदप्लावितादा प्रतीचो**
**गान्धारात्सिन्धुसार्द्राद्रघुवरचरि(रचि)तादा च सेतोरवाचः ।**
**आ केदारादुदीचस्तुहिनगहनतः सन्ति विद्वत्समाजा**
**ये ये तानेष यत्नः सुखयतु समजान्कश्चमत्कर्तुमीष्टे ॥ ६ ॥**

**[ अनुबन्धचतुष्टयम् ]**

इह खलु निखिलजनाभिलषणीयं सुखमेव पुरुषार्थः । तच्च कृत्रिममकृत्रिमं चेति द्विविधं क्रमेण काममोक्षपदाभ्यामभिलप्यते । तदुभयसाधनत्वाद्धर्मो धर्मसाधनत्वादर्थोऽपि सर्वाभिलषित एवेति परस्परं तरतमभावापन्ना अपि पुरुषैरर्थ्यमानत्वाविशेषाच्चत्वारोऽपि पुरुषार्था एव । यत्तु **'स्वविमर्शः पुरुषार्थः'** इति **कल्पसूत्रं** तन्मोक्षस्यैवाकृत्रिमसुखत्वान्मुख्यत्वाभिप्रायेणेत्यविरुद्धम् । ते च तादृशज्ञानविज्ञानसाध्याः तानि च तादृशतादृशचित्तैकसाध्यानि । चित्तेषु तादृशत्वं तु शुद्धितारतम्यात् । ततश्च विविधकर्मपरिपाकायत्तविविधचित्तशालिनो जनाननुजिघृक्षुः परमकारुणिको भगवान्परमेश्वरः परस्परविलक्षणा अपि साक्षात्परम्परया वा परमपुरुषार्थैकप्रयोजनिका विद्याः प्रवर्तयामास । तथा च **श्रुतिः—'ईशानः सर्वविद्यानाम् ।**

**यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।**' अत्र चकारादितर-विद्यासमुच्चयः । '**तस्मै वेदान्पुराणानि दत्तवानग्रजन्मने**' इत्युपबृंहणदर्शनात् । **स्मृति**रपि-

**अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् ।**
**आदिकर्ता कविः साक्षाच्छूलपाणिरिति श्रुतिः ॥**

ततश्च जगदाप्तपरमशिवप्रणीतत्वाविशेषेण सर्वासां विद्यानामधिकारिभेदेन प्रामाण्यमेवेति स्पष्टं **सूतसंहिता**दौ । अधिकारश्च यथा नास्तिकानामेवाऽऽर्हतादिदर्शनेषु त्रैवर्णिकादेरेव वैदिकमार्गेष्विति पुरुषभेदेनैव व्यवस्थितस्तथैकस्यापि पुरुषस्य चित्तशुद्धितारतम्यादपि कश्चिद्व्यवस्थितः । वर्णभेदेनेवाऽऽश्रमभेदेनापि धर्मव्यवस्थादर्शनात् । एवं च यानि तत्तद्विद्याप्रशंसकानि वचनानि तानि तत्तदधिकारिणं प्रत्येव प्रवर्तकानि । यानि च तन्निन्दकानि तानि तत्तदनधिकारिणं प्रति निवर्तकानि । न पुनर्नहि निन्दान्यायेन विधेयस्तावकानि । अतिबाल्यदशायां बालक्रीडनके प्रवर्तयतामेव पित्रादीनां तस्यैवाध्ययनाधिकारे तादृशक्रीडायां ताडन-कर्तृत्वदर्शनात् । तदयं मथितोऽर्थः—जातमात्रस्य त्रैवर्णिकस्य पुरुषस्य क्रीडाधिकारे निवृत्तेऽक्षराभ्यासः । ततश्छन्दोभाषाज्ञानार्थं काव्याध्ययने प्रवर्तकान्यदोषं गुणवत्का-व्यमित्यादीन्य**ग्निपुराण**वचनानि । व्युत्पन्नस्य तु काव्यालापांश्च वर्जयेदिति निषेधः । काव्याध्ययनजन्यप्रयोजनस्य जातत्वेनोत्तरभूमिकायामेवाधिकारात्तां विहाय पूर्व-भूमिकायामेवाऽऽयुः क्षपयतोऽनिष्टं भवतीति तदर्थः । ततो देहाद्यतिरिक्त-त्वेनाऽऽत्मनोज्ञानार्थं **न्यायशास्त्राध्ययने** विधिः शुङ्गेनाऽऽत्मानमन्विच्छेत्यादिः । शुङ्गं हेतुरवयवसमुदायात्मकन्याय इति यावत् । देहादिभिन्नत्वेनाऽऽमुष्मिकयातायात-क्षमतयाऽऽत्मनि ज्ञाते तु तादृशफलककर्मस्वधिकारादान्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकामित्यादयो निषेधाः पूर्वभूमिकां निषेधन्ति । '**धर्ममेवाऽऽचरेत्प्राज्ञः**' इत्यादि-विधय उत्तरभूमिकायां प्रवर्तयन्ति । तदुपयोगित्वेन पूर्वमीमांसाया **वेदे** कर्मकाण्डस्य चाध्ययनं तेन धर्मार्थकामेषु साधितेषु चतुर्थपुरुषार्थलिप्सया पूर्वभूमिकात्यागाय नास्त्यकृतः कृतेनेति कर्मनिन्दा । एताश्च सर्वा अज्ञानभूमिका इत्युच्यन्ते । एताः परस्परान्तर्भावेन सप्तैवेति **वसिष्ठः** । एतदुत्तरास्तु ज्ञानभूमिकाः । अथ '**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्**', '**आत्मा वा अरे द्रष्टव्यः**' इत्यादयो ब्रह्मज्ञानविधय उत्तरभूमिकाप्रवर्तकाः । उत्तरभूमिकास्तु बह्व्य इति **केचित्**—'**वदन्ति बहुभेदेन ज्ञानिनो योगभूमिकाः**' इति वचनात् । सप्तैवेति तु भगवान् **वसिष्ठः**- '**अवबोधं विदुर्ज्ञानं तदिदं साप्तभूमिकम्**' इत्युक्तेः । तन्नामानि—विविदिषा, विचारणा, तनुमानसा, सत्त्वापत्तिरसंसक्तिः, पदार्थाभाविनी, तुर्यगेति । तल्लक्षणानि तु **वासिष्ठे** ज्ञानशास्त्रे

द्रष्टव्यानि । तदुपयोगितया च वेद उपनिषत्काण्डस्योत्तरमीमांसायाश्चाध्ययनम् । ब्रह्मज्ञानं च द्विविधम्– शाब्दमपरोक्षानुभवरूपं च ।

**शास्त्रदृष्टिर्गुरोर्वाक्यं तृतीयः स्वात्मनिश्चयः ।**
**अन्तर्गतं तमश्छेत्तुं शाब्दो बोधो नहि क्षमः ॥**

इत्यादिज्ञापकात् । तेन शाब्दभूमिकालाभोत्तरं तत्राऽऽयुष्क्षपणनिषेधार्थाः **'पाण्डित्यान्निर्विद्य बाल्येन तिष्ठासेत्'** इत्यादयः । सप्तभूमिकान्तर्गतद्वितीयतृतीययोश्च मध्ये भक्तिरूपैका महती भूमिका तदुपयोगित्वेन भक्तिमीमांसाध्ययनम् । भक्तिश्च पञ्चमभूमिकान्तमनुवर्तते । तल्लाभोत्तरमपरोक्षानुभवरूपषष्ठभूमिकालाभः । सैव च जीवन्मुक्तिः । तदव्यवहितोत्तरमेव च विदेहकैवल्यं ज्ञानादेव तु कैवल्यमित्यत्र ज्ञानपदस्यानुभवपरत्वात् । **न्यायादिशास्त्रेषु** स्वस्वभूमिकालाभमात्रेण मोक्षप्राप्तिवर्णनं तूत्तरोत्तरभूमिकानामपह्नवेनैव । पुरुषार्थप्राप्तौ विलम्बशङ्कया प्रवृत्त्यभावनिरासेन तस्यादोषत्वात् । **'यानि च कर्मणैव हि संसिद्धिः, यमेवैष वृणुते तेन लभ्य'** इत्यादीनि वचनानि तेष्वेवकारः स्वस्वभूमिकासाध्य उत्तरभूमिकाधिकाररूपफले साधनान्तर-निरासार्थो न पुनरुत्तरभूमिकाभावबोधकः । ज्ञानादेव त्वित्यत्र त्वनुभवात्परतः साधनान्तररूपाया भूमिकाया अभावात्तदभावबोधक एवेति सर्वेषां तत्तद्विद्या-प्रवर्तकानामृषीणां न मिथो विरोधः । एतासां च भूमिकानामेकैकस्या अवान्तरभूमिका अपि भूयस्य एवेयत्तयाऽपरिच्छेद्या बुद्धिमद्भिरनुभवैकवेद्याः सन्त्येव । तदुक्तम्–

**'इत्यवस्था मया प्रोक्ताः सप्ताज्ञानस्य राघव ।**
**एकैका शतसंख्याऽत्र नानाविभवरूपिणी ॥'**

इति । एवमनेकासु भूमिकास्वेकैकाऽपि बहुभिर्जन्मभिरेव साध्यते । तदेवम-परिमितैर्जन्मभिर्महता प्रयत्नेन परब्रह्मणः शाब्दतत्त्वनिश्चयभूमिकापर्यन्तं क्रमेण सम्यगारूढस्य संसारे नात्यन्तमासक्तिर्नापि दृढो निर्वेद इत्याकारिका विलक्षणा चित्तशुद्धिः सम्पद्यते । सोऽयं भक्तिमार्गेऽधिकारी । **'न निर्विण्णो न चाऽऽसक्तो भक्तियोगोऽस्य सिद्धिदः'** इति वचनात् ।

सा च भक्तिर्द्विविधा–गौणी परा चेति । तत्राऽऽद्या सगुणस्य ब्रह्मणो ध्यानार्चनजपनामकीर्तनादिरूपा सम्भवत्समुच्चयिका । परभक्तिस्त्वेतज्जन्यानुराग-विशेषरूपा । आद्याया अपि बहवोऽवान्तरभूमिकाः । तासु प्रथमा **'योषामग्निं ध्यायीत'** इत्यादिभावनासिद्धिः । द्वितीया **'मनो ब्रह्मेत्युपासीत'** इत्यादि विहितोपास्तिः । तृतीया त्वीश्वरोपास्तिः । ईश्वरस्यापि सूर्य-गणेश-विष्णु-रुद्र-परशिव-शक्तिभेदेन बहुविधत्वात्तत्तदुपास्तयोऽपि भिन्ना एव भूमिकाः । शक्तिरपि छाया-वल्लभा-लक्ष्म्यादि-

भेदेनानन्तविधैव । अनेन क्रमेणैता भूमिका अनन्तैर्जन्मभिरारूढस्य पश्चात्त्रिपुरसुन्दर्यां गौणभक्त्युदयस्तत्र सम्यङ्निरूढस्य तस्यां परभक्त्युदया इति स्थितिः ।

**'शैववैष्णवदौर्गार्कगाणपत्यादिकैः क्रमात् ।**
**मन्त्रैर्विशुद्धचित्तस्य कौलज्ञानं प्रकाशते ॥**
**सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम् ।**
**वैष्णवादुत्तमं शैवं शैवाद्दक्षिणमुत्तमम् ॥**
**दक्षिणादुत्तमं वामं वामात्सिद्धान्तमुत्तमम् ।**
**सिद्धान्तादुत्तमं कौलं कौलात्परतरं नहि ॥'**

इति वचनात् । अन्यान्यपीदृशे भूमिकाक्रमे मूलभूतानि वचनानि बहूनि लेख्यान्यपि विस्तरभयान्न लिखितानि । कतिचित्तु **सौभाग्यभास्करे** प्रदर्शितानि **अस्माभिः** । श्रीमहात्रिपुरसुन्दर्याश्च गौणीं भक्तिं सेतिकर्तव्यताकां निरूपयितुमैदंपर्येण **सुन्दरीतापनीपञ्चकं भावनोपनिषत्कौलोपनिषद्गुह्योपनिषन्महोपनिषत्** चेत्यादयो वेदशिरोभागाः प्रवृत्ताः । वेदे च पूर्वकाण्डस्य शेषभूततया **आश्वलायनादिकल्पसूत्राणां मन्वादिस्मृतीनां** च प्रवृत्तिवदुपनिषत्काण्डशेषत्वेन **परशुरामादिकल्पसूत्राणां यामलादितन्त्राणां च प्रवृत्तिः । पुराणानां** तु काण्डद्वयं प्रत्यपि शेषत्वेन प्रवृत्तिः । ततश्च **स्मृतितन्त्रपुराणानां** वेदमूलकत्वेनैव प्रामाण्यम् । ये च प्रत्यक्षश्रुतिविरुद्धास्तत्तदेकदेशास्तेषां विरोधाधिकरणन्यायेन यावन्मूलश्रुतिदर्शनमननुष्ठानलक्षणमप्रामाण्यम् । यानि तु सर्वांशेनापि वेदाविरुद्धान्येव कानिचित्तन्त्राणि **पाशुपत**विशेष**पाञ्चरात्र**विशेषादीनि तानि नेदृशीं भूमिकामारूढस्य । अपि तु श्रौतस्मार्तकर्मभूमिकाधिकारिणी एव केनचित्पापेन ततश्च्युतौ तेष्वधिकारः । अत एव–

**'पाञ्चरात्रं भागवतं तथा वैखानसाभिधम् ।**
**वेदभ्रष्टान्समुद्दिश्य कमलापतिरुक्तवान् ॥'**

इत्यादिना कतिपयानामेव परिगणनमुपपद्यते । तेन–

**'श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः ।**
**क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत् ॥'**

इत्यत्र तन्त्रसामान्यपदं तादृशविशेषपरम् । **'पत्युरसामञ्जस्यात्'** इत्यधिकरणमपि तादृशतन्त्रपरमेव । यानि तु राम-कृष्ण-नृसिंह-रुद्र-परशिव-सुन्दर्याद्युपासनाबोधकानि **अगस्त्यादितन्त्राणि** तन्मूलभूतानां **रामतापन्याद्युपनिषदां** प्रत्यक्षत्वादेव तेषां नाप्रामाण्यशङ्काकलङ्कावकाशः । तत्र सुन्दर्युपास्तिस्तावद् द्विविधा–बहिर्यागान्तर्यागभेदात् । अन्तर्यागोऽपि त्रिविधः–सकलः सकलनिष्कलो निष्कलश्चेति । तेनैताश्चतस्रो भूमिकाः । पूर्वपूर्वभूमिकारूढस्यैवोत्तरोत्तरभूमिकायामधिकारः पूर्ववत् । ये

तु बहिर्यागस्य भेदाः **'केवलो यामलो मिश्रश्चक्रयुग्वीरसंकर'** इति पञ्चोक्ता अभिगमनादयो दौर्बोध्यादयश्च पञ्च पञ्च तन्त्रभेदेनोक्तास्तैर्भेदैर्विशिष्टो बहिर्यागः सर्वोऽप्येकैव भूमिका देशकालशक्त्यादिभेदमात्रेणैव तेषां व्यवस्था न पुनश्चित्त-शुद्धिभेदेन । भूमिकाभेदे चित्तशुद्धितारतम्यस्यैव नियामकत्वात् । एवञ्च सुन्दरी-तन्त्रेष्वपि यानि **कुलार्णव-ज्ञानार्णव-स्वच्छन्द-परानन्द-भैरवी-दक्षिणामूर्ति**प्रभृतीनि तेषु प्रायेण बहिर्यागस्यैव प्रपञ्चो भूयान् । आन्तरस्य त्वल्पः । **वामकेश्वरतन्त्रे** तु तद्वैपरीत्यमेवेति सर्वतन्त्रोत्तमत्वादान्तरोपास्तिशीलस्यैवोपासकमूर्धन्यस्यात्राधिकारः । तदेतदुक्तं **श्रीमदाचार्यभगवत्पादैः**—

**'चतुःषष्ट्या तन्त्रैः सकलमभिसन्धाय भुवनं**
**स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रः पशुपतिः ।**
**पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटनात्**
**स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् ॥'**

इति । चतुःषष्टितन्त्राणि नामानिर्देशेनानूद्य पुनर्देवीकृतप्रश्नस्यास्मिन्नेव तन्त्रे दर्शनाल्लिङ्गादिदमेव तन्त्रमस्मिन् श्लोके पञ्चषष्टितमत्वेनाभिप्रेतमित्युन्नीयते । **ज्ञानार्णव**परं स्वतन्त्रपदमिति तु **गौरीकान्तः** । अन्ये तु—**तन्त्रराजतन्त्र**मेव पञ्च-षष्टितमम् । स्वतन्त्रविशेषणस्येहोक्तस्य तत्रैव दर्शनाल्लिङ्गात् । तथा च स्मर्यते—

**'तेषामन्योन्यसापेक्ष्याज्जायते मतिविभ्रमः ।**
**तस्मात्तु निरपेक्षं मे तन्त्रं तासां वद प्रभो ॥'**

इतीत्याहुः । वस्तुतस्तु मोक्षस्य बहिरङ्गसाधने बहिर्यागे तस्य तन्त्रान्तरोक्तकर्मान-पेक्षत्वेऽप्यन्तरङ्गसाधनेऽन्तर्यागेऽस्यैव नैरपेक्ष्यम् । तन्त्रान्तरेष्वेतावतोऽन्तर्याग-प्रपञ्चस्याभावादेव । प्रत्युत **तन्त्रराज**स्याप्येतत्सापेक्षतैव दृश्यते । यदुक्तं तत्रैव— **'नित्याहृदयसम्प्रोक्तस्फुटोपायेन भावयेत्'** इति । **नित्याहृदय**मित्येतत्तन्त्रोत्तरार्धस्य **योगिनीहृदय**स्य संज्ञा । अत्र बहिर्यागाङ्गानामल्पानां कथनेऽप्यन्तरङ्गोपास्तिदार्ढ्य-शीलानां तावतैव परिपूर्तिः कल्पयितुं शक्यते । न च **तन्त्रराजे**ऽन्येषां सापेक्षतायाः कथनात्सर्ववेदान्तप्रत्ययन्यायेन गुणोपसंहारस्याऽऽवश्यकत्वाच्च कथं तावतैव पूर्ति-रिति वाच्यम् । सर्वतन्त्रोपसंहारस्याशक्यत्वादेव तथा कल्पनात् । अत एव सर्वतन्त्रोपसंहारस्यासम्भवादेव—

**'बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्तितम् ।**
**तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥'**

इति न्यायसिद्धं वचनमुपपद्यते । सापेक्षत्ववचनं तु तन्त्रान्तरेण दीक्षितानां यावच्छक्यतन्त्रान्तरोक्ताङ्गोपसंहारे फलभूमाऽस्ति, **तन्त्रराजो**क्तदीक्षावतां तु तावन्मात्रेण

फलभूमेत्यन्योपसंहारोऽनर्थक इत्येतत्परम् । यान्यवश्यापेक्ष्याण्यङ्गानि तानि **कल्पसूत्रा**देव ग्राह्याणि । **कल्पसूत्राणां** तत्तच्छाखापेक्षितार्थं समर्पणार्थत्वेनैव प्रणयनसिद्धान्तात् । अत एव मन्त्रदीक्षापुरश्चरणादीनामनयोश्चतुःशत्योरकथनात्तदर्थमन्यसापेक्षत्वे स्वातन्त्र्यभङ्ग इति निरस्तम् । वस्तुतस्तु दीक्षादयोऽप्यत्रैव तन्त्रे ध्वनिता इति तत्र तत्र वक्ष्यामः । न हि **नित्याहृदयो**क्तपदार्थस्वीकारस्य ध्वननमात्रेण **तन्त्रराज**स्वातन्त्र्यवादिनां तद्भङ्गः । गुणोपसंहारन्यायेनान्यदीयग्रहणस्यैव सापेक्ष्यतारूपत्वात् । कण्ठरवेण ध्वनितोऽर्थस्तु कथितप्राय एवेति तस्यान्यतो ग्रहणं न स्वातन्त्र्यविघातकम् । **कल्पसूत्र**स्य तु **कण्वादि**पञ्चदशशाखास्वेकस्य **कात्यायनीय**स्येव **परशुरामीय**स्य निखिल**सुन्दरीतन्त्रे**ष्वङ्गत्वात् **तन्त्रराजादि**ष्वपि तदुक्तार्थग्रहणस्य निष्प्रत्यूहतया समप्रधानभूततन्त्रान्तरसापेक्षत्वाभावमात्रेणानपेक्षत्वस्याप्युपपत्तेरेतत् तन्त्रेऽपि तदुक्तार्थस्य यावदपेक्षमविरुद्धं ग्रहणमनपोद्यम् । अन्यथा पदार्थव्युत्पत्तिसापेक्षत्वेनापि नैरपेक्ष्यभङ्गापत्तेः । तेन सन्ध्यास्नानादिकं **कल्पसूत्राद**ग्राह्यमेवेति दिक् । तदिदं **वामकेश्वरतन्त्रं** पूर्वोत्तरचतुःशतीयुगलात्मकमेव मन्यन्ते । उपक्रमोपसंहारयोस्तन्त्रारम्भसमाप्तिचिह्नदर्शनात् । परं तु **तन्त्रसारे** चक्रसंस्कारविधि**र्वामकेश्वरतन्त्रो**क्त इत्युक्तम् । स्तोत्राणि च कानिचिदेतत्तन्त्रनाम्नैवोपलभ्यन्ते । **सौभाग्यरत्नाकरे** लिखिता षट्शती **ललितार्चनचन्द्रिकादौ** लिखितवचनान्यप्येतत्तन्त्रनाम्नैव सन्ति । तेषामष्टशत्यामदर्शनात् क्व निवेश इति चिन्त्यम् । अत एवास्वरसाद् **ऋजुविमर्शिन्यामु**क्तम्–

**'श्रीवामकेश्वरं नाम शास्त्रं तन्त्रं प्रकाशते ।**
**मध्ये शास्त्रस्य तस्यास्ति नित्याषोडशिकार्णवः ॥**
**तत्र च द्वे चतुःशत्यौ........................।'**

इति । **मनोरमायां** तु **'नित्यानां षोडशानां च नव तन्त्राणि कृत्स्नशः'** इति श्लोकव्याख्यावसरे **नित्याषोडशिकार्णव-सुन्दरीहृदय-वामकेश्वरतन्त्राणि** पृथग्गणितानि । परं तु तद् **योगिनीहृदय** एव **'वामकेश्वरतन्त्रेऽस्मिन्नज्ञातार्थास्त्वनेकशः'** (६।१) इति निर्देशस्वरसविरुद्धम् । पूर्वोत्तरचतुःशत्योरेकवाक्यता त्वविवादा । पूर्वोत्तरसमाख्याबलात् । पूर्वतन्त्रे कथितानां करशुद्ध्यादिन्यासानामुत्तरतन्त्रेऽकथनेन तत्रोद्धृताया मूर्तिविद्यायाः पूर्वतन्त्रेऽनुद्धारादिना च ज्ञापकेन परस्परसाकाङ्क्षत्वाच्च । उभे च चतुःशत्यौ यद्यपि प्राचीनैर्बहुभिर्व्याख्याते एव परं तु ताष्टीका अस्थाने विस्तृताः स्थाने संकुचिताः, क्वचिन्न्यायविरुद्धाः, क्वचित्सम्प्रदायविरुद्धाः, क्वचिन्मूलस्वरसविरुद्धाः, क्वचित्त्यक्तमूलश्लोकाः, क्वचित्तन्त्रान्तरविरुद्धाः, क्वचित्पक्षपातकलुषिता इति तत्तदंशान्परिहृत्यातीव निष्कृष्येतरांशेषु तत्प्रदर्शितदिशैव संक्षिप्य व्याख्यातुमयमुद्योगः सफल इति सहृदया विदांकुर्वन्तु ।

**॥ इत्यनुबन्धचतुष्टयनिरूपणम् ॥**

●

# अथ प्रथमो विश्रामः

अथात्रोपास्यायाः परमेश्वर्यास्त्रीणि रूपाण्युपास्तियोग्यानि–स्थूलं सूक्ष्मं परं चेति । तत्राऽऽद्यं करचरणाद्यवयवशीलं मन्त्रसिद्धिमतां चक्षुरिन्द्रियपाणीन्द्रिययोर्योग्यं । **'ततः पद्मनिभां देवीं बालार्ककिरणारुणाम्'** (१।१३८) इत्यादिना वक्ष्यमाणम् । द्वितीयं मन्त्रात्मकं पुण्यवतां श्रवणेन्द्रियवागिन्द्रिययोर्योग्यं **'श्रीमद्वाग्भवकूटैकस्वरूप-मुखपङ्कजा'** इत्यादिना रहस्यनामसूक्तम्, सर्वमन्त्रमूलभूतमातृकासरस्वत्याद्यात्मकं च । अत एव – **'एतस्यां साधितायां तु सिद्धा स्यान्मातृका यतः'** (५।३६) इति पञ्चमपटलान्ते वक्ष्यति । तृतीयं वासनात्मकं पुण्यवतां मनसो योग्यं **'चैतन्यमात्मनो रूपम्'** इत्यादिना षष्ठे पटले (श्लो.५०) वक्ष्यमाणम् । एतत्त्रियातीतं तु वाङ्मनसातीतं मुक्तैरहन्तयाऽनुभूयमानमखण्डं रूपम् । तत्र **नित्याषोडशिकार्णवं** प्रारिप्समानः परमशिवस्तस्य निर्विघ्नं परिसमाप्त्यर्थं मुख्यस्याप्यखण्डरूपस्य वागतीतत्वेन साक्षात्स्तोतुमशक्यत्वात्स्थूलारुन्धतीन्यायेन सूक्ष्मरूपद्वारा तदाराधनरूपं मङ्गलमाचरति– **'गणेशग्रहनक्षत्र'** (१।१) इत्यारभ्य **'नौमि श्रीत्रिपुरामहम्'** (१।१२) इत्यन्तैर्द्वादशभिः श्लोकैः । अस्य देव्याराधनरूपस्य स्तवस्याप्यनेकश्लोकसमुदाय-रूपत्वेन तदविघ्नतायै मङ्गलान्तरमावश्यकमित्याशयेन प्रथमतो गणेशस्मरणमा-चरितम् । न चैवमनवस्थापत्तिः । गणेशपदस्य द्वादशश्लोकीबहिर्भावाभावेन तदनवतारात् । **नित्याषोडशिकार्णवाद्** द्वादशश्लोक्या बहिर्भावस्त्विष्ट एव । **'देव्युवाच'** इत्यादिनैव तदारम्भ इत्यस्य सुवचत्वात् । नह्येवं ग्रहनक्षत्रेत्यादिनैव श्लोकारम्भ इति वक्तुं शक्यम् । एतेन महागणपत्युपास्तेर्विघ्ननिरासद्वारा विद्योपास्त्यङ्गत्वं **कल्पसूत्रोक्तं** ध्वनितम् ।

**गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ।**
**देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम् ॥ १ ॥**

गणेशा विघ्नेश्वरादिगणेश्वरान्ता एकपञ्चाशद्विनायकमूर्तयः । ग्रहनक्षत्रराशयः प्रसिद्धाः । योगिन्यो डाकिन्याद्याः सप्त देवताः । पीठानि कामरूपादिछायाछत्रा-न्तान्येकपञ्चाशत् । एवं सप्ताधिकं सार्धशतं देवताः । एतासामेव लघुषोढान्यासाख्यः स्वदेहे प्रक्षेपः परमेश्वरभावापादकोऽष्टमे पटले (श्लो० ९-१२) वक्ष्यते–**'गणेशैः प्रथमो न्यासः'** इत्यादिना **'स एव [स्वयं] परमेश्वरः'** इत्यन्तेन । ईदृशदेवता-समूहरूपिणीम् । देवीं व्यवहाररूपाम् । मन्त्रमयीं मन्त्रप्रचुरामीति मातृकाविशेषणानि । अकारादिक्षकारान्तवैखरीरूपाया मातृकासरस्वत्या एव सप्तकोटिमहामन्त्रघटकत्वात् ।

लौकिकवैदिकव्यवहारघटकत्वाच्च । एवं गणेशाद्याः पीठाद्याश्च प्रत्येकमेकैकाक्षर-रूपाः । ग्रहेषु तु सूर्यः षोडशस्वररूपः । मङ्गलबुधगुरुशुक्रशनैश्चराः कादिवर्गपञ्चक-रूपाः, चन्द्रराहू अन्तस्थोष्मरूपौ । क्षकार एकः केतुरूपः । ळकारस्तु लकारेणैव गतार्थ इति सम्प्रदायः । नक्षत्रेषु यथा–

**'युग्ममेकं त्रयं वेदा एकमेकं द्वयं ततः ।**
**एकं युग्मं युग्ममेकं युग्मं युग्मं युगं क्रमात् ॥**
**एकं युग्मं त्रयं चैकं त्रयमेकैकमेककम् ।**
**युग्ममेकं युगं त्रीणि युग्मं बिन्दुविसर्गयुक् ॥'** (८/३०-३२)

इति । अश्विन्यादिक्रमेणाकारादिवर्णेषु क्रमाद्युग्ममेकमित्यादि योज्यम् । अं आं इत्यक्षरद्वयात्मिकाऽश्विनी । इंकाररूपा भरणी । ईं उं ऊं इत्यक्षरत्रयरूपा कृत्तिकेत्यादिरर्थः । परं तु बिन्दुविसर्गस्वरौ क्षकारान्ते योजनीयौ । तेन ळं क्षं अं अः इत्यक्षरचतुष्करूपा रेवती सिध्यति । योगिन्यस्तु डरलकसहयाद्याख्याः सप्त । तासां स्वरूपं तु स्वराः षोडश, ककाराद्या द्वादश, डकाराद्या दश, बकाराद्याः षट, वकाराद्याश्चत्वारो हकारक्षकारौ, समष्टिश्चेत्येवंरूपं क्रमाद्भवति । ळकारः पूर्ववत् । राशिषु यथा–

**'चतुष्कं त्रितयं त्रीणि द्वितयं द्वितयं द्वयम् ।**
**पञ्चकं पञ्चकं पञ्च पञ्चकं पञ्चकं ततः ॥**
**चत्वारि मेरुर्मीने स्युः कन्यायां पञ्च शादयः ।'** (८।३७-३८)

इति । मेरुः क्षकारो यकारादिचतुष्कं चेति मीनराशिः । शकारादिपञ्चकं बिन्दुविसर्गौ च कन्याराशिरित्यर्थः । स्पष्टमन्यत् । अत्रैकैकस्यानेकरूपात्मकत्वे परस्परविरुद्धा-नामपि रूपाणामभेदे च न विप्रतिपत्तव्यम् । देवतामहिम्नोऽप्रतर्क्यत्वात् । **'मन्त्राणामचिन्त्यशक्तिता'** इति **कल्पसूत्रात्** । उक्तं च **भारते**ऽपि **'अचिन्त्याः खलु ये भाया न तांस्तर्केण योजयेत्'** इति । **श्रुति**रपि–**'नैषा तर्केण मतिरापनेये'**ति । तस्मा-दीदृशनिखिलप्रपञ्चात्मकदेवतासमूहाभिन्नां मातृकासरस्वतीं स्तौमीति श्लोकार्थः । अत्र मातृकाया एव विशेष्यत्वे गणेशादिदेवतासमूहषट्करूपत्वविशेषणमपि लिङ्गं तस्यामेवोक्तरीत्या तत्सम्भवात् । उत्तरश्लोके मातृकायाः परमेश्वरत्वविशेषणत्वमपि लिङ्गं लघुषोढान्यासस्य परमेश्वरभावापादकत्वात् । यास्तु देवताः **'प्रपञ्चो भुवनं मूर्तिमन्त्रदैवतमातृकाः'** इत्युक्ते महाषोढान्यासे कीर्त्यमानास्तासामपि सर्वासां मातृकावर्णरूपत्वात्प्रकृतश्लोके देवीमन्त्रमातृकापदैस्तदेकदेशपरामर्शाल्लिङ्गादुपलक्षण-विधया **'महाषोढोदिताशेषदेवतागणसेवितम्'** इति वचनान्तरोक्ततदभेदोऽप्यत्रानुसन्धेयः ।

यत्तु **प्राञ्चः**— **'सहस्राणि सहस्रशो ये रुद्रा'** इति **श्रुत्यो**क्ताः श्रीकण्ठादयो रुद्रगणाः पञ्चाशदिह गणेशपदेनाभिधीयन्त इति व्याचख्युः । परे तु **'इन्द्रज्येष्ठा मरुद्गणाः'** इति **श्रुत्यु**क्ता एकोनपञ्चाशन्मरुद्गणा गणेशपदेन गृह्यन्त इति व्याचक्षते । तदुभयमपि चिन्त्यम्, तयोः श्रुत्यो रुद्रगण-मरुद्गणसद्भावे प्रामाण्येऽपि प्रकृतगणेशपदेन तेषामेवेह ग्रहणे मानाभावात् । न चाकारादिमातृकास्वरूपत्वात्तेषामिह ग्रहणम् । मातृका-स्वरूपतायाः केशवादिगणेषु कामिन्यादित्रिपुरागणादिष्वप्यविशिष्टत्वेन तेषामपि गणेशपदेन परामर्शापत्तेः । न च रुद्रवाचकेशपदेन गणपदस्य कर्मधारये श्रीकण्ठादिगणपरत्वमेवास्य सिध्यति । विघ्नेश्वरादिपरत्वे तु षष्ठीतत्पुरुषापत्त्या निषादस्थपत्यधिकरणविरोध इति वाच्यम् । विघ्नेश्वरादिषु गणेशपदस्य रूढत्वेन रथकाराधिकरणन्यायेन तेषामेव परामर्शस्योचितत्वात् । निषादस्थपतिपदस्य पक्षद्वयेऽपि यौगिकत्वेन वैषम्यात् । किं च ग्रहादिपदानामपि गृह्णन्ति गृह्यन्त इत्यादिव्युत्पत्त्या विषयेन्द्रियादिपरत्वमेवाऽऽपद्येत न पुनः सूर्यादिपरत्वं तेषु सूर्यादिपरत्वमेवाङ्गीकुर्वद्भिरपि भवद्भिराकस्मिकतया तत्प्रायपाठं लघुषोढादेवता-प्रत्यभिज्ञां चानादृत्य कथमर्थान्तरं वर्ण्यत इत्याश्चर्यम् । अपि च देव्याराधन-प्रत्यूहनिरासकत्वद्योतनस्वारस्यभङ्गः । विघ्ननिरासकानां बहूनां सत्त्वेऽपि गणेशा-राधनेनैव श्रीविद्याराधनप्रत्यूहं निरस्येदिति नियमस्य क्रत्वर्थत्वेन द्योतनस्याऽऽ-वश्यकत्वात् । अत एव **कल्पसूत्रे** वचनम्—**'इत्थं सद्गुरोराहितदीक्षो महाविद्याऽऽराधन-प्रत्यूहापोहाय गाणनायकीं पद्धतिमामृशेत्'** इति । **'एवं गणपतिमिष्ट्वा विधूतसमस्तविघ्न-व्यतिकरः शक्तिचक्रैकनायिकायाः श्रीललितायाः क्रममारभेत'** इति **कल्पसूत्र**वचने त्वाप्रत्ययेन **'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत'** इत्यादाविवाङ्गाङ्गिभावस्य स्पष्टं बोध-नात् । गणेशक्रमस्य ललिताक्रमोपकारकत्वकथनेन ललिताक्रमस्यैव फलवत्त्वोक्त्या च विपरीताङ्गाङ्गिभावशङ्कायाः फलवदफलन्यायेन निरासात् । **'एतस्यैव रेवंतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत'** इतिवत् ।

इयांस्त्वितो विशेषः—ललितोपास्तेर्यावज्जीवकर्तव्यत्वेन ब्राह्ममुहूर्तोत्थानादिकर्मसु परस्परविरोधेनोपास्त्यन्तरस्यासम्भवाल्ललिताक्रमारम्भात्पूर्वमेव कतिपयदिवसैर्यथा-शक्तिसंख्याकजपरूपा महागणपतेरुपास्तिरन्वारम्भणीयावत्सकृदेव कार्या । अत एवोक्तवचने क्रममारभेतेत्यारम्भस्यैव परतः कीर्तनमुपपद्यते । न चैवं सति **'श्यामा तत्क्रमविमृष्टिः सदा कार्या'** इति वचनान्तरेण राजश्यामलोपास्तेरपि ललिताक्रम-प्रकरणे विधानेन तदङ्गत्वादुक्तरीत्या विरोधात्समुच्चयस्य कथमुपपत्तिरिति वाच्यम् । श्यामलायान्तरप्रकरणान्त **'एवं नित्यसपर्यां कुर्वन् लंक्षं(लक्ष)[जपं] जप्त्वा'** इत्यादिना लक्षजपस्यैव विधानेनोपक्रमस्थस्य सदेतिपदस्य तत्परिमितकालमात्रपरत्वावश्यंभावे पाठक्रमबाधेन ललितोपास्तेः पूर्वमेव श्यामलोपास्तेः कर्तुमुचितत्वात् । अत एव

**'प्रधानद्वारा राजप्रसादनं हि न्याय्यम्'** इति वचने राजोपास्तेः पूर्वं प्रधानोपास्तिप्रदर्शनमुपपद्यते । अत्र हि शब्देन लोकप्रसिद्धिमनुसरता भगवता **परशुरामेण** प्रधानोपसर्पणमन्तेरेणैव राजानुसरणस्यापि लोके बहुलं दर्शनात्तदुपास्तेः कृताकृतताऽपि सूचिता । परं तु तदुपास्तिपूर्वकराजोपास्तौ फलभूमा लौकिकन्यायेन षोडशिग्रहणपक्ष इव वैदिकन्यायेनापि सिध्यति । एवमेव **'सङ्गीतमातृकामिष्ट्वा कोलमुखीं विधिवद्वरिवस्येत्'** इति विहिता, दण्डनाथोपास्तिरपि लक्षजपपरिमिता श्यामलोपास्त्या बद्धक्रमत्वात्तद्वदेव विकल्पितेति ज्ञेयम् । न ह्येवं गणेशोपास्तेर्विकल्पः । तस्याः प्रधानारम्भं प्रति नित्याङ्गत्वात् । तस्मादीदृशावश्यकाङ्गध्वननविरोधादपि न गणेशपदस्य श्रीकण्ठादिपरत्ववर्णनं युक्तिमिति दिक् । यद्वा, उत्तरतन्त्रे प्रधानदेवताया मूलविद्यायाश्च प्रत्येकं गणेशादिपञ्चात्मकत्वं मूल एव वक्ष्यते । प्रकृतश्लोके च लघुषोढोक्तदेवतासमूहषट्के प्राथमिकानां पञ्चानामेव पीठदेवताभ्यो विभज्य कीर्तनाल्लिङ्गाद्देवीमित्यस्य मन्त्रमयीमित्यस्य वा विशेष्यत्वं सुवचम् । तत्र देवताविशेषकस्तवनपक्षे मन्त्रमयीं मन्त्रप्रधानां मातृकां जगन्मातरमिति व्याख्येयम् ।

**'एकादशाधिकशतदेवतात्मतया पुनः ।**
**गणेशत्वं महादेव्याः.................॥'** (७/५७)

इत्यादिभिः **'एतै राशिस्वरूपिणीम्'** (७/६३) इत्यन्तैः सार्धैः षड्भिः श्लोकैर्वक्ष्यमाणया दिशा गणेशादिपञ्चात्मिकाम् । मन्त्रस्य विशेष्यतापक्षे देवीं द्योतमानाम् ।

**'अकथादित्रिपङ्क्त्यात्मा तार्तीयादिक्रमेण च ।**
**सा गणेशो महाविद्या.....................॥'**(७/६३-६४)

इत्यादिभिः **'राशित्वं चान्त्यवर्जितैः'** (७/६६) इत्यन्तैः सार्धैस्त्रिभिः श्लोकैर्वक्ष्यमाणया दिशा गणेशादिपञ्चात्मिकामित्यर्थः । न चानयोः पक्षयोर्गणेशादिपदानां रूढ्यर्थपरित्यागस्याऽऽवश्यकत्वे श्रीकण्ठादिपरत्वव्याख्यया किमपराद्धमिति वाच्यम् । उक्तोपबृंहणानुरोधेन रूढित्यागस्यादोषत्वात् । श्रीकण्ठादिपरत्वेनोपबृंहणस्य तैरप्यलेखनात् । पीठरूपिणीमित्यस्य ओजापूकाख्यपीठेषु स्वरूपमस्या इति देवीपक्षे, मन्त्रपक्षे तु लक्षणया कूटरूपिणीमित्यर्थो वर्णनीयः । पीठे श्रीचक्रे रूपमस्या इति वाऽर्थः । एवं त्रय एवार्थाः प्रामाणिकाः ।

यत्तु **प्राञ्चः**—पीठशब्दं जगदाधारपरत्वेन, योगिनीशब्दं ब्राह्म्यादिपरत्वेन, गणेशशब्दं श्रीकण्ठादिपरत्वेनेतरद्यथाप्रसिद्धमेव व्याख्यायैषा सकीलकसम्प्रदायरीत्यैका व्याख्येत्युक्त्वा निष्कीलकसम्प्रदायरीत्या त्वन्या अपि पञ्चविधा व्याख्या उच्यन्त इति प्रतिज्ञाय वर्णमन्त्रसंविच्चक्रधामपरत्वेनेमं श्लोकं पञ्चधा व्याचक्षते, तत्सर्वं मूर्खप्रतारण-

मात्रम् । तथाहि इच्छाज्ञानाक्रियाशान्ताश्चतस्रो वामाज्येष्ठारौद्र्यम्बिकाश्चतस्रस्तत्समष्टी द्वे एवं द्वे पञ्चके क्रमादकारहकाराभ्यां जाते इत्यकारहकारयोः सामरस्यमेकमित्येकादशसंख्या गणेशपदेनोच्यते । तदुक्तम्–

**'अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।**
**हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ॥'**

इत्यादिरीत्या वर्णसंख्यामात्रं श्लोकारूढं कृत्वा वर्णोद्धारः– गणेशो हकारो ग्रहः सकारः । नक्षत्रपदे ककार एको विवक्षितोऽन्यदुच्चारणार्थम् । योगिनी लकारः । राशिर्हकारः । रूपिणीमित्यत्र रेफेंकारावेव विवक्षितावित्यादिरीत्या हादिविद्योद्धारः । देवीमित्येकमेव विवक्षितम् । इतरत्सर्वमुच्चारणार्थम् । द्योतमानामित्यर्थः । तेन सुषुम्णान्तर्वर्तितेजोदण्डरूपायाः संविद उद्धारः । देवीपदेनैव तेजस्त्रितयमुपलक्षितमिति धामत्रयोद्धारः । पीठपदेनैव चक्रोद्धार इत्यादिप्रकाराणां भवदुक्तानां सर्वत्र प्रदर्शयितुं शक्यत्वात् । गणेशादिपदानां हकारादिपरत्वे कोशाभावेन यस्य कस्यापि पदस्य यः कश्चिदेव स्वाभिलषितोऽर्थः स्वानुपयुक्तः सर्वोऽप्युच्चारणमात्रार्थत्वादविवक्षित इति कल्पनाया अत्यन्तमप्रामाणिकत्वात् । तत्र सम्मतत्वेन यस्य कस्यचिदेव वचनस्यानन्वितस्य लेखोऽपि बालसम्मोहनमात्रम् । अत एव तद्दूषणाभिनिवेशोऽपि ग्रन्थविस्तरमात्रफलकत्वादनुचित एवेत्युत्तरत्र सर्वत्रापि बहुशो दृश्यमाना अपि तादृशो व्याख्या नो दृश्यन्ते**ऽस्माभिः** । लोकवेदाधिकरणन्यायेन पदपदार्थव्युत्पत्त्यनुरोधेनाऽऽपतत एवार्थज्ञानस्याभ्युदयकारित्वात् । वैदुष्यबलादुन्नीतस्य सकलविद्वच्चमत्कारकस्याप्यर्थस्यातथात्वात् । उपदर्शितस्योपहसनीयस्यार्थस्य तु कैमुतिकन्यायेनोपेक्ष्यत्वादीति द्रष्टव्यम् । **काश्मीरास्तु**– गणेशः कालरूपी विनायको योगिन्यो वशिन्याद्या इत्याहुरिति विशेषः । अत्र श्लोके देवीस्तुतिः प्रतिज्ञाता । सा च गुणिनिष्ठगुणाभिधानम् । तन्त्रस्य सर्वस्यापि गुणाभिधानरूपत्वात्तन्त्रं प्रस्तौमीत्यप्यर्थः । तत्र च विषयो 'देवीं मन्त्रमयीम्' इति पदाभ्यां दर्शितः । देवतानिष्कर्षो मन्त्रनिष्कर्षश्चेह विषय इति यावत् । उत्तरश्लोकैस्तु प्रयोजनानि प्रपञ्चयिष्यन्ते ॥ १ ॥

**प्रणमामि महादेवीं मातृकां परमेश्वरीम् ।**
**कालहल्लोहलोल्लोलकलनाशमकारिणीम् ॥ २ ॥**

कालस्य हल्लोहलो वेगस्तस्योल्लोलो लोलत्वमधरोत्तरकरणं तस्य कलना तत्कर्तृको बन्धः । यद्वा– उल्लोलकलना पदपूर्वोत्तरसम्बन्धस्तस्य शमं नाशं करोतीति तथेति साम्प्रदायिकाः । वस्तुतस्तु हतं करोतीति हत् । तत्करोति तदाचष्ट इति ण्यन्ताद्धतशब्दात्क्विप् । स चासौ लोहलश्च, **'लोहलः स्यादस्फुटवाग्'** इति **अमरः** ।

हल्लोहलश्चासावुल्लोलश्च । अथोर्मिषु । **'महत्सूल्लोलकल्लोलौ'** इति **अमरः** । तेन कलनाऽऽक्रमणमित्यपि सुव्याख्यम् । सर्वस्यैव जगतः कालेन कवलीकारात्तद-विषयत्वप्रदानं कालातीतशिवभावे पर्यवस्यति । अत एव [शिव]कर्तृककालकर्मक-कलनाऽपि देवीप्रभावादेवेत्युक्तम् **आचार्यैः—**

**'करालं यत्क्ष्वेडं कवलितवतः कालकलना**
**न शम्भोस्तन्मूलं तव जननि ताटङ्कमहिमा ॥'**

इति । समुद्रे स्थूलतरङ्गस्य वेगेनाऽऽपततः परावर्तनस्यासाध्यत्वात्कालचपेटाया अपि तादृशत्वद्योतनायोल्लोलपदेन तदुक्तिः । तरङ्गाक्रमणमात्रेण तरणनिपुण-स्यानिष्टादर्शनाद्धतं करोतीति विशेषणम् । **हन्तुर**पि स्फुटवक्तृत्वे पूर्वसूचनया तन्निरा-सोपायः सम्भाव्येतेति तद्व्युदासाय **लोहलेति** । अत्रापि पूर्वश्लोकवद्विशेष्यत्रैविध्यम् । तेन महादेवीशब्दो महाविद्यापरः । **'वदेदानीं महादेव्या एकैकाक्षरसाधनम्'** इति चतुर्थपटले (श्लो.१) प्रयोगात् । महादेव्यादिपदत्रय एकस्य विशेष्यत्वे, इतरद्द्वयं विशेषणत्वेन योज्यम् ॥ २ ॥

**यदक्षरैकमात्रेऽपि संसिद्धे स्पर्धते नरः ।**
**रवितार्क्ष्येन्दुकन्दर्पशङ्करानलविष्णुभिः ॥ ३ ॥**

यस्या मातृकाया विद्याया वैकमात्रस्याक्षरस्यापि सम्यक्सिद्धौ रव्यादिभिः सप्तभिर्नरः स्पर्धते तन्निष्ठासाधारणगुणलाभात् । **मातृकाविवेका**दावेकैकाक्षरस्यापि पार्थक्येन साधनप्रकारणामुक्तेः । विद्यायामप्येकैकाक्षरसाधनस्य चतुर्थे [पटले] वक्ष्यमाणत्वात् । रवेस्तेजःप्रकर्षध्येयाधिष्ठानत्वकर्मप्रवर्तकत्वादयो गुणाः । तार्क्ष्यस्य विष्णुभारवोढृत्वविषहरत्ववेगातिशयादयः । इन्दोर्देवतातृप्तिकारित्वनिखिलौषधिजीव-कत्वाह्लादकत्त्वादयः । कन्दर्पस्य मनःक्षोभकत्वान्तर्हितत्वसौन्दर्यादयः । शङ्करस्या-खिलाविद्याधिपत्वविश्वाधिपत्वविश्वसेव्यत्वादयः । अनलस्य प्राणिजठरान्त-स्थितत्वहविर्वोढृत्वसर्वसंहारकत्वादयः । विष्णोर्विश्वपालकत्वलक्ष्मीपतित्वमायित्वा-दयः । एवमवयवफलैः कैमुतिकन्यायेनावयविनः स्तुतिः । नन्वेवं सति शिवविष्ण्वो-र्जगद्व्यापारे नियुक्तयोर्धर्मस्य जगद्व्यापारस्य लाभ उपासकानामयुक्तः । **'जगद्व्या-पारवर्जम्'** इति **वैयासिकसूत्र**विरोधादिति चेत् । न । दहरादिविद्योपासकानां जगद्-व्यापारालाभेऽपि त्रिपुरसुन्दर्युपासकानां तस्यापि सुलभत्वात् । इदं च **'तस्मै श्रीललितादेवी स्वसाम्राज्यं प्रयच्छति'** इत्येतच्छ्लोकव्याख्यावसरे **सौभाग्यभास्करे** सोपपत्तिकमुपपादितम**स्माभिः** । **मनोरमायां** त्वेकाक्षरमात्र इत्यस्यार्थो गुरुमुखा-दवगन्तव्य इत्युक्तम् । **नाथचरणा**स्तु त्रिमूर्तीशाक्षरं तथात्वेनोपदिशन्ति । तस्यैव देवीरूपतया परिणामस्य तत्रैतल्लयस्य च वक्ष्यमाणत्वात् । देवीपक्षे यस्या देव्या एकाक्षरमात्रस्य वाग्भवादेः सिद्धावित्यादिरर्थः । मात्रपदेन बिन्द्वादिराहित्येन

बीजत्वाभावेऽपीति ध्वन्यम् । अत एव भयादैकारमात्रमुच्चरितवतः सत्यवचसो वाक्सिद्धिः । क्लीबपदश्रवणेन विस्मयादाद्याक्षरमात्रमुच्चरितवतः सुदर्शनाख्यस्य देवीप्रसाद इति कथयो**र्देवीभागवते** तृतीयस्कन्धे प्रसिद्धेः ॥ ३ ॥

**यदक्षरशशिज्योत्स्नामण्डितं भुवनत्रयम् ।**
**वन्दे सर्वेश्वरीं देवीं महाश्रीसिद्धमातृकाम् ॥ ४ ॥**

यस्या मातृकाया अक्षरेषु यः शशी, अनुस्वारः । चन्द्रपर्यायाणां सर्वेषामनुस्वारे सङ्केतात् । बिन्दुरिति यावत् । तस्य ज्योत्स्नेव ज्योत्स्ना विस्तारस्तेन त्रैलोक्यं मण्डितम् । बिन्दोः सकाशादेव सकलजगदुत्पत्तेः **कामकलाविलासा**दौ कथनात् । भुवनत्रयं ज्ञातृज्ञानज्ञेयरूपम् । **'तन्नाना [अनु]रूपं(प)ग्राह्यग्राहकभेदात्'** इति **शक्तिसूत्रे** तथैव विभागदर्शनात् । यद्वा यस्या विद्याया अक्षरेषु ये शशिनो बिन्दुत्रयं तस्य ज्योत्स्नया शक्त्या भुवनत्रयं मण्डितं व्यक्तवाच्यतामापन्नं रुद्रेश्वरसदेशाख्या इत्यादिना उत्तरतन्त्रे बिन्दुत्रयस्य कतिपयत्वबोधकत्वकथनात् । यद्वा यस्या देव्या अक्षरस्य नित्यस्य शशिनो भालस्थस्य ज्योत्स्नया सर्वोर्ध्वस्थत्वात्सकलभुवनत्रयप्रकाश इति । अक्षराण्येव शशिन इति तु **प्राञ्चः** । विद्यान्तर्गतसकारस्य चन्द्रबीजत्वात्तस्यैषा स्तुतिरित्यप्यन्ये । तां महाश्रीसिद्धमातृकां श्रीकण्ठादिजननीं वा वन्दे ॥ ४ ॥

**यदक्षरमहासूत्रप्रोतमेतज्जगत्त्रयम् ।**
**ब्रह्माण्डादिकटाहान्तं तां वन्दे सिद्धमातृकाम् ॥ ५ ॥**

यस्या मातृकाया अक्षरैरेकपञ्चाशत्संख्यैर्महासूत्रैर्ब्रह्माण्डादिकटाहपर्यन्तं स्थूलतमादिसूक्ष्मतमान्तं प्रोतं स्यूतम् । सर्वस्यापि जगतो वाचकाः शब्दा मातृकासंघटिता एवेति भावः । विद्यापक्षे तदन्तर्गतावकारहकारौ ग्राह्यौ । तयोर्मध्ये सर्वस्य जगतो निरूढताया वक्ष्यमाणत्वात् । **'एतद्वै तदक्षरं गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत'** इति **श्रुतौ** तथा निर्णयादित्युक्तमक्षरमम्बरान्तधृतेरित्यधिकरणे । सिद्धमातृकामिति सिद्धा च सा मातृका च सिद्धा मातृका ययेति वा । सिद्धानां मातरमिति वाऽर्थः ॥ ५ ॥

**यदेकादशमाधारं बीजं कोणत्रयोद्भवम् ।**
**ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यते ॥ ६ ॥**

यस्या मातृकाया एकादशमेकाराक्षरं कोणत्रयवदुद्भवो लेखो यस्य तत् । नागरलिप्यां **साम्प्रदायिके**रेकारस्य त्रिकोणाकारतयैव लेखनात् । तद्ब्रह्माण्डादिजगत्प्रति आधारो बीजं च सदद्यापि सन्धिशास्त्रज्ञैर्दृश्यते । अकारः परमः शिवः, तस्य स्त्री ई । पुंयोगलक्षणो ङीष् । तयोः संयोगेनैकारनिष्पत्तिः । शिवशक्तिसमायोगस्यैव जगद्बीजत्वात्तदभेदेन तादृशाक्षरस्यापि तद्बीजत्वम् । **सुन्दरीतापिन्यां** प्रथमोपनिषदि

गायत्र्यन्तर्गतस्य सवितुर्वरेण्यमिति पदद्वयस्य जगदुत्पादकोत्तमार्थकस्य पर्याय एवैकार इति श्रवणात् । आधारमिति नपुंसकमार्षम् । आधारबीजमित्येकपदत्वेन केषाञ्चित् पाठस्तु टीकान्तरासम्मतत्वात् **तन्त्रराज**विसंवादाच्च नाऽऽदेयः । यत्तु **त्रिंशिकाशास्त्रे** वचनम्—

**'अनुत्तरानन्दचितिरिच्छाशक्तौ नियोजिता ।**
**त्रिकोणमिति तत्प्राहुर्विसर्गामोदसुन्दरम् ॥'**

इति । तत्राप्यनुत्तरेच्छापदयोरकारेकारावेवार्थौ साम्प्रदायिकौ । एवं कादिविद्यायामपि द्वितीयाक्षरस्यैषा स्तुतिः । एतद्वै तदक्षरमित्युक्तश्रुतावप्येकारस्तदिति च भिन्ने पदे । तेन तत्राप्येकारस्यैव सर्वजगदाधारत्वेन स्तुतिः । **केचित्** तु यदेकादशमक्षरं योन्याकारं तस्मिन्सर्वं जगदद्यापि सिद्धैर्दृश्यत इति योजयन्ति । योनिजन्यत्वांशे प्रत्यक्षसिद्धत्वोक्तिरिति तु **काश्मीराः** । अत्र मातृकाविद्यादेवीनां मध्ये यस्या विशिष्य यस्मिन् श्लोके कथनं न दृश्यते तस्यास्तदितराभ्यां सह भेदाभिप्रायेण तस्या अपि स्तवनमुपक्रमाविरोधाय द्रष्टव्यम् ॥ ६ ॥

**अकचादिटतोन्नद्धपयशाक्षरवर्गिणीम् ।**
**ज्येष्ठाङ्गबाहुपादाग्रमध्यस्वान्तनिवासिनीम् ॥ ७ ॥**

आदिशब्दोऽकारादित्रयेऽन्वेति तेनाकारादयः षोडश, ककारादयश्चकारादयश्च पञ्च पञ्च । एवमुन्नद्धशब्दः सन्नद्धवाचक आरम्भपरष्टकारतकारयोरन्वेतीति तेऽपि पञ्च पञ्च । पयशाक्षरात्मकाश्च ते वर्गाश्च ।

**'फलशब्दस्य यश्चाऽऽदिर्वर्गशब्दादिरेव च ।**
**भकारो मनुशब्दादिः पवर्ग इति कथ्यते ॥'**

इत्यादि **कालिकापुराण**वचनात् पवर्गः पादयः पञ्च । यवर्गो यादयश्चत्वारः । शवर्गः शादयः षडित्यर्थः । ईदृशवर्गाष्टकवती वक्ष्यमाणस्थानाष्टकवासिनीत्युक्त्या यथासंख्यन्यायेन ज्येष्ठाङ्गे शिरसि स्वरा दक्षिणबाहौ कवर्ग इत्यादि सिध्यति । ज्येष्ठाङ्गं च बाहू च पादौ चाग्रं चेत्यादिर्विग्रहः । ज्येष्ठं प्रथममङ्गं शीर्षादिघण्टिकान्तभागः । अग्रं चरममङ्गं हृदयादिसीवन्यन्तभागः । मध्यं कण्ठादिस्तनान्तभागः । शरीरपदवाच्यं ह्येतद्भागत्रयात्मकं प्रकाण्डमेव मुख्यम् । केशा हस्तौ पादौ चेति क्रमेण भागत्रयस्य शाखाः । अत एव कामकलान्यासे कूटत्रयस्य तत्तच्छाखार्वाविशिष्टतत्तद्भागेषु त्रिष्वेव क्रमेण न्यासः संगच्छते । तेनाग्रपदस्य पार्श्वद्वयपृष्ठ[1]भाजि-(नाभि)जठरात्मकस्तृतीयो भाग एवार्थो युज्यते । एतद्द्योतनायैव शीर्षस्य

1. भाभिज- ख.

प्रथमाङ्गत्वेन निर्देशः । तेन बाह्वग्रे पादाग्रे चेत्यग्रपदस्य प्रत्येकमन्वयेन **प्राचां** व्याख्यानमपव्याख्यानम् । प्रत्युत बाह्वोः पादयोश्च मूलाद्यग्रान्तं कवर्गादिर्न्यसनीयत्वात् तद्विरुद्धं च । स्वान्तं हृदयम् । **तन्त्रराजे** हि–**'ज्येष्ठाङ्गबाहुहृत्पृष्ठकटिपादनिवासिनीम्'** इति पाठः । तत्र हि शीर्षादिपादान्तोऽवयवक्रम आश्रित इह तन्त्रे तु न्यासानुरोधेन मातृकाक्रम आदृतः । तेन मातृकान्यासानुष्ठानान्तमावश्यकत्वेन सूचितम् । भूतशुद्धिप्राणप्रतिष्ठयोस्तेन बद्धक्रमत्वात् । **मनोरमायां** त्वेतत्स्तोत्रव्याख्यारम्भे **'नित्याषोडशिकार्णवे** महात्मभिः **काश्मीरा**दिभिर्व्याख्याततत्वात् सैव व्याख्या स्वेन लिख्यत' इति वदता **सुभगानन्दनाथेन** पाठभेदो नास्तीति ध्वनितम् । अत्र श्लोके मातृकादेवतयोरन्योन्यमभेदो वर्णितः ॥ ७ ॥

**तामीकाराक्षरोद्धारां सारात्सारां परात्पराम् ।**
**प्रणमामि महादेवीं परमानन्दरूपिणीम् ॥ ८ ॥**

ईकाररूपैरक्षरैः प्राधान्येनोद्धारो यस्यास्तां कादिविद्यारूपां महादेवीं महाविद्यां प्रणमामि । तथा च **बह्वृचै**राम्नायते–

**'चत्वार ईं बिभ्रति क्षेमयन्तो दशगर्भं चरसे धापयन्ते ।**
**त्रिधातवः परमा अस्य गावो दिवश्चरन्ति परि सद्यो अन्तान् ॥'**

इति । अत्र हि कादिविद्याया ईकारचतुष्टयवत्त्वविशेषणद्वारोद्धारः कृतः । अथवा, ईकाराक्षरमुत्कर्षेण धरतीत्यर्थे कर्मण्यण् । उदुपसृष्टाद्धारयतेः पचाद्यच्युद्धारा, ईकाराक्षरस्योद्धारेति वा । अत्रेकारवत्त्वस्य स्तुतिप्रयोजकगुणत्वेन कीर्तनात् तृतीयश्लोकोक्तो महिमा स्मारितः । **वेदे**ऽपि तत्प्राधान्येनोद्धारस्तादृशमहिमातिशयद्योतनाभिप्रायगर्भ इति ध्वनितम् । अबिन्दुकस्य तस्य कीर्तनात्तु कादिविद्यैवात्र तन्त्रे विषय इत्यपि सूचितम् । तस्या एव त्रिशतीघटकत्वेनात्युत्तमत्वात् । **सुन्दरीतापिन्यां** प्रथमोपनिषदि कादिविद्याकूटानामेव प्रत्येकं गायत्रीसमानार्थकत्वं प्रतिपाद्य तत्प्रकृतितयैवेतरासां विद्यानामुद्धाराच्च । तथा च **ब्रह्माण्डपुराणे–'श्रीविद्येव तु मन्त्राणां तत्र कादिर्यथा परा'** इति । तदेतदाह–सारात्सारां परात्परामिति । मथितो गुणपुञ्जः सारस्तद्वानपि सारः । अर्शआदित्वादच् । सारवन्मन्त्रानपेक्षाधिकसारवतीम् । उत्कृष्टोद्धादिविद्यामन्त्रादप्युत्कृष्टां चेत्यर्थः । पूर्वोक्तभूमिकाभेदाः पूर्वेऽपि सारा उत्कृष्टाश्च तेभ्योऽप्याधिक्योक्त्या तादृश एवाधिकारीत्यपि ध्वनितम् । एवं प्रथमश्लोके सूचितं विषयसामान्यमिह विशेषपरत्वेनोपसंहृतम् । एतेन हादिविद्यायामेवास्मिंस्तन्त्रे विषयतां वर्णयन्तो निरस्ताः । वक्ष्यमाणमन्त्रोद्धारतदर्थवर्णनपराणां श्लोकानां कादिविद्यानुगुण्य एव स्वारस्याच्च । षष्ठश्लोके तैरेव विद्यान्तर्गतवर्णस्यैषा स्तुतिरित्युक्तेश्च । त्रिकोणाक्षरस्य हादिविद्यायामभावेनैतदविषयीभूतविद्यान्तर्गत-

वर्णस्तुतेरनुपयोगात् । ईकाराक्षर उद्धारो यस्या हृल्लेखायास्तामिति भुवनेश्वरी-परत्वेन व्याख्यानमपि नातीव स्वरसम् । एतत्तन्त्रप्रयोजनमाह– परमेति । परम आनन्दो मोक्षः । '**एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति**' इति **श्रुतेः** । तं रूपयति प्रयच्छतीत्यर्थः । अत एवाऽऽहुः **काश्मीराः**– ईकारस्य बिन्दुविसर्गात्मनः शिवशक्त्योः सामरस्यरूपस्य स्वात्मत्वेन भावनायां परमानन्दानुभव इति ॥ ८ ॥

**अद्यापि यस्या जानन्ति न मनागपि देवताः ।**
**केयं कस्मात् क्व केनेति सरूपारूपभावनाम् ॥ ९ ॥**

एवं मन्त्ररूपं निष्कृष्य देवतारूपं विषयं निष्कृष्याऽऽह– अद्यापीति । देवता अपि यस्यास्त्रिपुरसुन्दर्याः सरूपारूपभावनां मनागीषदपि अद्यापि अनादिकालमा-रभ्याद्यावध्यपि न जानन्ति । मनुष्याः सामस्त्येनाल्पकालेन न जानन्तीति किमु वक्तव्यमित्यर्थः । देवतापदमिन्द्रियपरमिति तु **प्राञ्चः** । देव्या भावना द्विविधा– सरूपाऽरूपा चेति । स्थूलरूपानुसन्धानात्मिका प्रथमा । पररूपानुसन्धानात्मिका चरमा । या तु सूक्ष्मरूपानुसन्धानात्मिका मध्यमा विधा सा पार्थक्येन पूर्वश्लोक एवोक्तेति नेहोट्टङ्किता । ततश्च चतुःशतीद्वये भावनाद्वयं क्रमेण विषय इति ध्वनि-तम् । तादृशं भावनाद्वयं प्रत्येकं चतुर्विधमित्याह– केयमित्यादिना । इयं स्थूला देवी का किं स्वरूपा? इयं कस्मादुत्पन्ना? इयं क्व तिष्ठति? इयं केन सह तिष्ठति ? एवं परायामपि चत्वारः प्रकारा योज्याः । केयमिति नाम, कस्मात्कारणात्, [क्व देशे], केन हेतुनेति चत्वार एव प्रकारा इति **केचित्** । तत्र हेतुकारणयोर्भेदश्चिन्त्यः । अन्ये तु अद्यापि दर्शनयोग्यकालेऽपि न जानन्ति । परशिवसामरस्यकाले तु कथं तां जानीयुरित्यर्थं वर्णयन्ति तदरूपभावनया पुनरुक्तम् । परशिवसमरसताया रूपान्तरेण सार्वकालिकत्वादयुक्तं च ॥ ९ ॥

**वन्दे तामहमक्षय्यामकाराक्षररूपिणीम् ।**
**देवीं कुलकलोल्लोलप्रोल्लसन्तीं परां शिवाम् ॥ १० ॥**

'**अकारो वै सर्वा वाग्**' इति **श्रुत्या**,'**अक्षराणामकारोऽस्मि**' इत्यादि **स्मृत्या** च सर्ववर्णानामकार एवाक्षरमविनाशिस्वरूपम् । तदस्या एवं रूपम् । विमर्शस्य प्रकाशाभेदात् । अत एवाक्षय्यां क्षेतुमशक्याम् । कुलं सुषुम्णामार्गः । कलस्य नादार्णवस्योल्लोला महातरङ्गाः । तत्र तेषु चोल्लसन्ती । कुलानि षट्त्रिंशत्तत्त्वानि । कलाश्चतुःषष्टिरिति वा । कुलं शरीरं पृथिव्यां लीयमानत्वात् । कलैकदेशः । उल्लोलमूर्ध्वोर्ध्वम् । प्रोल्लसन्ती वैखर्यात्मनेत्यर्थ इति तु **काश्मीराः** । ईदृशीं तामहं वन्दे इत्यर्थः । अक्षय्यक्षकाराक्षररूपिणीमिति **क्वचित्**पाठः । तत्पक्षेऽक्षय्यशब्दोऽ-

खण्डपरः क्षकारविशेषणं तस्य ककार-षकारयोगात्मकत्वस्य तन्त्रान्तरसिद्धस्या(स्य) निरासायेति व्याख्येयम् ॥ १० ॥

**वर्गानुक्रमयोगेण यस्यां मात्रष्टकं स्थितम् ।**
**वन्दे तामष्टवर्गोत्थमहासिद्ध्यष्टकेश्वरीम् ॥ ११ ॥**

वर्गाणां पूर्वोक्तानामनुक्रमयोगेण क्रमानुसारिसम्बन्धेन यस्यामेकवचनादेकस्यामपि मातृकायामष्टौ मातरो ब्राह्म्यादयः स्थितास्तादृशाष्टवर्गजन्याणिमादिमहासिद्ध्यष्टक-स्वामिनीं तां देवीं वन्दे । महासिद्ध्यष्टकशब्देन वाग्देवताष्टकं **केचिद्** आहुः–

**'सर्वे वर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये ।**
**शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका ॥'**

इति वचनाद्वर्णाभेदः । **काश्मीरास्तु** मातृकाया अष्टौ वर्गास्तदधिष्ठा[त्र्यो]ऽष्ट-मातरस्तासां प्रत्येकोत्थाणिमाद्यष्टसिद्धयश्च सम्भूय चतुःषष्टिस्तासां व्यष्टिशक्तीनां कारणभूता समष्टिशक्तिः स्वात्मत्वेन सिद्धेति व्याचक्षते । अन्योऽप्यस्य प्रपञ्चः **प्राचां** टीकासु द्रष्टव्यः ॥ ११ ॥

**कामपूर्णजकाराढ्यश्रीपीठान्तर्निवासिनीम् ।**
**चतुराज्ञाकोशभूतां नौमि श्रीत्रिपुरामहम् ॥ १२ ॥**

सृष्टिस्थितिलयकारिण्यो ब्रह्मादिरूपास्तिस्रः तत्समष्टिरेकेत्येवं चतस्रः शक्तयो वामाज्येष्ठारौद्र्यम्बिकेति नामिकाः सन्ति । तासामेवाधिष्ठानभूताश्चत्वारः पीठाः कामरूपं पूर्णगिरिजालन्धरमुड्डीयानं चेति । तत्राऽऽद्ययोर्नामैकदेशन्यायेन निर्देशः । जकारेणाऽऽढ्यो युक्तः स्वघटितपदवाच्यत्वसम्बन्धेनेति तृतीयः । जकाराख्येति पाठ आख्याशब्दो नामधेयप्रथमाक्षरपरः । जकार आख्या यस्येति समानाधिकरण एव बहुव्रीहिः । जकार आख्यायां यस्येति व्यधिकरणस्तु नाऽऽदर्तव्यः । आख्यापदस्य पूर्वनिपातापत्तेः । जकाराद्येति तु **तन्त्रराजे** पाठः । श्रीपीठपदेनोड्यानं गृह्यते । पीठानामनेकत्वेऽपि चतुर्णामेव प्राधान्यात् पार्थक्येन निर्देशः । तेष्वप्यम्बिका-धिष्ठानत्वेन प्रधानतमत्वान्निरुपपदेनैव पीठपदेन चतुर्थस्य निर्देशः । अभियुक्तानां नाम श्रीपदपूर्वं प्रयुञ्जीत । श्रीशैल-श्रीचक्र-श्रीविद्या-श्रीपुरादिकवदिति श्लोकोक्त-मर्यादानुरोधाय श्रीकारः । चतस्र आज्ञाश्चत्वारो वेदाः । तथा च **कौर्मे** हिमवन्तं प्रति देवीवाक्यम्–

**'ममैवाऽऽज्ञा परा शक्तिर्वेदसंज्ञा पुरातनी ।**
**ऋग्यजुःसामरूपेण सर्गादौ संप्रवर्तते ॥'**

इत्यादि । ताः कोशभूताः खड्गधनादेरिवाऽऽधारभूताः प्रतिपादिका इति यावत् । यस्याः सेति बहुव्रीहिः । तेन तत्सारभूतमखण्डं ब्रह्मेत्यर्थः । चतुराज्ञानां कोशभूतेति वा । वेदजनिकेत्यर्थः । एतदुभयमपि परब्रह्मणोऽसाधारणं लिङ्गमिति हि **शास्त्रयोनित्वादधिकरणे वर्णकद्वये प्रतिपादितम्** । अथवा चतुराज्ञाश्चत्वार आम्नायाः पूर्वदक्षिणपश्चिमोत्तराख्यास्तेषामेवोत्तमत्वात् प्राधान्येनेह निर्देशः । तेन चास्य तन्त्रस्याऽऽम्नायसारप्रतिपादकत्वोक्त्या तत्सिद्धान्तानुसारि**कल्पसूत्र**स्यैतदविरोधित्वेनापेक्षितांशे तस्यैव ग्रहणं नान्यस्य तन्त्रस्येति ध्वनितम् । तथा च **कल्पसूत्रा**रम्भे स्मर्यते—**'पञ्चभिर्मुखैः पञ्चाऽऽम्नायान् परमार्थसारभूतान् प्रणिनाय । तत्रायं सिद्धान्तः'** इत्यादि । ऊर्ध्वाम्नायस्यापि चतुःपदमुपलक्षणम् । तादृशीं त्रिपुरामहं नौमीत्यर्थः । अत्र सर्वेषां **वेदान्ता**नामद्वैते ब्रह्मणि तात्पर्यात्तदनुयायिनामाम्नायानामप्यखण्डानन्दं ब्रह्मैव प्राधान्येन विषयः । तदिदमाम्नायसारत्वोक्त्या सूचितम् । कोशपदेनापि श्लेषेण पञ्चकोशान्तरत्वेनाऽऽनन्दमयकोशातीतत्वेन तदेवोक्तम् । त्रिपुरेतिपदस्यापि स एवार्थः । तदुक्त**मभियुक्तैः**—

**'त्रिमूर्तिसर्गाच्च पुराभवत्वात् त्रयीमयत्वाच्च पुरैव देव्याः ।**
**लये त्रिलोक्या अपि पूरकत्वात् प्रायोऽम्बिकायास्त्रिपुरेति नाम ॥'**

इति । तेनास्मिन् स्तोत्रे सगुणद्वारा निर्गुणं ब्रह्मैव स्तुतमिति ध्वनितम् । अत एव **तन्त्रराजे** द्वादशश्लोक्युत्तरं पठ्यते—

**'इति द्वादशभिः श्लोकैः स्तवनं सर्वसिद्धिकृत् ।**
**देव्यास्त्वखण्डरूपायाः स्तवनं तव तद्यतः ॥'**

इति । किं बहुना सर्वस्मिन्नस्मिंस्तन्त्रे सगुणाद्युपास्तिद्वारा मुक्त्योपसृप्यं ब्रह्मैवोपास्यत्वेन प्रस्तूयत इत्यपि ध्वनितम् । तदिदं प्रथमश्लोके सूचितमिहोपसंहर्तुं नमामि त्रिपुरामित्यनुक्त्वा नौमि श्रीत्रिपुरामित्युक्तम् । अहंशब्दश्चाहङ्कारवाचकः । **'वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा'** इति प्रयोगात् ।

स चाहङ्कारो द्विविधः—परोऽपरश्चेति । जीवैर्देहादावभिलप्यमानोऽपरः । परस्मिंश्च ब्रह्मणि षट्त्रिंशत्तत्त्वात्मकस्य जगतः सृष्ट्यनुकूलेषु ज्ञानेच्छायत्नेषु प्राथमिकसर्वविश्वविषयक उदितोऽहमित्यभिमानः परः । ज्ञानरूपस्य ब्रह्मण ईदृशपराहन्ताविषयकत्वमात्रेण धर्मधर्मिभावं प्रकल्प्य तादृशो धर्मस्त्रिपुरसुन्दरीपदेन तदभिन्नो धर्मी कामेश्वरपदेनेह व्यवह्रियत इत्येतदपि त्रिपुरापदसामानाधिकरण्येनाहंपदनिर्देशाद् ध्वनितम् । अन्यथा प्रथमश्लोक इव नौमीत्येतावतैव कर्तुर्लाभादिह तदर्थकत्वेऽहंपदे वैयर्थ्यापत्तेः । न चैवमहंपदाद् द्वितीयापत्तिः । स्वरादेराकृतिगणत्वेनाव्ययत्वस्वीकारेण

तल्लोपात् । **'अहमिप्रलयं कुर्वन्'** इत्यादयः प्रयोगास्तु शब्दार्थयोरभेदमभिप्रेत्य **'नमांसि कुर्मः'** इत्यादिवच्छब्दपरा इत्यवधेयम् ॥ १२ ॥

एवं मङ्गलाचरणमुखेनैव शास्त्रस्य विषयप्रयोजनादिकं निर्वर्ण्य **'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्'** इत्यादि**श्रुति**ष्वेवकारेण ध्वनितस्य पुस्तकाद्युपायान्तरपरिसंख्यापूर्वकं गुर्वावश्यकत्वस्य द्योतनाय स्वयमद्वितीयोऽपि परमशिवो द्विविधं विग्रहं प्रकाशविमर्श-भेदेन विरच्य विमर्शांशेन प्रष्टृत्वं प्रकाशांशेन वक्तृत्वं च स्वीकृत्य तन्त्रमवता-रयितुमारभते–

**श्रीदेव्युवाच**

इति । तदुक्तं **स्वच्छन्दतन्त्रे–**

**'गुरुशिष्यपदे स्थित्वा स्वयमेव सदाशिवः ।**
**प्रश्नोत्तरपरैर्वाक्यैस्तन्त्रं समवतारयत् ॥'**

इति । अत्राडागमस्तु **आगमशास्त्र**स्यानित्यत्वान्न कृतः । **कल्पसूत्रे**ऽपि–**'भगवान् परम-शिवभट्टारकः श्रुत्याद्यष्टादशविद्याः सर्वाणि दर्शनानि लीलया तत्तदवस्थापन्नः प्रणीय, संविन्मय्या भगवत्या भैरव्या स्वात्माभिन्नया पृष्टः पञ्चभिर्मुखैः पञ्चाऽऽम्नायान् प्रणिनाय'** इति । तेन परमशिवः स्वयमेव विमर्शांशेन स्वात्मानं पृच्छतीत्यर्थः । 'श्रीभैरव उवाच' इत्यस्यापि स्वयमेव प्रकाशांशेन स्वात्मानमुत्तरयतीत्यर्थः । प्रकृते लिटा कथितं भूतत्वं तु वक्तव्यस्य सदातनत्वात् । अत एव **तन्त्रराज** उत्तरपटलेषु वक्ष्यमाणोऽप्यर्थः पूर्वपटलेषु प्रोक्त इति भूतार्थकपदेनैव तत्र तत्र निर्दिश्यते । अनद्यतनत्वं त्वकालकलितत्वात् । परोक्षत्वं त्वनिन्द्रियगोचरत्वादुपपद्यत इति साम्प्रदायिकाः । एवं सर्वत्रापि योज्यम् ।

अथ त्रयोदशभिः श्लोकैर्देवीप्रश्नः–

**भगवन् सर्वमन्त्राश्च भवता मे प्रकाशिताः ।**
**चतुःषष्टिश्च तन्त्राणि मातृणामुत्तमानि च ॥ १३ ॥**

सर्वमन्त्राः सप्तकोटिसंख्याः । मातृणां शक्तीनाम् । उत्तमानि निखिलपुरुषार्थ-प्रदत्वात् ॥ १३ ॥

अथ सार्धैरष्टभिस्तन्त्रनामान्युद्दिशति–

**महामाया शम्बरं च योगिनी जालशम्बरम् ।**
**तत्त्वशम्बरकं चैव भैरवाष्टकमेव च ॥ १४ ॥**

अत्र **ऋजुविमर्शिन्यां महामायातन्त्रं शम्बरतन्त्रं** चेति तन्त्रद्वयपरं व्याख्यातम् । **लक्ष्मणेन** तु **महामायाशम्बरा**ख्यमेकं तन्त्रमित्युक्तम् । **अर्थरत्नावल्यां** तु द्वयमपि नोक्तम् । **'महालक्ष्मीमतं देव'** (१/१९-२०)इत्यादिवक्ष्यमाणं श्लोकद्वयं कैश्चित्परित्यक्तम् । अन्यैस्तु स्वीकृतं परं तु सर्वेषामेव मते चतुःषष्टिसंख्यासम्पत्तिर्दुरुपपादा । वस्तुतस्तु तत्सम्पत्त्यर्थमेवास्मिन् श्लोके पूर्वार्धे चत्वारि तन्त्राणि । **तत्त्वशम्बरक**मेकं **भैरवाष्टकं** चैकमिंति षट् तन्त्राणि । **केचित्** तु–

**'असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्त एव च ।**
**कपाली भीषणश्चेति संहारश्चाष्टभैरवाः ॥'**

इत्युक्तानामष्टानां भैरवाणामष्टौ तन्त्राणीत्याहुः । **अन्ये** तु–सिद्धिभैरव-बटुकभैरव- कङ्कालभैरव-योगिनीभैरव-महाभैरव-शक्तिभैरव-मायिकभैरव-कङ्कालाग्नि-भैरवाष्टकप्रतिपादकं तन्त्राष्टकमित्याहुः । तदुभयमपि संख्यासम्पत्तिविरोधाद्याम-लादिशब्दवद्भैरवशब्दस्य तन्त्रेषु क्वापि प्रयोगादर्शनाच्च चिन्त्यम् । तस्मात् षोडशनित्यानामेकतन्त्रवदष्टभैरवाणामेकमेव तन्त्रमिति व्याख्येयम् । यदि भिन्नान्येव तन्त्राण्युपलभ्येरंस्तदा तथाऽन्यान्यपि कोटिश इति वक्ष्यमाणेषु तेषामन्तर्भावः । यदि त्वष्टानां विभज्य तन्त्रान्तरेषु चतुःषष्टिमध्य एव परिगणनं दृश्येत तदाऽप्यविरोधः । **आदित्य-नृसिंह-विष्णु-भागवतादिपुराणानां** क्वचित् पुराणेष्वष्टादशमहापुराणमध्ये परिगणनस्य क्वचित् तदितरेषूपपुराणेषु परिगणनस्य च दर्शनेन तद्वदिहोपपत्तेः । न चैवं भैरवाष्टकप्राये पाठाद् **बहुरूपाष्टक-यामलाष्टक**योरेकैकतन्त्रात्मकतापत्तिः । बहुरूपयामलपदयोर्भैरवपदवद्देवताविशेषवाचकत्वाभावेन तन्त्रनामधेयतया वैषम्येण प्रायपाठमात्रस्याप्रयोजकत्वात् । **भैरवतन्त्र**मिति क्वचिद् दृश्यमानस्यापि व्यवहारस्य भैरवप्रतिपादकपरत्वेनोपपत्तेः । **ब्रह्मयामल-रुद्रयामला**दीनां कतिपयानां भेदेनोप-लम्भाच्च । यत्तु **'कपालं भैरवं चैव'** इति **कौर्मे** गणितं तन्त्रं तद्देव्या विमुखजन-व्यामोहायोक्तत्वादवैदिकाधिकारिकमिति तत्रैव प्रतिपादनान्नोत्तमतन्त्रेषु तस्यावसरः । तस्मादिह श्लोके षडेव तन्त्राण्युद्दिष्टानि ॥ १४ ॥

**बहुरूपाष्टकं चैव यामलाष्टकमेव च ।**
**चन्द्रज्ञानं वासुकिं च महासम्मोहनं तथा ॥ १५ ॥**

ब्राह्म्यादयः सप्त मातरः शिवदूत्येकेत्यष्टानां प्रतिपादकान्यष्टौ बहुरूपतन्त्राणीति व्याचक्षते । **ब्रह्मयामलं विष्णुयामलं रुद्रयामलं लक्ष्मीयामलमुमायामलं स्कन्दयामलं गणेशयामलं जयद्रथयामलं** चेत्यष्टौ **अर्थरत्नावल्या**मुक्तानि । **वासुकि**पदस्थाने **मालिनी-**पदस्य क्वचित्पाठः । एवं पञ्चविंशतिः ॥ १५ ॥

**महोच्छुष्मं महादेव वातुलं वातुलोत्तरम् ।**
**हृद्भेदं तन्त्रभेदं च गुह्यतन्त्रं च कामिकम् ॥ १६ ॥**

महादेवेति संबुद्धिः । महोच्छुष्ममहादेवमिति पठन्तोऽष्टाक्षरमेकं नामेति तु **केचित्** । द्वयमपि भिन्नमेवेति **गौरीकान्तः** । वामजुष्टं महादेवमिति पठित्वा वामजुष्टं नाम **वामकेश्वरचतुःशती**त्युच्यत इत्यपि व्याचख्यौ । तच्चिन्त्यम् ॥ १६ ॥

**कलावादं कलासारं तथाऽन्यत्कुब्जिकामतम् ।**
**तन्त्रोत्तरं च वीणाख्यं त्रोतलं त्रोतलोत्तरम् ॥ १७ ॥**
**पञ्चामृतं रूपभेदं भूतोड्डामरमेव च ।**
**कुलसारं कुलोड्डीशं कुलचूडामणिं तथा ॥ १८ ॥**
**सर्वज्ञानोत्तरं देव महाकालीमतं तथा ।**
**महालक्ष्मीमतं चैव सिद्धयोगेश्वरीमतम् ॥ १९ ॥**
**कुरूपिकामतं देवरूपिकामतमेव च ।**
**सर्ववीरमतं चैव विमलामतमुत्तमम् ॥ २० ॥**

अत्र प्रथमं देवपदं संबुद्धिः । द्वितीयं तु तन्त्रसंज्ञान्तःप्रविष्टमिति सुवचम् । एवं पञ्चभिः श्लोकैरष्टाविंशतिस्तन्त्राणि गणितानि संहत्य त्रिपञ्चाशत् ॥ १७-२० ॥

अवशिष्टान्येकादशोद्दिशति सार्धेन–

**पूर्वपश्चिमदक्षं च उत्तरं च निरुत्तरम् ।**
**तन्त्रं वैशेषिकं ज्ञानं वीरावलि तथा परम् ॥ २१ ॥**
**अरुणेशं मोहिनीशं विशुद्धेश्वरमेव च ।**

पूर्वादित्रयस्य समाहारद्वन्द्वः । पूर्वाम्नायादिसंज्ञाभिः प्रसिद्धाश्चत्वार आम्नायाः । निरुत्तरपदेनोर्ध्वाम्नायतन्त्रं तस्यानुत्तराम्नायपदेनापि व्यवहारः । तन्त्रं वैशेषिकमित्येकम् । ज्ञानमिति **ज्ञानार्णव**पदेन प्रसिद्धम् । **वीरावलीत्येकम्** ॥ २१–२१$\frac{1}{2}$ ॥

**एवमेतानि शास्त्राणि तथाऽन्यान्यपि कोटिशः ॥ २२ ॥**

एवम्, अन्यूनानतिरिक्तानि । एतानि महामायादिविशुद्धेश्वरान्तानि चतुःषष्टिस्तन्त्राणि । शास्त्राणि वेदरूपाणि । तन्त्राणामुपनिषच्छेषत्वात् । शासनाच्छास्त्रमिति हि व्युत्पत्तिः । शासनं तु प्रवर्तनानिवर्तनान्यतररूपा शब्दभावनापरपर्याया भगवत्याज्ञैव । तदुक्तम्–

**'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।**
**पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥'**

इति । तेन वेद एव मुख्यतया शास्त्रपदवाच्यः । तथा च **व्यास**पादानां प्रयोगः– शास्त्रयोनित्वात्, शास्त्रदृष्ट्या तूपदेशो वामदेववदित्यादिः । **शब्दशास्त्रछन्दः**- शास्त्रादीनां तु तदङ्गत्वाद् मानवस्मृत्यादीनां तदर्थानुवादकत्वात् तद्व्याख्याना-नामनार्षाणामपि तदुपयोगित्वाच्छास्त्रपदेन व्यवहार इति स्थितिः । तन्त्राणां तु साक्षादेव वेदवद्भगवदाज्ञारूपत्वाच्छास्त्रत्वे न कोऽपि विवादः । अत एव प्रामाण्येऽपि न विप्रतिपत्तिः । वैदिकत्वादेव । भगवान् **परशुरामो**ऽप्याह–**'पञ्चाऽऽम्नायान् परमार्थसाररूपान् प्रणिनाय'** इति । एवं स्थिते यत् **सौन्दर्यलहरी**व्याख्याने केनचित् प्रलपितमिमानि तन्त्राण्यवैदिकानीत्यादि तत्प्रतारकभ्रान्तान्यतरजल्पित- त्वादुपेक्ष्यम् । यत्तु कौलधर्मनिन्दादिकंतन्त्रान्तरे स्मर्यते तन्नहि निन्दान्यायेन तत्तत्तन्त्रस्तुतिमात्रपरम् । **कथमन्यथा**–

**'पशुशास्त्राणि सर्वाणि मयैव कथितानि हि ।**
**मूर्त्यन्तरं तु संप्राप्य मोहनाय दुरात्मनाम् ॥**
**महापापवशान्नृणां तेषु वाञ्छाऽभिजायते ।**
**तेषां हि[1] सद्गतिर्नास्ति कल्पकोटिशतैरपि ॥'**

इत्यादीनि कौलप्रकरणस्थानि परःशतं शिववचनानि संगच्छेरन् । वस्तुतस्तु कौलोपास्तेश्चरमभूमिकारूपतया तदधिकारिदौर्लभ्यादधिकारमज्ञात्वा तत्र प्रवर्तने च तद्विरुद्धाचारावश्यंभावात्तेषां निन्दा । अधिकारसद्भावेऽपि वाऽतिरहस्ये प्रवृत्तिर्मा भूदित्येतदर्थमपि निन्दावाक्यमित्युपपद्यते । तदप्युक्तं **कुलार्णव** एव–

**'कुलमार्गरतो देवि न मया निन्दितः क्वचित् ।**
**आचाररहिता येऽत्र निन्दितास्ते न चेतरे ॥'**

अन्यत्रापि–

**कुलधर्ममिमं ज्ञात्वा मुच्येयुः सर्वमानवाः ।**
**इति मत्वा कुलेशानि मया लोके विगर्हितम् ॥'**

इति । तस्मात्-

**'पुराकृततपोदानयज्ञतीर्थजपव्रतैः ।**
**शुद्धचित्तस्य शान्तस्य धर्मिणो गुरुसेविनः ॥**
**अतिगुप्तस्य भक्तस्य कौलज्ञानं प्रकाशते ।'**

इति वचनात् कुलतन्त्राप्रामाण्यवचनं **गौरीकान्त-लक्ष्मणा**देरतादृशत्वं ध्वनयति । तथा च शिववचनम्–

---

1. हि मद्र – ख.

**'कुलधर्मं हि मोहेन योऽन्यधर्मेण दुर्मतिः ।**
**सकृत्साधारणं ब्रूयात्सोऽन्त्यजो नान्त्यजोऽन्त्यजः ॥'**

इतीति दिक् । अन्यान्यपि **कुलार्णव-दक्षिणामूर्तिसंहिता-सनत्कुमारसंहिता-परानन्द-** तन्त्रादीनि ॥ २२ ॥

**भवतोक्तानि मे देव सर्वज्ञानमयानि च ।**
**नित्याः षोडश देवेश सूचिता न प्रकाशिताः ॥ २३ ॥**
**इदानीं श्रोतुमिच्छामि तासां नामानि शङ्कर ।**
**एकैकं चक्रपूजां च परिपूर्णां समन्ततः ॥ २४ ॥**
**अनेकदेवतानाममन्त्रमुद्रागणैः सह ।**
**कथयस्व प्रसादेन यदि तुष्टोऽसि मे प्रभो ॥ २५ ॥**

सर्वज्ञानमयानि सर्वज्ञत्वदानैकप्रधानानि अधिकारिभेदेन चतुर्विधपुरुषार्थप्रदानीति यावत् । श्रीपरमशिवाभिन्ना शक्तिरेव तावन्नित्येत्युच्यते । तस्याश्च पञ्चदश किरणास्तदाकारा अपि तद्वत् कामेश्वराङ्कयन्त्रणमात्रविधुरा इतरधर्मैः सदृश्यः सन्ति । तेन कामेश्वराङ्कयन्त्रितैका त्रिपुरसुन्दरी महानित्येत्युच्यते । इतरास्तु नित्या एव । कामाङ्कयन्त्रादन्यत्र भूषावर्णायुधादिकमित्यादिना **तन्त्रराजे** अयमर्थो निर्णीतः । **सङ्केत-पद्धत्या**मपि–

**'एक एव प्रकाशाख्यः परः कोऽपि महेश्वरः ।**
**तस्य शक्तिर्विमर्शाख्या सा नित्या गीयते बुधैः ॥**
**विमर्शाख्या तु नित्या सा पाञ्चविध्यं समागता ।**
**आकाशानिलसप्तार्चिः सलिलावनिभेदतः ॥**
**एकैकगुणवृद्ध्या तु तिथिसंख्यात्वमागता ॥'**

इत्यादि । आकाश एक एव गुणः । वायौ द्वौ, तेजसि त्रयः, जले चत्वारः, पृथिव्यां पञ्चेति संहत्य पञ्चदश भेदा इत्यर्थः । **सुभगोदये**ऽपि नित्याः प्रक्रम्य–

**'दर्शाद्याः पूर्णिमान्ताश्च कलाः पञ्चदशैव तु ।**
**षोडशी तु कला ज्ञेया सच्चिदानन्दरूपिणी ॥'**

इति । अत्र दर्शशब्दः शुक्लपक्षप्रतिपद्रात्रिपर इत्यादिकं **सौभाग्यभास्करे** 'विश्वरूपा' इतिनामनिर्वचनावसरे प्रतिपादितम**स्माभिः** । ईदृशस्वरूपनित्याख्याः षोडश शक्तयस्तन्त्रान्तरेषु त्वया सूचिता एव । शिष्याया विशेषजिज्ञासापरीक्षार्थं धर्मिज्ञानमात्रं कारितं न तु प्रकाशिता यावद्विशेषरूपेण नोक्ताः । **'नापृष्टः कस्यचिद् ब्रूयात्'** इति वेदानुशासनमिति निषेधादिति भावः । एकैकमिति क्रियाविशेषणम् । नित्येति-सामान्यनाम्नो ज्ञातत्वादज्ञाततत्तद्व्यक्तिनामविषयकोऽयं प्रश्नः । चक्रस्य श्रीमत्त्रिपुर-

सुन्दरीचक्रराजस्य पूजां बाह्यान्तरभेदभिन्नाम् । समन्तत आवरणदेवताभिः परिपूर्णाम् । अनेकासां वशिन्यादीनां देवतानां नामगणैर्मन्त्रगणैर्मुद्रागणैश्च सह कथयस्वेत्यर्थः ॥ २३-२५ ॥

अथ परमशिववाक्यम् । तत्रैकेन तन्त्रश्रवणे सावधानीकरणं त्रिभिर्नित्यानाम्नामुपदेशः । पञ्चमेन महानित्यास्वरूपश्रवणाय सावधानीकरणमिति विवेकः ।

**श्रीभैरव उवाच**

**शृणु देवि महाज्ञानं नित्याषोडशिकार्णवम् ।**
**न कस्यचिन्मयाऽऽख्यातं सर्वतन्त्रेषु गोपितम् ॥ २६ ॥**
**तत्राऽऽदौ प्रथमा नित्या महात्रिपुरसुन्दरी ।**
**ततः कामेश्वरी नित्या नित्या च भगमालिनी ॥ २७ ॥**
**नित्यक्लिन्नाभिधा नित्या भेरुण्डा वह्निवासिनी ।**
**महाविद्येश्वरी दूती त्वरिता कुलसुन्दरी ॥ २८ ॥**
**नित्या नीलपताका च विजया सर्वमङ्गला ।**
**ज्वालामालिनिका चित्रेत्येवं नित्यास्तु षोडश ॥ २९ ॥**
**शृणु देवि महानित्यामादौ त्रिपुरसुन्दरीम् ।**
**यया विज्ञातया गौरि जगत्क्षोभः प्रजायते ॥ ३० ॥**

महाज्ञानमिति बहुव्रीहिः । अर्णवपदेन दुरवगाहत्वादतीवावहिता भवेति ध्वनितम् । महाविद्येश्वर्यास्तन्त्रान्तरे महावज्रेश्वरीत्यपि नाम । दूती शिवदूतीनाम्न एकदेशः । कुलसुन्दर्युत्तरं नित्येतिपदं स्वतन्त्रं विशेष्यमेवान्यानि नित्यापदानि विशेषणानि । आदौ **चतुःशती**द्वयात्मके(क)ग्रन्थावयवे । यया विज्ञातया महानित्याज्ञानमात्रेण, जगतः क्षोभः स्वायत्तता ॥ २६-३० ॥

इदानीं **सुन्दरीतापिन्यां** द्वितीयोपनिषदि–**'श्रीचक्रं व्याख्यास्यामः'** इत्यादि **'चक्रं व्याख्यातम्'** इत्यन्तया **कण्डिक**योक्तरीतिमनुसृत्यैव सार्धैर्द्वादशभिः श्लोकैः श्रीचक्रलेखनप्रकारमुपदिशति–**'शक्त्या शक्तिं विनिर्भिद्य'** (१/३१) इत्यादिना **'चतुर्द्वारोपशोभितम्'** (१/४३) इत्यन्तेन । तत्र श्रीचक्रस्वरूपमवान्तरनवचक्रात्मकमुक्तं **यामले–**

**'बिन्दुत्रिकोणवसुकोणदशारयुग्ममन्वस्रनागदलसंयुतषोडशारम् ।**
**वृत्तत्रयं च धरणीसदनत्रयं च श्रीचक्रराजमुदितं परदेवतायाः ॥'**

इति । तन्निरूपणोपयोगिनी परिभाषा चेत्थम्–**'यदाशाभिमुखो मन्त्री चक्रराजं समुद्धरेत्'** सैव पूर्वा दिक् । तामारभ्य प्रादक्षिण्येनेतराः सप्त दिशः । ईशानाद्याग्नेयपर्यन्तामेकां तिर्यग्रेखां कृत्वा तदीशानाग्रात्तदाग्नेयाग्राच्चाऽऽरभ्य पश्चिमदिक्पर्यन्ते द्वे रेखे समाकृष्य पश्चिमस्यां दिशि ते मेलयेत् । तदिदं स्वाभिमुखाग्रत्रिकोणं भवति । अस्य

शक्तिरिति संज्ञा । पार्वत्यादिशब्दा अपि शक्तिपर्यायाः । एवं वायव्यादिनैर्ऋत्यान्तामेकां तिर्यग्रेखां कृत्वा तद्वाय्वग्रात्तन्नैर्ऋत्यग्राच्चाऽऽरभ्य पूर्वदिक्पर्यन्ते द्वे रेखे आकृष्य पूर्वस्यां दिशि ते मेलयेत् । तदिदं पराङ्मुखाग्रत्रिकोणं भवति । अस्य वह्निरिति संज्ञा । शिवादिशब्दाश्च वह्निपर्यायाः । शक्तिवह्निपुरयोश्च घटिके पार्श्वरेखे प्रत्येकं वामदक्षिणसंज्ञे । ऊर्ध्वाधोरेखे पूर्वपश्चिमसंज्ञे ।

**प्राञ्चस्तु–** शक्तेरूर्ध्वरेखा पश्चिमरेखा, वह्नेरधोरेखा पूर्वरेखेति व्यवहरन्ति । तत्पूज्यपूजकयोर्मध्यं प्राचीतिमानस्य श्रीचक्रेऽपवादस्य **ज्ञानार्णवा**दावुक्तस्याज्ञानादित्युपेक्ष्यम् । अत एव शक्तेः कोणत्रयमीशाग्निपश्चिमकोणसंज्ञम्, वह्नेस्तु वायुराक्षसपूर्वकोणसंज्ञम् । एकस्या रेखाया उपरि रेखान्तरस्याऽऽरोहणं भेदनसंज्ञम् । ईदृशभेदनात्मको रेखाद्वयसंयोगः सन्धिः । तादृश एव रेखात्रयसंयोगो मर्म । सन्धिमर्मणोर्द्वयोरपि ग्रन्थिरिति संज्ञा । शक्तिपश्चिमकोणवह्निपूर्वकोणयोः सम्पर्केण लेखो डमरुः । पूर्णचन्द्राकारा रेखा वृत्तम् । भौमः परिवेषश्च चतुरस्ररेखा भूपुरं **यथाकथञ्चित्कोणत्रयं त्रिकोणम्** । इति परिभाषा ।

अथ बिन्दुत्रिकोणवसुकोणानि त्रीणि चक्राण्याह सार्धपादद्वयेन–

**शक्त्या शक्तिं विनिर्भिद्य भूयो वह्निपुरेण ते ।**
**सम्पुटीकृत्य–**

आदावेकां शक्तिं विलिख्य तां मध्यभागे तिर्यग्रेखान्तरेण निर्भिद्य भेदकरेखाया ईशाग्निभागाग्रसंश्लिष्टे वामदक्षिणरेखे आकृष्य प्रथमशक्तिपश्चिमकोणात्पश्चिमस्यां दिशि पश्चिमकोणान्तरोत्पादनेन द्वितीयशक्तिं रचयेत् । ततः प्रथमशक्तेः पूर्वस्यां दिश्यारभ्य कोणरचनपूर्वकं तद्वायुराक्षसदिक्पर्यन्ते वामदक्षिणरेखे सन्धिमर्मानुगुणे आकृष्य पूर्वरेखां प्रथमशक्तिपश्चिमकोणसंश्लेषेण विरच्य वह्निपुरं रचयेत् । एवं सत्यष्टसु दिक्ष्वष्टौ त्रिकोणानि मध्यत एकमिति नव त्रिकोणानि षट्सन्धयो द्वे मर्मणी पार्श्वयोर्द्वौ डमरू चेत्याकारः सम्पद्यते । अत्र प्रथमशक्तिवामदक्षिणयो रेखयोर्वह्निवामदक्षिणरेखाभ्यां द्वितीयशक्तिपूर्वरेखया संयोगादुत्तरस्यां दक्षिणस्यां च दिशि विद्यमानौ मर्मणी अन्ये सन्धयः । अत्र मध्यमत्रिकोणस्य मध्यभागे बिन्दुरत्रानुक्तोऽपि चक्रन्यासपूजाप्रकरणादौ वक्ष्यमाणत्वाल्लेख्यः । तेनेदं चक्रत्रयं सम्पन्नम् । प्रथमां शक्तिं द्वितीयया शक्त्या विशेषेण निर्भिद्य भूयः पुनरपि भेदनक्रमेणैव वह्निपुरेण ते पूर्वलिखिते द्वे शक्ती उक्तरीत्या सम्पुटीकृत्येत्यर्थः । शक्तिवह्निशब्दौ च **ज्ञानार्णवे** सङ्केतितौ–

**'ईशानादग्निपर्यन्तामृजुरेखां समालिखेत् ।**
**ईशादग्नेस्तदग्राभ्यां रेखे आकृष्य देशिकः ॥**
**एकीकुर्याच्च वारुण्यां शक्तिरेखामतः प्रिये ।**
**त्रिकोणाकाररेखेयं**.......................॥' इति ।

**'रेखां कृत्वा महेशानि वायुराक्षसकोणगाम् ।**
**रेखे आकृष्य कोणाभ्यां तदग्रात्पूर्वगे कुरु ॥**
**वह्निमण्डलमेतत्तु पूर्वाग्रं वीरवन्दिते ।'** इति च ॥ ३० $\frac{३}{४}$ ॥

अथान्तर्दशारलेखनोपायमुपदिशति सर्वोर्ध्वामित्यारभ्य शक्तिमाद्यां विभेदयेदित्यन्तेनावशिष्टसार्धश्लोकद्वयेन–

**–सर्वोर्ध्वां शक्तिं विस्तारयेदधः ॥ ३१ ॥**

अस्मिन्नवयोनिचक्रे या प्रथमलिखिता शक्तिः सैव सर्वोर्ध्वा । तस्या अधः पश्चिमभागे विस्तारणं नाम तदीयपूर्वरेखाग्रद्वयादारभ्य वामदक्षिणरेखयोरपकर्षपूर्वकं पश्चिमस्यां दिशि मेलनम् । तच्चेह सिद्धमेवेति पुनर्विधिवैयर्थ्यापत्त्याऽन्यत्किञ्चिदाक्षिप्यते । तदीयपूर्वरेखाग्रद्वयमीशानाग्निदिशोराकर्षणेनाभिवर्ध्य ततो जाताभ्यामभिनवाग्राभ्यां कोणनिर्माणपूर्वकं वामदक्षिणरेखान्तरे अधोऽपकृष्य द्वितीयशक्तिपश्चिमकोणात्पश्चिमस्यां दिशि मेलयेदिति । इदं चेदृशविस्तारणस्य शक्तिजनकत्वादध्वर्युं वृणीत इत्यादौ वरणेनाध्वर्युं कुर्यादित्यर्थवच्छक्तिं विस्तारयेदित्यस्य विस्तारेण शक्तिं कुर्यादित्यर्थमभिप्रेत्य सर्वोर्ध्वशक्तिविस्तारेण शक्त्यन्तरं कुर्यादित्यर्थमङ्गीकृत्य, शक्तिपदस्य वारद्वयमन्वयस्तु न दुष्यत्येव । सेयं शक्तिर्नवयोनिचक्रस्य पौरस्त्यत्रिकोणमात्रं परित्यज्येतरत्सर्वं गर्भीकरोतीति स्थितिः ॥ ३१ ॥

**तथैव वह्निचक्रेण तामेवोर्ध्वं विभेदयेत् ।**

ततो यथा तावदनया शक्त्या नवयोनिचक्रस्य गर्भीकारस्तिर्यग्रेखाविस्तारादिना कारितस्तथैव वह्न्यात्मकेन चक्रेण त्रिकोणेनापि तद्गर्भीकारः करणीयः । वह्नेः पश्चिमरेखाग्रद्वयं वायुराक्षसदिशोराकर्षणेनाभिवर्ध्य ततो जाताभ्यामग्रान्तराभ्यां कोणनिर्माणपूर्वकं वामदक्षिणरेखान्तरे ऊर्ध्वमाकृष्य वह्निपूर्वकोणात्पूर्वस्यां दिशि मेलयेत् । सोऽयं वह्निर्नवयोनिचक्रस्य पाश्चात्यमेकं त्रिकोणं परित्यज्येतरत्सर्वं गर्भीकरोतीति यावत् । अस्मिन् वह्नौ यः शक्तितो विशेषस्तमाह–तामेवेति । तां पूर्वलिखितां शक्तिं विशेषेण भेदयेत् । वह्निवामदक्षिणरेखाभ्यां शक्तिवामदक्षिणरेखाद्वयं शक्तिपूर्वरेखां च भेदयन् ऊर्ध्वं विस्तारयेदित्यर्थः । तेनेदमुभयपार्श्वयोर्डमरुविशिष्टं षट्कोणं भवति । नवयोनिचक्रान्तर्गततिर्यग्रेखात्रय आद्यन्तरेखे अभिवर्ध्य षट्कोणं कुर्यादिति तु फलितोऽर्थः । यद्यप्यादावेव वह्निमूर्ध्वं विस्तार्य शक्तेरधोविस्तारे क्रियमाणे शक्तिरेव वह्निं भिनत्तीति विपरीतो विशेषस्तथाऽपि चक्रपूजारम्भे वक्ष्यमाणं चक्रलेखनमनेनैव क्रमेणानुष्ठेयं नियमादृष्टानुगुण्यायेतिद्योतनार्थ एवकारः । तेन शक्त्या वह्निभेदनस्य नखविदलनादेरिवानुष्ठानं फलति । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ३१$\frac{१}{२}$ ॥

**तत ऊर्ध्वस्थितां शक्तिमूर्ध्वं विस्तारयेत्क्रमात् ॥ ३२ ॥**
**पुनराद्यं वह्निचक्रमधो विस्तार्य सुन्दरि ।**
**ग्रन्थिभेदक्रमेणैव शक्तिमाद्यां विभेदयेत् ॥ ३३ ॥**

षट्कोणनिर्माणानन्तरं सर्वोर्ध्वपदेनोक्तां प्रथमशक्तिमूर्ध्वं विस्तारयेत् । यथा तावदधोविस्तारोऽस्याः पूर्वरेखाभिवर्धनेन कृतस्तथोर्ध्वविस्तारो वामदक्षिणरेखयोरीशाग्निदिगभिमुखमभिवर्धनेन पूर्वरेखान्तरस्य तत्र लेखनेन च कार्यः । रेखयोरभिवृद्धेरवधिस्तु प्रथमवह्नेः पूर्वकोण एव । तेन पूर्वरेखान्तरस्य प्रथमवह्निपूर्वकोणाग्रसंश्लेषो भवति । एवमन्यत्राप्यवधिरुन्नेयः । तेन शक्तिलेखने हि तन्त्रान्तरे क्रमो विहित ईशानमारभ्य प्रादक्षिण्येनेशानान्तमिति । वामदक्षिणभागयोर्न्यासादिप्रसक्तावादौ दक्षस्ततो वाम इत्यपि क्रमस्तत्र तत्र विहितः । तेनेहाऽऽदौ दक्षरेखामाग्नेयेऽभिवर्ध्य पश्चाद्वामरेखामीशानेऽभिवर्ध्येशानादाग्नेयान्तं पूर्वरेखां लिखेदितिद्योतनायोक्तं क्रमादिति । **अर्थरत्नावलीकार**स्तु– 'प्रथमवह्नेः पूर्वदिशि स्थितस्य वह्न्यन्तरस्य भेदनं क्रमपदेनोच्यत' इति व्याचख्यौ, **ऋजुविमर्शिनीकार**स्तु–'रेखाद्वयाभिवृद्धेरुक्तरूपोऽवधिः क्रमपदेन कथ्यत' इत्याह । पुनः प्रथमशक्तेरूर्ध्वविस्तारवदेवाऽऽद्यं प्रथमलिखितं वह्निचक्रमधो विस्तार्य वह्नेर्दक्षरेखां राक्षसकोणे वामरेखां च वायुकोणे द्वितीयशक्तिपश्चिमकोणावध्यभिवर्ध्य राक्षसाद्वाय्वन्तं पश्चिमरेखां विलिख्य विरमेतेत्यर्थः । सुन्दरीति देव्याः संबुद्धिः । अत्र प्रथमशक्तेरूर्ध्वविस्तारवदेव प्रथमवह्नेरधोविस्तारस्य पुनरितिपदेन विस्तार्येतिपदेन च वर्णनेनैव सिद्धौ ग्रन्थिभेदक्रमेणेत्युत्तरार्धं व्यर्थमिवाऽऽभाति ।

**प्राञ्च**स्तु–अस्मिन्नन्तर्दशारप्रस्तारे तिस्रः शक्तयो द्वौ वह्नी च सन्ति । तत्र सर्वाधःस्थिता शक्तिराद्यशक्तिरुच्यते । प्रथमवह्न्यधोविस्तारदशायां लिख्यमानेन पश्चिमरेखान्तरेण तस्या आद्यशक्तेर्भेदनमुत्तरार्धेनोच्यत इति तत्सार्थक्यमाहुः । तन्नातीव चमत्कृतम् । प्रथमशक्त्यूर्ध्वविस्तारदशायां लिख्यमानपूर्वरेखान्तरेण सर्वोर्ध्ववह्निभेदनस्य कण्ठरवेण पृथक्कथनादर्शनात् । शक्तित्रये जातेऽप्यूर्ध्वशक्तेरेवाऽऽद्यपदेनोपस्थितेश्च । तस्मादन्तर्दशारारम्भे लिखिता या शक्तिः सैवेहाऽऽद्यपदेनोच्यत इति न सर्वोर्ध्वशक्तेराद्यपदेन परामर्शः । तस्याः प्रकृतदशाराद्यावयवत्वाभावात् । अस्यां चाऽऽद्यशक्तौ पूर्वरेखायां द्वे मर्मणी । वामदक्षिणरेखयोश्च द्वे मर्मणी । तेषु प्रथमे द्वे प्रथमशक्तिविस्तारेणोत्पन्ने । द्वितीये द्वे प्रथमवह्निविस्तारेणेत्येतदर्थं विस्तारविधिद्वयस्य विशेषत्वेन व्याख्येयम् । ग्रन्थयः सन्धयस्तेषां चतुर्णां भेदो मर्मतया परिणामस्तेन क्रमेण प्रकारेणाऽऽद्यानन्तर्दशाराद्यावयवभूतां शक्तिं भेदयेदित्यर्थः । अथवा, आद्यं वह्निचक्रमित्यस्य द्विरन्वयः । तत्रैकं पूर्ववदेव व्याख्यायोर्ध्वाधोविस्ताराभ्यां क्रमादाद्यं सर्वोर्ध्वं वह्निचक्रमाद्यां सर्वाधस्तनीं शक्तिं च भेदयेदित्यर्थो वर्णनीयः । अस्मिन् पक्षे ग्रन्थिभेदक्रमः सन्ध्युत्पत्तिक्रम एवेति । इत्यन्तर्दशारनिष्पत्तिः ॥ ३२-३३ ॥

अथ बहिर्दशारलेखनोपायमुपदिशति तथा सर्वोर्ध्वेत्यारभ्याऽऽद्यवह्निनेत्यन्तेन सार्धश्लोकद्वयेन–

**तथा सर्वोर्ध्ववह्न्यन्तःशक्तिं विस्तारयेदधः ।**
**तामादिचक्राधःशक्तिवह्निनोर्ध्वं विभेदयेत् ॥ ३४ ॥**

यथा तावदन्तर्दशारनिष्पत्त्यर्थं स्वस्मादादिचक्रे नवयोन्याख्ये विद्यमानानां तिसृणां तिर्यग्रेखाणां मध्ये प्रथमचरमतिर्यग्रेखयोस्तिर्यगेवाभिवर्धनादिना षट्कोणं निष्पाद्य तत्र तिर्यग्रेखासंसृष्टवामदक्षिणरेखाद्वये विदिक्ष्वभिवर्धनादिना कोणचतुष्कमधिकं कृत्वा दशारता सम्पादिता तथैव बहिर्दशारनिष्पत्त्यर्थमपि स्वादिचक्रेऽन्तर्दशारे विद्यमानानां पञ्चानां तिर्यग्रेखाणां मध्ये प्रथमचरमयोः सर्वोर्ध्वसर्वाधःस्थितयोस्तिर्यग्रेखयोरेव दक्षिणोत्तरदिगभिमुखमभिवर्धनादिना षट्कोणं विधाय तत्तत्तिर्यग्रेखासंसृष्टवामदक्षिण-रेखाद्वितये विदिक्ष्वभिवर्ध्य कोणद्वितये सम्पादनीये इत्याकारको दशारद्वयानुगमस्तथेति-**पदेनोक्तः** । एवं सामान्येनोक्त्वा विशिष्याऽऽह–सर्वोर्ध्वेत्यादि । सर्वं बिन्द्वाद्यन्त-दशारान्तं चिकीर्षितप्रकृतचक्रादादिभूतं चक्रं तस्योर्ध्वो यो वह्निर्वह्निपुरस्थ-पूर्वकोणस्तस्यान्तर्मध्ये प्रथमवह्निद्वितीयवह्न्योर्मध्य इति यावत् । तत्र विद्यमाना या शक्तिः शक्तिपुरस्थपूर्वरेखा तामधः सर्वाधःस्थितशक्तिपश्चिमकोणाधोभागपर्यन्तं विस्तारयेत् । प्रथमशक्तेः पूर्वरेखान्तरं दक्षिणोत्तरदिशोराकृष्य तत्राऽऽग्नेयैशान-कोणोत्पादनपूर्वकं वामदक्षिणरेखे निष्पाद्य सर्वाधोमेलनेन शक्त्यन्तरं निष्पाद-येदित्यर्थः । तामिति । आदिचक्रस्यान्तर्दशारान्तस्याधो या शक्तिः शक्तिपुरस्थ-पश्चिमकोणस्तस्यां यो वह्निस्तन्मध्यस्थितं यत्प्रथमवह्निपश्चिमरेखान्तरं तेन तामव्य-वहितपूर्वलिखितां शक्तिमूर्ध्वं सर्वोर्ध्वस्थितवह्निपूर्वकोणोर्ध्वभागपर्यन्तं विभेदयेत्, विस्तार्य भेदयेत् । अन्तर्दशारस्य सर्वाधःस्थितशक्तिपश्चिमकोणाव्यवहितपूर्वां तिर्य-ग्रेखां दक्षिणोत्तरयोरभिवर्ध्य तदग्राभ्यां वामदक्षिणरेखे ऊर्ध्वमाकृष्य बहिर्दशाराद्य-शक्तेर्वामदक्षिणरेखे ताभ्यां भेदयन् सर्वोर्ध्वं तयोर्मेलनेन वह्न्यन्तरं रचयेदित्यर्थः । तदिदं षट्कोणं भवति ॥ ३४ ॥

**ततः पूर्ववदेवाऽऽद्यां शक्तिं विस्तार्य भेदयेत् ।**
**ऊर्ध्ववह्निमधोवह्निमध्यवह्निविवर्जितम् ॥ ३५ ॥**
**विस्तार्य भेदयेच्छक्तिमधस्तादाद्यवह्निना ।**

ततः षट्कोणनिर्माणानन्तरं पूर्ववदेवान्तर्दशारस्थषट्कोणोत्तरमिवाऽऽद्यां सर्व-प्रथमां शक्तिं विस्तार्य वामदक्षिणरेखयोरीशाग्निदिशमभिमुखमभिवृद्धिं प्रापय्योर्ध्व-वह्निं चक्रोर्ध्वभागे स्थितं वह्निं भेदयेत् । पूर्वरेखान्तरनिर्माणेनेति यावत् । पुनः पूर्व-वदेवेति केषाञ्चित्पाठः । तत आद्यवह्निना सर्वप्रथमवह्निना विस्तार्य तदीय-वामदक्षिणरेखे वायुराक्षसदिशोरभिवर्ध्य स्थापितेनेति शेषः । अधस्ताच्छक्तिं सर्वाधः-

स्थितं शक्तिपश्चिमकोणभागं भेदयेत् । अभिवर्ध्य स्थापितस्य वह्नेः पश्चिमरेखान्तर-निष्पादनेनेति यावत् । अधोवह्निमध्यवह्निविवर्जितमिति पदं त्ववशिष्टम् । तदिदं वाक्यद्वयमध्यभागे पठितत्वात् केचित्पूर्ववाक्यशेषत्वेन, अन्ये उत्तरवाक्यशेषत्वेन व्याचक्षाणा विवदन्ते । तत्र **शिवानन्दनाथा**दयस्तावदाहुः– पूर्ववाक्ये ऊर्ध्ववह्नेर्भेदन-मुक्तम् । तद्दार्ढ्याय मध्यवह्न्यधोवह्न्योर्भेदनं निषिध्यते । प्रथमशक्तिवामदक्षिण-रेखाभ्यां मध्यवह्निपूर्वकोणावधिविस्तारिताभ्यां तयोर्भेदनस्यासम्भवेऽपि **'नान्तरिक्षे न दिव्यग्निश्चेतव्यः'** इतिवदप्रसक्तप्रतिषेध एवायं वह्नित्रयास्तित्वबोधनमात्रफलक इति । **विद्यानन्दनाथा**दयस्तु–उत्तरवाक्ये विस्तार्येत्यस्य कर्मसापेक्षत्वादाद्यवह्निनेति तृतीयान्तस्य तदन्वयायोग्यत्वादव्यवहितपूर्वत्वेनोपस्थितमिदमेव पदं तत्रान्वेति । तत्राधोवह्निशब्दः सर्वोर्ध्ववह्निपरः, अस्यैव चक्रस्य विपर्यासेनावलोकने सर्वोर्ध्वतनस्यापि सर्वाधस्तन-त्वसम्भवात् । तेनोर्ध्वमध्यवह्निभिन्न आद्यवह्निरेवेति प्रथमवह्निं विस्तार्येत्यर्थः सम्पद्यत इत्याहुः । तदुभयमपि चिन्त्यम् । क्रियान्वयिनो नञोऽभावेन प्रतिषेधायोगात् । अधः-शब्दस्य शक्यार्थविपर्यये लक्षणाया अयुक्तत्वात् । तस्मादूर्ध्ववह्निपदस्याधोवह्नीत्यादि विशेषणम् । ऊर्ध्वपदं चक्रोर्ध्वपरम् । ततश्च त्रयाणामपि वह्नीनां नवयोनिचक्रान्त-र्दशारचक्रबहिर्दशारचक्रोर्ध्वत्वादविशेषेण ग्रहणे प्राप्तेऽधोवह्निमध्यवह्निभिन्नत्वं विशेष-णम् । तत्तत्प्रतियोगिकभेदवत्त्वं तदर्थः । न त्वधोवह्नित्वावच्छिन्नप्रतियोगिताकभेद-वत्त्वादिकम् । अत एव मध्यवह्निवारणाय तद्भेदोऽपि निवेशितः । न च मध्यवह्निपूर्वकोणावधिविस्तृतरेखाभ्यामन्ययोर्भेदनासम्भवादेव निरासे विशेषणवैयर्थ्यं शङ्क्यम् । आद्यशक्तिभेद्यत्वस्य त्रिष्वप्यविशेषेण सत्त्वात् । न चान्ययोराद्यशक्त्या भेदनस्य पूर्वमेव वृत्तत्वान्नेदानीं तत्प्रसक्तिरिति वाच्यम् । भिन्नयोरपि पूर्वरेखा-नुयायिरेखान्तरेण द्विर्द्विर्भेदनसम्भवात् । प्रत्युत पुनः पूर्ववदेवेतिपदानां द्विर्भेदन एवानुगुणत्वात् । सति त्वधोमध्यवह्निभिन्नत्वविशेषणे तद्बलादेव हि बहिश्चक्रस्य दशारत्वसिद्धिरिति समञ्जसम् । इति बहिर्दशारनिष्पत्तिः ॥ ३५-३५ $\frac{१}{२}$ ॥

एवं दशारद्वयमुक्त्वा चतुर्दशारचक्रलेखनोपायमुपदिशति ततो मध्यादीत्यारभ्य सर्वाधस्ताद्विभेदयेदित्यन्तैः सार्धैः पञ्चभिः श्लोकैः –

**ततो मध्यादिशक्त्यूर्ध्वं शक्तिं विस्तारयेदधः ॥ ३६ ॥**
**तयैव सम्पुटीकुर्यात् सर्वचक्रं सुरेश्वरि ।**
**तां च तेन महेशानि वह्निचक्रेण भेदयेत् ॥ ३७ ॥**
**ग्रन्थिभेदक्रमेणैव सर्वोर्ध्वं सर्वबाह्यतः ।**
**मध्योर्ध्वशक्तिपर्यन्तमादिशक्त्यवधि प्रिये ॥ ३८ ॥**

दशारद्वये हि तिर्यग्रेखासु प्रथमचरमयोरभिवर्धनेन षट्कोणं रचितम् । तद्वदिह न भवति । किन्तु बहिर्दशारचक्रे स्थितानां सप्तानां तिर्यग्रेखाणां मध्य आद्यन्तरेखे

विहाय द्वितीयोपान्त्यरेखे एवाभिवर्ध्य षट्कोणं रचयेदिति विशेष इत्याह—मध्येति । मध्या च साऽऽदिशक्तिश्च मध्यादिशक्तिः । प्रथमशक्तिरेव हि सर्वमध्या शक्तिः । बहिर्दशारारम्भलिखितशक्तेरपि तदादित्वात्तदूर्ध्वशक्तिपदेन सर्वोपरितनतिर्यग्रेखा मा प्रसाङ्क्षीदितो मध्येति विशेषणम् । ततश्च मध्यस्थप्रथमशक्तेरूर्ध्वशक्तिः प्रथमवह्नि-पूर्वकोणस्पृष्टरेखाकैव । बहिर्दशारारम्भकशक्तिरिति यावत् । तस्या ईशाग्निकोण-भागेऽभिवर्धनेन कोणान्तरे द्वे निष्पाद्य ततो दक्षिणोत्तररेखे पश्चिमस्यां दिश्याकृष्य सर्वाधःस्थितशक्तिकोणात्पश्चिमभागे कोणान्तरं निष्पादयेत् । सेयं शक्तिः सर्वं चक्रं कवलयतीत्याह—तयैवेति । तां साम्प्रतमभिवर्धितां बहिर्दशारारम्भकषट्कोणघटकशक्तिं तेन तत्षट्कोणघटकेनैव वह्निचक्रेण भेदयेत् । सर्वाधःस्थिततिर्यग्रेखाव्यवहित-पूर्वदिग्वर्तितिर्यग्रेखां वायुरक्षःकोणयोरभिवर्ध्य कोणद्वयान्तरं निष्पाद्य ततो दक्षिणोत्तर-रेखे पूर्वस्यां दिश्याकृष्य सर्वोर्ध्वस्थितवह्निकोणात्पूर्वभागे कोणान्तरं रचयेदिति यावत् ।

अस्य वह्नेः पञ्च विशेषणानि । तत्र साम्प्रतं लिखितशक्तेर्भेदनेन ग्रन्थिर्यथा स्यात्तेन क्रमेण दक्षिणोत्तरयोर्डमरुद्वयकरणेनेत्येकम् । आदिशक्तिर्बहिर्दशारारम्भक-शक्तिस्तदवधि तदीशाग्निकोणस्पृष्टं यथा भवति तथेति द्वितीयम् । मध्या च सोर्ध्वशक्तिश्च मध्योर्ध्वशक्तिः प्रथमशक्तिरेव सर्वमध्यस्था पर्यायेणाभिवर्धिता सती या सर्वोर्ध्वाऽभवत्तत्पर्यन्तं तदीशाग्निकोणस्पृष्टं यथा स्यात्तथेति तृतीयम् । सर्वस्य बहि-र्दशारचक्रस्य बाह्यतः कवलनक्रमो यथा स्यात्तथेति चतुर्थम् । सर्वोर्ध्वं बहिर्दशारो-र्ध्ववह्नेरप्यूर्ध्वं यथा तथेति पञ्चमम् । इमानि पञ्च विशेषणानि चतुर्दशारचक्रप्रकरणे कथनात्स्वपूर्वेषु सर्वेषु चक्रेषु षट्कोणघटकशक्तिवह्निदक्षिणोत्तररेखामार्ग-प्रदर्शनोपलक्षकत्वेन सार्थकानि । तेन **प्राचाम्** एतच्छ्लोकोपेक्षाऽत्रत्यविशेषणानां यथाकथञ्चिदन्यथा नयनमपि न स्वरसमित्युपेक्ष्यम् ॥ ३६-३८ ॥

एवं षट्कोणनिर्माणमुपदिश्योर्ध्वभागे चतुरः कोणान् वर्धयेदित्याह द्वाभ्याम्—

**ततो बाह्यस्थशक्त्यन्तःशक्तिमूर्ध्वं विकासयेत् ।**
**तथा विस्तारयेच्छक्तिमाद्यामप्यूर्ध्वमीश्वरि ॥ ३९ ॥**
**सर्वोर्ध्ववह्न्यधोवह्निपर्यन्तं वीरवन्दिते ।**
**तया विभेदयेद्वह्निचक्रं सर्वोर्ध्वसंस्थितम् ॥ ४० ॥**

बाह्यस्था शक्तिः साम्प्रतं लिखितषट्कोणघटकशक्तिस्तदन्तस्तन्मध्ये स्थिता शक्ति-र्द्वितीयदशारारम्भकषट्कोणघटकशक्तिरेव । तामूर्ध्वं विकासयेत्, तदीयदक्षिणो-त्तररेखे अग्नीशकोणाभिमुख्येनाभिवर्धयेत् । ततो या प्रथमशक्तिः क्रमेणाभिवृद्धा

सती द्वितीयतृतीयवह्न्योरन्तराले समाप्ता दृश्यते तामाद्यां शक्तिं तथा विस्तारयेत् । यथा साम्प्रतमभिवर्धितदक्षिणोत्तररेखासंस्पर्शः स्यात्तथा कुर्यात् । सप्ततिर्यग्रेखासु विद्यमानां सर्वोर्ध्वां प्राच्यां तिर्यग्रेखां भागद्वयेऽप्यभिवर्ध्यान्तःशक्तिदक्षिणोत्तररेखाभ्यां सह बद्ध्वा कोणद्वयं निष्पादयेदिति यावत् । विकासयेदिति पदस्यैवैतावानर्थ इति तु **प्राञ्चः** । तत आद्यां शक्तिमूर्ध्वमपि विस्तारयेत्, प्रथमशक्तेर्दक्षिणोत्तररेखे अग्नीशकोणयोर्वर्धयेत् । तदभिवृद्धेरवधिमाह– सर्वोर्ध्वेति । सर्वोर्ध्ववह्निः साम्प्रतं लिखितषट्कोणघटकः । तस्याधःस्थितो वह्निर्द्वितीयदशारारम्भकषट्कोणघटकः । तत्प्राच्यकोणावधि विस्तारयेदित्यर्थः । तया साम्प्रतमभिवर्धितया प्रथमशक्त्या सर्वोर्ध्ववह्निं विभेदयेत् । तिर्यग्रेखान्तरनिष्पादनेनेति यावत् ॥ ३९-४० ॥

इदानीमनेनैव क्रमेणाधोभागेऽपि कोणचतुष्टयमभिवर्धयेदित्याह–

**सर्वोर्ध्ववह्न्यधोभागग्रन्थिपर्यन्ततः प्रिये ।**
**विस्तार्य बाह्यशक्तिं तु सर्वाधस्ताद्विभेदयेत् ॥ ४१ ॥**

सर्वोर्ध्ववह्निः प्रकृतषट्कोणघटको वह्निस्तस्याधोभागः पश्चिमरेखा तस्या ये ग्रन्थयो रेखात्रयसंयोगस्थानानि चत्वारि तेषां पर्यन्ततस्तत्प्रान्तभागानारभ्य विस्तार्य रक्षोवायुदिगाभिमुख्येनेति शेषः । अयं भावः– प्रथमतृतीयवह्न्योर्दक्षिणरेखाद्वयं रक्षस्यभिवर्धयेत् । उत्तररेखाद्वयं वायौ । प्रथमवह्निरेखयोरुक्तग्रन्थिस्थानादभिवृद्धत्वेऽपि ततोऽप्याधिक्येन चतुर्थशक्तिपश्चिमकोणावधिविस्तारः । तृतीयवह्निरेखयोस्तु सर्वाधस्तनतिर्यग्रेखावधिविस्तारः कार्य इति । एवं रेखाचतुष्टयं रक्षोवाय्वोरभिवर्ध्य बाह्यशक्तिं प्रकृतषट्कोणघटकशक्तिं सर्वाधस्तादधस्तन्या तिर्यग्रेखया क्लृप्तया ततोऽप्यधोऽन्यया तिर्यग्रेखया कल्प्यया च विभेदयेत्, विलक्षणतया भेदयेत् । वैलक्षण्यं चेत्थम्– सर्वाधस्तनीमष्टमीं प्रथमवह्निपाश्चात्यरेखां भागद्वयेऽभिवर्ध्य तृतीयवह्निदक्षिणोत्तररेखाग्रेण मेलयेत् । तदिदमर्धक्लृप्तरेखया बाह्यशक्तेर्भेदनं भवति । तथा चतुर्थशक्तेः पश्चिमकोणाग्रस्पर्शेन सर्वाधो नवमीं तिर्यग्रेखां निष्पाद्य तया प्रथमवह्निदक्षिणोत्तरे रेखाग्रे संस्पर्शयेत् । तदिदं कल्प्ययैव रेखया बाह्यशक्तेर्भेदनं भवतीति ।

**प्राञ्चस्तु**–अस्मिन् श्लोके पूर्वार्धेनैव कोणद्वयमुत्तरार्धेनैवेतरत्कोणद्वयमुक्तमिति व्याचक्षते तदिदं प्रतिज्ञामात्रमित्युपेक्ष्यम् । **अर्थरत्नावल्यां** त्वयं श्लोकस्ततः सृष्टिमहाचक्रमितिवक्ष्यमाणश्लोकोत्तरं व्याख्यातः । ततोऽपि **प्राचीनटीकायां (ऋजुविमर्शिन्यां)** त्विहैव व्याख्यातः संगतश्चेति स एव पक्षः स्वीकृतो**ऽस्माभिः** । इति चतुर्दशारनिष्पत्तिः ॥ ४१ ॥

एवं षट्चक्राणि मन्वस्रान्तान्युपदिश्यावशिष्टं चक्रत्रयमुपदिशति सार्धश्लोकेन–

**एतद्बाह्यगतं पद्ममष्टपत्रं समालिखेत् ।**
**तद्बाह्यतोऽपि देवेशि षोडशारं तथैव च ॥ ४२ ॥**
**परिवेषं भूपुरं च चतुर्द्वारोपशोभितम् ॥**

अयं तु सार्धश्लोक एवमेतस्य चक्रस्येतिदूरस्थश्लोकोत्तरम् **अर्थरत्नावल्यां व्याख्यातः** । तदपि **प्राचीनटीका(ऋजुविमर्शिनी)**विरोधादसंगतत्वाच्चोपेक्ष्यम् । एतस्माच्चतुर्दशाराद्बाह्यभागस्थं यथा स्यात्तथाऽष्टपत्रपद्मं सम्यगालिखेत् । तस्यापि बाह्यतः षोडशभिररैः पत्रैर्युक्तं पद्मं तथैव लिखेत् । अष्टदलपद्मवदेवेत्यर्थः । अष्टदले हि पद्मपदेनैव कर्णिकावृत्तमाक्षिप्यते । कर्णिकामन्तरेण दललेखनायोगात् । केसराणि तु नाऽऽक्षिप्यन्ते । अन्यथानुपपत्तेरभावात् । तेन कर्णिकावृत्तसहितं केसररहितमष्टदलं यथा लेख्यं तथैव षोडशदलमपि कर्णिकावृत्तकेसरसाहित्य-राहित्याभ्यां लेखनीयमिति भावः । तथा च **दक्षिणामूर्तिसंहितायाम्**–

**'बहिरष्टदलं पद्मं सुवृत्तेन समालिखेत् ।**
**तद्वत्षोडशपत्रं हि विलिखेत्पद्ममुत्तमम् ॥'**

इति । **भूतभैरवतन्त्रे**ऽपि–

**'योऽस्मिन्[1] यन्त्रे महेशानि केसराणि प्रकल्पयेत् ।**
**योगिनीसहितास्तस्य हिंसां कुर्वन्ति भैरवाः ॥'**

इति । केसरशब्दो दलद्वयमध्यावकाशवाची । तन्निषेधे ज्ञापकमपि वक्ष्यते ॥ ४२-४२ $\frac{१}{२}$ ॥

ततः परिवेषं षोडशदलाद्बहिरेकं वृत्तं कुर्यात् । तद्बहिश्चतुर्दिक्षु चतुर्भि-र्द्वारैरुपशोभितं भूपुरं कुर्यात् । पार्थिवं चक्रं चतुर्द्वारं भवतीति **श्रुतेः** । उक्तं च संहितायाम्–

**'सुवृत्तं परमेशानि ततो भूबिम्बमालिखेत् ।**
**चतुर्द्वारविशोभाढ्यं.....................॥'**

इति । ततश्च कर्णिकावृत्ते द्वे तद्बहिर्मर्यादावृत्तमेकमिति संहत्य त्रीणि वृत्तानि सम्पद्यन्ते । यत्तु **'वृत्तत्रयं च धरणीसदनत्रयं च'** इति **यामलम्,** यत्तु(च्च) **'ज्येष्ठारूपं चतुष्कोणं वामारूपभ्रमित्रयम्'** इति षष्ठपटले (श्लो. १९) वक्ष्यमाणं तत्सर्वं

---

1. स्मिन्पवे म –क.ग.

कर्णिकावृत्तद्वयमेलनेनैव त्रित्वाभिप्रायकमिति बहवो व्याचक्षते । वस्तुतस्तु,-वक्ष्यमाणे प्रकारान्तरेण श्रीचक्रलेखनावसरे–

**'बहिः पद्मद्वयं कुर्यादष्टषोडशकच्छदम् ।**
**गुणवृत्तं ततः कुर्याच्चतुरस्रं च तद्बहिः ॥'**

इति वचने ततःपदस्वारस्येन पद्मद्वयाद्बहिरेव त्रीणि वृत्तानीति प्रतीतेस्तदनुरोधेनात्रत्यस्य परिवेषमित्येकवचनान्तस्यापि पदस्य 'ग्रहं संमार्ष्टी' इत्यादाविवाविवक्षितार्थकतैव युक्ता । ततश्च वासनापटले भ्रमित्रयमित्यनेन पद्मद्वयोपलक्षणार्थं कर्णिकावृत्तमेलनेन यथोक्तावपि **यामले** पद्मद्वयस्य पृथग्गणनदर्शनाद् वृत्तत्रयपदेन कर्णिकातिरिक्तमेव तद्व्याख्यातुं युक्तमिति पञ्चैव वृत्तानि । अत एव **ज्ञानार्णवे–**

**'एतद्बाह्ये महेशानि वृत्तं पूर्णेन्दुसन्निभम् ।**
**तद्युतं कुरु मीनाक्षि वसुपत्रं मनोहरम् ॥**
**तथा षोडशपत्रं तु विलिखेत् सुरवन्दिते ।**
**तद्बाह्ये देवदेवेशि त्रिवृत्तं मातृकान्वितम् ॥'**

इत्यत्र तद्बाह्य इति पदेन स्पष्टं कर्णिकावृत्तयुगलमन्तरेणैव वृत्तत्रयमुक्तम् । तद्व्याख्यातारस्तु **केचिदाहुः**–तद्बाह्य इतिश्लोकार्धं स्वपुस्तक उपरिलिखितत्वादक्षरलेखनप्रकारस्य तन्त्रान्तरसिद्धस्यापि प्रकृततन्त्रे कस्मिंश्चिदपि चक्रेऽकथनादकस्मादिहैव मातृकान्वितत्वोक्तेरसांगत्याद्बहुषु पुस्तकेष्वनुपलब्धेश्च प्रक्षिप्तमेवेत्यध्यवसीयते । तेन **ज्ञानार्णवमते**ऽपि त्रीण्येव वृत्तानि न पञ्चेति । तदयुक्तम् । तस्य प्रक्षिप्तत्वे बहिर्वृत्तबोधकवचनान्तराभावेन वृत्तद्वयस्यैवाऽऽपत्तेः । न चाक्षरलेखनस्याकथनात् तत्प्रक्षिप्तत्वनिश्चयो युक्तः । **'चतुरस्रं मातृकार्णैर्मण्डितं सिद्धिहेतवे'** इत्युत्तरग्रन्थे तत्कथनदर्शनात् । न च तस्य-**'चतुःषष्टिर्यतः कोट्यो योगिनीनां भवेत्प्रिये(महौजसाम्)'** (४/५९;८/२०१) इत्याद्यर्थवादवाक्यप्राये पठितवाक्यत्वादौदुम्बराधिकरणन्यायेनार्थवादत्वमिति तत्समर्थनं युक्तमिति भ्रमितव्यम् । दीर्घसोमे संदृष्ट्वा धृत्या इतिविधिवाक्यान्तर्गतस्य प्रायपाठस्य विधुरस्य धृतिपदमात्रस्याप्यर्थवादत्वदर्शनात् । उत्तरत्र षडध्वात्मकत्वोक्त्यवसरे वर्णलेखनस्य कण्ठरवेणोक्तत्वाच्च । ननु मत्पुस्तक उपरिलिखितत्वात् कल्पितमिति चेत् । अस्मत्पुस्तके मध्य एव लिखितत्वादकल्पितमेवास्त्विति न किञ्चिदेतत् । **संहिता**दितन्त्रान्तरे स्पष्टं वृत्तत्रितयमेवोपलभ्यते न तत्पञ्चकमिति चेदस्तु विकल्पेन सोऽप्येकः पक्षः । अत एव **विशुद्धेश्वरतन्त्रे–**

**'एतद्बाह्ये वृत्तमेकं लिखेदष्टदलान्वितम् ।**
**तद्बाह्येऽप्येकवृत्तं स्याद्दलषोडशकान्वितम् ॥**

**तद्बाह्ये वृत्तमेकं तु सीमार्थं साधकश्चरेत् ।**
**पार्थिवं मण्डलं कुर्यात्त्रितयं द्वारसंयुतम् ॥**
**द्वारद्वादशकं कुर्याच्चतुर्दिक्षु समाहितः ।'**

इत्यादिकं वचनमुपपद्यते । **कादिमते** तु–

**'बहिरष्टदलाम्भोजं तद्बहिर्द्विगुणच्छदम् ।**
**विधाय षड्भिर्वृत्तैश्च................॥'**

इत्यादिना वृत्तषट्कमुक्तम् । परं तु तत्र भ्रमेण वृत्तं निष्पाद्य **'सुसमे चतुरस्रके'** इत्यादिना चतुर्दशारान्तचक्रलेखनार्थमेकं वृत्तं यदुक्तं तेन सह षड्वृत्तानीत्युक्तं **मनोरमायाम्** । तद्विभागश्चेत्थम् – चतुर्दशाराद्बहिरेकं मर्यादावृत्तम्, ततोऽष्टदलस्य कर्णिकावृत्तम्, अष्टदलाद्बहिः षोडशारकर्णिकावृत्तम्, तद्बहिस्त्रीणि वृत्तानीति । **अन्ये** तु–चतुर्दशाराद् बहिर्मर्यादावृत्तमेकम्, तत्संलग्नमष्टदलकर्णिकावृत्तम्, ततोऽष्टदलेषु केसरार्थं वृत्तम्, अष्टदलाद्बहिः षोडशदलकर्णिकार्थं वृत्तम्, षोडशदलोदरेषु केसरार्थं वृत्तम्, षोडशदलोपरि मर्यादावृत्तं चेति वर्णयन्ति । **सौभाग्यरत्नाकरे** तु चतुर्दशारमर्यादावृत्तातिरिक्तान्येव षड्वृत्तानीति **तन्त्रराजार्थ**मभिप्रेत्य सप्त वृत्तान्युक्तानि । चतुर्दशाराव्यवहितवृत्तेऽपि त्रयः पक्षाः– सर्वकोणस्पर्शः, सर्वेषां कोणानामस्पर्शः, षण्णामेव स्पर्श इतरेषामस्पर्शश्चेति । एवंरीत्या वृत्तलेखने पक्षभेदे सति यथासम्प्रदायं व्यवस्था **'तन्त्राणां बहुरूपत्वात्कर्तव्यं गुरुसम्मतम्'** इति वचनात् ।

अथ भूगृहलेखने पक्षभेदाः– भूगृहं नाम चतुरस्रम् । तच्चैकरेखात्मकमेकमेव । मूले भूपुरमित्येकवचनात् । **'चतुरस्रे चतुर्द्वारि योगिन्यः सिद्धिदायकाः'** इति **ज्ञानार्णवेन, 'पश्चिमादिक्रमेणैव प्रकटाश्चतुरस्रकः'** इति **संहितया** च संवादाच्च । तेनैकरेखात्मकं प्रतिदिशमेकैकद्वारयुतं भूबिम्बमित्येकः पक्षः । **कादिमते** तु प्रतिदिशं द्विरेखं प्राक्प्रत्यक्चेति द्वारद्वययुतं दक्षिणोत्तरतः प्रत्येकं रेखात्रयेण स्थानद्वययुतं कोणेषु तिर्यक्सूत्रैश्चतुर्भिर्द्विधाकृतचतुष्पदयुक्तमुक्तम् । सोऽयं द्वितीयः पक्षः । प्रतिदिशं रेखात्रययुक्तं द्वारसामान्यभाववदिति तृतीयः । **यामलं तन्त्रं कल्पसूत्रं शिङ्गभूपालीया पद्धतिः प्रपञ्चसारसंग्रहो विद्यारण्यपद्धतिः सौन्दर्यलहर्युक्ति**श्चास्मिन्नेव पक्षेऽनुकूलाः । तेषु द्वारलेखनानुक्तेः । **विशुद्धेश्वरतन्त्रे** तु प्रत्येकं चतुर्भिर्द्वारैः सहितानि त्रीणि भूगृहाण्युक्तानीति, द्वादशद्वारं त्रिरेखं भूगृहमिति चतुर्थः पक्ष इत्याहुः । मूले तु सर्वेऽपि पक्षाः सूचिताः । चतुरस्रमित्येकवचनादेकरेखापक्षः, चक्रन्यासे रेखात्रयकीर्तनात् [त्रिरेखापक्ष इति] द्वौ पक्षौ सूचितौ । पूजाप्रकरणेऽणिमादि-ब्राह्म्याद्योरेव पूजनकथनादणिमां पश्चिमद्वार इत्यादिना ब्रह्माणीं पश्चिमद्वार इत्यादिना च पश्चिमपूर्वयोरेव द्वारानुवादात् तृतीयरेखास्थमुद्रापूजनस्याकथनाद्

द्विरेखापक्षोऽपि सूचितः । वस्तुतस्तु **तन्त्रराजो**क्तो द्विद्वारकपक्ष एकोऽतिरिक्तः । अन्येषां त्रयाणां परस्परोपसंहारादेक एव पक्ष इति द्विकोटिकविकल्प एव युक्तः । त्रिरेखात्मकेऽवयविनि चतुरश्रत्वभूबिम्बत्वादयो हि धर्मा व्यासज्ज्य वृत्तयः । तिस्रो रेखास्त्ववयवा एव । अत एव 'चतुरश्राद्यरेखायै चतुरश्रमध्यरेखायै चतुरश्रान्त्यरेखायै नमः' इति चक्रन्यासस्थो व्यवहार उपपद्यते । चतुरश्राद्यरेखेत्यर्थस्य स्वरसतो भानात् । कर्मधारयाङ्गीकारे प्रथमचतुरश्रायेत्येव व्यवहारापत्तेः । **'पार्थिवं मण्डलं कुर्यात्त्रितयं द्वारसंयुतम्'** इति **विशुद्धेश्वरवचने** मण्डलमित्येकवचनेन त्र्यवयवार्थत्रितयपदविशेषणेन चावयविन्येव भूगृहत्वसिद्धेश्च । ततश्च चतुरश्रे चतुर्द्वारीत्यादिवचनेषु द्वारे चतुष्ट्वविशेषणानि चतुरश्र इत्याद्येकवचनान्तानि पदान्यप्यवयव्यभिप्रायेणोपपद्यन्ते । बहुवचनान्तानि क्वचिद्दृश्यमानानि चेदवयवबहुत्वाभिप्रायेण पाशाधिकरणन्यायेनोपपादयितुं शक्यन्त एवेति क्वत्यो विरोधः । एतेन द्वारद्वादशकविधायकं **विशुद्धेश्वर**वचनं व्याख्यातम् । नहि तस्मिन्नेव तन्त्रे श्रुतस्य पार्थिवं मण्डलमित्येकवचनस्य द्वारद्वादशकत्वस्य च परस्परविरोधोऽवयवावयविभावाश्रयणमन्तरेण निर्वोढुं शक्यते । अन्यथैकस्यामेव रेखायां द्वादशद्वारापत्तेः । न च तत्केषामपीष्टम् । तस्माद्यत् **सुन्दरीमहोदये शंङ्करानन्दस्य** विजृम्भणं **संहिता-ज्ञानार्णव-वामकेश्वरा**दिवाक्यानामेकवचनघटितानां बहुवचनघटितेन **विशुद्धेश्वरीय**वाक्येण शाखान्तरोपसंहारन्यायेनाऽऽग्नेयं चतुर्धा करोतीतिवन्नोपसंहारः । तेषां वाक्यानामसंदिग्धत्वेन विशेषानपेक्षितत्वात् ।

**'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ।**
**स्पष्टस्य तु विधेर्नान्यैरुपसंहारसम्भवः ॥'**

इति **तन्त्रवार्तिकात्** । **'मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः'** इति बहु-वचनघटितविधेः 'प्रयागे वपनं कुर्याद्' इत्येकवचनघटितवाक्येनोपसंहाराभावस्य **धर्मशास्त्र**विदामिष्टत्वाच्च । चतुर्द्वारद्वादशद्वारपदघटितवाक्ययोः परस्परविरुद्धयोरेक-वाक्यताया ब्रह्मणोऽप्यशक्यत्वाच्चेति, तन्नाऽऽदर्तव्यम् । उक्तरीत्या विरोधाभावेनो-पसंहारसम्भवेऽष्टदोषदुष्टविकल्पायोगात् । सर्वतीर्थेष्विति प्रयाग इति विध्योस्तु नैकवचनबहुवचनकृतो विरोधः, 'पुनः संस्कारमाचरेत्, संस्कारानाचरेत्पुनः' इति विध्योरेकवाक्यताया इष्टत्वात् । तत्र स्थित्वा **'जपेल्लक्षम्'** इत्यस्यैवं लक्षत्रयं जप्त्वेति वचनेनोपसंहारस्य **सौभाग्यरत्नाकरे**ऽभिधानाच्च । **'लक्षमेकमिमं जप्त्वा'** इति **श्रीक्रमसंहिता**वचनस्याप्युक्त**ज्ञानार्णव**वचनेनोपसंहारोक्तेश्च । अपि तु सर्वपदप्रयागपदो-पात्तयावद्विशेषैकविशेषकृतः । अत एव 'न हिंस्यात्सर्वा भूतानि' इत्यस्य 'न ब्राह्मणं हन्याद्' इत्यनेन नोपसंहार इति प्रपञ्चितं **मीमांसावादकौतूहलेऽस्माभिः** । तस्मान्न चतुरश्रपदनिष्ठैकवचनबहुवचनयोश्चतुर्द्वारद्वादशद्वारकत्वविशेषणयोश्च विरोध-

लेशोऽपि । द्वारसामान्याभावपक्षस्तु द्वारप्रतिषेधपर्युदासान्यतरमन्तरेण **यामल-कल्पसूत्रा**दौ द्वारानुक्तिमात्रेण कल्प्यमानः साहसमात्रम्, चतुरश्रपदमात्रघटित**यामला**दिविधेः सद्वारचतुरश्रविधिना सोष्णीषविधेर्लोहितोष्णीषविधिनेवोपसंहारस्य निराबाधत्वादिति युक्तमुत्पश्यामः ॥ ४२-४२$\frac{१}{२}$ ॥

एवं श्रीचक्रलेखनमुपदिश्य तस्यावान्तरभेदेन नवचक्रात्मकत्वमुपदिशति मध्यं त्र्यस्रमित्यध्युष्टश्लोकैः –

**मध्यं त्र्यस्रं तथाऽष्टारं द्वे दशारे चतुर्दश ॥ ४३ ॥**
**तद्बाह्यतोऽष्टपत्रं च षोडशारं महीपुरम् ।**
**सर्वानन्दमयं चाऽऽदौ सर्वसिद्धिप्रदं परम् ॥ ४४ ॥**
**सर्वरोगहरं चान्यत्सर्वरक्षाकरं तथा ।**
**सर्वार्थसाधकं चक्रं सर्वसौभाग्यदायकम् ॥ ४५ ॥**
**सर्वसंक्षोभणं चान्यत्सर्वाशापरिपूरकम् ।**
**त्रैलोक्यमोहनं चेति नवधा नवभिर्भवेत् ॥ ४६ ॥**

मध्यं मध्यस्थानं बिन्दुः । चतुर्दश चतुर्दशारम् । त्रिवृत्तस्य प्रत्येकं चक्रत्वाभावादगणनम् । सर्वानन्दमयमित्यादीनि बिन्द्वादीनां नवानां चक्राणां क्रमेण नामानि । तन्निर्वचनानि तु वासनापटले व्यक्तीभविष्यन्ति । इत्येवंप्रकारेणैकं चक्रं नवभिरवान्तरचक्रैर्नवविधं भवेदित्यर्थः । एतेऽध्युष्टश्लोकाः क्वचिट्टीकायां न दृश्यन्ते पुस्तकेषु तूपलभ्यन्ते ॥ ४३-४६ ॥

अथास्यैव त्र्यात्मकत्वमुपदिशत्येकेन–

**ततः सृष्टिमहाचक्रं तृतीयं तु हुताशनः ।**
**मध्ये स्थितं द्वितीयं तु संहारः प्रथमं च यत् ॥ ४७ ॥**

अत्र बिन्द्वादिभूगृहान्तानां नवानां प्रथमद्वितीयतृतीयशब्दैस्त्रेधा विभज्य निर्देशः समं स्यादश्रुतत्वादिति न्यायेन त्रित्रिचक्राणामेकीकरणेनैवेति पर्यवस्यति । तथा तुल्यन्यायेनैवैकस्यां त्रिचक्र्यामपि त्रेधा विभागोऽवान्तरः सिध्यति । तेन बिन्दु-त्रिकोणवसुकोणात्मकं चक्रत्रयं संहारचक्रमित्युच्यते । द्वे दशारे मन्वस्रं चेति स्थितिचक्रम् । द्वे पद्मे भूगृहं चेति सृष्टिचक्रम् । तथा भूगृहं सृष्टिसृष्टिः । षोडशारं सृष्टिस्थितिः । अष्टारं सृष्टिसंहारः । मन्वस्रं स्थितिसृष्टिः । बहिर्दशारं स्थिति-स्थितिः । अन्तर्दशारं स्थितिसंहारः । वसुकोणं संहारसृष्टिः । त्र्यस्रं संहारस्थितिः । बिन्दुः संहारसंहार इति । **तन्त्रान्तरे** तु बिन्द्वादित्रयत्रयस्य सोमसूर्यानलात्मकत्वं क्रमेणोक्तम् । तदपि स्वसम्मतमिति हुताशनपदेन ध्वनितम् । एतासां संज्ञानां वासनावसरे सप्रयोजनकताऽवसेया ॥ ४७ ॥

इदानीं चक्रराजार्चनस्य महान्तं महिमानमुपदिशति एवमित्यादिभिः सप्तदशभिः श्लोकैः –

एवमेतन्महाचक्रं महाश्रीत्रिपुरामयम् ।
क्लेदनं द्रावणं चैव क्षोभणं मोहनं तथा ॥ ४८ ॥
आकर्षणं महादेवि जृम्भणं स्तम्भनं तथा ।
व्याधिदारिद्र्यशमनं सर्वदुर्नीतिनाशनम् ॥ ४९ ॥
शान्तिपुष्टिधनारोग्यमन्त्रसिद्धिकरं परम् ।
भोगदं मोक्षदं चैव खेचरत्वप्रवर्तकम् ॥ ५० ॥
सर्वरक्षाकरं देवि सर्वानन्दकरं तथा ।
सर्वकर्मकरं चापि सर्वकार्यार्थसाधकम् ॥ ५१ ॥
सर्वावेशकरं देवि सर्ववेधकरं परम् ।
सर्वतत्त्वमयं देवि सर्वज्ञानप्रदं तथा ॥ ५२ ॥
सर्वसिद्धिप्रदं चैव सर्वश्रेयस्करं परम् ।
सर्वमन्त्रमयं देवि सर्वयोगीश्वरीमयम् ॥ ५३ ॥
सर्वपीठमयं देवि सर्वज्ञानमयं प्रिये ।
सर्वदोषहरं देवि सर्वतीर्थमयं पुनः ॥ ५४ ॥
सर्वव्रतमयं चैव सर्वामृतमयं तथा ।
सर्वदुःखप्रशमनं सर्वशोकनिवारणम् ॥ ५५ ॥
सर्वोन्मादकरं देवि सर्वाह्लादनकारकम् ।
सर्वदौर्भाग्यशमनं सर्वविघ्ननिवारणम् ॥ ५६ ॥
सर्वसिद्धिप्रदं चक्रं सर्वाशापरिपूरकम् ।
रौद्राभिचारकोदण्डं परमन्त्रौघभक्षणम् ॥ ५७ ॥
परसिद्ध्याकर्षणं च पराज्ञाकर्षणं तथा ।
परसैन्यस्तम्भकरं परविज्ञानमोहनम् ॥ ५८ ॥
परचक्रस्तम्भकरं शस्त्रस्तम्भकरं तथा ।
महाचमत्कारकरं महाबुद्धिप्रवर्तकम् ॥ ५९ ॥
महावाणीकरं देवि महासौख्यप्रदायकम् ।
महावश्यकरं देवि महासौभाग्यदायकम् ॥ ६० ॥
महाज्वरहरं देवि महाविषहरं तथा ।
महामृत्युप्रशमनं महाभयनिवारणम् ॥ ६१ ॥
महावश्यकरं देवि महावेधकरं पुरम् ।
महापुरक्षोभकरं महासुखशुभप्रदम् ॥ ६२ ॥

**महालक्ष्मीमयं देवि महामाङ्गल्यदायकम् ।**
**महाप्रभावसंयुक्तं महापातकनाशनम् ॥ ६३ ॥**
**एवमेतस्य चक्रस्य प्रभावो वर्णितो मया ।**
**न शक्यते महादेवि कल्पकोटिशतैरपि ॥ ६४ ॥**

महाचक्रमर्चितमिति शेषः । मह पूजायामिति धातोः पूज्यं चक्रमित्येव वा तदर्थः । चक्रपूजनमिति तु पर्यवसितोऽर्थः । पूजनात्मकक्रियायाः फलप्रपञ्च उत्तरग्रन्थः । त्रिपुरामयं देव्या अभिव्यक्तिस्थानम् । क्लेदनमनार्द्रस्वभावस्याप्यार्द्रतासम्पादकम् । द्रावणं घनस्वभावस्यापि घृतवद्द्रवापादकम् । क्षोभणमिच्छौत्कट्यजनकम् । मोहनं कृत्याकृत्ययोरस्फूर्तिकृत् । जृम्भणमणोर्महत्त्वापादकम् । स्तम्भनं निश्चेष्टीकरणम् । सर्वावेशकरमाणवावेश-शाक्तावेश-शाम्भवावेशानां जनकम् । तल्लक्षणानि च **माधि(लि)नीविजयतन्त्रे**–

**'उच्चारकरणध्यानवर्णस्थानप्रकल्पनैः ।**
**यो भवेत्स समावेशो बुधैराणव उच्यते ॥**
**उच्चाररहितं वस्तु चेतसैव विचिन्तयन् ।**
**यं समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते ॥**
**अकिञ्चिच्चिन्तकस्यैव गुरुणा प्रतिबोधितः ।**
**उत्पद्यते य आवेशः शाम्भवोऽसावुदीरितः ॥'**

इति । सर्ववेधकरं सर्वावयवावच्छेदनरञ्जनं वेधस्तत्करम् । सर्वसिद्धिप्रदमणिमादिप्रदम् । सर्वामृतमयं पञ्चविधमोक्षावहम्, मृतमनिष्टं तन्निवारकमिति **केचित्** । सर्वोन्मादकरं भूताद्यावेशजन्यचित्तविकारकारि । सर्वसिद्धिप्रदं चक्रमिति तु त्रिकोणचक्रस्य निर्देशः । चक्रपदसामानाधिकरण्यात् । सर्वाशापरिपूरकप्रायपाठाच्च । तत्फलं त्ववयवद्वाराऽवयविनः स्तुतिः । अष्टाकपालादिभिरिव द्वादशकपालस्य । तेन न पूर्वोक्तविशेषणेन पौनरुक्त्यशङ्कावकाशः । परचक्रस्तम्भकरं शत्रुकृतयन्त्राणां मोघतापादकम् । महावश्यकरं महच्च तदावश्यकं च तद्रात्यादत्त इति विग्रहः । तेन न पौनरुक्त्यम् । महावेधकरमजरस्यापि महाछिद्रजर्जरीकरणम् । महापुरक्षोभकरं वैकुण्ठादेरपि क्षोभकम् । स्पष्टमन्यत् । अत्र चक्रराजार्चनेनेमानि फलानि भावयेदिति विधिः परिणमति । न च भाव्यानेकत्वकृतो वाक्यभेदः । सर्वकार्यार्थसाधकमित्येकेन पदेन सकलफलकथनेन तदभावात् । क्लेदनादिपदानि तु सर्वपदस्यार्थविवरणरूपाणीति न तद्वैयर्थ्यम् । 'सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः' इतिवाक्यस्थसर्वपदविवरणार्थताया 'एकस्मै वा अन्ये यज्ञक्रतवः कामायाऽऽह्रियन्ते' इतिवाक्यशेषेऽङ्गीकारेणैवमेव वाक्यभेदस्य **तान्त्रिकैः** परिहृतत्वात् ॥ ४८-६४ ॥

इदानीं प्रकारान्तरेण लघुमार्गेण श्रीचक्रसाधनमुपदिशति अथात इत्यादिभिः सप्तदशभिः श्लोकैः –

**अथातः संप्रवक्ष्यामि त्रिपुराचक्रमन्यथा ।**
**तदर्थं देवि कुर्वीत त्रिहस्तं मण्डलोत्तमम् ॥ ६५ ॥**
**अस्य कार्या तृतीयेन कर्णिका चक्रलाञ्छिता ।**
**पद्मद्वयं द्वितीयेन चतुरस्रं च शेषतः ॥ ६६ ॥**

अथानन्तरम् । अतः पूर्वोक्तप्रकारस्य दुरवगाहत्वात् । अन्यथा पूर्वोक्तप्रकारवैलक्षण्येन । त्रिहस्तमित्यत्र हस्तशब्दश्चतुर्विंशत्यङ्गुलवचनस्तावत्संख्याकभागमात्रोपलक्षणम् । ततश्च समपरिमाणकद्विसप्ततिभागात्मकं मण्डलोत्तमं चतुरस्राकारं समं भूभागं परिगृह्णीयादित्यर्थः । अस्य मण्डलस्य तृतीयेन भागेन चतुर्दशारान्तचक्रचिह्निता कर्णिका कर्तव्या । मध्यभागे कर्कटकाग्रं संस्थाप्य ततो द्वादशाङ्गुलव्यवधानेन रेखामुत्पाद्य भ्रामयन् कर्णिकावृत्तमुत्पादयेत् । तेनोर्ध्वभागाधोभागयोरेकैकहस्तपरित्यागेन मध्यभागे हस्तमात्रा कर्णिका भवति । सोऽयं तृतीयो भागः । ततश्च कर्णिकाया उपरि द्वादशाङ्गुलमधश्च द्वादशाङ्गुलं परिगृह्य सम्भूय जातेन हस्तेनाष्टदलषोडशदलपद्मौ कुर्यात् । तत्र च समं स्यादश्रुतत्वादितिन्यायेन कर्णिकोर्ध्वाधःस्पृष्टाव्यवहितषट्षडङ्गुलभूभागेऽष्टदलं तदुभयभागस्पृष्टे तावत्येव भूभागे षोडशदलं भवति । सोऽयं द्वितीयो भागः । शेषतोऽवशिष्टेन प्रथमेन हस्तेन चतुरस्रं कार्यम् । षोडशारोर्ध्वाधोभागसंलग्नद्वादशाङ्गुलभूभागे भूबिम्बं भवति । तत्रापि समं स्यादिति न्यायेनाभितश्चतुश्चतुरङ्गुले चतुरस्रस्य तृतीया रेखा, तदव्यवहिते चतुरङ्गुले द्वितीया रेखा, सर्वबहिर्भूते चतुरङ्गुले भूगृहस्य प्रथमा रेखेति संहत्यावयवत्रयात्मकं चतुरस्रं यत्र भवति सोऽयं प्रथमो भागः । अत्राऽऽदिमेन चतुरस्रकमित्यनुक्त्वा शेषत इत्युक्त्या वृत्तत्रयस्य प्रथमभागमध्य एवान्ते लेखनं न द्वितीयभागादाविति लब्धं गुणवृत्तलेखोत्तरं यावदवशिष्यते तत्रैव चतुरश्रत्रयस्य यथाविभागं लेख इति तदर्थस्वरसात् । अत्र बहिर्भागमारभ्यान्तर्भागपर्यन्तं क्रमेण प्रथमद्वितीयतृतीयपदैर्व्यवहाराद्भूगृहावयवरेखाणामप्यनेनैव क्रमेण चक्रन्यासे निर्देशादावरणपूजादावयमेव क्रमो मुख्य इत्यदध्वनत् । **तन्त्रान्तरे** तु मण्डलस्य द्विसप्ततिभागत्वेऽप्यवान्तरविभागः प्रकारान्तरेणोपलभ्यते– पञ्चचत्वारिंशदङ्गुले भूभागे मध्यकर्णिका । तद्बहिरूर्ध्वमधश्च पृथक्पृथक्सार्धचतुरङ्गुलमानेन मिलित्वा नवाङ्गुलेऽष्टदलम् । तद्बहिश्चतुश्चतुरङ्गुलेऽष्टाङ्गुलं(ले) षोडशारं शेषेण भूगृहमिति । **प्रपञ्चसारसंग्रहे** त्वेष एव प्रकारोऽनुसृतः ॥ ६५-६६ ॥

अथ कर्णिकावृत्तेऽष्टौ भागानारचयति सार्धश्लोकद्वयेन–

**ब्रह्मसूत्रं पुरा दत्त्वा कर्णिकाभ्रममध्यतः ।**
**याम्यसौम्यायतं दद्यात्तत्रस्थं सूत्रसप्तकम् ॥ ६७ ॥**

वृत्तमध्ये प्रागादिपश्चिमान्तमेकं सूत्रं दत्त्वा रेखां विलिखेत् । तदेव ब्रह्मसूत्रमित्युच्यते । तत्प्रयोजनं तु शक्तिपश्चिमकोणानां वह्निपूर्वकोणानां च स्थलनिर्णयेनाऽऽनुपूर्व्यसिद्धिः । याम्या दक्षिणा **दिक्** । सौम्योदीची । तद्वृत्तमध्ये

तिर्यग्रेखासप्तकं लिखेदिति फलितम् । एवं सति प्रथमरेखायाः पूर्वस्यां कर्णिकाभ्रमावधिक एको भागः । सप्तमरेखायाः पश्चिमस्यां कर्णिकाभ्रमपर्यन्तोऽन्यो भागः । सप्तरेखासन्धिभूताः षड्भागा इत्यष्टौ वीथ्यः सम्पन्नाः । ताश्च समं स्यादिति न्यायेन प्रत्येकं त्रिव्यङ्गुलाः सम्पद्यन्ते । **तन्त्रान्तरे** तु--'कर्णिकावृत्तस्य पञ्चचत्वारिंशदङ्गुलत्वेऽपि तदवकाशस्य पुनरष्टाचत्वारिंशद्विभागान् कृत्वा तेषु नव रेखा लिखेत्' इत्युक्तम् । देवी स्तुतोमे गङ्गावल्लीस्तुतेति प्रदर्श्यत इति ।

**'कटपयवर्गभवैरिह पिण्डान्त्यैरक्षरैरङ्काः ।**
**नेत्रे शून्यं ज्ञेयं तथा स्वरे केवले कथिते ॥'**

इति प्रसिद्धया **वररुचिपरिभाषया** देवीत्याद्यक्षराणि । तेन देवीपदेनाष्टाचत्वारिंशदंशा उच्यन्ते । तेषु नवभिस्तिर्यग्रेखाभिर्जातानां दशभागानां परिमाणबोधकानि स्तुतोम इत्यादिदशाक्षराणि । षट् षट् पञ्च त्रयस्त्रयश्चत्वारस्त्रयः षट् षट् षट् च प्राग्दिक्क्रमेण दश वीथ्यंशा भवन्तीति तदर्थः । एतत्तन्त्रेऽपि हस्तमात्रवृत्तस्याष्टाचत्वारिंशद्धा विभागे सत्येकैकोंऽशोऽर्धाङ्गुलात्मकः सम्पद्यते । तादृशाः षट्षडंशाः प्रथमद्वितीययोर्वीथ्योरष्टमादिदितिसृषु च भवन्तीति तावति विषये **तन्त्रान्तर**संवादः स्पष्ट एव । इतरांशेऽपि संवादो मूलतो व्यक्तीभविष्यति ॥ ६७ ॥

**तुर्यसूत्रं ततो लुम्पेत् मध्यांशः स्याद्द्विभागतः ।**
**तृतीयपञ्चमौ नागभूपांशौ द्व्यंशवर्जितौ ॥ ६८ ॥**

चतुर्थं सूत्रं लुम्पेत् मार्जयेत् । तेन सप्तैव वीथ्यः सम्पन्नाः । परं तु तासु चतुर्थी वीथीतरवीथ्यपेक्षया द्विगुणपरिमाणा भवतीत्याह–द्विभागत इति । भागद्वयात्मक एको मध्यभाग इत्यर्थः । षडङ्गुला तुर्यवीथीति यावत् । इदमुपलक्षणं रेखान्तराणामंशतो मार्जनस्य । **तन्त्रान्तरे** तृतीयपञ्चमरेखयोर्मध्यभागो गङ्गावल्लीत्युक्तत्रयोदशांशात्मक इह तु द्वादशांशात्मको भवतीत्यतस्तदविरोधं मध्यभागाभिवर्धनेनोपदिशति–तृतीयपञ्चमाविति । तृतीयवीथ्या नागांशांस्त्रित्रियवात्मकानष्टावंशान्कृत्वा पञ्चमवीथ्या भूपांशान् सार्धसार्धयवात्मकान् षोडश भागान् कृत्वाऽष्टस्वेकः षोडशसु चैक इति द्वाभ्यामंशाभ्यां वर्जिताविमौ भागौ कुर्यात् । तृतीयवीथीं स्वाष्टमांशेन ह्रासयेत् । पञ्चमीं वीथीं स्वषोडशांशेन ह्रासयेदिति पर्यवसितोऽर्थः ॥ ६८ ॥

**तेन मानेन सप्तैव वीथ्यस्तन्त्रेषु मध्यमम् ।**

तृतीयवीथ्याः स्वाष्टमांशन्यूनीकरणं द्वेधा सम्भाव्यते द्वितीयसूत्रस्य [प्रागपसारणात्तृतीयसूत्रस्य (?)] प्रत्यगपसारणाच्चेति । पञ्चमवीथ्या न्यूनीकरणमपि द्वेधा । तयोर्द्वितीय एव पक्षोऽनुसर्तव्य इत्याह–तेन मानेनेति । तृतीयवीथ्यां निःसारितं [यवत्र]यं पञ्चमवीथीस्थः सार्धयवश्चेति सार्धयवचतुष्टयरूपेण मानेन

षडङ्गुलात्मकं मध्यभागं पुनरपि विवर्धयेदित्यर्थः । तृतीयपञ्चमरेखे एव प्राक्प्रत्यग-पसारयेदिति यावत् । कर्णिकावृत्तसम्बन्धिनामष्टाचत्वारिंशदंशानां मध्ये त्रयोदशांशै-र्मध्यभागस्तन्त्रान्तर इह त्वर्धयवाधिकैस्त्रयोदशभिरित्यल्पतरमन्तरं भवति । तृतीय-वीथ्यामेवैकांशन्यूनभाव**स्तन्त्रान्तरे** । अत्र तन्त्रे तु तृतीयपञ्चमवीथ्योर्मिलित्वा न्यूनभाव इति वैलक्षण्यं तु तन्त्रभेदान्न दुष्यति । यत्तु तृतीयवीथीस्थांशाष्टके पञ्चम-वीथीस्थांशषोडशके च द्वौ द्वावंशौ पार्थक्येन न्यूनीकुर्यादिति व्याख्यानं तत्तन्त्रान्तरेण भूयो विसंवादापत्तेरुपेक्षितम् । अत्रेदं बोध्यम्– प्रथमसूत्रमष्टाचत्वारिंशद्धा विभज्य तदुभयभागे पृथक्पृथगंशत्रयमिति मिलित्वा तस्य षड्भागान् मार्जयेत् । एवं सप्तमरेखायामपि । द्वितीयरेखाया उभयतः पञ्च पञ्चांशानिति दशांशान् मार्जयेत् । षष्ठरेखायां त्यु(तू)भयतश्चतुरश्चतुरोंऽशानित्यष्टावंशान् मार्जयेत् । तदुक्तम्–

**'आद्ये द्वितीये षष्ठे च सप्तमे च यथाक्रमम् ।**
**मार्जयेद् गुणभोगान्ते त्रिपञ्च तु न मार्जयेत् ॥'**

इति । सोऽयमर्थो मध्यांशः स्याद्द्विभागत इति चरणेनोक्त इति सुव्याख्यम् । कर्णिकामध्यगतसूत्रान्तरांशोऽपि विभागतस्तन्त्रान्तरोक्तगुणभोगाख्याविभागानुसारेण लुम्पेत् । स्यात्पदमीषदर्थकं नियमार्थकं वाऽव्ययमिति तदर्थात् । मध्यांशे द्विभागात्म-कत्वस्य तुर्यसूत्रलोपादर्थसिद्धत्वेन तत्कथनस्यानावश्यकत्वादिति द्रष्टव्यम् ॥ ६८$\frac{१}{२}$ ॥

**तृतीयस्य द्वितीयस्य त्वाद्यसूत्रस्य चान्तयोः ॥ ६९ ॥**
**प्रसारयेदधोऽधःस्थं ततः सूत्रद्वयद्वयम् ।**
**भौमे सप्तमके सूत्रे ब्रह्मस्थाने च संगतम् ॥ ७० ॥**

एवं सप्तानां सूत्राणां मध्ये यत्तृतीयं सूत्रं तस्यान्तयोः कर्णिकावृत्तस्पृष्टयोः **प्रान्त**भागयोरारभ्य पश्चिमस्यां दिशि **भौम**पर्यन्तं सूत्रद्वयं प्रसारयेत् । अधोऽधःस्थं शक्तित्रिकोणानुगुणं यथा भवति तथा । **भौमं** नाम कर्णिकावृत्तम् । तथा यद्द्वितीयं सूत्रमस्पृष्टकर्णिकमुभयतोमार्जितपञ्चपञ्चांशं तस्यान्तयोरारभ्य पश्चिमस्यां दिशि सप्तमसूत्रमध्यभागावधि द्वे रेखे विलिखेत् । ततो यदाद्यं सूत्रमस्पृष्टकर्णिक-मुभयतोमार्जितत्रित्रिभागं तस्यान्तयोरारभ्य प्रत्यग्दिशि मार्जिततुर्यसूत्रादधःस्थाने ब्रह्म-सूत्रसङ्गतं यथा भवति तथा रेखाद्वयं लिखेत् । अयं च कोणः पञ्चसूत्रमध्य-भागात्पूर्वस्यां दिशि किञ्चिदधिकयवत्रयोपरि निपततीति बोध्यम् । **अन्ये** तु अन्त-शब्दस्तृतीयस्येत्यनेनान्वयदशायां प्रान्तपरः । द्वितीयाद्याभ्यामन्वयदशायां समीपपर इत्याहुस्तदयुक्तम् । पूर्व(र्वं) प्रथमादिरेखा[णा]मंशतोमार्जनस्य मूलारूढीकरणेन **अस्मन्मत**रीत्या सर्वत्र प्रान्तार्थकत्वेनावैरूप्यस्य सम्भवतस्त्यागायोगात् ॥ ६९-७० ॥

एवं प्राच्येन सूत्रत्रयेण शक्तित्रयमुत्पाद्य प्रतीच्येन तेन वह्नित्रयमुत्पादयति आपञ्चमादिति द्वाभ्याम्–

**आपञ्चमादधःस्थानां त्रयाणां चान्ततो नयेत् ।**
**भौमे प्राथमिके सूत्रे विश्रान्तं च तृतीयके ॥ ७१ ॥**
**सूत्रद्वयं चान्य[तस्तु] त्र्यस्राण्येवं भवन्ति षट् ।**
**चतुर्दशारं देवेशि दशारं चात्र सिध्यति ॥ ७२ ॥**

यथा प्राच्यतिर्यग्रेखात्रयप्रान्तेभ्यः पार्श्वरेखे द्वे द्वे अधो नीते एवमन्ये अपि द्वे द्वे सूत्रे पञ्चममारभ्याधःस्थानां त्रयाणां तिर्यक्सूत्राणां प्रान्तत ऊर्ध्वं नयेत् । ततो यत्षष्ठं सूत्रमस्पृष्टकर्णिकमुभयतोमार्जितचतुश्चतुर्भागं तस्यान्ताभ्यां पार्श्वरेखे आकृष्य प्राच्यां प्राथमिकतिर्यक्सूत्रमध्यभागे योजयेत् । ततो यत्सप्तमं सूत्रमुभयतोमार्जित-त्रित्रिभागं तदग्राभ्यां द्वे रेखे आकृष्य पूर्वस्यां दिशि तृतीयतिर्यक्सूत्रस्य मध्यभागे मेलयेत् । एवं रीत्या पार्श्वरेखायुगलानि षड्भवन्ति । वस्तुतस्त्र्यस्राण्येवं भवन्ति षडिति **ऋजुविमर्शिन्यु**क्त एव पाठः साधुः । एवं प्रकारेण शक्तित्रयवह्नित्रयाभ्यां मन्वस्रबहिर्दशाराख्ये द्वे चक्रे सम्पन्ने भवतः ॥ ७१-७२ ॥

अथान्तर्दशारं द्वाभ्यामाह–

**सूत्राद् द्वितीयकात् षष्ठाद् ब्रह्मसूत्रस्य पार्श्वयोः ।**
**सूत्रद्वयद्वयं देयमधऊर्ध्वक्रमात्मकम् ॥ ७३ ॥**
**तत्कोटिसङ्गतं पश्चात् सूत्रयुग्मं प्रसारयेत् ।**
**दशारं देवि संसिद्धमेतच्चक्रं तृतीयकम् ॥ ७४ ॥**

द्वितीयसूत्रस्य प्रान्ताभ्यामधो द्वे रेखे पूर्वमेव लिखिते इति पुनस्ततो रेखारम्भासम्भवात् मध्यभाग एवाऽऽक्षिप्यते । तेन द्वितीयसूत्रस्य मध्यभागादार-भ्याधोमुख्यौ रक्षोवायुकोणाभिमुख्येन द्वे रेखे लेख्ये । तयोरवधिमाह– ब्रह्मसूत्रस्येति । प्राक्प्रत्यगायतं यद्ब्रह्मसूत्रं तस्य पार्श्वयोः पार्श्वद्वयवर्तिरेखावधिकतयेत्यर्थः । साम्प्रतं लिखितशक्तित्रये या मध्यशक्तिस्तदीयपार्श्वरेखाद्वयावधीति यावत् । एवं षष्ठसूत्र-स्यापि प्रान्ताभ्यां रेखाद्वयस्योर्ध्वक्रमेण लिखितत्वात् तन्मध्यभागादारभ्यैवेशाग्नि-कोणाभिमुख्येन द्वे रेखे लिखेत् । तयोरवधिस्तु साम्प्रतं लिखितवह्नित्रये यो मध्यमो वह्निस्तदीयपार्श्वद्वयमेव । तदिदमवधिद्वयं तन्त्रेण बोधयितुं ब्रह्मसूत्रस्य पार्श्वयोरि-त्युक्तम् । **ऋजव**स्तु– द्वितीयसूत्रस्य षष्ठसूत्रस्य च यो मध्यभागस्तस्य ब्रह्मसूत्रस्पृष्ट-त्वात् तत्पार्श्वयोरित्यनेन तन्त्रेण वह्निप्राक्कोणशक्तिप्रत्यक्कोणयोरेव स्थाननिर्देश इति व्याचक्षते । एवं सूत्रद्वयद्वयं दत्त्वा पश्चादनन्तरं सूत्रयुग्मे तिर्यक्सूत्रयुगलं प्रसार-

येत्तिर्यग्लिखेत् । द्वितीयसूत्रमध्यारब्धवह्निपार्श्वद्वयरेखाकोटिस्पृष्टं पञ्चमसूत्रादुपरि यवत्रयपरिमितदेशवर्ति च यथा भवति तथा तिर्यक्सूत्रं विलिख्य वह्निं साधयेत् । षष्ठसूत्रमध्यारब्धशक्तिपार्श्वरेखाद्वयाग्रस्पर्शि तृतीयसूत्रादधो यवत्रयपरिमितदेशवर्ति च यथा स्यात्तथा तिर्यक्सूत्रं विलिख्य शक्तिं साधयेदिति यावत् । एवं कृते सति यद्यपि षट्कोणमेव भवति तथाऽपि षट्कोणस्य विदिक्चतुष्टयेऽपि चत्वारि त्र्यस्राणि पूर्वमर्धसिद्धानि षट्कोणपार्श्वरेखाभिरेव पूर्णानि जातानीत्याशयेनान्तर्दशारं मन्वस्रापेक्षया तृतीयं चक्रं सम्यक् सिद्धमित्युक्तम् ॥ ७३-७४ ॥

अथ वसुकोणत्रिकोणचक्रे द्वाभ्यामाह–

**सूत्रात्पञ्चमकान्मध्यादन्यत्सूत्रद्वयं नयेत् ।**
**ऊर्ध्वाधोमुखमध्यस्थत्र्यस्रमर्मद्वयावधि ॥ ७५ ॥**
**दद्यात्तृतीयकं सूत्रं तयोरन्योन्यसङ्गतम् ।**
**एवं चतुर्थमष्टारं मध्ययोनिश्च पञ्चमी ॥ ७६ ॥**

पञ्चमसूत्रस्य मध्यभागादारभ्यैशानाग्नेयाभिमुख्येन द्वे सूत्रे लिखेत् । वृक्षात्पतत्यग्रात्पततीत्यादाविव क्रियावृत्त्योभयोरप्यपादानत्वम् । अनावृत्तौ वृक्षपदस्येव तत्सम्बन्धिनि लक्षणा । तयोरवधिमाह–ऊर्ध्वेति । ऊर्ध्वाधोमुखशब्दाभ्यां साम्प्रतं लिखितषट्कोणमुच्यते । तन्मध्यस्थं यत्त्र्यस्रं प्रथमशक्तिरूपं तत्पार्श्वरेखयोः प्रथमवह्निपार्श्वरेखाभ्यां सम्बन्धात्सन्धिद्वयं तयोरेव द्वितीयवह्निपार्श्वरेखाभ्यां योगे तृतीयशक्तिप्राच्यरेखयाऽपि योगान्मर्मद्वयं चास्ति । तादृशमर्मद्वयाधःसमीपदेशो लक्षणया निर्दिश्यते । तदवधि लिखेदित्यर्थः । वस्तुतस्तु सन्धिरेव मर्मपदेन लक्ष्यते । तस्यैव भाविमर्मत्वादिति युक्तम् । ततस्तयोः पार्श्वरेखयोरन्योन्यसम्बद्धं यथा स्यात्तथा सूत्रं तिर्यक्सूत्रं दद्यात् । तच्च पार्श्वरेखाद्वयमपेक्ष्य तृतीयं भवतीति । एवं सति चतुर्दशारमारभ्य गणनायां चतुर्थं वसुकोणात्मकं पञ्चमं मध्ययोन्यात्मकं च चक्रं सिध्यतीत्यस्यापकर्षेणान्वयः ॥ ७५-७६ ॥

**एवं सिध्यति देवेशि सर्वचक्रं मनोहरम् ।**
**तच्छक्तिपञ्चकं सृष्ट्या लयेनाग्निचतुष्टयम् ॥ ७७ ॥**

सर्वं कर्णिकान्तर्गतं चतुर्दशारादिबिन्द्वन्तम् । बिन्दोः कर्काटकेन कर्णिकावृत्तनिर्माणदशायामेव सिद्धत्वात् । अथवा–

**'त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम् ।**
**दशारयोः षोडशारं भूगृहं भुवनास्रके ॥'**

इति **ब्रह्माण्डपुराणो**क्तरीत्या चतुर्णां चक्राणां पञ्चसु चक्रेष्वन्तर्भावाभिप्रायेणैतावत एव सर्वचक्रमिति व्यपदेशः । एतेन बहिरन्तर्दशारयोर्द्वितीयतृतीयावरणत्वाभ्यां व्यपदेशौ मूले करिष्यमाणौ संगच्छेते । सर्वपदेन न्यूनमात्रव्यवच्छेदो नाधिकस्येति तु **केचित्** । आत्माभिमुखता सृष्टिस्तादृशाग्रं शक्तिपञ्चकम्, पराङ्मुखता लयस्तादृशाग्रं वह्नि-चतुष्टयम् ॥ ७७ ॥

**पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसम्भवः ।**

एवं नवानामुक्तरीत्या सम्यग्योगाच्चक्रोत्पत्तिः ॥ ७७$\frac{1}{2}$ ॥

**तत्रैकमष्टकं देवि द्वे दशारे चतुर्दश ॥ ७८ ॥**
**चतुर्दश दशद्वन्द्वमष्टावेकं महेश्वरि ।**
**सृष्टिसंहारयोगेण शक्तिस्थानान्यनुक्रमात् ॥ ७९ ॥**

एकमित्यादिना सृष्टिक्रमेण त्रिचत्वारिंशतस्त्रिकोणानां गणनम् । चतुर्दशेत्यादिकं तु संहारक्रमेण । शक्तिस्थानानि त्रिकोणानि । यत्तु **सौन्दर्यलहर्याम्** **'चतुश्चत्वारिंशद्व-सुदलकलाश्रत्रिवलया'** इत्यादिगणनं तद्बिन्दुसाहित्याभिप्रायेण । त्रयश्चत्वारिंशदित्येव वा तत्र पाठ इत्यविरोधः ॥ ७८-७९ ॥

**स्थितानि त्रिपुराचक्रे यद्बोधाद् भैरवो भवेत् ।**

यस्य चक्रस्य बोधात्साधकोऽपि भैरवः परमशिव एव भवति । अत्र द्विविधेऽपि चक्रोद्धारे बिन्दोः कण्ठरवेणानुक्तिस्तु यत्र काम्यप्रयोगविशेषेषु पूर्णचक्रस्य नवयोनिचक्रमात्रस्य वा द्वितीयपटले चतुर्थपटले च विनियोगो वक्ष्यते तत्र मध्ये लेखनीयांशस्य चिन्तनीयांशस्य वा विधानसत्त्वे बिन्दुरहितस्यैवोपस्थित्यर्था, तदसत्त्वे त्वर्थाद्बिन्दुप्राप्तिः सर्वशून्यस्यैव बिन्दुरूपत्वादिति ॥ ७९$\frac{1}{2}$ ॥

**बहिः पद्मद्वयं कुर्यादष्टषोडशकच्छदम् ॥ ८० ॥**
**गुणवृत्तं ततः कुर्याच्चतुरस्रं च तद्बहिः ।**
**चतुर्द्वारसमायुक्तमेवं स्याच्चक्रमुत्तमम् ॥ ८१ ॥**

बहिर्मध्यमं तृतीयभागमभितो द्वादशद्वादशाङ्गुले भूभागे । ततो द्वितीयभागं हस्तात्मकं परितो यथोचितभागे । तद्बहिर्वृत्तत्रयाद्बहिः किञ्चिद्वना(द्यवा)-धिकैकादशाङ्गुलभूभागे । एवं सति **'शक्त्या शक्तिम्'** (१/३१) इत्यादिपूर्वोक्त-प्रकारापेक्षयोत्तमं सुलभलेखं चक्रं भवतीत्यर्थः । मध्यस्य कर्णिकावृत्तस्य यावती

क्षेत्रफलसंख्या यवयूकादिपरमाण्वन्तानां भवति तस्याः सकाशात् त्रिचत्वारिंशत् त्रिकोणानाक्रान्तभूभागक्षेत्रफलसंख्यामपनीयावशिष्टायास्त्रिचत्वारिंशता विभजने या लब्धसंख्या भवति तावद्भिर्यवादिभिः प्रमितायाः प्रथमशक्तेर्निर्माणस्य निपुणतर-गणकाग्रण्येकसाध्यत्वेन प्रथमप्रकारस्येतरेषां दुस्तरत्वादिति भावः । एते च सप्तदश श्लोकाः कस्याञ्चिट्टीकायां न दृश्यन्ते । अन्यस्यां दृश्यन्ते च ॥ ८०-८१ ॥

एवं चक्रोद्धारमुपदिश्य वक्ष्यमाणपूजोपोद्घाततया मन्त्रोद्धारमुपदिशति 'संस्थि-ताऽत्र' इत्यादिना चतुश्चत्वारिंशता 'त्रैलोक्यवशकारिणी' (श्लो. १२५) इत्यन्तेन–

**संस्थिताऽत्र महाचक्रे महात्रिपुरसुन्दरी ।**
**शृणु देवि यथा साऽत्र पूज्यते साधकोत्तमैः ॥ ८२ ॥**

बाणलिङ्गादौ हि सार्वकालिकं शिवतेजःसान्निध्यम् । पार्थिवलिङ्गादौ तु यावदर्चनकालमेवेति स्थितिः । प्रकृते तूभयथाऽपीतिद्योतनायात्रेति वारद्वयं निर्देशः । तेन स्वर्णादिनिर्मिते चक्रे सार्वकालिकं देव्याः सान्निध्यम्, भूवि लिखिते तु यावदर्चनकालमिति सिध्यति । ततश्च **'आलिखेत्प्रथमं चक्रम्'** (१/१३१) इति वक्ष्यमाणत्वेऽपि न तत्रैव पूजाऽपि तु स्वर्णादिनिर्मितेऽपीति ध्वनितम् । स्वर्णाद्याधारभेदेन सान्निध्ये कालभेदास्**तन्त्रान्तरे** दृश्यमाना अप्यनुमता एवेति द्रष्टव्यम् । एतेन महाचक्रराजं सिन्दूरकुङ्कुमलिखितं चामीकरकलधौतपञ्चलोहरत्न-स्फटिकाद्युत्कीर्णं वा निवेशयेति **कल्पसूत्र**मुपपद्यते ॥ ८२ ॥

तत्र प्रथमं वशिन्यादिवाग्देवताष्टकमन्त्रानुद्धरति–

**वर्गानुक्रमयोगेण देवताष्टकसंयुता ।**
**अवर्गः प्रथमो देवि वशिनी तत्र देवता ॥ ८३ ॥**

अकचटतपयशाख्यवर्गाणामनुक्रमेण सम्बन्धोपलक्षितवशिन्यादिवाग्देवताष्टकेन युक्ता सेति पूर्वान्वयि । अवर्गः षोडशस्वरात्मकः प्रत्यक्षरं बिन्दुयुक्तः । बिन्दुयोगं विना बीजत्वायोगात् । अत एव शुद्धमातृकान्यास एकैकबिन्दुयुतः । सबिन्दुकमातृकान्यासस्तु द्विद्विबिन्दुयुत इति गुरुमुखैकवेद्यः सम्प्रदायः । एवमुत्तरत्र कवर्गादिमात्रनिर्देशेऽपि सबिन्दुकतोहनीया । अत एव वशिन्यादिन्यासप्रकरणे **कल्पसूत्रम् 'सर्वत्र वर्गाणां बिन्दुयोगः'** इति । करिष्यमाणवाग्भवपाशचापादिबीजो-द्धारेऽप्येवमेव बिन्दुयोगो द्रष्टव्यः ॥ ८३ ॥

**तत्परस्तु कवर्गोऽयं तत्र कामेश्वरी स्थिता ।**
**मोदिनी तु चवर्गस्था टवर्गे विमला स्मृता ॥ ८४ ॥**

**अरुणा तु तवर्गस्था पवर्गे जयिनी तथा ।**
**सर्वेश्वरी यवर्गे तु शवर्गे कौलिनीति च ॥ ८५ ॥**
**एता वर्गाष्टके सम्यगष्टावेव हि देवताः ।**
**अर्चिताः पुरुषस्याऽऽशु प्रकुर्वन्ति वशं जगत् ॥ ८६ ॥**

कवर्गादयः पञ्च पञ्चवर्णाः । यवर्गश्चतुर्वर्णः । शवर्गः षड्वर्णः । अत एव **'यादिचतुष्कम्, शादिषट्कम्' इति कल्पसूत्रमुपपद्यते** । यवर्ग-षवर्गयोरपि पञ्चपञ्चवर्णात्मकतैवेति तु **केचित्** । तद् **अर्णवसंहितादितन्त्रैर्महोदध्या**दिबहुग्रन्थैश्च विरुद्धत्वादुपेक्ष्यम् । **'कौलिनीपञ्चमं देवि'** (१/१००) इत्युत्तरग्रन्थविरोधस्तु तत्रैव परिहरिष्यते ॥ ८४-८६ ॥

अथ वशिन्यादीनामसाधारणानि बीजानि क्रमेणोद्धरति–

**उद्धरेत्प्रथमं रेफं तदधः कुटिलान्तकम् ।**
**तदप्यवनिबीजस्थषष्ठस्वरसमन्वितम् ॥ ८७ ॥**
**ऊर्ध्वमर्धेन्दुबिन्द्वाढ्यं कारयेत्परमेश्वरि ।**
**एतत्तु वशिनीबीजं योगिनीनां मुखे स्थितम् ॥ ८८ ॥**

आदौ रेफस्ततः कुटिलान्तकः । कुटिलः पवर्गद्वितीयः फकारः । **'फः शिखी कुटिलो धूम्रा वामपार्श्वो जनार्दन'** इति **मातृकाकोशात्** । तस्यान्ते विद्यमानो बकारः । स्वार्थे कन् । यद्यप्यधस्तान्निरूपितमूर्ध्वं वक्ष्यत इत्यादावूर्ध्वाधःशब्दौ परपूर्वोच्चार्यवाचकत्वेन प्रसिद्धौ तथाऽपि प्रकृतेऽधःशब्दो न पूर्वोच्चार्यपरः । **तन्त्रान्तरविरोधात्** । अपि तु प्रथमवर्णाधो द्वितीयवर्णलेखनस्य लिपिसम्प्रदायसिद्धत्वात्परोच्चार्यपर एव । तदपि रेफबकारोभयमपि अवनिबीजे पृथ्व्यक्षरे तिष्ठति । लमित्यस्य समुदायस्यैव पृथ्वीबीजत्वेऽपि प्रकृते सम्प्रदायात् लकाररूपं व्यञ्जनमेव ग्राह्यम् । तत्स्थमित्यनेन बकाराधो लकारलेख उक्तः । **'लो मांसं पूतना पृथ्वी [1]माधवी शक्रनामकः'** इति **कोशः** । ततः षष्ठस्वर ऊकारः । तदुत्तरं बिन्दुरनुस्वारः । ततोऽर्धचन्द्रो नादः । अर्धचन्द्रलक्षणं च षष्ठे पटले वक्ष्यते । अत्र हि नादबिन्दुसहिताक्षरलेखेऽक्षरशिरस्यर्धेन्दुं विलिख्य तदुपरि बिन्दुर्लिख्यत इति लिपिसम्प्रदायः । तदभिप्रायेण मूले बिन्द्वर्धेन्द्वोर्व्युत्क्रमेण निर्देशः । अत एवोर्ध्वशब्दः परोच्चार्यपरः सम्भवन्नप्यक्षरशिरोभागपरत्वेनैव व्याख्येयः । अत एव च स्पष्टं **मेदिनीबीजोद्धारे** वक्ष्यति–**'अर्धेन्दुमस्तकाक्रान्तं बिन्दुनोपरि भूषितम्'** इति । यद्वा,

---

1. मानवी–ग.

अर्धेन्दूत्तरको बिन्दुरिति मध्यमपदलोपी समासः । वस्तुतस्तु–अवनिबीजस्थपदेन लकाराकारबिन्दुनादात्मकसमुदाये विहिते लकारोत्तरांशस्य षष्ठस्वरविधिनाऽपवादे सत्यनेन बिन्दुनादयोः प्रतिप्रसवमात्रं क्रियत इति यथाप्राप्तस्यैव पुनर्विधावस्य तात्पर्यं न क्रमांशेऽपीत्यदोषः । तेन रेफबकारलकारोकारानुस्वारनादैः क्रमेण घटितं ब्लूंमित्याकारकं वशिनीबीजं भवति । तदिदं योगिनीनां तद्वाचकवशिनीपदस्य मुखे स्थितमारम्भे प्रयोज्यम् । इदमुपलक्षणं कामेश्वर्यादिबीजानामपि तत्तद्वाचकपदारम्भे प्रयोक्तव्यतायाः । तदभिप्रायेणैव योगिनीनामपि बहुवचनम् । एतद्बलादेव च तत्तद्बीजोत्तरं तत्तन्नामापि प्रयोक्तव्यमिति सिध्यति । तच्च नाम वाग्देवतापदोत्तरकम् । **कल्पसूत्रा**नुसारात् । तेनैकैको वर्ग एकैकं बीजमेकैकं नामेति वर्गबीजनाम्नां क्रमेणोच्चारणं सिद्धम् । योगिनीनां वशिन्यादिबीजाष्टकस्य मुखे स्थितं तेषु प्रथममित्यर्थ इति **केचित्** । योगिनीभिर्जप्तमित्यर्थ इत्यन्ये । एवं **'शिवाग्निबिन्दवो देवि'** (१/१६२) इत्यादिना हृल्लेखा-रमात्मकद्वितारयोगः सर्वेषु शक्तियोगः कार्य इति वक्ष्यते । स च क्लृप्तक्रमेषु वर्गादिषु मध्यभागे निवेष्टुमशक्यत्वादन्ते च वचनान्तरेण सप्ताक्षरीयोगस्य विधानादादावेव कार्यः । अत एव बहिर्दशारस्थदेवतापूजाकथनावसर आद्यविद्ययेति द्वितार्या निर्देश उपपद्यते । अन्ते तु पादुकां पूजयामीति सप्ताक्षरः पादुकामन्त्रो योज्यः । तदुक्तं **तन्त्रराजे–'एवं सप्ताक्षरी प्रोक्ता शक्तितन्त्रेषु सिद्धिदा'** इत्यारभ्य–

> **'सर्वासामपि शक्तीनां देवतानां च नामभिः ।**
> **योजयेन्नामपूर्वा सा सिद्ध्यै साधारणाऽन्यथा ॥'**

इति । यत्तु **दक्षिणामूर्तिसंहितायां** सप्तविंशे पटले स्मर्यते–

> **'अत्युपह्वरमेवेदं ज्ञात्वा चक्रं समर्चयेत् ।**
> **पादुकां पूजयामीति नमस्कारोऽथवा भवेत् ॥**
> **स्वाहा होमे तर्पणे तु तर्पयामीति संस्मरेत् ।'**

इति । तत्र पादुकामन्त्रनमःशब्दयोर्विकल्पनेऽपि **कल्पसूत्रा**नुसारात् न्यासे नमःशब्दोऽर्चने सप्ताक्षरीति व्यवस्थितविकल्पो ज्ञेयः । तथा च **सूत्रम्–'नमःस्थाने पूजामन्त्रसंनाम'** इति । **कादिमते** तु–**'शक्तितन्त्राद्बहिर्भूततन्त्रे तु नमसा स्थितिः'** इति व्यवस्थोक्ता ।

तेन ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः ब्लूं वशिनीवाग्देवतापादुकां पूजयामीत्याकारकस्त्रयस्त्रिंशदक्षरो वशिनीपूजामन्त्रः सिध्यति । एतदन्ते नमःपदप्रयोगः पद्धतिकाराणां तु समुच्चये मानाभावात्**संहिता**द्युक्तविकल्पविरोधाच्च नाऽऽदेयः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ८७-८८ ॥

**द्वितीयवर्गप्रथममिन्द्रारूढं महेश्वरि ।**
**अधस्तान्नाभसं बीजमाग्नेयस्थं समुद्धरेत् ॥ ८९ ॥**
**चतुर्थस्वरसंयुक्तं बिन्दुखण्डेन्द्वलंकृतम् ।**
**एतत्कामेश्वरीबीजं त्रैलोक्यक्षोभकारकम् ॥ ९० ॥**

द्वितीये कवर्गे प्रथमः ककारः । सामान्ये नपुंसकम् । अक्षराभिप्रायं वा । उद्धरेदित्यनेनान्वयाद्वितीयान्तं वा । स ककार इन्द्रं लकारमारूढः । लकारस्याधस्तात्परतो नाभसं गगनसम्बन्धि बीजं हमिति समुदायः । **'हः शिवो गगनं हंसो नागलोकोऽम्बिकापतिः'** इति **कोशात्** । तद्बीजमाग्नेयस्थं रमित्यग्निबीजस्थम् । **'रो रक्तः क्रोधिनी रेफः पावकस्तैजसो महः** इति **कोशः** । अग्निर्देवताऽस्याऽऽग्नेयम् । अग्नेर्ढक् । अत्राऽऽग्नेये तिष्ठतीत्यनेन बीजयोर्योगोक्तेः सस्वरयोश्च स्वतन्त्रयोस्तदसम्भवादकारबिन्दुनादा उभयोस्तन्त्रमिति सिध्यति । सविशेषणे हि विधिनिषेधौ विशेष्ये बाधाद्विशेषणमुपसंक्रामत इति न्यायात् । नाभसबीजाग्नेयशब्दा व्यञ्जनमात्रपरा इत्यपि **केचित्** । समुदाये हि दृष्टाः शब्दा अवयवेऽपि दृश्यन्त इति न्यायादिति तदाशयः । एवमुत्तरत्रापि न्यायो व्याख्याभेदो वा सञ्चारणीयः । अत्र प्रथमस्वरमात्रमपवदति–चतुर्थेति । चतुर्थस्वर ईकारः । तेन क्ल्ह्रीमिति कूटात्मकं बीजं भवति । ततश्च ह्रीं श्रीं कं खं गं घं ङं क्ल्ह्रीं कामेश्वरीवाग्देवतापादुकां पूजयामीति त्रयोविंशत्यर्णः कामेश्वरीमन्त्रः । अत्र वशिन्यादिमन्त्राणामङ्गत्वं पञ्चदशीविद्याया एव प्राधान्यम् । **'अतः प्रधानविद्येयं त्रिपुरा परमेश्वरी'** इति चतुर्थपटले (श्लो. ६८) वक्ष्यमाणत्वात् । ततश्चाङ्गेषु फलश्रुतिरर्थवादः स्यादितिन्यायेन त्रैलोक्यक्षोभकारकमित्यादेरर्थवादत्वमेव यद्यपि भवति तथाऽपि वशिन्यादिमन्त्रमात्रोपासनायां तेषामेव प्राधान्यात्तदभिप्रायेण फलश्रुतिः स्वार्थतात्पर्यिकाऽपि सम्भवति । अत एव **आगमान्तरम्–**

**'एकत्र तत्पराणां च मन्त्राणां शेषशेषिता ।**
**यद्यपि स्यात्तथाऽप्येते मन्त्राः स्युः सर्वसिद्धिदाः ॥'**

इति । अङ्गत्वेनोपास्यमानानामपि विद्यानां फलमस्त्येव । अङ्गेषु फलश्रुतिरिति न्यायस्य शुष्ककर्मविषयत्वात् । तदपवादायैव स्वामिनः फलश्रुतेरित्यात्रेय इति **उत्तरमीमांसा**धिकरणप्रवृत्तेः । मासाग्निहोत्रादीनां कौण्डपायिनामयनं प्रत्यङ्गत्वेऽपि स्वतन्त्रानुष्ठाने प्राधान्यस्य न्यायसिद्धस्यापवादायैवैकत्र तत्पराणामित्युक्तवचनप्रवृत्तेरिति तु **मन्त्रदेवताप्रकाशकारा** आहुः ॥ ८९-९० ॥

**अरुणापञ्चमस्याधो वारुणं विनियोजयेत् ।**
**तदधोऽपीन्द्रबीजं तु सर्वोर्ध्वमिपरं प्रिये ॥ ९१ ॥**
**अर्द्धेन्दुमस्तकाक्रान्तं बिन्दुनोपरि भूषितम् ।**
**एतत्तन्मोदिनीबीजं सर्वसत्त्ववशङ्करम् ॥ ९२ ॥**

अरुणावर्गस्तवर्गः । **'अरुणा तु तवर्गस्था'** (१/८५) इत्युक्तेः । तत्र पञ्चमो नकारः । वारुणं वकारः । **'वो वाणी वारुणं मेद उत्कारीशोऽनिरुद्धकः'** इति वचनात् ।इन्द्रबीजं लकारः । सर्वस्मादुक्ताक्षरसमुदायादूर्ध्वमनन्तरमिपरमिकारात्परं चतुर्थस्वरम् । तेन न्व्लीमिति बीजम् । मोदिन्यादिसर्वेश्वर्यन्ताः पञ्च मन्त्राः प्रत्येकं द्वाविंशत्यर्णा वेदितव्याः ॥ ९१-९२ ॥

**वायव्यमिन्द्रबीजस्थं षष्ठस्वरसमन्वितम् ।**
**अर्धेन्दुमस्तकाक्रान्तं बिन्दुनोपरि भूषितम् ॥ ९३ ॥**
**एतत्ते कथितं देवि विमलाबीजविग्रहम् ।**
**सर्वपापक्षयकरं सर्वोपद्रवनाशनम् ॥ ९४ ॥**

वायुर्देवताऽस्य वायव्यं बीजम् । 'वाय्वृतुपित्रुषसो यत्' । **'यो वाणी वसुधा वायुर्विकृतिः पुरुषोत्तमः'** इति **कोशाद्** यकारः । य्लूमिति बीजम् । विग्रहमिति सामान्ये नपुंसकं बहुव्रीहिरेव वा ॥ ९३-९४ ॥

**जकारं कालमारूढं तदधो ज्वलनाक्षरम् ।**
**चतुर्थस्वरसंयुक्तं बिन्दुनादसमन्वितम् ॥ ९५ ॥**
**एतत्तदरुणाबीजमरुणं सर्वमोहनम् ।**

कालो मकारः । **'मः काली क्लेशितः कालो महाकालो यमोऽन्तकः'** इति **कोशात्** । ज्वलनाक्षरं रेफः । तेन ज्म्रीमिति बीजम् । अत्र मन्त्रे बीजस्यारुणापदेन न सन्धिः ॥ ९५ ॥

**शिवबीजं तदादिस्थमधस्ताच्चेन्द्रवारुणौ ॥ ९६ ॥**
**वायव्यमुपरोद्भिन्नं संयोज्य परमेश्वरि ।**
**जयिनीबीजमेवेदं कलाबिन्दुविभूषितम् ॥ ९७ ॥**

शिवबीजं हकारः । तस्य हकारस्याऽऽदिः सकारस्तत्स्थम् । हसयोरधस्तादिन्द्रो लकारस्तदधो वारुणो वकारः । ततो वायव्यं यकारः । तदिदमुपरेणोकारषष्ठ-स्वरेणोद्भिन्नम्, कला नादस्तेन बिन्दुना च युक्तं जयिनीबीजं नामादिसप्ताक्षर्यन्तैः संयोज्य वदेदिति शेषः । तेन ह्स्ल्व्यूमिति बीजं भवति ॥ ९६-९७ ॥

**उद्धरेन्मोदिनीवर्गे चतुर्थं परमेश्वरि ।**
**अधः कालाग्निवायव्यान्क्रमेण विनियोजयेत् ॥ ९८ ॥**
**दीर्घायुर्बीजसंयुक्तान्यथानुक्रमयोगतः ।**
**उपरीश्वरबिन्द्वन्तानेकत्र विनियोजयेत् ॥ ९९ ॥**
**एतत्सर्वेश्वरीबीजं सर्वत्रैवापराजितम् ।**

मोदिनीवर्गश्चवर्गः । **'मोदिनी तु चवर्गस्था'** इत्युक्तेः । तत्र चतुर्थं झकारमुद्धृत्य तदधः क्रमेण कालाग्निवायव्यान्मकाररेफयकारानुपरि दीर्घायुर्बीजेन षष्ठस्वरेण संयुक्तान्, ईश्वरो नादो बिन्दुश्चान्ते येषां तानेकत्र योजयेदेकीकुर्यात् ।

**'ऊ दीपिका रतिः शान्तिः क्रोधनो मधुसूदनः ।**
**अर्घीशः कामचारश्च दीर्घायुर्वामकर्णकः ॥'**

इति **कोशः** । **'अर्धमात्रेश्वरो नादः कलार्धेन्दु सदाशिवः'** इति च । तदिदं सर्वेश्वरीबीजं यथानुक्रमयोगतो यवर्गनामपादुकामन्त्रादिक्रमानतिक्रमणेनोपलक्षितं पूजायां विनियोजयेदित्यर्थः । तेन झ्म्र्य्रूमितिबीजविशिष्टो द्वाविंशत्यर्णो मन्त्रो भवति ॥ ९८-९९$\frac{१}{२}$ ॥

**कौलिनीपञ्चमं देवि कालबीजोपरिस्थितम् ॥ १०० ॥**
**सर्वाधस्तादपि तथा वह्निबीजं नियोजयेत् ।**
**चतुर्थस्वरसंयुक्तं नादेन्दुसमलंकृतम् ॥ १०१ ॥**
**एतद्बीजवरे भद्रे कौलिनीरूपमास्थितम् ।**

कौलिनीवर्गः शकारादिषडक्षरात्मको वर्गस्तत्र ळकारस्यैव पञ्चमत्वेऽपि तस्य लकारेणाभेदाद्बीजघटकत्वेन स्वतन्त्रतया ळकारनिर्देशस्य तन्त्रेषु प्रायेणानुपलम्भाच्च तत्परित्यागेन गणनायां क्षकारात्मको मेरुरेव पञ्चमो भवति । अथवा कौलिनीति शकारनामैकदेशः । शकारनामसु कुलकौलिनीशब्दस्य पाठात् । तस्मात्पञ्चम इति विग्रहे ल्यब्लोपे पञ्चमी । शकारं परित्यज्य गणनायां यः पञ्चम इत्यर्थः । तेन सह षष्ठ इति यावत् । यद्वा कौलिन्यादिपञ्चममित्यऽऽदिपदस्य मध्यमपदलोपी समासः । कौलिन्यादिपदे त्वतद्गुणसंविज्ञानो बहुव्रीहिः । शकार आदिर्येषां षकारादीनां ते कौलिन्यादयः षकारादयः पञ्चेत्यर्थः । तेषु पञ्चमः क्षकार इति । यद्वा कौलिनीति देवीविशेषणं संबुद्धिः । ई पञ्चममिति च्छेदः । ईकारः पञ्चमो यस्मादिति विग्रहः । मातृकाचक्रे क्षकारोत्तरं पुनरकारादिगणनायामीकारस्य क्षकारपञ्चमत्वादिह क्षकार ई पञ्चमपदेन सुग्रहः । यत्तु कौलिनीवर्गः षवर्ग इति मूर्धन्यादिवर्गपरत्वेन **अर्थरत्नावली**कृतां व्याख्यानं तच्छवर्गे कौलिनीति चेतिपूर्वग्रन्थविरुद्धम् । वस्तुतस्तु—**तन्त्रराजे** सर्वेश्वरीकौलिन्योर्यकारषकारादिपञ्चपञ्चाक्षरयोगस्याङ्गीकारात्तद्रीत्या कौलिनीपञ्चम-

पदेन क्षकारस्य निर्देशमात्रम् । तन्मन्त्रयोस्तु यादिचतुष्कशादिषट्कयोग एव कार्यः । अन्यथा पूर्वग्रन्थ[स्य] योगविधानैकफलकस्य विरोधापत्तेः । अस्मादेव निर्देशाज्ज्ञापकाद्विकल्पेन **तन्त्रराज**पक्षस्याप्यनुष्ठानमनुमतमित्यपि सुवचम् । तेन प्रथमं क्षकारस्ततः कालबीजं मकारस्ततो वह्निबीजं रेफश्चतुर्थस्वर ईकारः । इन्दुरनुस्वारः । **'बिन्दुः शून्यं पञ्चदशोऽनुस्वारश्चन्द्रनामकः'** इति **कोशात्** । तथा च क्ष्म्रीमिति बीजम् । त्रयोविंशत्यर्णः कौलिनीमन्त्रः । यत्पक्षे द्वाविंशत्यर्णस्तदा पूर्वमन्त्रस्त्रयोविंशत्यर्णो ज्ञेयः ॥ १००-१०१$\frac{१}{२}$ ॥

एवं वाग्देवतामन्त्राष्टकोपसंहारपूर्वकं त्रैलोक्यमोहनादिचक्रेश्वरीमन्त्रान् प्रतिजानीते–

**एवमेतानि बीजानि क्रमादष्टौ महेश्वरि ॥ १०२ ॥**
**कथितानि मयेदानीं शृणु विद्याङ्गरूपिणीः ।**
**करशुद्धिकरी विद्या तथाऽङ्गन्यासरूपिणी ॥ १०३ ॥**
**आत्मासनगता चापि तथा चक्रासनस्थिता ।**
**सर्वमन्त्रासनगता साध्यसिद्धासनस्थिता ॥ १०४ ॥**
**देव्यावाहनविद्याऽपि मूलविद्यां शृणु प्रिये ।**

विद्यायाः पञ्चदश्याः प्रधानदेवतामन्त्रस्याङ्गरूपिणीरष्टौ विद्याः शृणु नवमीं मूलविद्यां प्रधानविद्यां च शृण्विति सम्बन्धः । अष्टावितिपदस्य काकाक्षिन्यायेनान्वयात् । **'एवमेतद्विद्याष्टकं महामायादेव्यङ्गभूतमाचक्षते'** इति **श्रुतेः** । अङ्गरूपिणीरित्यनेन प्रधानजपान्तेऽङ्गमन्त्रा अपि जप्तव्या इति ध्वनितम् । करशुद्धिकरीत्यादीनि मन्त्राणां क्रमेण नामानि । अङ्गन्यासरूपिणीत्यनेन मूलविद्याषडङ्गन्यासे तस्या विनियोग इति ध्वनितम् । एतासु नवसु सप्तमी विद्या मूर्तिविद्येत्युच्यते । सा चेहैव वक्तव्याऽपि स्वतन्त्रत्वात्प्रयोजनान्तरध्वननार्थं वा उत्तरतन्त्रे वक्ष्यत इति नात्र परिगणिता नाप्युद्धृतेति द्रष्टव्यम् ॥ १०२-१०४$\frac{१}{२}$ ॥

**वाग्भवं प्रथमं देवि कामराजं द्वितीयकम् ॥ १०५ ॥**
**शान्तान्तं कादिसंयुक्तमैकारान्तान्तयोजितम् ।**
**एषा विद्या महेशानि करशुद्धिकरी स्मृता ॥ १०६ ॥**

अत्रोद्धरिष्यमाणा नव मन्त्राः प्रत्येकं त्रित्रिबीजाः । तत्र प्रथमानां बीजानां वाग्भवमिति नियता संज्ञा । द्वितीयानां कामराजमिति **पुराणेषु तन्त्रेषु** च तथाव्यवहारदर्शनात् । तत्र यथा **देवीभागवते** चतुर्थस्कन्धे–

**'वाग्भवं कामराजं च मायाबीजं तृतीयकम् ।**
**चित्ते यस्य भवेत्तं तु न कश्चिद्बाधितुं क्षमः ॥'**

इत्यादि । **ज्ञानार्णवे**ऽपि द्वितीयपटले–

**'वाग्भवेनेन्दुमहसा वागीशत्वप्रदायिनी ।**
**कामराजेन बीजेन शक्रगोपस्फुरत्त्विषा ॥**
**त्रैलोक्यं मोहयन्तीयं शक्तिबीजेन सुव्रते ।'**

इत्यादि । तृतीयानां तु माया शक्तिरित्यादिरनियता संज्ञा । तत्र नियते द्वे संज्ञे विधातुमाह– वाग्भवमिति । प्रथमबीजोद्देशेन वाग्भवसंज्ञाविधिः । एवमुत्तरत्र । वाक्, भवत्यस्मादिति वाग्भवम्, कामो राजते यत्र तत्कामराजम्, तृतीयबीजस्य संज्ञाद्वयं तु मूलविद्योद्धारदशायां व्यक्तीकरिष्यति । अथवा वाग्भवोद्देशेन मातृकाप्रथमाक्षरविधिः । कामराजमुद्दिश्य मातृकाद्वितीयाक्षरविधिः । ते चाक्षरे सम्प्रदायात्सबिन्दुके । शुद्धमातृकाया अपि सम्प्रदायात्सबिन्दुकतया तत एव तत्सिद्ध्यभिप्रायेण बिन्दोरनुक्तिः । सम्प्रदायैकसिद्धत्वेन स्वशास्त्रे सबिन्दुकाया एव शुद्धमातृकात्वमिति कण्ठरवेणाकथनात्तदभिप्रायेण तत्र तत्र बिन्दोरुक्तिश्च । तेन तादृशस्थले बिन्दुयुतमातृकान्यास इव बिन्दुद्वयोच्चारणमिति तु न भ्रमितव्यम् । शक्तिपदमध्याहृत्य तदुद्देशेन तृतीयं बीजमुद्धरति–शान्तान्तमिति । शकारस्यान्तः षकारस्तदन्तं सकाराक्षरमैकारस्यान्त ओकारस्तदन्त औकारस्तेन योजितं ततः कादिना ककारात्पूर्वेण विसर्गेण योजितं चेत्सौः, इति भवति । त्रयाणां पाठक्रमेण क्रमः । तेन अं आं सौः, इति त्र्यक्षरी विद्या प्रथमचक्राधीशत्रिपुरादेव्या अनेन करशुद्धिं कृत्वेति **तापनीया**नुसारेण करशुद्धौ विनियोक्ष्यमाणा सम्पद्यते ॥ १०५-१०६ ॥

**एओमध्यगतं बीजं वाग्विधानाय केवलम् ।**
**रुद्रयामलतन्त्रे तु निर्दिष्टं परमाक्षरम् ॥ १०७ ॥**
**मादनं शक्रसंयुक्तं चतुर्थस्वरसंयुतम् ।**
**ऊर्ध्वमर्धेन्दुबिन्द्वाढ्यं कामराजं समुद्धृतम् ॥ १०८ ॥**
**शान्तान्तं कादिसंयुक्तमैकारान्तान्तयोजितम् ।**
**एषा विद्या महाविद्या योगिनीनां महोदया ॥ १०९ ॥**
**कुलविद्या महेशानि सर्वकार्यार्थसाधिनी ।**
**अनया विद्यया गौरि रक्षामात्मनि कारयेत् ॥ ११० ॥**

एकारस्य ओकारस्य च मध्ये पठ्यमानं द्वादशस्वररूपं बीजं सबिन्दुकमैमिति वाग्भवम् । 'एओङ्' इति **माहेश्वरसूत्र** इवात्रापि प्रकृतिभावः । तदिदं केवलं बिन्दुहीनमपि वाचः सारस्वतस्य कवित्वस्य विधानाय प्राप्तये भवति किमुत सबिन्दुकमिति भावः । तथा च **देवीभागवते** तृतीयस्कन्धे नवमेऽध्याये–

**'अस्पष्टमपि यन्नाम प्रसङ्गेनापि भाषितम् ।**
**ददाति वाञ्छितानर्थान्दुर्लभानपि सर्वथा ॥**

**ऐ ऐ इति भयार्तेन दृष्ट्वा व्याघ्रादिकं वने ।**
**बिन्दुहीनमपि प्रोक्तं वाञ्छितं प्रददाति वै ॥**
**अनक्षरो महामूर्खो नाम्ना सत्यव्रतो द्विजः ।**
**श्रुत्वाऽक्षरं कोलमुखात् समुच्चार्य स्वयं ततः ॥**
**बिन्दुहीनं प्रसङ्गेन जातोऽसौ विबुधोत्तमः ।**
**ऐकारोच्चारणादेव तुष्टा भगवती तदा ॥**
**चकार कविराजं तं दयार्द्रा परमेश्वरी ।**
**त्रैलोक्ये विश्रुतश्चाऽऽसीत्कविः सत्यव्रतो द्विजः॥**
**अनाराध्य महाकालीं शुष्कार्द्राभ्यां महेश्वरीम् ।'**

इत्यादि । अथवा केवलं बीजान्तरासहकृतम् । अत एव वाग्बीजमात्रस्यैव पुरश्चर्यादिकं **रुद्रयामलाख्ये** तन्त्रे स्वेनैव निर्दिष्टम् ।

**'करशुद्ध्यादिविद्यानामेकैकं परमेश्वरि ।**
**रुद्रयामलतन्त्रे तु कर्म प्रोक्तं मया पुरा ॥'**

इति चतुर्थे पटले (श्लो. ६१) वक्ष्यमाणत्वात् । मादनं मदनसम्बन्धि, ककारः । **मदनो ब्रह्मा क्रोधीशः कुलपालिनी'** इति **कोशात्** । शक्रो लकारस्तेन संयुक्तम् । चतुर्थस्वर ईकारः । तदिदं कामराजाख्यं क्लीमिति बीजम् । कामराजमित्यनेन राज्यप्रदत्वमुक्तं भवति । एतदपि तत्रैव सप्तदशेऽध्याये--

**'एकस्मिन्समये तत्र विदल्लं समुपागतम् ।**
**क्लीबेति मुनिपुत्रस्तमाजुहाव तदन्तिके ॥**
**सुदर्शनस्तु तच्छ्रुत्वा दधारैकाक्षरं स्फुटम् ।**
**अनुस्वारयुतं तच्च प्रोवाच स पुनः पुनः ॥**
**बीजं वै कामराजाख्यं गृहीतं मनसा तदा ।**
**जजाप बालकोऽत्यर्थं धृत्वा चेतसि सादरम् ॥**
**ऋषिच्छन्दोविहीनं च न्यासध्यानादिवर्जितम् ।'**

इत्यादि । शान्तान्तमित्यादि पूर्ववत् । तेन--ऐं क्लीं सौः, इत्याकारको बालमन्त्रः सिद्धः । कुलविद्येत्येतस्या एव संज्ञान्तरम् । तथा च प्रयोक्ष्यते--**' ततो रक्षां प्रकुर्वीत पूर्वोक्तकुलविद्यया'** इति । एतस्या विनियोगं विधत्ते--अनयेति । आत्मनि रक्षामात्मविषयकरक्षणम् । **'विद्येयं रक्षाकरी'** इति **श्रुतेः** । उत्तरत्र वक्ष्यमाणो विधिस्तु क्रमविधानार्थ इति नान्यतरवैयर्थ्यम् ॥ १०७-११० ॥

**एतस्या एव विद्यायाः शिवमायाग्निबिन्दुमत् ।**
**बीजमादिपदे युक्तं तदाऽऽत्मासनरूपिणी ॥ १११ ॥**

एतस्याः कुलविद्याया एवाऽऽदिपद आद्यबीजस्य स्थाने यदा शिवो हकारः, मायेकारः, अग्नी रेफः, बिन्दुरनुस्वार एतैर्युक्तं ह्रीमिति हृल्लेखा बीजं योज्यते, इतरद्बीजद्वयमविकृतमेव तदा ह्रीं क्लीं सौः, इति विद्या तस्या देव्या आत्मासन-स्वरूपा भवति । अत्र मायाग्न्योर्व्यत्ययेन योगः । बिन्दोरव्यवहितापूर्वतायाः स्वरेष्वन्यतःसिद्धत्वात् । **'हः शिवो गगनं हंसः'** इति, **'ई त्रिमूर्तिर्महामाया'** इति च **कोशः** ॥ १११ ॥

**पुनर्विद्याद्यमस्योर्ध्वमन्तरं तु शिवान्वितम् ।**
**त्रैलोक्यमोहिनीयं सा विद्या चक्रासनस्थिता ॥ ११२ ॥**

पुनर्विद्याशब्देन तृतीयविद्यैवोच्यते । द्वितीयविद्याया एव पुनरुच्चरितत्वात् । एकदेशविकृतमनन्यवद्भवतीति न्यायात् । तेन पुनर्विद्याया आत्मासनविद्याया यदाद्यं पूर्वपठितं बालाविद्यात्मकं तदेवास्याऽऽत्मासनमन्त्रस्योर्ध्वमुत्तरत्र पठनीयम् । द्वितीयविद्यैवेषद्वैलक्षण्येन चतुर्थविद्या भवतीत्यर्थः । अन्तरं तु वैलक्षण्यं तु शिवान्वितं हकारयोग एव । सेयं चक्रासनविद्या सम्पद्यते । हकारयोगस्तु विनिगमनाविरहात्प्रतिबीजं कार्यः । तत्रापि स्वरान्ते व्यञ्जनयोगासम्भवात् क्लृप्तक्रमाणां च व्यञ्जनानां विश्लेषे प्रमाणाभावात्प्रतिबीजमादौ हकारो योज्य इति फलति । तथा च हैं ह्क्लीं ह्सौः, इति मन्त्रो भवति । **केचित्** तु–विद्याया बालाया आद्यं बीजमस्योर्ध्वं द्वितीयं बीजम् । अस्यान्तरमेतद्बहिर्विद्याशब्देन बालैव च कथं लब्धेति चिन्त्यम् । **अन्ये** तु–**'पुनर्विद्यादिमस्योर्ध्वमन्तमन्तं शिवान्वितम्'** इति पठित्वा विद्यादिमस्य मूलविद्याया आदिभूतस्य वाग्भवस्योर्ध्वमन्तं सकारं कुर्यात् । हंसमन्त्रे सकारस्यान्त्यत्वाभिप्रायेणेह तथा निर्देशः । अन्तं तृतीयबीजं तु शिवान्वितं कुर्यादिति व्याचख्युः । तत्क्लिष्टमखिलतन्त्रविरुद्धं यद्वा तद्वा चेत्युपेक्ष्यम् ॥ ११२ ॥

**पुनराद्यां महाविद्यां शिवचन्द्रसमन्विताम् ।**
**कृत्वा कामप्रदा विद्या सर्वमन्त्रासनस्थिता ॥ ११३ ॥**

पूर्वश्लोक आद्यपदेन या विद्या निर्दिष्टा तामेव बालाख्यां महाविद्यां पुनरप्यस्य चतुर्थस्याप्यूर्ध्वं पठेत् । अस्योर्ध्वपदयोरनुवृत्तिः । क्रियाया अध्याहारश्च । यदनयोरन्तरं तदाह--शिवचन्द्रेति । शिवो हकारश्चन्द्रः सकारस्ताभ्यां प्रतिबीजं प्रथमभागे समन्वितां कृत्वेत्यर्थः । तेन ह्सैं ह्स्क्लीं ह्सौः, इति पञ्चमो मन्त्रः सिध्यति । **'सो हंसः सहजा विष्णुर्भृग्वीशश्चन्द्रसंज्ञकः'** इति **नन्दनकोशः** । चरमबीजे सकारान्तरयोगो नास्तीति सम्प्रदायः । मतान्तरयोस्त्वाद्यपदेन बालैव कथं परामृश्यत इति चिन्त्यम् । सेयं सर्वमन्त्रासनविद्या भवति ॥ ११३ ॥

**देव्यात्मासनविद्यायाः पूर्वोक्ताया यथाक्रमम् ।**
**अन्तदेशे तोयबिन्दुशक्रशक्तीरनुक्रमात् ॥ ११४ ॥**
**संयोज्य परमेशानि साकमर्धेन्दुनादतः ।**
**केवलाक्षरभेदेन साध्यसिद्धासनस्थिता ॥ ११५ ॥**

देवीसम्बन्धिन्या आत्मासनविद्यायाः पूर्वं तृतीयस्थाने कथिताया यथाक्रमं प्रथमद्वितीयबीजयोः क्रममनतिक्रम्यान्तदेशे तृतीयबीजस्थाने तोयं वकारः शक्रो लकारः शक्तिरेकारो बिन्दुश्चेत्येतानर्धचन्द्रेण नादेन रोधिन्यादिसप्तकेन च साकमनुक्रमात् प्रसिद्धक्रमानुसारेण संयोज्य पठेत् । सेयं षष्ठी विद्या तृतीयविद्यातः केवलाक्षरभेदेनैव भिन्ना सती साध्यसिद्धासनस्थिता भवति । न पुनर्द्वितीयतुरीय-पञ्चमविद्यानामिवास्वतन्त्रव्यञ्जनमात्रभेदकृतो भेद इति भावः । अत्र तोयशब्देन जलबीजं दन्तोष्ठस्थानकं न तु वशिन्यामिव पवर्गतृतीयम् । वकाराधिकारे–**'खड्गीशो ज्वालिनी चक्रं कलशो वारिनामकः'** इति **कोशात्**, **'एकारो वाग्भवः शक्तिर्झिण्टीशोष्टौ भगं मरुत्'** इति च । तेन ह्रीं क्लीं व्लेमिति मन्त्रः सिध्यति ॥ ११४-११५ ॥

सप्तम्या विद्याया उत्तरतन्त्रे वक्ष्यमाणत्वादष्टमीमेवोद्धरति–

**हंसबीजसमारूढामाद्यामग्न्यासनस्थिताम् ।**
**सर्वार्थसाधिका विद्या देव्यावाहनकर्मणि ॥ ११६ ॥**

हंसो हकारः । समस्य सर्वस्य बीजं बीजसमम् । राजदन्तादित्वात्परिनिपातः । तस्याऽऽकृतिगणत्वात् । जगद्बीजमिति यावत् । तच्च सकार एव । सकाराधिकारे–**'जगद्बीजं शक्तिनामा सोऽहंवेगवत भृगुः'** इति **नन्दनोक्तेः** ।

**प्राञ्चस्तु**–हंसमन्त्रघटकं व्यञ्जनद्वयमित्येव हंसपदार्थः । तेन हकारसकारौ द्वावपि सिध्यत इत्याहुः । ये तु हंसेति स्वरूपमेव न बीजनामेति व्याचक्षते तेषां मते **'गुहा हसा मातरिश्वाऽभ्रमिन्द्रः'** इति **श्रुता**विव प्रकृतेऽपि बिन्दुपाठो न स्यात् । वस्तुतस्तु हंसशब्दोऽयं नानार्थः । तथा च **कोशः–'हः शिवो गगनं हंसः'** इति, **'सो हंसः सहजा विष्णुः'** इति च । परं त्वेतत्पक्ष एकपदोपात्तयोर्द्वयोर्बीजयोः क्रमे सम्प्रदाय एव शरणम् । हकारसकारावारूढौ प्रतिबीजं यस्यां तामाद्यां बालाविद्यामग्निरूपे रेफात्मक आसने प्रतिबीजं स्थितां कृत्वा पठेत् । अयं भावः–मन्त्रघटकस्वर-त्रयस्याङ्गभूतानि तेभ्यः पूर्वं पठ्यमानानि यानि व्यञ्जनानि तेभ्यः सपूर्वं हकारसकारौ कुर्यात् । तेभ्यं परं रेफं कुर्यादिति । हकारसकाराभ्यां परतो रेफात्पूर्वं पूर्वसिद्ध-व्यञ्जनानां निवेश इति यावत् । तेन वाग्भवे पूर्वसिद्धव्यञ्जनस्यैवाभावाद्धकार-सकाररेफाणामव्यवधानम् । कामराजे तु हसयोः परतः ककारलकारौ तत्परतो

रेफः । तृतीयबेजे तु हसयोः परतः पूर्वसिद्धसकारस्ततो रेफ इति क्रमः सिध्यति । **ऋजव**स्तु – ईदृशं क्रमं मूलानुक्तं मन्यमानास्तदर्थं सम्प्रदायमेव शरणीकुर्वन्ति । तेन ह्सैं, ह्स्क्ल्रीं ह्स्रौः, इत्यष्टमो मन्त्रः सिद्धः । सेयं विद्या प्रधानदेव्या आवाहनाख्ये कर्मणि विनियोक्ष्यते । विद्येयमाह्वानकर्मणि सर्वतोऽधिकेति **श्रुतेः** ॥ ११६ ॥

उक्तोपसंहारपूर्वकं प्रधानविद्योद्धारं प्रतिजानीते–

**एवमेता महाविद्या देवि सर्वार्थसिद्धिदाः ।**
**महात्रिपुरसुन्दर्या मूलविद्यां शृणु प्रिये ॥ ११७ ॥**

स्पष्टोऽर्थः ॥ ११७ ॥

**मादनं तदधः शक्तिस्तदधो बिन्दुमालिनी ।**
**ऐन्द्रमाकाशबीजस्थमधस्ताज्ज्वलनाक्षरम् ॥**
**मायाबिन्द्वीश्वरयुतं सर्वोपरिनियोजितम् ।**
**अयं स वाग्भवो देवि वागीशत्वप्रवर्तकः ॥ ११९ ॥**

यद्यपि प्रधानविद्या अपि **तन्त्रान्तरे श्रुतिषु** च मनुचन्द्रादिभेदेन बहुविधा उपलभ्यन्ते । तासु च न परस्परमङ्गाङ्गिभावः । मानाभावात् । अत एव नोत्कर्षापकर्षौ । तयोस्तात्त्विकभेदव्याप्यत्वेन विद्यानां तादृशभेदाभावेन तदयोगाच्च । तत्र न तावच्छब्दान्तराद्भेदः । विदिधातोरेकत्वात् । नाप्यभ्यासात् । **'तत्त्वमसि'** इत्यस्य नवकृत्वोऽभ्यासेऽपि ब्रह्मविद्याया एकत्वात् । मन्वाद्युपासितत्वरूपगुणान्तर-विधानेन पुनः**श्रुते**रन्यपरत्वाच्च । 'अपः प्रणयति' इत्यस्यार्थवादभेदार्थं षड्वारं श्रवणेऽपि प्रणयनभेदाभावात् । नापि संख्यया । द्वादश महाविद्या इति संख्या-बोधकवाक्य उपासकनिष्ठसंख्याया एव स्वाश्रयोपास्यत्वसम्बन्धे तत्र कीर्तनोपपत्तौ वास्तविकसंख्यासद्भावे मानाभावात् । ब्रह्मविष्णुमहेश्वरास्त्रय इति संख्यायाः सृष्ट्यादि-कृत्यनिष्ठसंख्ययैव संख्यावत्त्वबोधकतया तेषां वास्तविकाभेदविघटनाभावात् । नापि मनुचन्द्रादिसंज्ञाभिः । तासामप्युपासकनिष्ठानामेव तत्र भानात् । क्वचित् तन्त्रे हादिविद्यायाः पञ्चदश्या लोपामुद्रेति संज्ञा, **तन्त्रान्तरे** कादिविद्यायाः सप्तदश्याः सेति दर्शनेन तासामव्यवस्थितत्वाच्च । एकस्या एवागस्त्यलोपामुद्रासंज्ञाद्वयदर्शनेन व्यभिच-रितत्वाच्च । नापि गुणात् । परस्परानन्वयिनां गुणानामदर्शनात् । ये तु तन्त्रभेदा-दङ्गभेदा न ते भेदकाः । अग्निहोत्रादीनां शाखाभेदेनाङ्गवैलक्षण्यदर्शनेऽपि तदभेदस्य शाखान्तराधिकरणसिद्धत्वात् । यदाहुः – **'सर्वशाखाप्रत्ययमेकं कर्म'** इति । उत्तर-**मीमांसा**यामपि सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादित्यधिकरण उपनिषद्भेदेनोक्तानां दहरादिविद्यानामङ्गवैलक्षण्येऽप्यभेद एव हि साधितः । अत एव परस्परं गुणोप-

संहारो युज्यते । न च तासां विद्यानां मानसक्रियारूपाणां तदधिकरणन्यायेनैक-जातीयत्वसम्भवेऽपि प्रकृते मन्त्रात्मकावयविद्रव्यरूपाणां विद्यानां तदवयवाक्षरवैलक्षण्येन भेदो दुरपह्नव इति वाच्यम् । सर्वासां विद्यानां मेरुसमुद्भवत्वेनावयव-भेदस्याप्यभावात् ।

**'भूमिश्चन्द्रः शिवो माया शक्तिः कृष्णाध्वमादनौ ।**
**अर्धचन्द्रश्च बिन्दुश्च नवार्णो मेरुरुच्यते ॥'**

इति **ज्ञानार्णवो**क्त्या सर्वासां नवावयवातिरिक्तावयवघटितत्वाभावात् । क्वचिदीष-दवयवभेदेन परिमाणभेदेऽपि द्रव्यभेदे मानाभावात् । योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थविरे प्रणप्तॄननुभवामीतिप्रत्यभिज्ञाद्यनुसारेण तथा सिद्धान्तितत्वात् । शिवविष्ण्वादिशरीररूपद्रव्यभेदेऽपि तयोरभेददर्शनाच्च **'युञ्जन्ति हरी इषिरस्य'** इत्यृच **ऋक्सामयोः** पाठभेदेऽप्यैक्यस्य **निदानसूत्रा**द्यनुसारेण **वृत्तचन्द्रोदयेऽस्माभिः** समर्थितत्वाच्च । अत एवं न विरुद्धधर्माधिकरणत्वमपि तात्त्विकाभेदे विरुद्धम् । व्यावहारिकं भेदमादायैवेन्द्रार्जुनयोरिवोपपत्तेः । एतेनैकविद्योपास्तावन्यासां त्रिविद्याना-मङ्गपूजासु विनियोगदर्शनात्तारतम्यमित्यपास्तम् । एकस्या एव विद्यायाः स्थानभेदेन पूजाया दर्शनेऽप्यभेदानपलापात् । अत एव **कल्पसूत्रम्– 'कामेश्वर्यादिचतुर्थी नित्यानां षोडशी योगिनीचक्रदेवीनां नवमी बिन्दुचक्रस्था चेत्यैकैव । न तत्र मन्त्रदेवताभेदः कार्यः । तन्महादेव्या एवं । चतुर्षु स्थलेषु विशेषार्चनमावर्तते'** इति तेन हादिविद्या निष्कीला कादिविद्या तु सकीलेत्यादिरीत्या हादिविद्याया उत्कृष्टत्वोक्तिः पक्षपात-मात्रमेव । निष्कीलीकरणमन्त्रस्य हादिविद्याधिकारे पाठेऽपि गुणोपसंहारन्यायेन सर्वाङ्गतानपायात् । **'श्रीविद्येव तु मन्त्राणां तत्र कादिर्यथा परा'** इत्यादिवचनं तु **रहस्यनामसाहस्रो**त्कीर्तनविधिशेषरूपत्वान्नामकीर्तनप्राशस्त्यैकतात्पर्यकं न स्वार्थेऽपि तात्पर्यशालि । **'विश्वस्मादिन्द्र उत्तरः'** इत्यादेरन्यतात्पर्यकान्मन्त्रादिन्द्रस्य सर्वोत्तमत्व-सिद्धेरभावात् । **'कादिरेवोत्तमा न हादिः'** इत्यादिवचनानां तत्तत्प्रकरणे विद्यमानानामपि न हि निन्दान्यायेन विधेयस्तावकमात्रत्वेन तत उत्कर्षासिद्धेः । एतेन **'विद्याद्वयमिदं भद्रे दुर्लभं भुवनत्रये'** इति **ज्ञानार्णवा**दिवचनात्कादिहादिपञ्चदश्यावेवोत्तमे । तयोरपि मध्ये कामराजोपासितत्वात् कादिपञ्चदश्येवोत्तमोत्तमेत्यादय उक्तयो भक्तिपारवश्य-निमित्तका विज्ञेयाः । तथाऽपि **त्रिपुरोपनिषदा**दावितरविद्याप्रकृतित्वेन कादिविद्याया एव प्रथममुद्धृतत्वाद्विद्याद्वयैकपर **महोपनिषद्य**पि **'कामो योनिः कमला'** इत्यादि **श्रुत्या** तस्या एव प्रथममुद्धारात् **'चत्वार ईं बिभ्रति क्षेमयन्तः'** इत्यस्यामृच्यपि कादेरेवोद्धारात्तादृशबहुश्रुत्यानुगुण्याय **'तामीकाराक्षरोद्धाराम्'** (१/८) इति श्लोके तस्या एवोपक्रान्तत्वाच्च तामेव विद्यामुपदिशति–मादनामित्यादिना ।

**'कामो योनिः कमला वज्रपाणिर्गुहा हसा मातरिश्वाऽभ्रमिन्द्रः ।**
**पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमाताऽऽदिविद्या ॥'**

इति **आथर्वणे** शौनकशाखीया **श्रुतिः** । तत्रत्यकामादिपदचतुष्टयं मादनादिपदैः क्रमेणं व्याचष्टे । मदनसम्बन्धि बीजं मादनं ककारः । स चाकारस्वरविशिष्ट एव । उक्तश्रुतौ 'हसाः सकला' इत्येषामकारविशिष्टानामनुवादाज्ज्ञापकाद् हल्लेखानन्तर्गतह-सकलानामकारयोगस्याऽऽवश्यकत्वसिद्धेः । अस्मिन्नेव **तन्त्रे षट्षत्यां** पञ्चकूट-पञ्चमीविद्योद्धारे—

**कामो विष्णुयुतः शक्तिर्माया शक्रश्च पार्वति ।**
**पश्चाद्देवि महामायाबीजं चान्त्ये नियोजयेत् ॥'**

इति वाग्भवकूटश्लोके कामस्य विष्णुयुतत्वविशेषणाच्च । अस्मादेव ज्ञापकाच्छ्रीविद्याकूटेषु सर्वेषु सस्वरा एव वर्णाः पठनीया इति **सौभाग्यरत्नाकरो**क्तेश्च । तेषु च हसौ द्वौ द्वौ कलास्त्रयस्त्रय इति दशस्वकारयोगः । तथा च सम्प्रदायार्थप्रकरणे वक्ष्यत— **'श्रीकण्ठदशकं तद्वदव्यक्तस्य हि वाचकम्'** (७/४४) इति । शक्तिरेकादशस्वरः । बिन्दुमालिनी चतुर्थस्वरः । ईकाराधिकारे- **'शिवोत्तमः शिवा तुष्टिश्चतुर्थी बिन्दुमालिनी'** इति **कोशात्** । कमलेति तस्या एव संज्ञा । **रससारसंग्रहे** तु— **'मादनं प्राणरूपं तु विकासः शिव उच्यते'** इत्याद्युक्तम् । **हंसपारमेश्वरेऽपि**—

**'मा शक्तिस्तु समाख्याता दनं स्वीकारकृच्छिवः ।**
**सैव मादनमित्युक्त्या हकारः शिवसंज्ञकः ॥'**

इत्याद्युक्तम् । **ऋजुविमर्शिन्या**मपि—मादयति हर्षयतीति मादनः प्राणो हकारः । प्राणस्यैव वृत्त्यन्तरेऽपाने प्राणो वाग्रसोऽपानो मदन इति **श्रुते**श्च । तस्य हकारस्याधः शक्तिः पूर्वोच्चार्यं बीजं सकारः । बिन्दुमालिनीशब्देन ककार एव गृह्यते सम्प्रदायादिति व्याख्यातम् । तत्सर्वं प्रमाणपथातीतं राजाज्ञाकल्पमिति शिष्यदन्धनायैवालं न पुनर्न्यायविदां प्रामाणिकानां तोषायेत्युपेक्ष्यम् । कौलिकार्थप्रकरणे व्योमबीज-त्रयात्पार्थक्येन मादनत्रयस्य निर्देक्ष्यमाणत्वात्तद्विरुद्धं च । तस्मान्मादनः ककार एव । अत एव **सौभाग्यरत्नाकरेण** अस्य ग्रन्थस्य कामराजपक्षे स्फुटोऽर्थः । लोपामुद्रापक्षे त्वित्यादिनोक्तवचनान्येव लिखता पक्षान्तरमस्फुटार्थकमिति ध्वनितम् । न चोत्तरतन्त्रे वक्ष्यमाणायाः षडर्थ्या हादिविद्यानुगुणत्वेन प्रकृतश्लोकस्य कादिविद्यापरस्याप्यन्यथा नयनभुचितमिति वाच्यम् । तस्यामाद्ययोरर्थयोः कादिविद्यानुगुण्य एव स्वारस्यस्य वक्ष्यमाणत्वात् । असंदिग्धार्थकोपक्रमानुसारेणैवोपसंहारपठितवाक्येऽर्थवर्णनस्य न्यायसिद्धत्वाच्च । तस्मान्महतामपि वाक्यमिदं स्वोपास्यविद्यापक्षपातमूलकतया लोभमूलस्मृतिवदप्रमाणमेवेत्यवधेयम् । ऐन्द्रं वज्रपाणिलकारः । आकाशबीजे हकारशिरसि तिष्ठति । अधस्तात्, हकाराधो ज्वलनस्याग्नेरक्षरं

रेफः । माया ईकारः । बिन्दुरनुस्वारः । ईश्वरोऽर्धचन्द्रः । तैर्युतं सर्वोपरिशब्देन रोधिन्यादिसप्तकं तस्य सर्वोपरि पठ्यमानत्वात् । तैरपि नितरां योजितं कृत्वोद्धरेत् । सोऽयं वाग्भवो भवति । **वेदे** गुहामायाशब्दौ लज्जाबीजपरौ । यदि हादिविद्यापरत्वेनाप्येष ग्रन्थो योजनीय इत्याग्रहस्तदैवमुच्यताम्--मादनं ककार एव । तदधः, तदेव मादनमेवाधो यस्य तत् । तादृशमक्षरं शक्तिः सकारः । जगद्बीजं शक्तिनामेति सकारपर्याये **कोशात्** । तदधःशब्दे पुनः पूर्ववद्बहुव्रीहिः । बिन्दुमालिनी बिन्दुमालावती बिन्दुद्वन्द्वप्रियेत्यर्थः । हकार इति यावत् । तथा च हकाराधिकारे **कोशः – 'बिन्दुद्वन्द्वप्रिया देवी मेघश्यामेश्वरः पुमान्'** इति ।

ततश्च कसहा वैपरीत्येन पठनीया इति फलितार्थ इति । अस्मिन्नर्थे तात्पर्यग्राहकं तृतीयकूटस्थं प्रागुद्धारक्रमेणेति पदं सुवचमिति वक्ष्यते । परं त्वष्टमे पटले जपाङ्गसुषुप्त्यवस्थाविभावनकथनावसरे पूर्वार्णानां विलोमेनेत्यनेन प्रातिलोम्येनोद्धृत-पूर्वत्वं तृतीयकूटस्यासाधारणविशेषणत्वेनानूद्यमानं विरुध्येत । प्रथमकूटस्यापि प्रातिलोम्येनोद्धारे सत्यसाधारण्यभङ्गापत्तेः ॥ ११८-११९ ॥

एवं प्रथमकूटमुद्धृत्य द्वितीयकूटमुद्धरति--

**शिवबीजं त्रिधा कृत्वा सृष्टिस्थितिलयक्रमात् ।**
**द्वयमाद्येन रहितमाद्याधो मदनाक्षरम् ॥ १२० ॥**
**पुनः स्थितिशिवाधस्तादिन्द्रबीजं नियोजयेत् ।**
**तथा लयशिवाधोऽपि ज्वलनार्णं महेश्वरि ॥ १२१ ॥**
**चतुर्थस्वरसंयुक्तं बिन्दुखण्डेन्दुसंयुतम् ।**
**एवमेतन्महाबीजं कामराजं महोदयम् ॥ १२२ ॥**

शिवबीजं हकारं त्रिषु स्थानेष्वधोऽधो निक्षिपेत् । तेषां प्रथमादिक्रमेण सृष्टिः स्थितिर्लयश्चेति संज्ञा उत्तरत्र व्यवहारार्थं प्रयोजनान्तरार्थं च कृताः । आद्येन रहितमितिपदद्वयस्य द्विवारमन्वयस्तेषां हकाराणां मध्य आद्येन रहितं द्वयमाद्येन रहितं कुर्यादिति । प्रथमहकारेण भिन्नं हकारद्वयं द्वितीयतृतीयोभयमाद्येन हकाराद्येन सकारेण रहितं कुर्यादित्यर्थः । अनेन द्वितीयतृतीयहकारयोरप्रसक्तस्य सकार-साहित्यस्य निषेधेन तदितरस्य प्रथमहकारस्य सकारसाहित्यमावश्यकमिति सिध्यति । एकं वृणीते द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते न पञ्चातिवृणीत इत्यत्र चतुःषडाद्यार्षेयवरणनिषेधेन पञ्चार्षेयवरणप्राप्तिदर्शनात् । **'न तु कांस्यस्य तापनम्'** इति **शङ्खस्मृता**वीदृशनिषेधादेव कांस्येतरतापनप्राप्तेरपरार्केण व्याख्यातत्वाच्च । तच्च सकारसाहित्यं प्रथमहकारस्य पूर्वप्रदेशावच्छेदेन न भवत्यपि तु परत्रैवेति तु तस्य

सृष्टिसंज्ञाबललभ्यं सृष्टेः पूर्वं कृत्यान्तरस्याभावात् । लयात्परतस्तिरोधानानुग्रहयोः सत्त्वात् । तेन लयशिवात्परतो ज्वलनार्णनिवेशानाञ्जस्यं निरस्तम् । इदमेव हि सृष्ट्यादिसंज्ञानां प्रयोजनम् । व्यवहारमात्रस्य प्रथमद्वितीयादिपदैरप्युपपत्तेः । स्थिति-शिवों द्वितीयो हकारस्तदध इन्द्रबीजं लकारः । लयशिवस्तृतीयो हकारस्तदधो ज्वलनार्णं रेफमीकारबिन्द्वर्धचन्द्रादियुक्तं नियोजयेत् । तदिदं कामराजकूटं भवति ॥ १२०-१२२ ॥

तृतीयं कूटमुद्धरति–

**मायाबीजं महेशानि मादनं शक्रसंयुतम् ।**
**चन्द्रबीजं केवलं तु विनियोज्य वरानने ॥ १२३ ॥**
**त्यक्त्वा सृष्टिक्रमं देवि प्रागुद्धारक्रमेण तु ।**
**संहारक्रमयोगेन शक्तिबीजं समुद्धरेत् ॥ १२४ ॥**

अत्र मायाबीजशक्तिबीजयोरन्यतरोद्देशेनेतरसंज्ञाविधिरित्येकः पक्षः । अस्मिन्पक्षे महेशानीति न संबुद्धिः किन्तु बीजविशेषणत्वान्नपुंसकं सद्धृल्लेखापरम् । अथवा मायाबीजं हृल्लेखा, उक्त**श्रुत्य**नुसारात् । इदमेकमक्षरम् । मादनं शक्रसंयुतं लकारयुक्तः ककारः कल, इति द्वितीयम् । चन्द्रबीजं सकारः केवलं मादनवदक्षरान्तरेण युक्तं न भवति, इदं तृतीयम् । ये तु शक्रसंयुतमिति मायाबीजविशेषणत्वेन व्याचक्षते तेषामनुस्वारोत्तरं हलन्तरयोगस्याप्रसक्तत्वादेव पूर्वं योग इत्यस्य सुसमर्थत्वेऽपि चन्द्रबीजे केवलविशेषणस्वारस्यहानिः । **अस्मद्** मते तु मादनचन्द्रबीजयोर्मध्यपठितस्य विशेषणस्योभयत्रापि पक्षतोऽन्वयप्राप्तेस्तन्निरासाय केवलमितिविशेषणेनार्थात्पूर्वत्रैवान्वय इति सिध्यति । किञ्च, मादनपदेन व्यवहितस्य विशेषणस्य दूरान्वयो व्युत्पत्तिविरुद्धः । न च भवत्पक्षे मादनात्पूर्वमपि शक्रयोगापत्तिरिति वाच्यम् । पाठक्रमेण तन्निरासासम्भवात् । **कुलविद्योद्धारे–'मादनं शक्रसंयुतम्'** इत्यत्र सर्वैरपि पाठक्रमस्यैव शरणीकारात् । अथवा शक्रसंयुतमिति मायामादनयोरुभयोरपि विशेषणम् । तेन तयोर्मध्ये शक्रो लेख्यः । तथा सत्येवोभयत्र तद्योगनिष्पत्तेरिति । एतत्त्रितयं वैपरीत्येन पठेदित्याह–त्यक्त्वेति । **प्राचो**ऽ-व्यवहितपूर्वस्य कामराजकूटस्योद्धारे यः क्रम आनुलोम्यरूपोऽवलम्बितस्तं सृष्टिक्रमं त्यक्त्वा संहारक्रमस्य प्रातिलोम्यरूपस्य योगेनेदमुद्धरेदित्यर्थः । हादिविद्यापक्षे **प्राचः** प्रथमकूटस्योद्धारक्रमेणेति संहारक्रमयोगेनेत्यस्य विशेषणं सुवचम् ॥ १२४ ॥

**एवमेषा महाविद्या महात्रिपुरसुन्दरी ।**
**संस्मृतैव महेशानि त्रैलोक्यवशकारिणी ॥ १२५ ॥**

महात्रिपुरसुन्दरीदेवत्यायाः श्रीविद्यायास्तदभेदेन निर्देशो वाच्यवाचकयोरभेद-विवक्षया मन्त्रस्य देवतासूक्ष्मरूपत्वाभिप्रायेण वा । सेयं विद्या संस्मृतैव जपितैव त्रैलोक्यं वशयति । लोकत्रयवशीकारस्य परशिवैकधर्मत्वात्परशिवभावफलकोऽयं विद्याजप इति यावत् । तथा च **सुन्दरीतापिन्यां** श्रूयते--'पञ्चदशाक्षरं त्रैपुरं योऽधीते स सर्वान् कामानाप्नोति, स सर्वान् भोगानाप्नोति, स सर्वाँल्लोकान् सृजति, स सर्वा वाचो जृम्भयति, स रुद्रत्वं प्राप्नोति, स वैष्णवं [धाम] भित्त्वा परब्रह्म प्राप्नोति, य एवं वेद'इति । इत्थं च 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ'इत्यत्र करणभाव्ययोः कीर्तनेन भावनाया इव प्रकृतेऽपि तदाक्षेपाच्छ्रीविद्याजपेन परशिवभावादिकं भावयेदित्यर्थः । ततश्च फलसंयोगाज्जपस्य प्राधान्ये सिद्धे फलवदफलन्यायेन वशिन्यादिमन्त्राणां श्रीविद्याङ्गत्वं सिध्यति । तेन च तत्र तत्सन्निधिपठितानाम् **'अर्चिताः पुरुषस्याऽऽशु प्रकुर्वन्ति वशं जगत्'** (१/८६) इत्यादिफलबोधकवाक्यानामा-मनहोमार्थवादन्यायेन प्राशस्त्यमात्रबोधकत्वं सम्पद्यते न फलविधित्वम् । न च विनिगमनाविरहः ।

**'शृणु देवि महानित्यामादौ त्रिपुरसुन्दरीम् ।**
**यया विज्ञातया गौरि जगत्क्षोभः प्रजायते ॥'** (१/३०)

इत्युपक्रमात् । **'त्वमेव तासां रूपेण क्रीडसे विश्वमोहिनी'** इति **तन्त्रान्तर** उपसंहारात् । **'संस्थिताऽत्र महाचक्रे महात्रिपुरसुन्दरी'** (१/८२) इत्यादिना मध्ये पुनः पुनः परामर्शाच्चास्य तन्त्रस्य प्राधान्येन त्रिपुरसुन्दर्युपासनाविधान एव तात्पर्यावग-मात् । सा चोपासना मानसक्रियाविशेषरूपा । **'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्'** इति **ब्रह्मसूत्रा**दौ तथाव्याख्यादर्शनात् । देवताविषयकोऽनुराग एवोपासनेति **केचित्** । तन्न । भक्तिमानुपासीतेत्यादिविधौ भक्तेरुपासनातो भेदेन निर्देशानुपपत्तेः । अनुरागस्यैव भक्तिपदवाच्यत्वात् । **'अथातो भक्तिजिज्ञासा, सा पराऽनुरक्तिरीश्वरे'** इति **शाण्डिल्यसूत्रात्** । तस्मादनुरागव्यावृत्ता क्रियैवोपासना । सा च द्विविधा– तन्मन्त्रजपरूपा तद्यन्त्रपूजारूपा चेति । जप मानसे चेतिधातुपाठस्मृत्या जपस्य मानसक्रियारूपत्वावगमात् । पूजाया अपि ध्यानादिरूपायास्तथात्वात् । उपचारसमर्पणरूपाया अपि न ममेत्याकारक-मानससंकल्पैकरूपत्वात् । ततश्च त्रिपुरसुन्दरीयन्त्रपूजनस्य सप्तदशभिः श्लोकैः फलराशेः पूर्वं कथने जागरूके सति कथं फलवदफलन्यायस्य विनिगमनाविरहेण पराहतिः । न चैवं सति जपस्य पूजाङ्गत्वापत्तिः ।

**'जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः ।**
**कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥'**

इति **मनुस्मृत्या**दौ सिद्धिकरणताया निरपेक्षजप एव कथनात् **'चक्रराजार्चनं विद्याजपो नाम्नां च कीर्तनम्'** इत्यादौ **'यज्ञानां जपयज्ञोऽस्मि'** इत्यादौ च **'जपाच्छ्रान्तः पुनर्ध्यायेद्ध्यानाच्छ्रान्तः पुनर्जपेत्'** इत्यादौ च प्रधानप्राये पाठाच्चोपांशुयाजादेरिव जपस्य प्राधान्यसिद्धेः । तेनोत्तरतन्त्रे **'चक्रपूजां विधायेत्थं ..... जपं कुर्यात्समाहितः'** (८/१७६-१७७) इति वचने कालार्थ एव संयोगः । दर्शसोमयोरिव द्वयोरपि कृतार्थत्वात् । अन्यत्र स्वतन्त्रस्यापि जपस्य पूजायां करणे तदङ्गत्वमेव[1] वपनादिवदिति तु साम्प्रदायिकाः । अस्मिन्नेवार्थे ज्ञापकमुत्तरपटले स्पष्टीभविष्यति ॥ १२५ ॥

एवं सपादशतश्लोकैश्चक्रोद्धारमन्त्रोद्धारान्तमुपदिश्येदानीं प्रथमपटलसमाप्तिपर्यन्तमेकोनाशीत्या श्लोकैश्चक्रपूजामुपदिशति **'एतयैतस्य चक्रस्य'** इत्यारभ्य **'क्षमस्वेति विसर्जयेत्'** (१/२०४) इत्यन्तेन–

**एतयैतस्य चक्रस्य साधकोऽर्चनमारभेत् ।**

एतया कादिविद्यया हादिविद्यया वा, एतस्य पूर्वोद्धृतस्य चक्रस्य **'श्रीचक्रं शिवयोर्वपुः'** इति वचनाच्चक्राभिन्नायास्त्रिपुरसुन्दर्या इत्यर्थः । ततश्च महादेव्यर्चन एवास्या विनियोगो नान्यदेवतार्चन इत्यर्थः ॥ १२५$\frac{१}{२}$ ॥

अथ पूजारम्भ आवश्यकानि साधके कतिचिद्विशेषणानि विधत्ते–

**कुङ्कुमारुणदेहस्तु रक्तवस्त्रादिसंयुतः ॥ १२६ ॥**
**ताम्बूलपूरितमुखो नः नं चे दि त रा द म ।**
**कर्पूरक्षोददिग्धाङ्गो रक्ताभरणमण्डितः ॥ १२७ ॥**
**रक्तपुष्पावृतो योगी रक्तगन्धानुलेपनः ।**
**रक्तास्तरोपविष्टस्तु लाक्षारुणगृहे स्थितः ॥ १२८ ॥**
**सर्वशृङ्गारवेषाढ्यस्त्रिपुरीकृतविग्रहः ।**
**मनःसंकल्परक्तो वा साधकः स्थिरमानसः ॥ १२९ ॥**

वस्त्रादीत्यादिपदेन रक्तकुसुमस्य स्त्रीवेषस्य वा परिग्रहः । यत्तु रक्तपुष्पावृत इत्युत्तरत्र विशेषणं तस्य प्राथ(पाञ्च)मिककुण्डगोलोत्थपरतया साम्प्रदायिकैर्व्याख्यानान्न पौनरुक्त्यम् । अत्र तुरीयचरणेनाऽऽत्मपूजाध्वनिः । स च चरणो व्याकुलाक्षरः । तद्वाचनसंकेतस्तूत्तरतन्त्र उद्घाटयिष्यते**ऽस्माभिः** । क्षोदश्चूर्णः । त्रिपुरीकृतो न्यासा-

---

1. व चयना-ख.

दिना विग्रहो देहो येन सः । ईदृशपदार्थालाभे त्वाह–मनःसंकल्परक्त इति । पूर्वोक्तविशेषणानां भावनामात्रं कुर्यादित्यर्थः । ततश्च **क्लृप्ताकव्यः(ल्पः) संकल्पाकल्पो वा'** इति **कल्पसूत्रे** वाशब्दो व्यवस्थितविकल्पपरः । स्थिरमानस इति । भूयादिति शेषः । पुनः साधकपदं विशेषणविधिषूद्देश्यसमर्पणार्थम् ॥ १२६-१२९ ॥

**भूप्रदेशे समे शुद्धे गोमयेनोपलेपिते ।**
**पुष्पप्रकरसंकीर्णे धूपामोदसुगन्धिते ॥ १३० ॥**
**सिन्दूररजसा देवि कुङ्कुमेनाथवा पुनः ।**
**आलिखेत्प्रथमं चक्रं समरेखं मनोहरम् ॥ १३१ ॥**
**समत्रिकोणशक्त्यग्रं समास्रं चातिसुन्दरम् ।**

समे समीकृते । तत्करणप्रकारस्तु **कुण्डोद्योता**दिषु द्रष्टव्यः । अत्र सम इति पदेन भूप्रस्तार एवाभिमतो गम्यते । **ज्ञानार्णवे**ऽप्युक्तम्–

**भूप्रदेशे समे शुद्धे सिन्दूररजसाऽपि वा ।**
**कुङ्कुमस्य रजोभिर्वा भूमौ चक्रं समालिखेत् ॥**

इति । अत्रासम इति पदच्छेदमाहु**र्नव्याः** । तदुत्तरतन्त्रे निरसिष्यते । शुद्धे पिपीलिकाद्यशुचिसञ्चाररहिते ।

**अङ्गारतुषकेशास्थिकृमिहीना भवेच्छुचिः ।**
**भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणादपि ॥**

इत्यादि **प्रयोगसारयाज्ञवल्क्याद्युक्तेः** । गोमयेन न तु माहिषेण । पुष्पप्रकरः पुष्पाञ्जलिः । तेन संकीर्णे युक्ते । **कल्पसूत्रो**क्तमन्त्रेण पुष्पाञ्जलिं दत्त्वेति यावत् । उत्तरतन्त्रे गोरोचनादिमेलनं वक्ष्यति । तदलाभे सिन्दूरकुङ्कुमयोर्निरपेक्षकरणत्वम् । प्रथमं पात्रासादनतः पूर्वम् । अत एव वक्ष्यति–**'श्रीचक्रस्याऽऽत्मनश्चैव मध्ये त्वर्घ्यं प्रतिष्ठयेत्'** (८/१०७) इति । न्यासात्पूर्वमिति वा । **कल्पसूत्रा**नुगुण्यात् । पात्रासादनपूर्वतायाः पाठादेव लाभात् । समान्यृजुब्रह्मसूत्रानतिक्रान्तानि त्रिकोणानां चतुर्वह्नीनां पञ्चशक्तीनां चाग्राणि यस्मिंस्तत्तथा । समान्यन्यूनानधिकानि अस्राणि त्रिचत्वारिंशत्संख्यानि यत्र तत् । अतिसुन्दरं सन्धिमर्मलक्षणैर्यथोक्तैर्लक्षितम् ॥ १३०-१३१$\frac{१}{२}$ ॥

**हेमादिपात्रे साधारे स्थापयेदर्घ्यमम्बुना ॥ १३२ ॥**
**रोचनाचन्द्रकाश्मीरलघुकस्तूरिकायुतम् ।**
**भावयेद्वह्निसूर्येन्दुभूतानि परमेश्वरि ॥ १३३ ॥**
**जपेच्च दशवारं तत्तर्पयेत्तेन योगिनीः ।**

सामान्यार्घ्यं विदधाति—हेमादीति । आदिना रूप्यादिपरिग्रहः । तानि च **कुलार्णवे**—

**'स्वर्णरूप्यशिलाकूर्मकपालालाबुमृण्मयम् ।**
**नारिकेलं शङ्खमुक्ताशुक्तिकाचसमुद्भवम् ॥**
**पुण्यवृक्षकृतं रम्यं पात्रं कुर्याद्विचक्षणः ।**
**अतिसूक्ष्ममतिस्थूलं भिन्नं छिद्रं विवर्जयेत् ॥**
**ताम्रकांस्यादिभिर्लोहैः पात्रं नैव तु कारयेत् ॥'**

इति । अत्र कपालं महाशङ्खम् । **'महाशङ्खं विशेषेण भुक्तिमुक्तिफलप्रदम्'** इति **संहितै**कवाक्यत्वात् । मुक्ताशुक्तिशब्देन मुक्ताफलाजनकशुक्तिव्यावृत्तिः । पुण्यवृक्षपदेनाश्वत्थपलाशादिकतिपयवृक्षेतरेषां स्नुहीविभीतकादीनां व्यावृत्तिः । अतिसूक्ष्मपदेन चतुरङ्गुलोत्सेधात्तावद्विस्ताराच्च न्यूनमुच्यते । **'वस्वङ्गुलविहीनं तु न पात्रं कारयेद् बुधः'** इति **तन्त्रान्तरे** निषेधदर्शनात् । उत्सेधविस्तारौ चतुश्चतुरङ्गुलावेवं वस्वङ्गुलतेति **साम्प्रदायिकै**स्तद्व्याख्यानात् । चक्रे तर्पणपूजनार्थं हस्तव्यापारो यावता प्रतिबध्यते तदतिस्थूलम् । तदाकारस्तु विशेषार्घ्यातिरिक्त ऐच्छिकः । विशेषे तु भगाकारतेति **भूतभैरवतन्त्रे** दृश्यते । यद्यपि—

**'सुवर्णरौप्यपात्राणि सर्वसिद्धिकराणि च ।**
**शान्तिके च शिलापात्रं स्तम्भने चैव मृण्मयम् ॥**
**नारिकेलं तु वश्यादावभिचारे तु कूर्मजम् ।**
**शङ्खं ज्ञानप्रदं मुक्ताशुक्तिर्विद्याप्रदायिनी ॥**
**कपालालाबुपात्राणि योगसिद्धिकराणि च ।**
**पुण्यवृक्षजपात्राणि सर्वपापहराणि च ॥'**

इतिवचनैर्द्वादशविधानामपि पात्राणां काम्यत्वं प्रतीयते, तथाऽपि खादिरवदुभयार्थत्वं संयोगपृथक्त्वाविशेषाद्वक्तव्यम् । तथा च स्मर्यते—**'उक्तेष्वेतेषु देवेशि पात्रमेकं प्रकल्पयेत्'** । इति । साधारे,

**'आधारं त्रिपदं प्राहुः षट्पदं वा चतुष्पदम् ।**
**अथवा वर्तुलाकारं कुर्याद्दिवि मनोहरम् ॥'**

इत्युक्तलक्षणलक्षिताधारसहिते । अत्र त्रिपदादिपक्षत्रये क्रमेण त्रिषट्चतुष्कोणताऽऽवश्यकी । वर्तुलपक्षे पादाभाव इति **सम्प्रदायः** । वर्तुलपक्षेऽपि त्रिचतुःषट्पदानां विकल्प इत्यप्याहुः । तच्चाऽऽधारं सुवर्णरूप्यताम्रादिमयमिति **ज्ञानार्णवे** । तत्प्रमाणं तु यावद्विशेषदर्शनमैच्छिकमेव । पात्रप्रमाणमेव तत्प्रमाणमित्यपि **केचित्** । अम्बुना न तु कारणेन । तस्यैव निरपेक्षकरणताप्रतीतेः । यत्त्वादिमबिन्दुमिश्रणं **तन्त्रान्तरे** स्मर्यते

तत्संस्कारमात्रं मैत्रावरुणं पयसा श्रीणातीत्यादिवत् । अतो न नैरपेक्ष्यभङ्गः । एतेन–' **'शङ्खं तत्र तु संस्थाप्य जलपूर्णं सहेतुकम्'** इति **संहिता**वचनं व्याख्यातम् । रोचना गोरोचनम् । चन्द्रः [1]कर्पूरम् । काश्मीरं केसरम् । लघुरगुरुः । रोचनादिपञ्चकं घृष्ट्वा जले मिश्रयेदित्यर्थः । वह्निसूर्येन्दुभ्यो भूतानि तदुत्थान्किरणानिति यावत् । धूम्रार्चिराद्या दश वह्निकला आधारे, तपिन्याद्या द्वादश सूर्यकलाः पात्रे, अमृताद्याः षोडश चन्द्रकला अम्बुनि विभावयेदित्यर्थः । **मनोरमायां** तु आधारपात्रजलानि वह्निसूर्यसोमत्वेन, रोचनादिपञ्चकं पृथिव्यादिपञ्चभूतात्मकत्वेन भावयेदिति व्याख्यातम् । रोचनादिपीतवर्णाद्यानुगुण्यादिदमेव युक्तम् । तदित्यव्ययं मूलविद्यां परामृशति । जलं स्पृष्ट्वा तां दशवारं जपेदित्यर्थः । विद्यातृतीयखण्डमात्रपरं तत्पदमिति तु **मनोरमायाम्** । योगिनीः, त्रिपुरसुन्दर्याः षडङ्गदेवताः । तेन सामान्यार्घ्यजलेन तस्मिन्नेव तर्पयेदिति तु तत्संस्कारः ।

**'शुद्धोदकेन संपूर्य पूजयेत्कारणान्वितम् ।**
**षडङ्गं पूजयेत्तत्र सामान्यार्घ्यमिदं प्रिये ॥'**

इति **ज्ञानार्णवात्** । योगिनीपदं डाकिन्यादिधातुदेवतापरं वा । उत्तरतन्त्रे तथैव वक्ष्यमाणत्वात् ।देवीपरिवारभूतनिखिलशक्तिपरमिति तु **मनोरमायाम्** । एवं सामान्यार्घ्ये सिद्धे तद्विनियोगोऽष्टमे पटले (श्लो. १०३) **'सामान्यार्घ्येण देवेशि मार्त(र्ता)ण्डं परिपूजयेत्'** इत्यादिर्वक्ष्यते ।यत्तु तत्रैव (श्लो. १०७) **'श्रीचक्रस्याऽऽत्मनश्चैव मध्ये त्वर्घ्यं प्रतिष्ठयेत्'** इत्यादिनाऽर्घ्यसाधनमुच्यते तद्विशेषार्घ्यस्य, तस्य द्रव्यैककरणकत्वात् । अत एव तत्र (श्लो. ११०) **'विधृते तु पुनर्द्रव्ये षोडशेन्दुकला यजेत्'** इति द्रव्यधारणस्य सिद्धवत्कृत्यानुवादः संगच्छते । यदपि तदन्ते वचम् (श्लो. ११२) **'तथैवार्घ्यं विशेषेण साधयेत्साधकोत्तमः'** इति तदात्मपात्रगुरुपात्रान्यतरविधानपरम् । यथैव सामान्यार्घ्यं तथैवेदं साधयेत् । विशेषेणेति तु विशेष इति तदर्थात् ।अत एव तदुत्तरमेव (श्लो. ११३) **'गुरुपादालिमापूज्य'** इत्यादिनाऽऽत्मपूजाविधानं संगच्छते । अत एव च **ज्ञानार्णवे–'आत्मानं तु समभ्यर्च्य भूतान्संत्रासयेत्ततः'** इति वचनेनाऽऽत्मपूजाविधानादेवाऽऽत्मपात्रासादनस्याऽऽक्षेपः । अन्यथा विशेषार्घ्यद्रव्येणैवाऽऽत्मपूजने प्रधानदेव्यै निवेदनात्पूर्वमुच्छिष्टकरणदोषापत्तेरित्याहुः **शंकरानन्दनाथा**दयः । एतेन यद् **अमृतानन्दै**र्व्याख्यातं **'श्रीचक्रस्याऽऽत्मनश्चैव'** इत्यादिना सामान्यार्घ्यस्यैव विधिः, **'विधृते तु पुनर्द्रव्ये'** इत्यारभ्य **'तथैवार्घ्यं विशेषेण'** इत्यभिव्याप्य विशेषार्घ्यस्य विधिरिति तदनादेयम् । सामान्यार्घ्येतिकर्तव्यतायां सूर्यकलापूजोत्तरांशस्य लोपापत्त्या परमुखनिरीक्षणापत्तेः । अर्घ्यद्वयमध्ये पूर्वस्य पूर्वांशमात्रमुत्तरस्योत्तरांशमात्रं द्वयमपि मिलित्वा पूर्णेतिकर्तव्यता कीर्तितेति वर्णनस्य ग्रन्थसन्दर्भविरुद्धत्वाच्च । पूर्वोत्तरचतुःशत्योरैकतन्त्र्यस्य भवतामपि सम्मतत्वेनैकस्मिं-

---

1. कर्पूरः-ख. ।

स्तन्त्रे द्विःसामान्यार्घ्यविधानस्य वैयर्थ्यापत्तेश्चेति न किञ्चिदेतत् । एवं प्रकृत-चतुःशत्यामम्बुपदस्योत्तरचतुःशत्यां द्रव्यपदस्य च स्वारस्यमवलम्ब्यायं ग्रन्थो योजितः । यदि पुनरित्थमालोच्यते **संहितार्णवकल्पसूत्रादिषु** सामान्यार्घ्ये शङ्खस्यैव विधानाद्धेमादि-विकल्पस्य विशेषार्घ्यादावेव विधानदर्शनात्प्रकृतश्लोकेऽपि तर्पयेत्तेन योगिनीरित्यनेन परदेवतादितर्पणकरणत्वप्रतीतेश्च लिङ्गादयं ग्रन्थोऽपि विशेषार्घ्यपर एवेति तदाऽम्बुनेति सहार्थे तृतीया । आष्टमिकग्रन्थे द्रव्येण विशेषार्घ्यविधिः प्रकृतग्रन्थे तत्रैव जलमिश्रणविधिरिति विवेकः । तत्परिमाणं तु **दक्षिणामूर्तिसंहितायाम्– 'भागत्रयं विशेषस्य भागमात्रं जलं क्षिपेत्'** इति । सामान्यार्घ्यस्थापनं तु मार्त(र्ता)ण्डपूजायां तस्य करणत्वेन विधानादेवाऽऽक्षिप्यत इति द्रष्टव्यम् । अम्बुन एव करणत्वमिति तु **मनोरमा**शयः । **'मुख्यालाभे प्रतिनिधिविधिरेष'** इति तु **ललितार्चनचन्द्रि-काकारः** ॥ १३२-१३३$\frac{1}{2}$ ॥

**ध्यात्वा पुरत्रयं देवि बीजत्रयसमन्वितम् ॥ १३४ ॥**
**सर्वाद्यविद्यया देवि करशुद्धिं तु कारयेत् ॥**

पुरत्रयं सूर्यसोमानलत्रयरूपं श्रीचक्रं विद्याबीजत्रययुक्तं ध्यायेदित्यर्थ इति **प्राञ्चः** । पुरत्रयमित्यस्य त्रिपुरमित्यर्थो बीजत्रयेत्यस्य करशुद्धिन्यासेऽन्वयोऽपि सुवचः । वस्तुतस्तु **तन्त्रराजे** पूर्वोक्तश्लोकद्वयोत्तरमेतदर्धसमानार्थकः श्लोकः पठ्यते–

**आधारे हृदये रन्ध्रे विद्याखण्डत्रयं स्मरेत् ।**
**लोहितं तत्प्रभावेधाल्लोहितं च निजं वपुः ॥**

इति । तस्यार्थो **मनोरमायाम्** उक्तः–आधारस्थप्रथमकूटवह्नितेजसा खचितं हृदयगतं तद्द्वितीयकूटसूर्यतेजःप्रसरं तेनानुषक्तं ब्रह्मरन्ध्रगततृतीयखण्डचन्द्रतेजःप्रसरं चेत्य-विभक्ताकारमिलितरूपमन्तर्बहिश्च तेजस्त्रयं प्राणायामं कुर्वन्भावयेदिति । आद्यविद्या-शब्देन पूर्वं बालाविद्याया एव परामर्शः कृतः सोऽत्र मा प्रसाङ्क्षीत्यत आह– सर्वाद्येति । सर्वासु पूर्वोक्तास्वष्टविधविद्यास्वादिभूतया करशुद्धिकर्याख्यया विद्यया करशुद्धिं कारयेत्कुर्यात् । एतया निषादस्थपतिं याजयेदित्यत्रेवाऽऽचार्याभिप्रायेण णिजन्तकीर्तनम् । तत्प्रकारश्च **कल्पसूत्रे–**' श्रीकण्ठानन्ततार्तीयैर्मध्यमादितलपर्यन्तं कृतकरशुद्धिः' इत्युक्तः । बीजत्रयं दण्ड[1]कलितन्यायेन द्विरावर्त्य 'मध्यमाभ्यां नमः' इत्यादि जातित्रयोत्तरमङ्गुष्ठादिद्वयं पठित्वा ततः 'करतलकरपृष्ठाभ्यां नमः' इति क्रमेण पल्लवषट्कं बीजषट्कान्ते संयोज्य करशुद्धिं कुर्यादित्यर्थः । सोऽयं करशुद्धिन्यास इत्युच्यते । यत्तु **पद्धतिकारैः** शिखाद्यस्त्रान्तमप्येतैरेव बीजैर्न्यासो

---

1. कालित्-ख. ।

लिख्यते तत्र मूलं त एव जानते । करशुद्ध्यादिन्यासानां क्रमः कालश्च **उत्तरतन्त्रे** वक्ष्यते ॥ १३४-१३४$\frac{१}{२}$ ॥

**तत आत्मासनं दद्याच्चक्रासनमथेश्वरि ॥ १३५ ॥**
**सर्वमन्त्रासनं देवि साध्यसिद्धासनं तथा ।**

आत्मासनादिपदानि तृतीयादिषष्ठान्तविद्यानां नामधेयानि । तासां विनियोगस्तु द्वेधोपलक्ष्यते । तत्र **कल्पसूत्रे** तावदुक्तम्–'मायाकामशक्तीरुच्चार्य देव्यात्मासनाय नम इति स्वस्याऽऽसनं दत्त्वा शिवयुग्बालामुच्चार्य श्रीचक्रासनाय नमः, शिवभृगुयुग्बाला-मुच्चार्य सर्वमन्त्रासनाय नमः, भुवनामदनौ क्ले(ब्ले)मुच्चार्य साध्यसिद्धासनाय नम इति चक्रमन्त्रदेवतासनं त्रिभिर्मन्त्रैश्चक्रे कृत्वा' इति । **संहितायां** तु–

**'करशुद्धिविधिं कृत्वा चतुरासनदेवताः ।**
**पादयोर्जङ्घयोर्जान्वोर्मूलाधारे च विन्यसेत् ॥'**

इत्युक्तम् । **ज्ञानार्णवे** चानयोः प्रकारयोः समुच्चयो दृश्यते । मूले त्वात्मासनस्य ददातिना विधानादवशिष्टासनत्रयस्य च 'ततो रक्षां प्रकुर्वीत' इत्युत्तरश्लोकस्थकरोतिना विधानेन च **कल्पसूत्रै**कवाक्यतायामेव स्वारसिकं तात्पर्यमुन्नीयते ॥ १३५–१३५$\frac{१}{२}$ ॥

**ततो रक्षां प्रकुर्वीत पूर्वोक्तकुलविद्यया ॥ १३६ ॥**
**षडङ्गन्यासयोगेन नमस्कारादियुक्तया ॥**

ततश्चतुरासनन्यासानन्तरं पूर्वोक्तया कुलविद्यया बालाविद्यया त्र्यक्षर्या षडङ्गानां हृदयशिरःशिखाकवचनेत्रत्रयास्त्राणां न्यासयोगेन न्यासदशायां यादृशो योगस्तेन चतुर्थ्यन्तहृदयादिपदानि बीजन्ते [1]प्रयुज्येति यावत् । तदन्ते नमस्कारः । नमःशब्द आदिर्येषां तैर्नमःस्वाहावषट्हुंवौषट्शब्दैर्जातिपदवाच्यत्वेन प्रसिद्धैर्युक्तया तया रक्षां कुर्वीतेत्यर्थः । षडङ्गयोगेनैव बीजत्रयस्य द्विरावृत्तिराक्षिप्यते । ततश्च––'ऐं हृदयाय नमः । क्लीं शिरसे स्वाहा । सौः शिखायै वषट् । ऐं कवचाय हुम् । क्लीं नेत्रत्रयाय वौषट् । सौः अस्त्राय फट्' इति षड्भिर्मन्त्रैर्हृदयादिषु तत्तन्मुद्रया न्यसेदिति फलितार्थः । तथा च चतुरासनन्यासान्ते **कल्पसूत्रम्**–'बालाद्विरावृत्त्या त्रिद्व्येक-दशत्रिद्विसंख्याङ्गुलिविन्यासैः क्लृप्तषडङ्गः' इति । **दक्षिणामूर्तिसंहिताया**मपि–

**'कनिष्ठाङ्गुष्ठरहितैस्त्रिभिस्तु हृदि विन्यसेत्**
**मध्यमानामिकाभ्यां तु न्यसेच्छिरसि मन्त्रवित् ॥**
**शिखाऽङ्गुष्ठेन विन्यस्या दशभिः कवचं न्यसेत् ।**

---

1. प्रयोज्ये-ख.

**हृदुक्तैर्नेत्रविन्यासं विन्यसेत् परमेश्वरि ॥**
**तर्जनीमध्यमाभ्यां तु ततोऽस्त्रं विन्यसेत्प्रिये ।**
**आत्मरक्षाकरीं विद्यां द्विरुच्चार्य न्यसेद्बुधः ॥**

इति । एतेन– **'कुमार्या त्रिपुरेशान्या षडङ्गानि च पूर्ववत्'** इति **ज्ञानार्णवे** पूर्वपदेन यद्यपि करन्यासो हृदयादिन्यासश्चेति द्विविधोऽपि षडङ्गन्यासः परामृष्टुं शक्यते । बालाप्रकरणे द्विविधस्याप्याम्नानात् । पञ्चकामन्यासान्ते–

**एतान्विन्यस्य देवेशि करन्यासमतः परम् ।**
**मूलविद्याद्विरावृत्त्या सर्वाङ्गुलितलेषु च ॥**

षडङ्गक्रमयोगेणेत्युक्तेः । तथा नवयोनिन्यासान्तेऽपि–

**षडङ्गमाचरेद्देवि द्विरावृत्त्या क्रमेण च ।**
**त्रिद्व्येकदशकत्रिद्विसंख्यया शैलसम्भवे ॥**

अङ्गुलीनामित्युक्तेश्च । तथाऽपि **तन्त्रान्तर**संवादाय हृदयादिषडङ्गान्येव परामृश्यन्ते । अत एव प्रकृततन्त्रेऽपि षडङ्गपदं हृदयादिपरमेव । नमस्कारादीत्यादिपदस्वारस्याच्च । **केचित्** तु– नमस्कारनियुक्तयेति मूलं पठन्तः प्रत्यङ्गमन्त्रं देवतानामसम्बोधनान्ते नमःपदं प्रयोज्यमिति व्याचक्षते । अन्ये तु– नमस्कारादीत्येव पठन्तोऽपि,

**'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।**
**अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥'**

इति वचनात् 'सर्वज्ञताशक्तिधाम्ने' इत्यादिपदान्यपि योजनीयानीत्याहुः । परे तु–बालां सम्पूर्णामुक्त्वा 'श्रीमहात्रिपुरसुन्दरि मां रक्ष रक्ष' इत्येकमेव मन्त्रं जातियुक्तं हृदयादिषु योजयन्ति । तदेतत्त्रयमपि **तन्त्रान्तर**संवाद एव विश्वसितुं योग्यम् । अन्यथा परस्परवैमत्यादेव पराहतं वेदितव्यम् । यत्तु करशुद्धिन्यासान्ते **कल्पसूत्रम्**– 'कुमारीमुच्चार्य महात्रिपुरसुन्दरिपदमात्मानं रक्ष रक्षेति हृदयेऽञ्जलिं कृ(द)त्वा' इति, न तत्र षडङ्गचर्चाऽपीति पूर्वोक्त एवेह न्यासो विवक्षित इति । अत्र **नव्याः**– **ज्ञानार्णवतन्त्रे** हि बालायामेव निखिलाङ्गोपदेशात्सैव प्रकृतिः । तदनन्तराम्नातास्त्रिपुरभैरव्यादिश्रीविद्यान्तास्तद्विकृतयः । ततश्च चोदकेन प्रातःकृत्यादिनिखिलाङ्गवत्षडङ्गन्यासस्यापि तत एव प्राप्तिः । प्रकृतौ च बालाबीजानां द्विरावृत्तावपि विकृतावूहप्रापकन्यायैः कूटद्विरावृत्तिरेव न्याय्या । यत्तु **प्राञ्चः**–न्यायेन प्राप्तस्योहस्य बाधनार्थं कुमार्या त्रिपुरेशान्या षडङ्गानि च पूर्ववदिति वचनं मन्यन्ते, तन्न । प्रकृतितः प्राकृतन्यासकाण्डमध्यस्थत्वेन षडङ्गन्यासप्राप्तावपि प्राकृतन्यासोत्तरभाविवैकृतन्यासान्तर्गतचतुरासनन्यासोत्तरं तत्प्राप्तौ प्रमाणाभावेन तन्मात्रपरत्वेन वचनोपपत्तावूहबाधनेऽपि तस्य व्यापार इति कल्पनायोगादिति वदन्ति । तदसत् । षडङ्गानि च पूर्ववदित्यंशेनापि भवदभीष्टसिद्धौ कुमार्या त्रिपुरेशान्या, इत्यंशस्योहबाधकत्व-

मन्तरेण [1]सार्थक्यायोग इत्येव **प्राचामा**शयात् । **संहितासूत्रा**दिविरोधस्य स्पष्टत्वाच्च ॥ १३८-१३८$\frac{१}{२}$ ॥

वशिन्यादिन्यासमाह—

**शिरोललाटभ्रूमध्यकण्ठहृन्नाभिगोचरे ॥ १३७ ॥**
**आधारे व्यूहकं यावन्न्यासमष्टभिराचरेत् ॥**

अत्र गोचरशब्देन स्वाधिष्ठानं चक्रमुच्यते । प्राण्यङ्गत्वादेकवद्भावः । आधारे मूलाधारे । व्यूहकं यावदित्यस्याऽऽधारात्पादाग्रान्तमित्यर्थमाहुः **साम्प्रदायिकाः** । अष्टभिर्वशिन्यादिवाग्देवतामन्त्रैरिति यावत् । सूत्रे रक्षाषडङ्गन्यासोत्तरं वशिन्याद्यष्टन्यासस्यैव विधानाच्छीर्षादिस्थानैक्यदर्शनाच्च प्रकृतश्लोकेऽपि स एवेति निश्चीयते । उत्तरतन्त्रे तु द्विवारं करशुद्ध्यादिन्यासचतुष्टयं कर्तव्यत्वेन विधाय द्वितीयवारकरणदशायां रक्षाषडङ्गवाग्देवतान्यासयोर्मध्ये श्रीकण्ठादिन्यास आम्नायत इति विशेषः । **नव्यास्तु**—गोचरपदस्य लिङ्गार्थकत्वं प्राचीनैरुक्तं प्रमाणाभावपराहतमभिप्रेत्य मूलाधारे सप्तमीं वाग्देवतामष्टमीं तु पादमूलादिपादाग्रान्तं न्यसेदित्याहुः । तन्न । गोचरशब्दस्य जलसञ्चारस्थानपरत्वेनोपस्थपरत्वसम्भवात् । मणिपूरोत्तरमुपस्थितस्य स्वाधिष्ठानस्य त्यागायोगाच्च । **संहितार्णववामकेश्वरतन्त्रा**दिष्वैककण्ठ्येन पठितस्य गोचरपदस्य **कल्पसूत्रो**पबृंहणवशेन लिङ्गपरतया सार्थक्ये सम्भवति वैयर्थ्यायोगाच्च । तथा च **सूत्रम्**—'यादिचतुष्कं झ्मूर्‌य्यूमुच्चार्य सर्वेश्वरीवाग्देवतायै नम इति लिङ्गे'इति । व्यूहकं यावदिति तु न स्थानान्तरपरम्, अपि तु शिरोललाटाद्युक्तस्थानसमूहपरमेव । शीर्षादिललाटान्तं ललाटादिभ्रूमध्यान्तं भ्रूमध्यादिकण्ठान्तमित्यादिरीत्याऽऽधारादिप्रपदान्तमित्येवमुत्तरोत्तराङ्गावधिकत्वबोधनार्थमित्यपि सुव्याख्यम् । सूत्रे त्वेतन्न दृश्यते । अयं च न्यासो वशिन्यादीनां मानसपूजां कृत्वा कार्य इति **नव्याः** । **ज्ञानार्णवे** न्यासप्रकरणे वशिन्यादिमन्त्रोद्धारश्लोकेषु—**'वशिनीं पूजयेद्वाचां देवतां देवि सुव्रते''** इत्यादेः स्मरणादिति तदाकूतम् । तदसत् । तेषां वचनानां मन्त्रोद्धार एव तात्पर्येण पूजाविधावपि तात्पर्यकल्पने वाक्यभेदात् । मन्त्राणां पूजाकरणत्वस्य सप्तमावरणार्चनविधावुक्तस्यानुवादमात्रत्वेन पूजयेदित्यादेरुपपत्तेः ।

**'टवर्गान्ते वायुबीजं भूमिसंस्थं महेश्वरि ।**
**वामकर्णेन्दुबिन्द्वाढ्यं विमला वागधीश्वरी ॥'**

---

1. सार्धक्ययो-ख.

इति विमलामन्त्रोद्धारश्लोके पूजानाम्नानेन तत्पूजानापत्तेश्च । **तन्त्रान्तरे** क्वापि न्यासदशायां तत्पूजानुक्तेश्च । पूजाया मानसत्वांशे साधकानुपन्यासाच्चेति न किञ्चिदेतत् ॥ १३७-१३७$\frac{१}{२}$ ॥

इत उत्तरमावश्यकानां षोढान्यासादीनामुत्तरार्धे वक्ष्यमाणत्वात्तानपहाय तत्र वक्ष्यमाणं सगुणध्यानमाह–तत इत्यादिभिर्द्वाविंशत्या । तत्र श्रुतौ **'सर्वलक्ष्मीमयीम्'** (१/१६०) इत्यास्याग्रे सर्वलक्षणसम्पन्नामिति यद्विशेषणं तदादौ विवृणोति–

**ततः पद्मनिभां देवीं बालार्ककिरणारुणाम् ॥ १३८ ॥**
**जपाकुसुमसंकाशां दाडिमीकुसुमोपमाम् ।**
**पद्मरागप्रतीकाशां कुङ्कुमोदकसन्निभाम् ॥ १३९ ॥**
**स्फुरन्मुकुटमाणिक्यकिङ्किणीजालमण्डिताम् ।**
**कालालिकुलसंकाशकुरलालकसंकुलाम् ॥ १४० ॥**
**प्रत्यग्रारुणसंकाशवदनाम्भोजमण्डलाम् ।**
**किञ्चिदर्धेन्दुकुटिलललाटमृदुपट्टिकाम् ॥ १४१ ॥**
**पिनाकधनुराकारभ्रूलतां परमेश्वरीम् ।**
**आनन्दमुदितोल्लोललीलान्दोलितलोचनाम् ॥ १४२ ॥**
**स्फुरन्मयूखसंघातविलसद्धेमकुण्डलाम् ।**
**सुगण्डमण्डलाभोगजितेन्द्वमृतमण्डलाम् ॥ १४३ ॥**
**विश्वकर्मादिनिर्माणसूत्रविस्पष्टनासिकाम् ।**
**ताम्रविद्रुमबिम्बाभरक्तोष्ठीममृतोपमाम् ॥ १४४ ॥**
**स्मितमाधुर्यविजितमाधुर्यरससागराम् ।**
**दाडिमीबीजवज्राभदन्तपङ्क्तिविराजिताम् ॥ १४५ ॥**
**रत्नबीजजगद्धासिजिह्वामलसभाषिणीम् ।**
**अनौपम्यगुणोपेतचिबुकोद्देशशोभिताम् ॥ १४६ ॥**
**कम्बुग्रीवां महादेवीं मृणालललितैर्भुजैः ।**
**रक्तोत्पलदलाकारसुकुमारकराम्बुजाम् ॥ १४७ ॥**
**कराम्बुजनखज्योत्स्नावितानितनभस्थलाम् ।**
**मुक्ताहारलतोपेतसमुन्नतपयोधराम् ॥ १४८ ॥**
**त्रिवलीवलसंयुक्तमध्यदेशसुशोभिताम् ।**
**लावण्यसरिदावर्ताकारनाभिविभूषिताम् ॥ १४९ ॥**
**अनर्घ्यरत्नघटितकाञ्चीयुक्तनितम्बिनीम् ।**
**नितम्बबिम्बद्विरदरोमराजिवराङ्कुशाम् ॥ १५० ॥**

कदलीललितस्तम्भसुकुमारोरुमीश्वरीम् ।
माणिक्यमुकुटाकारजानुद्वयविराजिताम् ॥ १५१ ॥
लावण्यकदलीतुल्यजङ्घायुगलमण्डिताम् ।
गूढगुल्फपदद्वन्द्वां प्रपदाजितकच्छपाम् ॥ १५२ ॥
तनुदीर्घाङ्गुलीभास्वन्नखचन्द्रविराजिताम् ।
शीतांशुशतसंकाशकान्तिसन्तानहासिनीम् ॥ १५३ ॥
लौहित्यजितसिन्दूरजपादाडिमरागिणीम् ।
रक्तवस्त्रपरीधानां *पाशाङ्कुशकरोद्यताम् ॥ १५४ ॥
रक्तपुष्पनिविष्टां तां रक्ताभरणभूषिताम् ।
चतुर्भुजां त्रिनयनां पञ्चबाणधनुर्धराम् ॥ १५५ ॥
कर्पूरशकलोन्मिश्रताम्बूलापूरिताननाम् ।
करण्डवाहिनेन्द्रेण दत्तताम्बूलपत्रिकाम् ॥ १५६ ॥
महामृगमदोद्दामकुङ्कुमारुणविग्रहाम् ।
सर्वशृङ्गारवेषाढ्यां सर्वालङ्कारभूषिताम् ॥ १५७ ॥
ब्रह्मविष्णुशिरोरत्ननिघृष्टचरणाम्बुजाम् ।
जगदाह्लादजननीं जगद्रञ्जनकारिणीम् ॥ १५८ ॥
जगदाकर्षणकरीं जगत्कारणरूपिणीम् ।
सर्वमन्त्रमयीं देवीं सर्वसौभाग्यसुन्दरीम् ॥ १५९ ॥
सर्वलक्ष्मीमयीं नित्यां परमानन्दनन्दिताम् ।

पद्मनिभां संकोचविकासात्मकरूपद्वयवतीम् । बालार्ककिरणाद्यैः पञ्चभिरुपमानैरेतल्लभ्यते—यद्विलक्षणरक्तिमाभिन्नप्रकाशात्मकस्निग्धबहुललावण्यं देव्या इति । कालैर्नीलैरलिकुलतुल्यैः कुरलैः संकुचिताग्रैरलकैः संकुलां व्याप्ताम् । प्रत्यग्रारुण उद्यत्सूर्यः । किञ्चिदर्धेन्दुरष्टमीचन्द्रो न तु द्वितीयादिस्थः । पिनाकाख्यं धनुः शैवम् । विश्वकर्मकृत आदिनिर्माणे यत्सूत्रं तन्तुस्तद्वद्विस्पष्टा, ऋज्वी नासा यस्यास्ताम् । गृहादिनिर्माणे प्रथमत ऋजुब्रह्मसूत्रनिक्षेपस्य दर्शनात् । यद्वा विश्वमेव कर्म कार्यं तस्याऽऽदिनिर्माणे यानि सूत्राणि सूचकवाक्यानि वेदास्ते श्वासरूपेण विस्पष्टा यस्यां तादृशी नासा यस्यास्ताम् । यस्य निःश्वसितं वेदा इति **श्रुतेः** । वेदानादौ निर्माय ततस्तैरेव सृष्टिरुत्पादितेत्यपि सिद्धान्ताच्च । ताम्रं नेपालदेशोत्थम् । तस्यैवोत्तमत्वात् । ओष्ठावच्छेदेनामृतोपमाम् । स्मितमाधुर्येण मन्दहासलक्ष्मीधौरेयेण । दाडिमीबीजमेव यदि वज्रं हीरकाख्यं रत्नं स्यात्तदा तत्तुल्या दन्ताः स्युः । यद्वा वज्रं कुलिशं दार्ढ्यार्थमेषोपमा । **'अपि सञ्चालिता दन्ता जायन्ते वज्रसन्निभा'** इति **वैद्यके**

---

* अत्र व्याख्यानानुरोधेन पाशाङ्शलसत्करामिति पाठो ज्ञेयः ।

प्रयोगदर्शनात् । भुजैर्लक्षिताम् । इत्थंभूतलक्षणे तृतीया । वितानमुल्लोचाख्यं वस्त्रमस्य सञ्जातं वितानितम् । त्रिवलीनां बलेनैव समायुक्तो यो मध्यदेशः कटिभागस्तेन सुशोभिताम् । एतेन मध्यस्य सौक्ष्म्यं त्रिवलीनां कनकपट्टिकारूपत्वं च ध्वन्यम् । आवर्तोऽम्भसां भ्रमः । नितम्बस्य बिम्बं मण्डलमेव स्थूलत्वाद्द्विरदस्तस्य रोमराजिरेव वरोऽङ्कुशो यस्यास्ताम् । माणिक्यमयं मुकुटं टोपिका । प्रपदेन पादाग्रेणाऽऽसमन्ताज्जितः कच्छपः कूर्मो यया । पाशाङ्कुशाभ्यां लसन्तौ करावूर्ध्वस्थितौ वामदक्षौ यस्याः । पञ्च बाणान्धनुश्च दक्षवामाभ्यामधःकराभ्यां धारयतीति तथा । तदुक्तं **संहितायाम्**–

**'कमलाकारसम्पन्नाः पञ्च बाणा मनोहराः ।**
**मधुलिङ्गुणसम्पन्नमैक्षवं हि शरासनम् ॥**
**प्रवालवल्लीघटितः पाशः क्षौमगुणान्वितः ।**
**चन्द्ररेखासमः स्वच्छः सृणिराकर्षणक्षमः ॥**
**दक्षिणाधःकरे बाणान्वामाधस्तु शरासनम् ।**
**वामोर्ध्वे पाशमारक्तं दक्षोर्ध्वे तु सृणिं परम् ॥'**

इति । पञ्च बाणास्तु **कादिमते**–

**'कमलं कैरवं रक्तं कह्लारेन्दीवरे तथा ।**
**सहकारकमित्युक्तं पुष्पपञ्चकमीश्वरि ॥'**

इति । तेन कमलान्येवाऽऽकारा इति **संहिता**वाक्ये विग्रहः । अङ्कुशस्तु सौवर्ण इति **गुरुमुखागमः** । स्पष्टमन्यत् । ईदृशीं नित्यां महानित्यां त्रिपुरसुन्दरीनाम्नीं स्मृत्वेत्युत्तरेणान्वयः ॥ १३८-१५९$\frac{१}{२}$

**महात्रिपुरमुद्रां तु स्मृत्वाऽऽवाहनरूपया ॥ १६० ॥**
**विद्ययाऽऽवाह्य सुभगे नमस्कारादियुक्तया ।**
**पूर्वोक्तया साधकेन्द्रो महात्रिपुरसुन्दरीम् ॥ १६१ ॥**
**चक्रमध्ये तु सञ्चिन्त्य ततः पूजां समारभेत् ।**

महात्रिपुरमुद्रां त्रिखण्डाख्यां मुद्रां बद्ध्वेति शेषः । पूर्वोक्तावाहनविद्ययाऽन्ते नमस्कारादेर्नम इहाऽऽगच्छेति वाक्यस्य योजनं कृत्वा चक्रस्य मध्ये बिन्दुस्थाने देवीमावाह्य बिन्दुस्थां पुनरपि ध्यात्वा पूजामारभेतेति यथाश्रुतं केचिद् व्याचक्षते । **अन्ये** तु–महात्रिपुरमुद्रां संक्षोभिण्यादियोन्यन्तमुद्रानवकं मूलाधारादिब्रह्मरन्ध्रान्तस्थान-नवके स्मृत्वाऽऽवाहनविद्याया अन्ते सुभगे नम इति पञ्चाक्षरीं संयोज्य देवीमावाह्य पूजयेदित्यर्थ इत्याहुः । **नव्यास्तु**–**'आवाह्य चक्रमध्ये तु विद्यया हि त्रिखण्डया'** इति । **ज्ञानार्णवे** चक्रमध्य इति पदेन पुष्पसञ्चयगर्भिताञ्जलिनिर्मितत्रिखण्डामुद्रामध्य-

खण्डात्मकत्रिकोणचक्रमध्यमुच्यते । तेन पुष्पेष्वाहूय तत्र मूर्तिं प्रकल्प्य तां पीठे पुष्पाञ्जलिदानेन निविष्टां सञ्चिन्त्य पूजयेदिति वदन्ति । युक्तं चैतत् । आवाहनस्य परिच्छिद्यावेक्षणरूपत्वेन परिच्छेदकमूर्तिसापेक्षत्वात् । मूर्तिकल्पनस्य च मूर्तिविद्याकरणकत्वस्य मूर्तिविद्याम्नानान्यथानुपपत्त्याऽऽवश्यकतया हृदन्तःस्थितचैतन्यमहसो बहिर्निःसारणेन मन्त्रेण मूर्तिं परिच्छिन्नतामापाद्य पीठे निवेशनस्यैवाऽऽवाहनपदार्थत्वात् । अवदानादिप्रदानान्तस्य बह्ववयवकस्याप्येकपदार्थत्वदर्शनात् । ततश्च पूर्वैः पुरातनैर्गुरुभिरुक्तया वक्ष्यमाणमूर्तिविद्यया चक्रमध्येऽञ्जलिमध्यस्थत्रिकोणचक्रे सञ्चिन्त्य मूर्तिं प्रकल्प्याऽऽवाहनविद्यया बिन्दावावाह्य पूजयेदित्यन्वयः । पाठक्रमस्यार्थक्रमेण बाधादिति व्याख्येयम् । तेन **कल्पसूत्रै**कवाक्यताऽपि सम्पद्यते । वस्तुतस्तु–सर्वतो व्याप्ताया अपि परशिवदीप्तेः स्वबुद्ध्यनुसारेणैकदेशमात्रग्रहणस्यापि परिच्छिन्नतापादनरूपत्वेनाऽऽवाहनपदवाच्यत्वसम्भवेन न मूर्तिकल्पनमावाहनपदार्थस्यावयवः । ततश्च त्रिखण्डायामान्तरं तेजो नमोन्तयाऽऽवाहनविद्ययाऽऽनीय पुष्पद्वारा बिन्दौ निक्षिप्य तत्र ध्यानश्लोकोक्तरूपां मूर्तिं सञ्चिन्त्य पूजयेदित्येवाक्लिष्टोऽर्थः । मूर्तिविद्यायास्त्वेतत्तन्त्ररीत्या न सञ्चिन्तनाङ्गत्वम् । अत एव तस्याः पूर्वमनुद्धारः संगच्छते । उत्तरतन्त्रे तदुद्धारस्तु न्यासे विनियोगार्थः । न च उत्तरतन्त्रे तामुद्धृत्य, **'मूर्तिविद्या च सा देवि सप्तमी परिकीर्तिता'** (७/४) इति संज्ञाकरणं मूर्तिकल्पने विनियोगज्ञापनैकफलकं वक्तव्यमिति वाच्यम् । **'आधारे विन्यसेन्मूर्तिम्'** (७/७) इत्यादिप्रदेशेषु व्यवहारार्थत्वेन संज्ञायाः साफल्येनान्यथासिद्धेः । तस्माद् **अर्थरत्नावली**कृदुक्तो नमस्कारेण युक्तयेति पाठ एव स्वीकार्यः । इह पूजाशब्देन पञ्च वा दश वा षोडश वा चतुःषष्टिर्वोपचाराः समुदिता अभिधीयन्ते । तेन शक्तिभेदेन व्यवस्थितो विकल्पः । ध्यानावाहनादिकतिपयपदार्थान्तर्भावानन्तर्भावाभ्यां तन्त्रभेदेन षोडशादिसंख्याया बहुरूपत्वेऽपि सञ्चिन्त्याऽऽवाह्येतिपदाभ्यां ध्यानावाहनयोः पूजातः पृथङ्निर्देशादेव ज्ञापकात् **तन्त्रराजा**दिषु गणितः पाद्यार्घ्यादिक्रम एवेहाऽऽदर्तव्यः । ज्ञापकान्तरं चेह पटलान्ते वक्ष्यामः ॥ १६०-१६१$\frac{१}{२}$ ॥

> **शिवाग्निबिन्दवो देवि दिनकृद्वह्निबिन्दवः ॥ १६२ ॥**
> **युगपत्क्रमरूपेण योजनीया महेश्वरि ।**
> **मायार्धेन्दुकलायुक्तं बीजयुग्मं यदुत्थितम् ॥ १६३ ॥**
> **मायालक्ष्मीमयं तेन यावत्पूज्यास्तु मातरः ॥**

शिवो हकारः । अग्निर्वह्निश्च रेफः । दिनकृच्छब्देन शकारः । शकाराधिकारे– **'दिनकृच्छयनं शास्ता सुभगा विस्फुलिङ्गिनी'** इति **कोशात्** । माया तुर्यस्वरः । स शिवाग्न्योर्दिनकृद्वह्न्योश्च परतो देयस्ततो बिन्द्वर्धेन्दुकलाः । ईदृशक्रमेणोत्पन्नं यद्बीजयुग्मं मायालक्ष्मीनामकं ह्रीं श्रीमित्याकारकं तेन सर्वा मातरः पूज्याः । यावदिति साकल्यार्थकमव्ययम् । इदं च बीजद्वयं तारद्वयमिति **तान्त्रिकै**र्व्यवह्रियते । अस्या

द्वितार्याः शक्तिपूजामात्रे विनियोगात्पुंदेवतापूजायां स्त्रीदेवत्यन्यासादौ वा न विनियोगः । शक्तिपूजायामपि यत्र विशिष्य मन्त्रान्तरविधिर्यथा वशिन्यादीनां कामेश्वर्यादीनां च पूजायां तत्रापि न तारद्वयप्रवृत्तिः । अनाकाङ्क्षितत्वादेव । विशेषविहितेन सामान्यस्य बाधाच्च । अत एव कामाकर्षिण्यादौ स्वराणां विधानेन तारद्वयबाधे प्राप्ते पुनर्विधानं समुच्चयार्थमुपपद्यत इति तु न्यायसिद्धोऽर्थः । **तन्त्रान्तरे पद्धतिकारा**स्तु सर्वत्र द्वितारं विनियुञ्जते । **कल्पसूत्रे** तु– सर्वेषां मन्त्राणामादौ त्रितारीसंयोगः । त्रितारी वाङ्मायाकमलाः' इत्युक्तम् । तत्रापि यागमन्दिरप्रवेशोत्तरमेवास्य पाठस्ततः प्राक्कृत्यमन्त्रेषु न तद्योग आवश्यक इति मन्तव्यम् ॥ १६२-१६३$\frac{1}{2}$ ॥

पूजनीया देवता मन्त्रशेषं चाऽऽह–

**त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी ॥ १६४ ॥**
**श्रीर्मालिनी च सिद्धाऽम्बा महात्रिपुरसुन्दरी ।**
**प्रकटाश्च तथा गुप्तास्तथा गुप्ततराः पराः ॥ १६५ ॥**
**नवधा चक्रयोगिन्यो नामभिस्ताः समर्चयेत् ।**

त्रिपुरादीनि नव पदानि त्रैलोक्यमोहनादिचक्रेश्वरीणां नामधेयानि । त्रिपुरेशीत्यत्र त्रिपुरेति भिन्नं पदम् । तदिदमीशीत्यादिषु सप्तसु पदेषु विशेषणत्वेनान्वितं समस्यते । तेन पूर्वनिपातः पुंवद्भावश्च । श्रीपदेन सह समासे तु न पुवंद्भावः । प्रियादिगणे तस्य पाठाङ्गीकारात् । पुरवासिनीपदे विशेषणत्वेनान्वितमपि न समस्यते । त्रिशब्दः पुरा पूर्वभागे यस्याः सा त्रिपुरेति तदर्थात् । तेन त्रिपुरवासिनीति नामधेयं सिध्यति । तेनायमर्थः सम्पन्नः–त्रिपुरा-१, त्रिपुरेशी-२, त्रिपुरसुन्दरी-३, त्रिपुरवासिनी-४, त्रिपुराश्रीः-५, त्रिपुरमालिनी-६, त्रिपुरसिद्धा-७, त्रिपुराम्बा-८, महात्रिपुरसुन्दरीति नव चक्रेश्वरीणां नामानि । प्रकटा इत्यादिकं तु तत्तच्चक्रस्थितावरणदेवताना-मणिमासिद्ध्यादियोगिनीनां समष्टिरूपं नाम । परा इति पदेन सम्प्रदायाः कुलकौला निगर्भा रहस्या अतिरहस्याः परापररहस्या इति षण्णां नाम्नां संग्रहः । तन्त्रान्तरेऽष्टमनवमावरणदेवतानां परापररहस्याः परापरातिरहस्या इति नामद्वयं स्मर्यते । तेन विकल्पः । चक्रयोगिन्य इत्यत्र समूहवाचकचक्रपदेनैतद्ध्वनितम् –योगिनीसमष्टिवाचकप्रकटादिपदोत्तरमेव योगिनीपदस्य प्रयोगो नैकैकव्यक्ति-वाचकाणिमादिपदोत्तरमिति । ताश्चक्रेश्वरीश्चक्रयोगिनीश्च । नामभिरिति त्रिपुरादिनामभिः प्रकटादिनामभिरणिमादिनामभिश्चेत्यर्थः । ततश्चाऽऽदौ तारद्वयं ततस्तत्तन्नाम तदन्ते सप्ताक्षरीति मन्त्रकल्पनाप्रकारः । त्रिपुरादिपदोत्तरं चक्रेश्वरीपदं प्रकटादिपदोत्तरं योगिनीपदमणिमादिपदोत्तरं सिद्धिपदं कामाकर्षिण्यादिपदोत्तरं कलापदं च प्रयोक्तव्यमित्यादिकं तु सम्प्रदायसिद्धं ज्ञापकसिद्धं चेत्यपि तत्र तत्र व्यक्तीभविष्यति ॥ १६४-१६५ ॥

अथ प्रकटादियोगिनीनां विशिष्य नामधेयानि मन्त्रघटनार्थमुद्दिशन्नखिलोपसंहारेण स्वात्मावशेषविभावनां प्रत्यनुगुणत्वात् 'प्रथमं चक्रं त्रैलोक्यमोहनं भवति' इत्यादि-**श्रुति**गतप्रथमादिपदानुगुणत्वात् संहारक्रमेणाऽऽवरणपूजाया मुख्यत्वं च ध्वनयन्नाह–

**अणिमां पश्चिमद्वारे लघिमामपि चोत्तरे ॥ १६६ ॥**
**पूर्वद्वारे तु महिमामीशित्वाख्यां तु दक्षिणे ।**
**वशित्वाख्यां तु वायव्ये प्राकाम्यामीशदेशके ॥ १६७ ॥**
**भुक्तिसिद्धिं तथाऽऽग्नेय्यामिच्छासिद्धिं तु नैर्ऋते ।**
**अधस्तात्प्राप्तिसिद्धिं तु सर्वकामां तथोर्ध्वतः ॥ १६८ ॥**
**एवमेता महादेव्यो देवि सर्वार्थसिद्धिदाः ।**

चतुरश्रप्रथमरेखायामणिमादयो दश सिद्धयः पूज्याः । तास्वणिमादिचतुष्टयमाद्यं पश्चिमादिदक्षिणान्तदिक्षु, वशित्वादिकमन्त्यं चतुष्टयं तु वाय्वादिनिर्ऋत्यन्तविदिक्षु । अवशिष्टद्वयमधरोर्ध्वयोर्दिशोरिति विवेकः । अत्र देवतान्तरपूजायां सिद्धं पूज्य-पूजकयोर्मध्यं प्राचीति नियममेव क्लृप्तत्वादिहापि **केचिदा**द्रियन्ते । अन्ये तु लोकसिद्धामेव **प्राची**माश्रयन्तो वदन्ति–यदा पश्चिमाभिमुखः पूजकस्तदा देवीपृष्ठतः पश्चिमं तत्पुरतः पूर्वम्, यदा तु पूर्वाभिमुखस्तदा देवीपुरतः पश्चिमं तत्पृष्ठतः पूर्वम्, इतरदिङ्मुखपक्षे पूर्वाभिमुखपूजावदेव दिग्व्यवस्थेति **गुरुमुखाम्नायः** । ततश्च पश्चिमाभिमुखपूजायां देव्याः पृष्ठभागेऽणिमासिद्धिर्देव्या वामभागे लघिमासिद्धि-रित्यादि । तयोर्मध्यकोणे वशित्वा । लघिमामहिमयोर्मध्ये प्राकाम्येत्यादिरीत्या पूजनमितरदिगभिमुखपूजायां तु देव्याः पुरतोऽणिमा, दक्षिणभागे लघिमा, तयोर्मध्ये वशित्वेत्यादिक्रमेण पूजनमिति । तदुभयं **तन्त्रान्तरा**दर्शनप्रयुक्तस्य निजदोषस्य श्रीदेशिकचरणेष्वारोपमात्रम् । तथा च **ज्ञानार्णवे** स्मर्यते–

**'उत्तराशामुखो देवि यदा चक्रं समुद्धरेत् ।**
**उत्तराशा तदा देवि पूर्वाशैव निगद्यते ॥**
**ईशानकोणं देवेशि तदाऽऽग्नेयं न संशयः ।**
**पश्चिमाभिमुखो मन्त्री यदा चक्रं समुद्धरेत् ॥**
**पश्चिमाशा तदा ज्ञेया पूर्वाशैव न संशयः ।**
**वायुकोणं तदाऽऽग्नेयमीशानं राक्षसं भवेत् ॥**
**दक्षिणाभिमुखो मन्त्री यदा चक्रं समुद्धरेत् ।**
**पूर्वाशैव तदा दक्षा रक्षःकोणं तु वह्निदिक् ॥'**

इति । **कुलार्णवेऽपि**—

**'यदाशाभिमुखो मन्त्री त्रिपुरां परिपूजयेत् ।**
**देवीपश्चात्तदा प्राची प्रतीची त्रिपुरापुरः ॥'**

इति । तेन नित्यकाम्योभयरूपपूर्वाभिमुख्येन वा द्वितीयपटले वक्ष्यमाणेन कामनाभेदप्रयुक्तदिगन्तराभिमुख्येन वा क्रियमाणायां सर्वस्यामपि त्रिपुरसुन्दरीपूजायां 'पूज्यपूजकयोर्मध्यं प्रतीची' इति नियमः पर्यवसन्नः । ततश्च देव्याः पुरतोऽणिमा-सिद्धिः । देवीदक्षिणभागे लघिमा । अनयोर्मध्यकोणे वशित्वेत्याद्याकारक एकरूप एव नियमो ज्ञेयः । अधस्तात्, निर्ऋतिवरुणयोर्मध्ये । ऊर्ध्वतः, ईशानपूर्वयोर्मध्ये । तदुक्तं **तत्त्वविमर्शिन्याम्**—

**'इन्द्रेशानदिशोर्मध्ये स्थानमूर्ध्वस्य कीर्तितम् ।**
**निर्ऋत्यम्बुपयोर्मध्ये स्थानमन्यस्य कीर्तितम् ॥'**

इति । ततश्च पश्चिमनिर्ऋत्योर्मध्ये प्राप्तिसिद्धिं सम्पूज्येन्द्रेशानयोर्मध्ये सर्वकामां सिद्धिं पूजयेदिति पर्यवस्यति । ये तु **पद्धतिकारा** अनयोः सिद्धयोः स्थान-व्युत्क्रममिच्छन्ति तेषां मूलदेव्यादिकन्यासे मुद्रान्यासविधायकं वाक्यं भ्रममूलम् ।

**'पुरः सव्ये च वंशे च वामे चैवान्तरालके ।**
**ऊर्ध्वाधो दश मुद्राश्च ..........** ॥'(८।८४)

इति विधावूर्ध्वदिशः प्रथमं कीर्तनात् । पूर्वदक्षपश्चिमोत्तरेष्वन्तरालचतुष्के चोर्ध्वमधश्च दश मुद्रा न्यसेदिति तदर्थात् । न चैतावता विकल्प इति भ्रमितव्यम् । वचनबलान्मुद्रान्यास एव तादृशक्रमस्याङ्गीकारेऽपि पूजायां तदाश्रयणे मानाभावात् । ऊर्ध्वाधोदिशोः क्रमव्युत्क्रमयोर्व्यवस्थितविकल्पस्य **प्रपञ्चसारा**दौ दृष्टत्वाच्च । तस्मादिह तन्त्रे भूगृहतृतीयरेखायां कण्ठरवेण पूजानाम्नानेऽपि न्यासज्ञापितायां तत्पूजायां सिद्धिषु क्लृप्त एव क्रमो युक्तः । अस्तु वा धर्मिग्राहकमानेनैव दिशोः क्रमस्य सिद्धत्वान्मुद्रापूजायामपि न्यासक्रम एव । सिद्धिपूजायां त्वधोदिश्येव प्राप्तिसिद्धिरिति । अत्राणिमादिशब्दत्रयं डाबन्तं नेमन्नन्तम् । सिद्धिपदेन सह समासेऽपि न पुंवद्भावः **सम्प्रदायात्** । ईशित्वावशित्वाशब्दावपि प्राकाम्याशब्द-वट्टाबन्तावेवेत्यप्याहुः । भुक्तिसिद्धिं तथाऽऽग्नेय्यामित्यादिज्ञापकात्सिद्ध्यन्ता इति **कल्पसूत्रा**च्च सिद्धिशब्दो मन्त्रावयव एव ॥ १६६-१६८$\frac{१}{२}$ ॥

चतुरश्रद्वितीयरेखायां पूजनीया अष्टौ मातृरुद्दिशति—

**ब्रह्माणीं पश्चिमद्वारे माहेशीमपि चोत्तरे ॥ १६९ ॥**
**पूर्वद्वारे तु कौमारीं दक्षिणे वैष्णवीमपि ।**
**वाराहीमपि वायव्ये तथैन्द्रीमैशदेशके ॥ १७० ॥**

**चामुण्डामपि चाऽऽग्नेये महालक्ष्मीं च नैर्ऋते ।**
**मातृरष्टौ महेशानि पूजयेत्सर्वकामदाः ॥ १७१ ॥**

पूर्ववदेव दिग्भेदेन द्वे चतुष्के पूज्ये । ऊर्ध्वाधोदेवते तु न स्तः । तथा च मूलदेव्यादिन्यासप्रकरणे वक्ष्यति–

**'................. ऊर्ध्वाधोवर्जितं पुनः ।**
**ब्रह्माण्याद्यष्टकं दक्षजङ्घायां ताश्च पूर्ववत् ॥'** (८/८४-८५)

इति । अत्र पूजनं नाम सम्प्रदायात्पुष्पादेर्बिन्दोश्च प्रक्षेपः । तत्र पुष्पादेः सकृत्प्रक्षेपस्त्रिभिस्त्रिभिर्बिन्दुभिरेकैकं तर्पणमित्येव बहुवचनं त्रिधा यजेदिति **ज्ञानार्णवे** बहुवचनत्रिधाशब्दद्वये **'तर्पणानि मुखे देव्यास्त्रिवारं मूलविद्यया'** इति **स्वतन्त्रतन्त्र**वचनमप्युपष्टम्भकं सम्भवति । सोऽयमुभयप्रक्षेपः पूजनतर्पणोभयात्मक इति तन्मन्त्रे द्वयोरप्युल्लेखः । 'ह्रीं श्रीं ब्रह्माणीपादुकां पूजयामि तर्पयामि' इत्यादयो मन्त्रा भवन्ति । कर्मकारकवाचकस्य पदस्य तन्त्रेण क्रियाद्वयेनान्वयोपपत्तेः । अत एव स्मार्तकर्मसु–'गौरीमावाहयामि स्थापयामि पूजयामि नमः' इत्यादीन् मन्त्रान् कल्पयन्ति शिष्टाः । **नव्या**स्तु–'ब्रह्माणीपादुकां पूजयामि ब्रह्माणीपादुकां तर्पयामी'ति प्रयोगमाहुः । तत्पक्षे किमेतौ द्वौ मन्त्रावुत सर्वोऽयमेको मन्त्र इति विचार्यम् । आद्ये मानाभावः । द्वितार्याः प्रत्येकं योजनापत्तिश्च । दक्षिणहस्तस्यान्यत्र व्यापृतता-दशायामेव वामहस्तस्य प्राप्तत्वादिह मन्त्रभेदेन पूजातर्पणयोः कालभेदे सिद्धे तर्पणेऽपि दक्षिणेत[र]स्या[प्राप्तिः ।] न च तर्पणे तत्त्वमुद्राया] एव करणत्वेन विधानाद्वामहस्तप्रसक्तिरिति वाच्यम् ।

**'तर्पणं पूर्ववद्दद्यात्त्रिवारं तत्त्वमुद्रया ।**
**अङ्गुष्ठानामिकाभ्यां तु तत्त्वमुद्रेयमीरिता ॥'**

इति । **तन्त्रान्तरे** वचनदर्शनेन तदप्रसक्तेः ।

**'न चाङ्गुष्ठानामिकायोगाद्वामहस्तस्य पार्वति ।**
**तर्पयेत्परमेशानीं..........................॥'**

इति **स्वतन्त्रतन्त्र**वचनेन तस्योपसंहार इति वाच्यम् । अस्य पूजनतर्पणयौगपद्ये न्यायप्राप्तस्य वामहस्तस्यानुवादकत्वेनोपपत्तेरुपसंहारकत्वायोगात् । अत एव 'सव्यैः पाणिभिस्तृणानि निरस्यन्ति' इति छन्दोगानां सूत्रे बहिष्पवमानीयप्रसर्पणेऽध्वर्य्वाद्यन्वा-रम्भणे दक्षिणपाणीनां व्यापृतत्वादेव सव्यप्राप्तेः सव्यैरित्यनुवादमात्रम् । तेन तात्कालिकप्रवृत्तहोमोऽपि सव्यपाणिनैवेति **सामवेदि**कानां सिद्धान्तः संगच्छते । अपि च तर्पयामीत्येतदाकाङ्क्षयैव कल्प्यमानो द्वितीयान्तपदस्य प्रक्षेपो हि ब्रह्माणीमित्या-

कारकस्यैवाऽऽपद्येत, न पादुकापदगर्भितो मानाभावात् । पादुकां पूजयामीति [1]वोच्चरेदिति **संहिता**वचनेन क्रियामात्रस्यैव तर्पणमन्त्रे लाभात् । अन्त्ये सकृदुच्चरितस्यैवोभयाकाङ्क्षापूरकत्वेन तदावृत्तौ मानाभावः । वस्तुतस्तु– उक्तसंहितावाक्ये होमसमभिव्याहारात्पुरश्चरणाङ्गतर्पण एव तर्पयामीतिपदप्रक्षेपः । अस्य तु तर्पणस्य पूजयतिनैव निर्देशस्य जातत्वान्न पुनस्तद्वाचकपदापेक्षा । अत एव पूजयेदित्येव विधिवाक्यानि दृश्यन्ते न पुनस्तर्पयेच्चेति । यत्तु **नव्याः–'पुष्पं समर्पयेद्देवि मुद्रया ज्ञानसंज्ञया'** इति वचनस्य **'अनया पुष्पपूजा स्यात्तथा तर्पणपूजनम्'** इत्यनेनोपसंहारात्पुष्पपूजायां तर्पणसाहित्यलाभ इत्याहुस्तत्र पुष्पतर्पणपूजनयोर्द्वयोरपि मूलविद्याकरणकत्वमात्रविधानात्कथमुपसंहार इति विचार्यम् । अस्तु सम्प्रदायादेव साहित्यप्राप्तिस्तथाऽपि साहित्यस्यैककालिकत्वरूपतया समानकालिकाङ्गत्वबोधने तद्वाक्यस्य पर्यवसानात्प्रधानभूतपुष्पपूजाबोधकपूजयामिपदस्यैव प्रयोगो न तर्पयामीत्यस्य । अत एव नव्यैरेव केवलतर्पणमधिकृत्योक्तम्–विद्यमानेऽपि पुष्पाक्षतसाहित्ये तर्पणोपसर्जनत्वेन तर्पणैकप्रयोजनकत्वेन स्वतन्त्रपूजात्वाभावान्न तर्पयामीति प्रयोगे पूजयामिपदसाहित्यमिति । किञ्च तर्पणमर्यादयेदं पूजावयवत्वात्पूजयतिनैव निर्देष्टुं शक्यम् । तथा च **कल्पसूत्रम्–**'सर्वचक्रदेवतार्चनानि वामकराङ्गुष्ठानामिकासन्दष्टद्वितीयशकलगृहीतश्रीपात्रप्रथमबिन्दुसहपतितैर्दक्षिणकराक्षतपुष्पक्षेपैः कुर्यात्' इति । न चास्य श्यामाप्रकरणे पाठान्न ललितापरत्वम् । एतदुत्तरत्र ललिताजापी नेक्षुदण्डं भक्षयेदित्यादिना ललितोपास्त्यङ्गानां कतिपयानां विधास्यमानतया ललिताप्रकरणस्योत्तरत्राप्यनुवृत्तेः । न च तथाऽप्यवान्तरप्रकरणेन तद्बाध इति वाच्यम् । असंकुचितसर्वपद**श्रुत्य**नुगृहीतवाक्येन तस्यापि बाधसम्भवात् । किञ्च तथा तर्पणपूजनमित्युक्तवाक्येऽपि तर्पणस्यापि पूजारूपत्वेन कीर्तनात्पूजयामिपदप्रयोगेणैवोभयलाभो ध्वनितः । अन्यथा 'पुष्पैः पूजयामि बिन्दुभिस्तर्पयामी'ति भवन्मते प्रयोग आपद्येत । तृप्तिकरणार्थकतर्पणपदस्य बिन्दुपरत्वसम्भवात् । मुख्यद्रव्यप्रतिनिध्युभयसाधारण्येन संस्कारादिविधीनां समानविध्यसिद्ध्यै कारणादिपदपरित्यागेन तर्पणपदप्रयोग इति सुवचत्वात् । अत एव तर्पणैः पूजयामीत्येव वा प्रयोगः स्यादिति यत्किञ्चिदेतत् । तस्माद्द्वैधपदानुग्रहाय ब्रह्माणीपादुकां पूजयामीत्येतावन्मात्रमेवोक्त्वा पुष्पं बिन्दुं च यथासम्प्रदायं प्रक्षिपेदिति युक्तम् । यदि पुनरित्थमालोच्यते– अत्युपह्वरमेवेदं ज्ञात्वा चक्रं समर्चयेदित्यधिकृत्य स्वाहा होम इत्यस्य पाठादर्चनाङ्गहोमस्यापि नैवेद्यमध्ये विधानात्तत्प्रायपाठोऽप्यर्चनाङ्गतर्पणस्यैवोपस्थापक इति तदाऽपि यत्र तर्पयेत्तेन योगिनीभि[रि]त्यादिना तर्पयतिधातुनैव तर्पणविधानं तत्रैव वा[2] तर्पणाख्यस्व

1. वोद्धरे -क. ग. ।
2. वाऽस्य –ख.

तन्त्रोपचार एव वाऽस्य विधिः प्रसरः । न च सम्प्रदायादिहापि तत्प्रसरः । पूजयतेः पुष्पप्रक्षेपमात्रवाचकत्वनिरासपूर्वकं बिन्दुप्रक्षेपसमुच्चयार्थकत्वबोधनेनान्यथासिद्धेऽ-(द्ध)स्य सम्प्रदायस्य तदग(ङ्ग)मन्त्र(न्त्रे) पदान्तरप्रक्षेपबोधनेऽपि व्यापारकल्पने मानाभावात् । अत एव **कल्पसूत्रे** प्रकृते प्रकृतिभूतमहागणपत्यावरण एतावानेव मन्त्र उद्धृतः । यदाह– सर्वत्र देवतानामसु श्रीपूर्वं पादुकामुच्चार्य पूजयामीत्यष्टाक्षरं योजयेदिति । श्रीपूर्वपादुकोत्तरं पूजयामीति योजने यदष्टाक्षरं वाक्यं निष्पद्यते तद्देवतानामसु योजयेदित्यर्थः । एतेनोच्चार्येत्यन्तेन चतुरक्षर्या विधानात्तदुत्तरं पुनर्विधीयमानमष्टाक्षरं तर्पयामिपदसहितमेव सम्पद्यत इति शङ्का परास्ता । अत एव **कल्पसूत्रे** रश्मिमालाखण्डे ललिताङ्गपादुकामन्त्रोद्धारसूत्रावयवः स्वगुरुनामतोऽष्टा-क्षरीत्युपपद्यते । अष्टाक्षरपदस्य पूजयामि तर्पयामीत्याकारकत्वेनेह परिभाषितत्वपक्षे पादुकामन्त्रे श्रीपादुकां पूजयामीत्यस्य ग्रहणानापत्तेः । तेन नामस्वित्यस्योच्चा-र्येत्यनेनान्वय इत्युत्प्रेक्षणमपि पादुकामन्त्रविरोधादेव परास्तमित्यलं विस्तरेण । परं तु ब्रह्माण्यादिपदोत्तरं मातृपदस्य प्रक्षेपो यथासम्प्रदायं निर्णेयः । इति प्रथमावरणम् ।

**तन्त्रान्तरे** मुद्राणामिहैव पूजनस्य कथनेऽपि प्रकृततन्त्रे तत्र त्रेधाविकल्पस्याष्टमे पटले वक्ष्यमाणत्वेन तया रीत्या सिद्धिमातृगणाभ्यामेवाऽऽवरणसमाप्तेः सुवचत्वात् । एतेन श्रुतौ प्रथमं चक्रं प्रकृत्य साणिमाद्यष्टकं भवति समात्रष्टकं भवति, सप्रकटं भवतीति गणद्वयस्यैव कीर्तनमुपपद्यते । ननु रेखाद्वयात्मकभूपुरपक्ष एवैतत्समञ्जसम् । एकरेखापक्षे तु सिद्धिमातृमुद्रागणानामेकस्यामेव रेखायामनन्यगतिकत्वात्पुनः पुनः पूजनं समञ्जसमेव । रेखात्रयगणत्रयपक्षे यथासंख्यन्यायेन निर्णयो युक्तः । रेखात्रयं गणद्वयमिति भवत्पक्षे तु गणद्वयपूजायाः स्थाननिर्णयानापत्तिः । यथासंख्यन्या-याभावात् । अन्यतमरेखाद्वयग्रहण आदिमध्ये मध्यान्त्य आद्यन्त्ये वा रेखे ग्राह्ये इत्यत्र विनिगमनाविरहः । चक्रन्यासे निर्णीतत्वादादिमध्ययोर्ग्रहणे तूपस्थित्वाविशेषान्मुद्रा-गणस्यापि तृतीयरेखायां पूजनापत्तिरीत चेत्, न, रेखात्रयमध्यवीथीद्वये सिद्धि-[मातृ]गणयोः पूजने दोषाभावात् । यथासंख्यन्यायानुगुण्यात् । अत एवोक्तं **सौभाग्यरत्नाकरे** पूर्णाभिषेकप्रकरणे–चतुरस्त्ररेखात्रयान्तरालगतवीथीद्वयस्थेषु सिद्धि-दशकस्थानेषु ब्राह्म्याद्यष्टकस्थानेष्वित्यादि । न चैवं सति षोडशाष्टदलपद्मयो-र्दलद्वयमध्यावकाशानामपि षोडशाष्टसंख्याकत्वाविशेषाद्वक्ष्यमाणदेवतापूजने स्थान-सन्देहापत्तिरिति वाच्यम् । अत एव ज्ञापकाद्दलद्वयमध्येऽवकाशो न कार्य इति कल्पनात् । एतेन **'योऽस्मिन्यन्त्रे महेशानि केसराणि प्रकल्पयेत्'** इत्यादिना **भूत-भैरवतन्त्रो**क्तो निषेधोऽप्युपपद्यते । यदि पुनर्मूले सिद्धिगणे मातृगणे च द्वयोर्द्वयोरेव द्वारयोरनुवादात् **तन्त्रराज**सम्मतं द्विरेखमेव भूपुरं प्रकृततन्त्रकृतामिष्टमित्येवोच्यते

तदा **तन्त्रराजो**क्तरीत्यैव रेखाद्वये गणद्वयं पूजयेत् । तयोश्च मध्य एकैको गण एवैतत्तन्त्ररीत्या प्रत्येकमावरणमित्यपि वक्ष्याम इत्यवधेयम् ॥ १६९-१७१ ॥

अथ षोडशदले पूजनीया देवता उद्दिशति–

**कामाकर्षणरूपां च बुद्ध्याकर्षणरूपिणीम् ।**
**अहंकाराकर्षिणीं च शब्दाकर्षणरूपिणीम् ॥ १७२ ॥**
**स्पर्शाकर्षणरूपां च रूपाकर्षणरूपिणीम् ।**
**रसाकर्षणरूपां च गन्धाकर्षणरूपिणीम् ॥ १७३ ॥**
**चित्ताकर्षणरूपां च धैर्याकर्षणरूपिणीम् ।**
**स्मृत्याकर्षणरूपां च नामाकर्षणरूपिणीम् ॥ १७४ ॥**
**बीजाकर्षणरूपां च तथाऽऽत्माकर्षिणीं पराम् ।**
**अमृताकर्षिणीं देवीं शरीराकर्षिणीं तथा ॥ १७५ ॥**
**षोडशारे महादेवि वामावर्तेन पूजयेत् ।**
**मायालक्ष्मीकलाभिस्तु कलाषोडशकं त्विदम् ॥ १७६ ॥**

अत्र रूपा रूपिणीत्यादयः शब्दाः श्लोकपूरणार्था नाम्नोऽनर्थकत्वद्योतनार्था वा न पुनर्नामावयवाः । कामाकर्षिणीत्येतावन्मात्रमेव नामधेयम् । वामावर्तेनेति अप्रादक्षिण्येनेत्यर्थः । देव्यग्रदलमारभ्येति तु **तन्त्रान्तर**सिद्धोऽर्थः । चतुर्दशारप्रकरणे पश्चिमादेवेति वक्ष्यमाणमप्यत्र ज्ञापकम् । अत एव पूर्वदलमारभ्येति व्याख्याऽप्यसाध्वी । सम्प्रदायादिविरोधात् । वाममार्गेणेति क्वचित्पाठः । तत्पक्षेऽप्ययमेवार्थः । ये तु **अर्थरत्नावली**कृत ईदृशात्तत्र तत्रानुवादात्सुन्दरीपूजनं वाममार्गेणैव प्रशस्तं न दक्षिणमार्गेणेत्याहुस्ते मानाभावादुपेक्ष्याः । **'सव्यापसव्यमार्गस्था, 'दक्षिणादक्षिणाराध्या'** इति **ललितासहस्रनाम**विरोधाच्च । **'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्वा जायते'** इत्यादि**श्रुत्या** नित्यस्य ऋणापाकरणस्य वाममार्गे विरहेण निन्दिततया मुक्तौ विलम्बेन च शिष्टानां तत्र निष्कम्पप्रवृत्त्ययोगाच्च । यदपि वीरद्रव्यकरणकं पूजनमेव वामो मार्ग इति व्यवहरन्ति तदपि तन्त्रानालोकनजनितभ्रमविलसितं दक्षिणमार्गार्चनेऽपि कारणादेरेव करणत्वात् । व्रीहियवयोरिव वैकल्पिकद्रव्यान्तरविधानाभावात् । गुडोदादीनां प्रतिनिधित्वेन मुख्यालाभ एव तत्राधिकारात् । **'शक्तः प्रथमकल्पस्य नानुकल्पं समाचरेत्'** इति निषेधबलेन प्रथमाधिकारिण इतरानुष्ठानायोगात् । कस्तर्हि वामो मार्ग इति चेत् । **सौभाग्यभास्करेऽस्माभि**र्निर्णीत एवेति गृहाण । मायालक्ष्मीकलाभिरिति । मायालक्ष्म्यौ पूर्वोक्तं तारद्वयम् । तस्य पुनः कीर्तनं कलाभिर्मा बाधीत्येतदर्थम् । कलातः पूर्वोच्चारणलाभार्थं च । कलाशब्द इह षोडशसंख्याकस्वरपर इति वृद्धाः । कलाषोडशकमिति । कलेत्येतासां देवीनां नाम । तच्च **सम्प्रदायान्नि**त्यापदपूर्वकम् । षोडशपदं यथासंख्यन्यायेनैकैकस्यां देव्या-

मेकैकमक्षरं क्रमेण योजयेदितिद्योतनार्थम् । तथा च 'ह्रीं श्रीं अं कामाकर्षिणी-नित्याकलापादुकां पूजयामी'त्याद्याकारका मन्त्रा भवन्ति । **केचित्** तु कलापदोत्तरं देवीपदमपि योजयन्ति । तत्रामृताकर्षिणीं देवीमिति मूलस्थं देवीपदं ज्ञापकमित्यपि सुवचम् ॥ १७२-१७६ ॥

अथाष्टदले पूजनीया देवता उपदिशति–

**अनङ्गकुसुमां पूर्वे दक्षिणेऽनङ्गमेखलाम् ।**
**पश्चिमेऽनङ्गमदनामुत्तरे मदनातुराम् ॥ १७७ ॥**
**अनङ्गरेखामाग्नेये नैर्ऋतेऽनङ्गवेगिनीम् ।**
**अनङ्गाङ्कुशां वायव्य ईशानेऽनङ्गमालिनीम् ॥ १७८ ॥**
**अष्टपत्रे महापद्मवेष्टिते वै प्रपूजयेत् ।**

महापद्मवेष्टिते षोडशदलपद्मान्तर्गतेऽष्टपत्रे । 'ह्रीं श्रीं अनङ्गकुसुमापादुकां पूजयामी'त्यादयो मन्त्राः । इति तृतीयावरणम् ॥ १७७-१७८ $\frac{१}{२}$ ॥

अथ चतुर्दशारचक्रे पूजनीया देवता आह–

**सर्वसंक्षोभिणीं शक्तिं सर्वविद्राविणीं तथा ॥ १७९ ॥**
**सर्वाकर्षणशक्तिं च सर्वाह्लादनकारिणीम् ।**
**सर्वसंमोहिनीं शक्तिं सर्वस्तम्भनकारिणीम् ॥ १८० ॥**
**सर्व[1]जम्भनशक्तिं च तथा सर्ववशङ्करीम् ।**
**सर्वरञ्जनशक्तिं च सर्वोन्मादनरूपिणीम् ॥ १८१ ॥**
**सर्वार्थसाधनीं शक्तिं [2]सर्वसम्पत्तिपूरिणीम् ।**
**सर्वमन्त्रमयीं शक्तिं सर्वद्वन्द्वक्षयङ्करीम् ॥ १८२ ॥**
**वामावर्तक्रमेणैव पश्चिमादेव दक्षिणम् ।**
**गृहीत्वा पूजयेदेता देवीस्त्रिभुवनेश्वरीः ॥ १८३ ॥**

पश्चिमाद्देव्यग्रमारभ्य । ल्यब्लोपे पञ्चमी । दक्षिणं गृहीत्वा स्वदक्षिणपूर्वादि-क्रमेण, अप्रादक्षिण्येनेति तु पर्यवसितोऽर्थः । ये तु पश्चिमाभिमुखपूजायां

---

1. भञ्जन –क. ग.
2. सर्वशक्तिस्वरूपिणी –ग.

देवीपृष्ठादारभ्य देवीदक्षिणं गृहीत्वा पूजयेत् । पूर्वाभिमुखपूजायां देवीपुरत आरभ्य दक्षिणं गृहीत्वा पूजयेदिति व्याचक्षते । तेषां महान्प्रमादः । इह 'पूज्यपूजकयोर्मध्यं प्रतीची' इति नियमस्य पूर्वमुक्तत्वेन सर्वत्रैकरूप्यसम्भवात् ॥ १७९-१८३ ॥

अथ बहिर्दशारचक्रे पूजनीया देवता उपदिशति–

**सर्वसिद्धिप्रदा देवी सर्वसम्पत्प्रदा तथा ।**
**सर्वप्रियङ्करी चापि सर्वमङ्गलकारिणी ॥ १८४ ॥**
**सर्वकामप्रदा देवी सर्वसौभाग्यदायिनी ।**
**सर्वमृत्युप्रशमनी सर्वविघ्ननिवारिणी ॥ १८५ ॥**
**सर्वाङ्गसुन्दरी देवी सर्वदुःखविमोचिनी ।**
**तथैव देवदेवेशि पुनरेवाऽऽद्यविद्यया ॥ १८६ ॥**
**द्वितीयावरणे देवि देवीदशकमर्चयेत् ।**

अत्र सर्वसिद्धिप्रदेत्यादिभिः प्रथमान्तैः पदैर्गणयित्वा, इत्याकारकं यद्देवीदशकं तदर्चयेदित्यन्वयः । तथैव वामावर्तेनैव । आद्यविद्यया मन्त्रान्तरावयवत्वेनाऽऽदिभाग एव निविशमानया द्वितार्या न तु करशुद्धिकर्या बालया वेत्यर्थ इति भ्रमितव्यम् । तत्प्रकरणस्य विच्छिन्नत्वेन तदनुपस्थितेः । पुनरस्याः कथनं तु **तन्त्रान्तरो**क्तैर्वासनावसरे ज्ञापयिष्यमाणैर्णकारादिवर्णरूपैर्मन्त्रैर्द्वितारी मा बाधीत्येतदर्थम् । तेनास्मादेव ज्ञापकात्सर्वत्र **तन्त्रान्तरो**क्तमातृकायोग आवश्यक इति ध्वनितम् । द्वितीयावरण इति । **'एवं सिध्यति देवेशि सर्वचक्रं मनोहरम्'** (१।७७) इतिपूर्वोक्तश्लोके सर्वचक्रपदेन मन्वस्रादिबिन्द्वन्तचक्रसमूहस्यैव परामृष्टत्वात्तत्र संहारक्रमेण बहिर्दशारस्यैव द्वितीयत्वादित्थमुक्तिः । एतेनोत्तरचक्रस्यान्तर्दशारस्य तृतीयत्वेन करिष्यमाणो निर्देशोऽपि व्याख्यातः । नन्वनया रीत्या बहिरन्तर्दशारयोर्द्वितीयतृतीयचक्रत्वोपपत्तावपि द्वितीयतृतीयावरणत्वं नोपपद्यत इति चेत् । अत्र मौनतुल्यमेव व्याचक्षते **प्राञ्चः** । **वयं** तु ब्रूमः– नवावरणमर्चनमिदमिति तु तन्त्रेषु घण्टाघोषः । तानि चाऽऽवरणानि पुरादिबिन्द्वन्तचक्रस्थदेवतारूपाणीति बहवः । तदनुपपन्नम् । बिन्दुदेवतायाः प्रधानत्वेन स्वस्य स्वावरणत्वायोगात् । न चैवं सति तस्या नवमयोगिनीत्वं बिन्दोर्नवमचक्रत्वं च कथमिति शङ्क्यम् । योगिनीत्वावरणदेवतात्वचक्राधिष्ठातृत्वानां समनियतत्वे मानाभावात् । अत एव षडङ्गयुवतिदेवता एव प्रथमावरणमिति **ज्ञानार्णवा**नुयायिनो **नव्याः** । एतत्तन्त्रे तु भूपुरे रेखाद्वयदेवतागणयुगलस्य पार्थक्येन गणनया बिन्दुचक्रानन्तर्भावेनैव नवावरणसंख्योपपद्यते । वृत्तत्रये **केरलसम्प्रदाये** कासाञ्चिद्देवतानां पृथक्पूजनदर्शनात्तदभिप्रायेण नवाऽऽवरणानीत्यपि **केचित्** । आयुधदेवतानां पार्थक्येनाऽऽवरणत्वकल्पनया वा सूपपादम् ।

**ऋजुविमर्शिन्याम्** 'आयुधावरणपूजामाह' इत्यवतारिकावाक्ये प्रयोगदर्शनात् । अनयाऽपि रीत्याऽऽवरणेषु प्रथमत्वादेरनियतत्वद्योतनार्थं मन्वस्रस्यैव प्राथम्ये बहिर्दशारादेर्द्वितीयत्वाद्युपपत्तिरित्याशयेन द्वितीयावरण इत्युक्तिः । यद्वा चतुर्थपटलान्ते संक्षेपार्चनप्रकारस्य मन्वस्रादिबिन्द्वन्तार्चनपक्षस्यापि कथनेन तदभिप्रायेणेयमुक्तिः । तेनाऽऽवरणपूजासमर्पणमन्त्रे–

**'अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।**
**भक्त्या समर्पये तुभ्यममुकावरणार्चनम् ॥'**

इत्यत्रामुकपदस्थाने तत्तदावरणसंख्यापदस्य प्रथमद्वितीयादिरूपस्य निवेशनीयतया भूपुरादिगणनया चतुर्थस्यापि मन्वस्रस्य संक्षेपार्चने प्रथमत्वात्प्रथमादिशब्दा एवोहनीयत्वेन ध्वनिता इति द्रष्टव्यम् ॥ १८४-१८६ $\frac{१}{२}$ ॥

अथान्तर्दशारदेवता आह–

**सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदा तथा ॥ १८७ ॥**
**सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ।**
**सर्वाधारस्वरूपा च सर्वपापहरा तथा ॥ १८८ ॥**
**सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी ।**
**पुनरेव महेशानि सर्वेप्सितफलप्रदा ॥ १८९ ॥**
**दशैव देवताः ख्याताः स्वनामसदृशोदयाः ।**
**एवमेता महादेव्यो देवि सर्वार्थसिद्धिदाः ॥ १९० ॥**
**पूर्वोक्तेन विधानेन तृतीयावरणेऽर्चयेत् ।**

स्वमात्मीयं यन्नाम तत्सदृश उदय उद्योगो यासां ताः स्वनामसदृशोदयाः । इदं च पूर्वोत्तरावरणदेवतासु सर्वासु यथायोग्यमन्वेति । नाम्नो यादृशार्थप्रतिपादकत्वं तादृशार्थविषयकोद्योगशालिन्य इति यावत् । पूर्वोक्तेन वामावर्तद्वितारीयोगादिरूपेण विधानेन प्रकारेण । तृतीयावरणे, अणिमादितो गणनया विस्तृतार्चने सप्तमेऽपि चतुर्दशारादिसंक्षिप्तार्चने तृतीयात्मके ॥ १८७-१९० $\frac{१}{२}$ ॥

अथाष्टास्रदेवतापूजामाह–

**मध्यचक्रे महेशानि शृणु पूजां यथाक्रमम् ॥ १९१ ॥**
**वशिनीमपि कामेशीं मोदिनीं विमलामपि ।**
**अरुणां जयिनीं चापि सर्वेशीं कौलिनीमपि ॥ १९२ ॥**
**एकैकं देवतानाम प्रोक्तबीजसमन्वितम् ।**
**अधस्ताद्देवदेवेशि वामावर्तेन पूजयेत् ॥ १९३ ॥**
**यावद्दक्षिणमार्गं तु रक्तपुष्पैर्महेश्वरि ।**

चक्रोद्धारदशायां हि **'शक्त्या शक्तिं विनिर्भिद्य भूयो वह्निपुरेण ते । सम्पुटीकृत्य'** (१/३१) इत्यनेन नवयोनिचक्रमादावुद्धृत्य तत्परितस्तत्तत्परितश्चान्यानि चक्राण्युद्धृतानि । अतः सर्वमध्यस्थत्वादष्टकोणमेव मध्यचक्र इत्यनेन कथ्यते । तत्र वशिन्यादिकाः शक्तीः पूजयेदिति यत्तां पूजां शृण्वित्यन्वयः । प्रतिज्ञान्तरं च तत्तन्मन्त्रोद्धारस्य बहुग्रन्थान्तरितत्वेन तत्स्मारणाय सावधानीकर्तुम् । अधस्तात्पूर्वग्रन्थे प्रोक्तानि यानि बीजानि तैः समन्वितमित्यर्थः । एकैकं देवतानाम स्वस्वाधस्ताद्भागे स्वस्वबीजसमन्वितमिति रीत्यैहैवाधस्तात्पदं योजयन्ति **केचित्** । परे तु परत्रैव योजयन्तोऽधस्ताद्देवीपुरत आरभ्य वामावर्तेन दक्षिणान्तं पूजयेत् । अत्र पूर्वादिदिक्कल्पना नास्तीति भाव इति व्याचक्षते । रक्तपुष्पैरिति त्वनुवादमात्रमिति **प्राचाम्** आशयः । वाग्देवतापूजायां रक्तपुष्पावश्यकताद्योतनायेयमुक्तिरिति तु युक्तम् ॥ १९१-१९३ $\frac{१}{२}$ ॥

अथाष्टकोणत्रिकोणमध्यवीथ्यां चतुर्दिक्ष्वायुधपूजामुपदिशति–

**पश्चिमोत्तरपूर्वाशादक्षिणाशाक्रमेण तु ॥ १९४ ॥**
**चक्रमध्ये चतुष्के तु क्रमेण परिपूजयेत् ।**
**कामबाणान्महेशानि धनुस्तत्पाशमेव च ॥ १९५ ॥**
**जम्भमोहवशस्तम्भपदैः सहितमङ्कुशम् ।**

पश्चिमोत्तरपूर्वेषु प्रत्येकमाशापदस्यान्वयः । द्वन्द्वान्ते श्रूयमाणत्वात् । चक्रयोर्मध्यं चक्रमध्यम् । उपस्थितत्वात्पूर्वोत्तरयोरष्टकोणत्रिकोणयोर्मध्यावकाश इत्यर्थः । कामस्य कामेश्वरस्य बाणान् । तत्पाशं कामेशपाशम् । तत्प्रायपाठाद्धनुरङ्कुशं च कामेश्वरसम्बन्ध्येवेह परामृश्यते । परं तु चकारात्कामेश्वर्या अप्यायुधानीह पूज्यानि । उत्तरतन्त्रे आयुधान्युपक्रम्य **'त्वदीयाश्च मदीयाश्च पुंस्त्रीवश्यविधायिनः'** (८।१६८) इत्युक्तेर्वासनाप्रकरणे– **'आश्रयाश्रयिभेदेन अष्टधाभिन्नहेतिमत्'** (६।५४) इत्युक्तेश्च ।

कामयोर्बाणांस्तयोः पाशमित्येव वा विग्रहः । कामश्च कामी चेति विग्रहे पुमान्स्त्रियेत्येकशेषः । मन्त्रानुद्धरति–जम्भेति । जम्भादिभिश्चतुर्भिः पदैः सहितं यथा तथा पूजयेत् । साहित्यं च मन्त्रद्वारकमेव । तत्प्रकारो यथा **कल्पसूत्रे–** 'बाणबीजान्युच्चार्य सर्वजम्भने(जृम्भणे)भ्यो बाणेभ्यो [नमः] धं [थं] सर्व-[सम्]मोहनाय धनुषे [आं] ह्रीं सर्ववशीकरणाय पाशाय क्रों सर्वस्तम्भनायाङ्कुशाय नम इति महात्र्यस्रबाह्यचतुर्दिक्षु बाणाद्यायुधपूजा' इति । **उत्तरतन्त्रे–**

**'त्वगसृङ्मांसमेदोस्थिमज्जार्णान्ताः सुरेश्वरि ।**
**द्वितीयस्वरसंयुक्ता एते बाणास्त्वदीयकाः ॥'** (८।१६९)

इति शक्तिबाणबीजानामुद्धारादेकदेशज्ञापकात्सर्वायुधेषु तत्तद्बीजयोग आवश्यक इति ध्वन्यते । तत्र **पद्धतिकाराः** तावच्छिवशक्त्यायुधबीजानि समुच्चित्याऽऽदावुच्चार्य सर्वजम्भनेभ्यः कामेश्वरकामेश्वरीबाणेभ्यो नम इत्यादिरीत्या मन्त्रान्कल्पयन्तस्तन्त्रेणाऽऽयुधयोः पूजां लिखन्ति । तत्र कामेश्वरपदयोः पुमान्स्त्रियेत्येकशेषो दुर्वारः । युक्तं तु प्रतिप्रधानं गुणावृत्तेर्देवताभेदान्मन्त्रभेदेन पृथक्पूजनम् । अत एव **कल्पसूत्रे** धनुरादिपदेष्वेकवचनानि संगच्छन्ते । ततश्च 'ह्रीं श्रीं यां रां लां वां सां सर्वजम्भने(जृम्भणे)भ्यः कामेश्वरीबाणेभ्यो नमः, ह्रीं श्रीं द्रां द्रीं क्लीं ब्लूं सः सर्वजम्भने(जृम्भणे)भ्यः कामेश्वरबाणेभ्यो नमः' इत्याद्याकारका मन्त्रा भवन्ति । इदं च **कल्पसूत्रा**नुगुण्येनोक्तम् । वस्तुतस्तु [स्वतन्त्रानुसारेण आदौ द्वितारी ततो दशबाणबीजान्युच्चार्य 'सर्व-जृम्भण]बाणशक्ति[श्री]पादुकां पूजयामि' इत्याद्यन्त्याकारका एव । **उत्तरतन्त्रे–**

**'आयुधा अपि रक्ताभाः स्वायुधोज्ज्वलमस्तकाः ।**
**वरदाभयहस्ताश्च पूज्या ध्यातृफलप्रदाः ॥'** (८।१६७-१६८)

इत्यत्र स्त्रीत्वेन निर्देशात् । द्वितारयोगोऽपि शक्तिदेवत्यत्वादेवाऽऽवश्यकः सम्पद्यते । अथवा, एतत्पक्षे **कल्पसूत्रो**क्तमन्त्रेण सहास्य विकल्पापत्तिः । स चायुक्तः । कल्पस्य तन्त्रमूलकत्वेनैव प्रामाण्यात् । आम्नायानुपक्रम्यैव तस्य प्रवृत्तेः । मूलिमूलयोश्च विरोधे समबलत्वाभावेन विकल्पायोगात् । न च कल्पस्यापि तन्त्रत्वेनैव प्रामाण्यम् । **कल्पसूत्रा**धिकरणविरोधात् । न च मूलित्वात्कल्पस्य मूलविरोधेऽननुष्ठानम् । मूलमन्त्रस्य कल्प्यत्वेन मूलिमन्त्रस्य क्लृप्तत्वेन वैषम्यात् । अत एव न **राणको**क्तप्रवर्ग्यविधिनिषेधन्यायेन समबलत्वम् । अनुष्ठेयपदार्थस्य स्मारकाकाङ्क्षायां क्लृप्तस्यैव झटित्यन्वये सति कल्पनामूलोच्छेदेन कल्प्यस्याऽऽत्मलाभाभावात् । तस्मात्क्लृप्तः **कल्पसूत्र**मन्त्र एव प्रयोज्यः । न च बाणमन्त्रे बहुवचनस्य बाणदशकपरत्वसम्भवेऽपि पाशादिमन्त्रेष्वेकवचनस्य कथं पाशद्वये प्रवृत्तिः । पाशाधिकरणन्यायेन लक्षणया द्वित्वबोधसम्भवात् । आवृत्तिरेव वा मन्त्रस्यास्तु । प्रतिप्रधानन्यायात् । सम्प्रतिपन्नदेवताकत्वात्तन्त्रेण वा द्वयोः पूजा । देवताशरीरे पाशत्वमात्रस्यैव निवेशात् । कामेश्वरादिसम्बन्धस्य तत्रानिवेशादित्यादि न्यायविद्भिरूह्यम् ॥ १९४-१९५ १/२ ॥

अथोत्तरचक्रयोः पूजनमाह–

**सर्वमध्ये त्रिकोणे च पूजयेन्मूलविद्यया ॥ १९६ ॥**
**केवलाक्षरभेदेन समस्तव्यस्तयेश्वरि ।**
**कामेश्वरीमग्रकोणे वज्रेशीं दक्षिणे तथा ॥ १९७ ॥**
**भगमालां तथा वामे मध्ये त्रिपुरसुन्दरीम् ।**

सर्वमध्ये बिन्दौ । केवलं समस्तयाऽक्षरभेदेन व्यस्तया मूलविद्यया कामेश्यादि-देवताचतुष्टयं पूजयेदित्यन्वयः । एवं पूजां विधाय क्रमं पाठेनाऽऽह—कामेश्वरीमिति । तथा च **कल्पसूत्रम्**—त्रिकोणे वाक्कमशक्तिसमस्तपूर्वाः कामेश्वरीवज्रेश्वरीभगमालिनी-महादेव्यो बिन्दौ चतुर्थीति । मूलेऽक्षरशब्देन वाग्भवादिकूटत्रयमुच्यते । समस्तशब्देन पञ्चदशी । तुरीयकूटमेव समस्तपदेनोच्यत इत्यतिरहस्यमिति **केचित्** ॥ १९६-१९७$\frac{१}{२}$ ॥

**एवं पूजाविधानं तु कृत्वाऽऽदौ साधकोत्तमः ॥ १९८ ॥**
**धूपदीपौ च नैवेद्यतर्पणादि निवेदयेत् ।**

प्रधानदेवतायाः षोडशोपचारैस्तन्त्रभेदेनोपचारेषु षोडशादिसंख्यानां तर्पणानन्त-र्भावेनापि परिपूर्तिदर्शनात्तदन्तर्भावेनैव **तन्त्रराजकल्पसूत्रा**द्युक्त उपचारक्रम इह स्वीकार्य इतिद्योतनाय तर्पणग्रहणम् । पूजोत्तरमेवं रीत्याऽऽवरणानि संपूज्य पुनर्धूपादिकं दद्यात् । आदिपदेन बलिजपादिपरामर्शः । धूपादीनां वासनास्तर्पणद्रव्यनिष्कर्षश्च **प्राचां** टीकासु द्रष्टव्यः ॥ १९८-१९९ $\frac{१}{२}$ ॥

**संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः ॥ १९९ ॥**
**खेचरीबीजयोन्याख्या नव मुद्रास्त्वनुक्रमात् ।**
**विरच्य साधकेन्द्रस्तु ध्यानं कुर्यात्समाहितः ॥ २०० ॥**

नवमुद्रासु प्रत्यावरणान्तमेकैकां मुद्रां विरचयेदित्यर्थ इति **केचित्** । इहैव नवापि प्रदर्शयेदित्यर्थ इत्यन्ये । प्रथमपक्षेऽनुक्रमादितिपदमर्थसाधकम्, द्वितीयपक्षे धूपादिविधेः पूर्वमस्य पाठाभावः साधक इति तयोर्भावः । ये तु दशानां मुद्राणां मध्ये त्रिखण्डाया आवाहने विनियुक्तत्वान्नवैवेह प्रदर्श्या इति हेतुं वर्णयन्ति तेषां खेचर्या विसर्जने विनियोगादष्टानामेव प्रदर्शनीयतापत्तिः । योनिमुद्रायाः प्रणामे विनियोगात्सप्तानामेव वा । ध्यानं कुर्यात्कामकलां विभावयेत् ॥ १९९-२०० ॥

**बिन्दुं संकल्प्य वक्त्रं तु तदधस्थं कुचद्वयम् ।**
**तदधः सपरार्धं तु चिन्तयेत्तदधोमुखम् ॥ २०१ ॥**
**एवं कामकलारूपमक्षरं यत्समुत्थितम् ।**
**कामादिविषमोक्षाणामालयं परमेश्वरि ॥ २०२ ॥**
**तदेव तत्त्वप्रवरं निजदेहं विचिन्तयेत् ।**

विभावनप्रकारमेवाऽऽह—बिन्दुमिति । शास्त्रारम्भे श्रीविद्यायां यन्मुख्यं रहस्य-मक्षरं कामकलाख्यमुक्तं तत्र त्रयोऽवयवाः । ऊर्ध्वं कामाख्यो बिन्दुरेकः । तदधोऽग्नी-

षोमात्मकबिन्दुद्वितयरूपोऽन्यः । तदधो हकारार्धरूपः कलाख्यस्तृतीयः । तदिदं प्रत्याहारन्यायेन कामकलेत्युच्यते । शरीरेऽपि त्रय एवावयवाः । शीर्षादिघटिकान्तः कण्ठादिस्तनान्तो हृदयादिसीवन्यन्तश्च । केशपाणिपादं तु तत्तच्छाखा इत्युक्तम् । ततश्च यथाक्रममक्षरावयवान्देव्यवयवत्वेन परिणतान्विभाव्य देव्यक्षरयोरभेदं विचिन्तयेत् । वक्त्राद्येकैकावयवोक्तिस्तु तत्तत्समस्तावयवोपलक्षणम् । बिन्दुतदधस्थतदधःशब्दैरक्षरावयवत्रयपरामर्शः । सकारात्पुरो हकारस्तदर्धं सपरार्धम् । अधोमुखशब्दो योनिपर इति **सम्प्रदायः** । देव्याः स्वस्य चाभेदं भावयेदित्याह–एवमिति । अक्षरं नाशरहितं व्यापकं ब्रह्म । एवं समुत्थितं देवीशरीरतया परिणतम् । **नित्याषोडशिकार्णव**मथनादुद्धृतमित्यर्थ इत्यन्ये । काम आदिर्येषां तानि कामार्थधर्मरूपाणि त्रीणि विषाणि च मोक्षोऽमृतं च तेषामालयं जनकम् । एवं ध्यातं सच्चतुर्विधपुरुषार्थप्रदमित्यर्थः । तत्र चतुर्थस्यामृतत्वप्रसिद्ध्यैव तद्विरुद्धस्य त्रिवर्गस्य विषत्वं प्रसिद्धमेव । तस्येह कीर्तनं तु तेषां लघुफलरूपत्वान्मुमुक्षुभिस्तानि फलानि नोद्देष्टव्यानीति ध्वनयितुम् । त्रिवर्गेष्वपि कामस्य प्रथमतः कीर्तनं तु तेष्वपि तस्यातिलघुफलत्वद्योतनार्थम् । तदिदं स्पष्टमुक्तं श्रीमदाचार्य**भगवत्पादैः** –

> **'मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो**
> **हरार्धं ध्यायेद्यो हरमहिषि ते मन्मथकलाम् ।**
> **स सद्यः संक्षोभं नयति वनिता इत्यतिलघु**
> **त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम् ॥'**

इति । ईदृशं यदक्षरं तदेव तत्त्वेषु सपदार्थेषु प्रवरं श्रेष्ठं पारमार्थिकसत्यं षट्त्रिंशत्तत्त्वातीतमिति यावत् । निजं स्वकीयं देहं स्वरूपमपि तदभिन्नं चिन्तयेदित्यर्थः । विषशब्दोऽमृतपरः, विषजलामृतपदानां पर्यायत्वात् । तच्च मोक्षस्य विशेषणमिति **प्राञ्चो** व्याचक्षते । रूपमेवास्यैतन्महिमानं व्याचष्टे । कामः कामकूटम् । आदिर्वाग्भवकूटम् । विषमोक्षः शक्तिकूटमिति तु ततोऽपि **प्राञ्चः** । शक्तिकूटमात्रस्य साधने गरुडतुल्यो विषहरो भवतीत्यस्य चतुर्थे पटले वक्ष्यमाणत्वादिति तदाशयः ॥ २०१-२०२$\frac{१}{२}$ ॥

> **ध्यात्वा चक्रेण सहितां ततस्त्रिपुरसुन्दरीम् ॥ २०३ ॥**
> **स्वमुद्रया शक्तिचक्रं खेचर्याद्याश्च योजयेत् ।**
> **खेचर्या शक्तिचक्रं तु क्षमस्वेति विसर्जयेत् ॥ २०४ ॥**

**॥ इति श्रीनित्याषोडशिकार्णवस्य प्रथमः पटलः ॥**

ततः कामकलादेवीसाधकानामभेदभावनोत्तरं चक्रेण सम्पूर्णेन श्रीचक्रेण सहितां त्रिपुरसुन्दरीं ध्यात्वा समूहालम्बनात्मकमानसज्ञानविषयतां प्रापय्य तत्र स्थितं शक्तिचक्रमणिमादिशक्तिकदम्बं स्वमुद्रया योजयेत् । यतस्ता निसृतास्तत्रैव ता मुद्रयेदाच्छादयेद्विलापयेदित्यर्थः । अणिमादीनां महादेवीमयूखरूपतया तासां करचरणादिरूपाणि किरणाकारतया परिणमय्य तेजोमात्ररूपाणि विभाव्य तानि तेजांसि त्रिपुरसुन्दर्या देहे प्रविष्टानि विभावयेदिति यावत् । अत्र **सुभगार्चारत्नादिपद्धतिकाराः** खेचरीबीजमुद्राभ्यां प्रणमेदिति लिखन्ति । तदिदमाह– खेचर्याद्याश्च योजयेदिति । आद्यशब्देन बीजयोनिमुद्रे गृह्येते । उक्तमुद्राक्रमेण तयोरेवोपस्थितेः । तेन **खेचरीबीजाभ्यां** प्रणम्य योनिमुद्रयाऽपि **प्रणमेदित्यर्थः** । **प्राञ्चस्तु–** स्वां मुदमानन्दं राति विषयीकरोतीति स्वमुद्रा स्वसंवित् । खेचर्याद्या नव मुद्रा अणिमादिशक्तिचक्रं च स्वस्वसंविदा योजयेत्, शुद्धचैतन्यमात्ररूपं भावयेदिति व्याचक्षते । अन्ये तु स्वमुद्रयेति सहार्थे तृतीया । प्रत्यावरणमेकैकस्या एव मुद्रायाः पूजनद्योतनाय स्वस्वमुद्रया सहितं तत्तदावरणशक्तिचक्रं खेचर्याद्यास्तत्तन्मुद्राश्च योजयेत्, एकीकुर्यादित्यर्थ इत्याहुः । पक्षद्वयेऽपि खेचर्या आद्यत्वेन निर्देशे खेचर्यादियोजनस्य पार्थक्येन निर्देशे च बीजं चिन्त्यम् । ततस्त्रिपुरसुन्दर्यैक्यमापितं तिसृभिर्मुद्राभिः प्रणतं च शक्तिचक्रं क्षमस्वेति मन्त्रेण खेचरीमुद्रया च विसर्जयेत् । खे परमे व्योम्नि चरतीति खेचरीपदार्थवशात्तच्छक्तिचक्रं कवलितवतीं देवीं चिदाकाशरूपां विभाव्य स्वात्मनि योजयेदिति सिध्यति । तथा च **कल्पसूत्रम्–**'खेचरीं बद्ध्वा क्षमस्वेति विसृज्य तामात्मनि योजयेदिति शिवम्' इति । **तन्त्रान्तरे**ष्वेतदग्रेऽपि पूजाविस्तारस्य दर्शनेऽप्येतत्तन्त्र**ज्ञानार्णवकल्पसूत्रादि**रीत्याऽत्रैव पूजासमाप्तिर्मन्तव्या । तेन तेषामङ्गानां कृताकृतता ध्वनिता । यानि तु हविष्प्रतिपत्त्यादिरूपाणि कतिपयकर्माण्यपेक्षितानि तानि तु उत्तरतन्त्रे मूल एव व्यक्तीभविष्यन्तीति सर्वं शिवम् ॥ २०३-२०४ ॥

**इति श्रीभास्करोन्नीते नित्याषोडशिकाम्बुधेः ।**
**व्याख्याने सेतुबन्धाख्ये विश्रामः प्रथमोऽभवत्** ॥ १ ॥

●

# अथ द्वितीयो विश्रामः

श्रीगुरुपादुकाभ्यां नमः । एवं प्रथमपटलेन चतुरधिकद्विशतश्लोकेन सुन्दर्युपासकानामाह्निकं वर्णितम् । एतेषां च मुमुक्षुत्वेन **'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्'** इति वचनेन काम्यकर्मानादर एवाऽऽवश्यकः । प्रारब्धवशतो जातायामपि कामनायां मनसस्ततः परावर्तनमेव युक्तम् ।

> **'यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।**
> **ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥'**

इति **भगवद्वचनात्** । अथापि बहुशः काम्यपदार्थेभ्यः पुनः पुनः प्रत्याह्रियमाणं मनः कदाचिद्विक्षेपवशात्स्वाधीनतां जह्यादपि । अतः प्रत्याहारपरम्परायामपि कतिपयकामितार्थप्रदानेन बालस्येव समाधानमप्यावश्यकम् । अत एवोक्तं **गीतासु–'शनैः शनैरुपरमेत्'** इति । **ज्ञानवासिष्ठे**ऽपि–

> **'अशुभेषु समाविष्टं शुभेष्वेवावतारयेत् ।**
> **स्वं मनः पुरुषार्थेन बलेन बलिनां वर ॥**
> **अशुभाच्चालितं याति शुभं तस्मादपीतरत् ।**
> **जन्तोश्चित्तं तु शिशुवत्तस्मात्तच्चालयेद्बलात् ॥**
> **समतासान्त्वनेनाऽऽशु न द्रागतिशनैः शनैः ।**
> **पौरुषेण प्रयत्नेन लालयेच्चित्तबालकम् ॥'**

इति । अत्रातिशनैरित्यनेन शिशूपमया च मध्ये मध्ये कदाचिच्चित्ताभिलषितं पूरयताऽपि प्रत्याहर्तव्यमिति ध्वनितम् । तस्मात्केनाप्युपायेन **'मनः कृष्णे निवेशयेत्'** इति वचनात्तु निषिद्धमप्यनुज्ञायत इति **भक्तितन्त्र**विदां सिद्धान्तः । उत्तरत्र सिषाधयिषितपरतत्त्वात्मसात्करणेनोपायदशायां जातस्यापराधजातस्य सर्वस्यापि **महाभाष्योक्त**-कूपखानकन्यायेन परिहर्तुं शक्यत्वादिति तदाशयः । तस्माज्ज्ञानीयभूमिकासु कतिपयभूमिकारूपस्य मुमुक्षोरपि कदाचित्काम्यकर्माणि प्रसज्यन्त एवेति कतिचित्तानि वर्णयितुमुत्तरो ग्रन्थसन्दर्भः । तानि च चतुर्विधानि । साधनचातुर्विध्यात् । श्रीचक्रं करशुद्ध्यादिमन्त्राः प्रधानबीजत्रयं तत्समष्टिरूपा मूलविद्या चेति चत्वार्येव हि साधनानि पूर्वं निरूपितानि । तेषु–

> **'करशुद्ध्यादिविद्यानामेकैकं परमेश्वरि ।**
> **रुद्रयामलतन्त्रे तु कर्म प्रोक्तं मया पुरा ॥'**

इति चतुर्थपटले (श्लो. ६१) वक्ष्यमाणत्वादस्मिंस्तन्त्रे न तन्निरूपणम् । इतरेषु तु चक्रस्यार्चनद्वारा फलजनकत्वमन्ययोः शब्दरूपत्वाज्जपद्वारेति विशेषः । चक्रस्य मन्त्राणां च काम्यकर्मसु विनियोगस्तत्तत्सिद्धिमन्तरा न संघटते । तादृशविनियोगयोग्यताया एवं सिद्धिपदार्थत्वात् । तदापादकानां च कर्मणां चक्रसाधनं बीजसाधनं मन्त्रसाधनमिति क्रमेण नामधेयानि त्रीण्यपि पुरश्चरणपदेनोच्यन्ते । यत्तु **वायुसंहितायाम्**–

**'साधनं मूलमन्त्रस्य पुरश्चरणमुच्यते ।**
**पुरतश्चर्यमाणत्वाद्विनियोगाद्धि कर्मणाम् ॥**
**पुरतो विनियोगस्य चरणाद्वा तथोदितम् ।'**

इति वचनं तत्र मन्त्रपदं यन्त्रस्याप्युपलक्षणम् । तदुक्तनिर्वचनस्योभयसाधारण्यात् । **विश्वालयकतन्त्रे** च कथितस्य नवग्रहयन्त्रस्य सपादलक्षवारं चम्पकलेखन्या विलिख्य विलिख्य पूजनं यन्त्रपुरश्चरणं भवतीत्यर्थस्य तत्रैव प्रसिद्धत्वात् । **'सपादलक्षमेतस्य पुरश्चरणमुच्यते'** इत्यादि **शिवताण्डवा**दावप्ययमर्थः प्रसिद्धः । एतेन–

**'धर्मार्थकाममोक्षाणां शास्त्रमार्गेण योजनम् ।**
**सिद्धमन्त्रस्य संप्रोक्तो विनियोगो विचक्षणैः ॥'**

इति **मन्त्रतन्त्रप्रकाशोक्त**विनियोगलक्षणे मन्त्रपदं व्याख्यातम् । अत एव काम्यकर्मफलसिद्धिजनकक्रियात्वं पुरश्चरणलक्षणमुक्तं **सौभाग्यरत्नाकरे** । तच्च चक्रसाधनेऽप्यविशिष्टम् । अत्र लक्षणे काम्यपदनिवेशान्नित्यनैमित्तिककर्मविनियोगयोग्यतापादके गुरुमुखान्मन्त्रग्रहणे नातिव्याप्तिः । ततश्च काम्यमनिच्छतो मुमुक्षोर्गुरूपदेशमात्रेण नित्यनैमित्तिकयोरधिकारात्पुरश्चरणमनावश्यकमेव । तदिदं द्योतयितुमेव मूले चक्रमन्त्रोद्धारमात्रोत्तरमेवाऽऽह्निकवर्णनं काम्यकर्मारम्भ एव पुरश्चरणवर्णनम् । यत्तु **वैशंपायने**नोक्तम्–

**'पुरश्चरणसम्पन्नो मन्त्रो हि फलदायकः ।**
**किं होमैः किं जपैश्चैव किं मन्त्रन्यासविस्तरैः ॥**
**रहस्यानां हि मन्त्राणां यदि न स्यात्पुरस्क्रिया ।**
**वीर्यहीनो यथा देही सर्वकर्मसु न क्षमः ॥**
**पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्तितः ।'**

इत्यादि । तत्रापि फलादिशब्दाः काम्यधर्मानधिकारितावच्छेदकत्वात् । तत्र चक्रसाधनाख्यं पुरश्चरणं तावल्लक्षत्रयात्मकविद्याजपाङ्गकं चक्रपूजनम् । तथा हि– **ज्ञानार्णवे** त्रयोदशपटलान्तं श्रीचक्रपूजेतिकर्तव्यतामुक्त्वा चतुर्दशपटलारम्भे चक्र-

साधनबीजसाधनमन्त्रसाधनानि ब्रूहीति देवीप्रश्ने तेषु प्रथमं वक्तुं **'शृणु सर्वाङ्गसुभगे श्रीचक्रविधिमुत्तमम्'** इति प्रतिज्ञाय–

**'अनेन विधिना यस्तु श्रीचक्रक्रममुत्तमम् ।**
**पूजयेत्तत्र सकलं वशीकुर्यान्न संशयः ॥'**

इतिश्लोकेन पूर्वोक्तविधिना चक्रराजस्य क्रमपूजनमेव पुनर्विधाय वक्ष्यमाणवश्यकर्मादि-फलान्येव सकलं वशीकुर्यादिति सामान्येन फलत्वेन कीर्तितानि । तदुत्तरञ्च **'अक्षमालां समाश्रित्य'** इत्यादिना मालाभेदानुक्त्वा विद्याजपस्य प्रथमद्वितीयतृतीयलक्ष-संख्याः क्रमेण विधाय तत्तत्संख्याकजपसिद्धौ मानुषीदेवाङ्गनानागकन्याकृतचित्तक्षोभ-रूपान् विघ्नानप्युक्त्वा–

**'एवं लक्षत्रयं जप्त्वा व्रतस्थः स्वस्थमानसः ।**
**संक्षोभयति भूर्लोकस्वर्लोकतलवासिनः ॥**
**पुरुषा योषितो वश्याश्चराचरमयाः प्रिये ॥'**

इत्युपसंहृतम् । अत्र चराचरमयपदेन सर्वाणि फलानि संगृहीतानि चराचरातिरिक्तस्य तृतीयस्याभावात् । तेनैतदविरोधेनोपक्रमस्थस्य सकलं वशीकुर्यादिति वाक्यस्य सर्वाणि फलानि स्वात्मसात्कुर्यादित्यर्थः, सन्दिग्धेषु वाक्यशेषादिति **न्यायेन** सिद्धः । तानि च फलानि वक्ष्यमाणकाम्यकर्मजन्यफलान्येव सकलपदेनानूद्यन्ते न तदितराणि । एकस्मै वा अन्ये यज्ञक्रतवः कामायाऽऽह्रियन्ते 'सर्वेभ्यः कामेभ्यो ज्योतिष्टोम' इति वाक्ये सर्वकामपदेन सर्वज्ञत्वाकाशगमनादिफलानामनभिधानसिद्धान्तात् । इयांस्तु विशेषः - तत्र वाक्यशेषेण सर्वक्रतुफलसान्निध्यमत्र तु पाठत एवेति । इदं तु कर्म पुरश्चरणात्मकमेव । तदुक्तं **सौभाग्यरत्नाकरे**– एतदुत्तरं वक्ष्यमाणानां कर्मणां काम्यप्रयोगत्वात्काम्यप्रयोगस्य विद्यासिद्धेरपेक्षितत्वाद्विद्यासिद्धेः पुरश्चरणमूलकत्वा-त्पुरश्चरणमनुक्त्वा काम्यप्रयोगकथनानौचित्यादक्षमालाभेदनिरूपणादक्षमालायाः पुर-श्चरणप्रकरण एव वक्तव्यत्वाद्विघ्नबाहुल्यकथनादेवंविधविघ्नानां सिद्धिप्रतिबन्धकतया पुरश्चरणकाल एवानिष्टत्वात्काम्यकर्मसु तूक्तविघ्नानामेव फलत्वेनाभिधानाद् 'व्रतस्थः स्वस्थमानसः' इति नियममनःस्थैर्ययोः पुरश्चरणकाल एवात्यन्तमावश्यकत्वेनात्रैव कथनस्यौचित्यादित्यादि । **सुन्दरीमहोदये**ऽपि–व्रतस्थ इत्यनेन चायं पुरश्चरणजप इति सूच्यते । अनन्तरं च तदङ्गभूतदेशहोमाद्यनभिधायैव, यत्काम्यप्रयोगाभिधानं तत्तेषां पुरश्चरणानन्तरमेव कर्तव्यताद्योतनार्थमित्युक्तम् । ततश्चास्य कर्मणः पुरश्चरण-रूपत्वेन काम्यकर्मविनियोगयोग्यतापादकत्वसामर्थ्येनैव फलाकाङ्क्षायाः शान्तेः सकलं वशीकुर्यादित्यस्य सकलकाम्यकर्मक्षमो भवतीत्येवार्थः पर्यवस्यति । ततश्च क्रमपूजनेन

तादृशयोग्यतां भावयेदिति प्राथमिकविधेरर्थः । एवं फलसंयोगेन क्रमपूजाया एव प्राधान्येन सांग्रहणीवत्प्राकरणिकत्वे सिद्धे तत्प्रकरणपठितेषु–

**'समाश्रित्य जपेद्विद्यां लक्षमात्रं सदा शुचिः ।**
**योषितो द्रावयन्त्येव मनस्तस्य सुनिश्चितम् ॥'**

इत्यादिविधिषु फलाश्रवणात्फलवदफलन्यायेनाऽऽमनहोमानामिव लक्षत्रयजपस्याङ्गत्वम् । एवं च प्रत्यहं चक्रराजार्चनपूर्वकं कयाचित्संख्यया जपं कुर्वन्निरन्तरमैकरूप्येण लक्षत्रयसमाप्तिपर्याप्तदिवसानभिव्याप्यार्चनानुष्ठानं चक्रसाधनपदेनोच्यत इति सिद्धम् । एतदुत्तरं चोच्चावचानि काम्यपूजनानि कथयित्वा तदन्ते पटलसमाप्तिपर्यन्तं प्रायश्चित्तात्मकानि पुष्पविशेषकरणकपूजनान्युक्त्वा, पञ्चदशे पटले रत्ननिर्मितपुष्पपूजाविशेषान्फलविशेषार्थमुक्त्वा, षोडशे पटले क्रमप्राप्तं त्रिबीजसाधनं तत्साध्यकाम्यकर्माणि चोक्त्वा, सप्तदशे पटले मन्त्रसाधनमुक्तम् । तत्स्वरूपं चार्चनाङ्गको नवलक्षसंख्याको विद्याजपः ।

**'चक्रं समर्चयेद्देवि सकलं नियतव्रतः ।**
**बाह्यमध्यगतं वाऽपि मध्यं वा चक्रमर्चयेत् ॥**
**उपचारैः समाराध्य सहस्रं प्रजपेद् बुधः ।**
**तदग्रे संस्थितो मन्त्री ततोऽनन्तफलं लभेत् ॥**
**ध्यात्वाऽथवा चक्रराजं मनःपूजासमन्वितः ।**
**जपारम्भं सुधीः कुर्यान्महापातकहा भवेत् ॥'**

इत्युपक्रम्य मानसोपांश्वादिजपभेदे फलभेदमुक्त्वा नवलक्षजपं विधाय–

**'नवलक्षप्रमाणं हि जपेत्त्रिपुरसुन्दरीम् ।**
**रुद्रमूर्तिः स्वयं कर्ता हर्ता साक्षान्न संशयः ॥**
**सर्ववन्द्यः सदा सुस्थः सर्वसौभाग्यवान्भवेत् ।'**

इत्युक्त्वा देशहोमादेरभिधानात् । अत्रार्चनस्य जपारम्भमात्राङ्गत्वम् 'एवं गणपतिमिष्ट्वा...... ललितोपास्तिमारभेत' इति **कल्पसूत्र**वाक्य इव स्पष्टं प्रतीयते । अत एवाल्पारम्भः क्षेमकर इति न्यायेन 'सहस्रं प्रजपेत्' इत्युक्तिः, नवचक्राणां संहारचक्रस्यैव वा स्थितिचक्रस्यैव वा बाह्यपूजाया मानसपूजायाश्च विकल्पः संगच्छते । ततश्च प्रथमदिवस एव क्षेत्रपरिग्रहादिरूपं पूर्वं पूर्वाङ्गजातं सम्पाद्य पश्चादुक्तान्यतमरीत्या चक्रार्चनमवकाशानुसारेणाऽऽरच्य सहस्रमात्रां विद्यां जप्त्वा द्वितीयदिनमारभ्याऽऽमध्याह्नं त्रिचतुराद्यन्यतमनियतसंख्यया नवलक्षसमाप्तिपर्यन्तं तत्पर्याप्तदिवसेषु पूजनं विनैव जपं कृत्वा होमादिकं कुर्यात् । तदिदं मन्त्रसाधनमर्चनाङ्गके भवति । चक्रसाधने तु जपस्य प्राधान्याभावादेव तदङ्गहोमाद्यभावात्तत्प्रकरणे तदकथनं संगच्छते । मन्त्रसाधने जपारम्भ

एवार्चनविधानाल्लिङ्गादेतद्विपरीते चक्रसाधनेऽर्चनस्य प्रात्यहिकत्वं लभ्यते । 'अनेन विधिना यस्तु' इतिवचनेन नित्यार्चनस्यैव सेतिकर्तव्यताकस्य परामर्शान्नित्यार्चनस्य प्रात्यहिकत्वात्तल्लाभः । अस्तु वा मन्त्रसाधनेऽप्यर्चनस्य प्रात्यहिकत्वम् । परं तु मध्यचक्रादिभेदेन विकल्पितत्वम् । चक्रसाधने तु सकलचक्रपूजैव कार्या न संक्षिप्तेत्येव विशेषः । अत एव मूले सकलचक्रार्चनमात्रमेकमुक्त्वा तद्भेदाननभिधायैव चक्रसाधनवर्णनम्, अर्चनभेदानां तु चतुर्थपटलान्ते कथनं संगच्छते । तस्माच्चक्रसाधनमन्त्रसाधनयोरर्चनजपयोरङ्गाङ्गिभाववैपरीत्याद्धोमादिसदसद्भावाच्च वैलक्षण्यमिति **ज्ञानार्णव**स्वरसतः सिद्धम् । प्रकृततन्त्रमप्यस्मिन्नर्थ एव स्वरसमिति स्पष्टीभविष्यति । यदि परं **संहितादितन्त्रान्तरेषु** लक्षत्रयजपाङ्गत्वेनापि होमादिविधानमस्तीत्यालोच्यते तदा वाचनिकं होमस्याङ्गत्वं स्वीक्रियताम् । मन्त्रसाधने होमस्य साक्षात्प्रधानाङ्गत्वेऽपि चक्रसाधने तस्याङ्गाङ्गत्वं वचनबलाद्वैमृधाङ्गप्रयाजादीनामिव भविष्यति । **संहितायां** चक्रसाधनप्रकरणाद्बहिर्लक्षत्रयजपविधानात्प्रकरणान्तरन्यायेन तस्य कर्मान्तरत्वं वा सुवचमिति सिद्धम् । **प्राचीना**स्त्वित्थं मन्यन्ते– चक्रसाधनाख्यं कर्मैव नास्ति । पुरश्चरणमिति संज्ञा तु परिशेषान्मन्त्रसाधनस्यैव । यत्तु **ज्ञानार्णवे** चक्रसाधनकथनप्रतिज्ञानं तत्र चक्रसाधनमितिपदं लक्षत्रयजपोत्तरवक्ष्यमाणकाम्यपूजानामेव वाचकम् । प्रतिज्ञाव्यवहितोत्तरं कथ्यमानो जपस्तु मन्त्रसाधनमेव । स च सप्तदशे पटले वक्तुं युक्तोऽपि स्वतन्त्रत्वादिहैव कथितः । अत एव **सौभाग्यरत्नाकरे** चक्रसाधनप्रकरणाल्लक्षत्रयजपमुत्कृष्य नवलक्षजपकथनप्रकरणे संख्यांशे विकल्पेनास्य निवेशः कृतः । **सुन्दरीमहोदय**कृता तु तदुत्कर्षमसहमानेन लक्षत्रयजपस्य मन्त्रसाधनत्वमङ्गीकृत्यैव काम्यपूजाधिकारसिद्ध्यर्थमिहैव कथनमित्युक्तम् । परं तु तत्पक्षे वैकल्पिकनवलक्षजपस्याप्यत्रैव कथनापत्तिरिति चोद्ये काम्यपूजास्वेतावन्मात्रेणाप्यधिकार इति ध्वननाय तदकथनमित्युत्तरमित्यादि । तदिदं **ज्ञानार्णव-वामकेश्वरतन्त्र-**स्वारसिकार्थविरुद्धकल्पनमिति स्पष्टमेव । नन्वेवं सति भवन्मते **दक्षिणामूर्तिसंहिता**स्वरसविरोधः । तत्र हि एकोनत्रिंशे पटले **'शृणु देवि प्रवक्ष्यामि श्रीविद्यामन्त्रसाधनम्'** इति प्रतिज्ञाय रत्नपुष्पपूजाम्, **'पूजयेद्रत्नखचितैश्चम्पकैः स्वर्णजैः प्रिये'** इत्यादिना संक्षिप्योक्त्वा मन्त्रसाधनाङ्गदेशं मालाश्चाभिधाय लक्षत्रयजपं तद्दशांशहोमादिकं चोक्त्वा पश्चात्, **'अथवा नवलक्षं तु जपेद्विद्यां समाहितः'** इत्यादिना नवलक्षंजपतद्दशांशहोमादिविधिं विस्तरेण पटलसमाप्तिपर्यन्तमुक्त्वा तदुत्तरपटले–

> **'अथातः संप्रवक्ष्यामि चक्रराजस्य साधनम् ।**
> **एवं संसिद्धविद्याया विनियोगक्रमं शृणु ॥'**

इति प्रतिज्ञाय काम्यपूजाः कथयित्वा तदन्त एव संक्षिप्य त्रिबीजसाधनमुक्त्वा पटलः समापितः । अत्र च लक्षत्रयजपस्य मन्त्रसाधनत्वं काम्यपूजानामेव चक्रसाधनत्वमिति स्पष्टं प्रतीयत इति चेत् । सत्यम् । तन्त्रकर्तुः स्वतन्त्रेच्छत्वेन पर्यनुयोगानर्हत्वमेवेह समाधानं कथमन्यथा रत्नपूजाया मन्त्रसाधनप्रकरणे कथनं काम्यपूजाप्राये

बीजसाधनकथनं नवलक्षत्रिलक्षजपयोरैच्छिकविकल्पायोगेन शक्ताशक्तभेदेन व्यवस्था-यामावश्यक्यां सत्यामादौ नवलक्षजपस्य पश्चात्त्रिलक्षजपस्य कथने युक्तेऽपि वैपरीत्येन तत्कथनं च सन्दर्भशुद्धिमुरीकुर्यात् । ईदृशैकतन्त्रावलम्बनेन सन्दर्भशुद्धि-मतोर्द्वयोरन्यथा करणमयुक्तं च । लक्षत्रयजपश्च चक्रसाधनात्मकात् तस्मात्कर्मान्तर-मिति तूक्तमेव । यस्तु चक्रराजसाधनप्रतिज्ञाश्लोकस्तत्र पूर्वार्धोत्तरं तत्कथनप्रकार-स्त्रुटितः सर्वज्ञत्वान्मनसैव वोपस्थापितः । अत एवोत्तरार्धे चक्रसाधनकथनोप-संहारचिह्नम्—**'एवं संसिद्धचक्रस्य विनियोगक्रमं शृणु'** इति । संसिद्धचक्रस्येति वक्तव्ये विद्याया इत्युक्तिस्तु विद्याचक्रदेवीनामभेदाभिप्रायेण बहुशो व्यवहारदर्शनादविरुद्धैव । अथवा पूर्वोक्तलक्षत्रयमात्रस्यात्रत्यैवंपदेनोत्कृष्य परामर्श इति **तन्त्रान्तरा**विरोधाय व्याख्येयम् । यद्वा माऽस्तु **संहितातन्त्र**स्यैवं व्याख्या । नहि सर्वेषां तन्त्राणामविरोधे-नैकवाक्यता केनापि सुकरा । **ज्ञानार्णव-वामकेश्वरतन्त्र**योस्तु पूर्ववर्णितोऽर्थो युक्ति-युक्त एवेति । ननु त्रिलक्षजपस्य चक्रसाधनाङ्गत्वे तदुत्तरसाध्यकाम्यार्चनानामिव नवलक्षजपरूपमन्त्रसाधनोत्तरं काम्यजपानामाम्नानं कुतस्तन्त्रेषु न दृश्यत इति चेत् । दृश्यत एव **सौभाग्यरत्नाकर**मते पञ्चचत्वारिंशल्लक्षजपरूपं काम्यम् । अस्मन्मते तु **ज्ञानार्णवे** सप्तदशपटल एव होमेतिकर्तव्यताकथनोत्तरम्— **'नित्यहोमं पुरा कृत्वा काम्यहोममथाऽऽचरेत्'** इत्यादिनोच्चावचद्रव्यकरणकहोमानामुच्चावचफलार्थतया विधा-नदर्शनात्तान्येवं मन्त्रसाधनोत्तरक्रियमाणकाम्यकर्मणि जपरूपमेव काम्यमपेक्षितमिति निर्बन्धे मानाभावात् । नवलक्षजपविधानोत्तरं तदुपर्युक्तदेशान्विधाय यत्पुनः स्मर्यते—

**तत्र स्थित्वा जपेल्लक्षं साक्षाद्देवीस्वरूपकः ।**
**ततो भवति विद्येयं त्रैलोक्यवशकारिणी ॥'**

इति तत्काम्यजपविधानपरमिति सुवचत्वाद्वा । यत्तु **सौभाग्यरत्नाकरे**णोक्तम्—अत्रत्यलक्षशब्दश्चक्रसाधनप्रकरणोक्तलक्षत्रयस्मारकः, **दक्षिणामूर्तिसंहितै**कवाक्यत्वा-दिति, तन्न । अव्यवहितपूर्वोक्तनवलक्षस्मारकत्वं विहायातिदूरस्य स्मारकत्वोक्तेरति-साहसत्वात् । संख्यानिर्देशाभावेनैकवचनान्यथाभावस्य पक्षद्वयेऽप्यविशेषात् । यद्यपि तन्मते पूर्वग्रन्थो न नवलक्षजपपरः, किन्तु पञ्चचत्वारिंशल्लक्षकाम्यजपपरः । स च नात्र परामृष्टुं शक्यते । पुनःस्मारणे प्रयोजनाभावात् । दूरस्थस्मारणस्य त्वनुपदवक्ष्य-माणहोमादिसम्बन्धलाभः प्रयोजनमिति भवति **दक्षिणामूर्तिसंहितै**कवाक्यत्वमिति । तथाऽपि **श्रीक्रमसंहितायाम्— 'लक्षमेकमिमां जप्त्वा सर्वपापहरो भवेत्'** इत्यादिनैकलक्ष-जपस्यैव पुरश्चरणत्वमुक्तमिति भवद्भिरेव पूर्वमभिहितत्वात्तदेकवाक्यत्वाच्चैकवचन-भङ्गमन्तरेणैवैकलक्षजप एवात्र पुरश्चर्यात्वेनोक्त इति भवन्मतरीत्या सुवचमिति न किञ्चिदेतत् । **सुन्दरीमहोदय**मते तु पूर्वग्रन्थो नवलक्षजपपर एव । परं तु न स जपो विद्यासिद्धिफलकः, किन्तु शिवसारूप्यफलकः । चतुर्दशपटलोक्तलक्षत्रयजप एवेह पुनः सिंहावलोकनन्यायेनोच्यते । तस्य फलं विद्यासिद्धिः । एकलक्षजपपुरश्चरणस्यैव सतो **'योषितो द्रावयन्त्येव मनस्तस्य सुनिश्चलम्'** इत्यादिना विघ्ने सति द्वितीयलक्षतातृतीय-

लक्षतापर्यन्तत्वविधानान्न लक्षमित्येकवचनान्ततानुपपत्तिः । अग्रे च **'किंशुकैर्हवनं कुर्याद्दशांशेन वरानने'** इत्यादिना विधीयमाना निष्कामसकामहोमास्तु उभयविधपुरश्चरणाङ्गभूता ज्ञेयाः । एवं च त्रिलक्षं विद्यासिद्ध्यै पुरश्चरणं कृत्वाऽनन्तरं नवलक्षपुरश्चरणं कार्यमिति सिद्धं पुरश्चरणद्वयम् । एवं च **दक्षिणामूर्तिसंहितै**कवाक्यताऽपि लभ्यत इति, तदपि **श्रीक्रमसंहितै**कवाक्यत्वायैकलक्षजपस्यैव विधानसम्भवादयुक्तमेव । यत्तु एकलक्षस्यैव ततो विघ्ने सत्युत्तरलक्षपर्यन्त त्वविधानमिति, तन्न । तथा सति विघ्नाभावे सत्येकलक्षस्यैव द्विलक्षस्यैव वा पुरश्चर्यात्वापत्तेः । तथा च त्वदभिलषितैकवाक्यत्वभङ्गस्तदवस्थः । किं च नवलक्षत्रिलक्षयोर्विकल्पो हि **दक्षिणामूर्ते**रभिमतः । त्वया च समुच्चयः कथित इति कीदृशमेकवाक्यत्वमिति विचारयतां काम्यजपान्तरपरत्वेन लक्षजपविधिव्याख्याने तु न कोऽपि दोषः । न चास्मिन्पक्षे नवलक्षजपाङ्गहोमादिकथनोत्तरमस्य कथनापत्तिरिति वाच्यम् । तथात्वे तद्दशांशहोमादिप्राप्त्यर्थं नवलक्षविकृतित्वस्वीकारापत्तिः । इष्टापत्तौ तु होमाश्रितगुणकामानामाष्टमिकन्यायेन प्राप्तिर्न स्यात् । अतो जपद्वयस्य समानविध्यलाभायैहेव तत्कथनस्याऽऽवश्यकत्वादित्यादिकं न्यायविद्भिरूह्यमित्यलं विस्तरेण ।

प्रथमपटले च चक्रोद्धारस्य पूर्वं वर्णितत्वात्तत्पूजायाश्चाव्यवहितपूर्वमुपस्थितत्वाच्चक्रपूजा एव कतिचित्काम्याः प्रथमं विवक्षुस्तदधिकारसिद्धये चक्रसाधनं प्रथममुपदिशति सप्तभिः श्लोकैः –

**श्रीभैरव उवाच**

**शृणु देवि प्रवक्ष्यामि मन्त्रयोगं यथाविधि ।**
**यत्रानेन विधानेन साधकेन प्रपूज्यते ॥ १ ॥**
**देशे वा नगरे ग्रामे तत्र क्षोभः प्रजायते ।**

मन्त्रयोगं चक्रसन्नाहम् । मन्त्रचक्रयोरभेदाभिप्रायेणैवमुक्तिः । **'योगः सन्नहनोपायध्यानसंगतियुक्तिषु'** इति **अमरः** । चक्रसाधनमिति यावत् । अनेन पूर्वोक्तेन, विधानेन प्रकारेण, साधकेन चक्रसिद्धीच्छुना । यत्र प्रपूज्यते तत्र क्षोभो विघ्नो जायते । प्रपूज्यत इत्यनेनाऽऽपूजनमेव चक्रसाधनस्वरूपमिति दर्शितम् । इदं च मन्त्रसाधनमेवेति **प्राचीनपक्षे** मन्त्रयोगशब्दो यथास्थितः । प्रपूज्यत इत्यस्य प्रजप्यत इत्यर्थो वर्णनीयः । पूजारम्भमात्रेण ग्रामीणानां स्त्रीणां मनःक्षोभात् तत्कटाक्षपातादिभिः साधकस्य चित्तव्यामोहाद्धेतुभङ्गो भवति । ततो धैर्येण तदगणने नागरीभिर्विघ्नः । तस्याप्यवहेलने तद्देशवर्तिनीभिर्दूरस्थाभिरेतत्समीपमायाताभिर्विघ्नो भवतीत्यर्थः । **प्राञ्चस्तु**–देशादिग्रहणेन स्वेच्छया यत्र कुत्रापि पुरश्चरणार्थमवस्थातव्यमिति ध्वन्यते । तेन च **पशुशास्त्रो**क्तायाः पर्वताग्रनदीतीरतीर्थायतनाद्यावश्यकताया बाध इति व्याच-

क्षते । तन्न । **'यत्र वा कुत्रचिद्देशे लिङ्गं वै पश्चिमामुखम्'** इत्यादिनाऽस्मिन्नेव तन्त्रेऽन्यत्र च देशनियमविधानस्य बहुलमुपलम्भात् ॥ १-१ $\frac{१}{२}$ ॥

क्षोभप्रकारमेवाऽऽह–

**ज्वलत्कामाग्निसन्तापप्रतापोत्तप्तमानसाः ॥ २ ॥**
**पिपीलिकास्थिन्यायेन दूरादायान्ति योषितः ।**
**मन्त्रसंमूढहृदयाः स्फुरज्जघनमण्डलाः ॥ ३ ॥**
**तद्दर्शनान्महादेवि जायन्ते सर्वयोषितः ।**

त्वगसृङ्मांसमेदोस्थिमज्जाख्या हि धातवः पूर्वपूर्वस्यान्तस्तिष्ठन्ति । एवमतिगुप्ततयाऽवस्थितोऽपि मृतशरीरस्थो मज्जधातुः पिपीलिकाभिरस्थ्नामन्तराक्रम्य भुज्यत एव । सोऽयं पिपीलिकास्थिन्यायः । अनया रीत्या साधको गिरिगुहान्तरवस्थितोऽपि योषिद्भिराक्रम्य मोहयित्वा भुज्यत इत्यर्थः । स्पष्टमन्यत् ॥ २-३ $\frac{१}{२}$ ॥

**जप्ते लक्षैकमात्रे तु क्षुभ्यन्ते भूतलाङ्गनाः ॥ ४ ॥**
**यदि न क्षुभ्यतीत्थं हि साधकस्य मनो मनाक् ।**
**संक्षुभ्यन्ति ततः सर्वाः पाताले नागकन्यकाः ॥ ५ ॥**

पूर्वोक्ता हि पूजा नित्यं कार्या ।

**'कौलाचारसुसंयुक्तैर्वीरैस्तु सह पूजयेत् ।**
**नित्यम्..............................॥'** (८।१९९-२००)

इति उत्तरतन्त्रे वचनात् । एवं च चक्रसाधनाख्यपूजायास्तदभेदे तद्विकृतिरूपतया कर्मान्तरत्वे वा प्रात्यहिकतायास्तदङ्गजपस्य च तत एव प्राप्तिः । ततश्चोक्तरीत्याऽर्चने क्रियमाणे यद्येकलक्षविद्याजपपर्याप्तकालपर्यन्तमर्चनमविघ्नं स्यात् तदा भूमण्डलवासिन्यः सर्वा अपि योषितः क्षोभयन्ति । लक्षैकमात्र इत्यत्र पूर्वकालैकेति समासेऽपि बाहुलकः पूर्वनिपाताभावः । एकमात्रशब्देनैव वा लक्षशब्दस्य समासः । तथाऽपि साधक ईषदप्यक्षुब्धो यदि द्वितीयलक्षसमाप्तिपर्यन्तमर्चयेदिति शेषः, तदा नागकन्या भुवमागत्य विघ्नमाचरन्ति । अत्र जपस्यार्चनाङ्गत्वेन प्राप्तिद्योतनायैव जप्त इति सिद्धवन्निर्देशः । द्वितीयलक्षजपस्य कण्ठरवेणाकथनेऽप्युत्तरत्रैवं लक्षत्रयं जप्त्वेत्युपसंहाराल्लिङ्गाद्द्वितीयतृतीयलक्षपदादेरध्याहारः । स्पष्टं च **ज्ञानार्णवे–**

**'तदा द्वितीयलक्षं तु प्रजपेत्साधकोत्तमः ।**
**तृतीयलक्षे संप्राप्ते भ्रामयन्ति सुराङ्गनाः ॥'**

इत्यादि । एतेन लक्षैकमात्र इति मात्रपदस्वारस्याद्द्वितीयतृतीयलक्षयोरनुपादानाच्चैक-लक्षात्मकमेवेदं कर्म । तत्रैव लोकत्रयाङ्गनाकृता विघ्नाः क्रमेण भवन्ति । एवं लक्षत्रयमिति कर्मान्तरमिति व्याख्या नोपादेया । 'एका दीक्षा तिस्रो दीक्षा' एकं वृणीते द्वौ वृणीते' इत्यादाविव सम्भवत्येकवाक्यत्वे वाक्यभेदायोगात् । तन्त्रान्तर-विसंवादाच्च । यदपि व्याख्यानमिमानि त्रीणि कर्माण्येकद्वित्रिलक्षरूपाणीति तदप्यत एव नाऽऽदर्तव्यम् । एवं सति यत् **सौभाग्यरत्नाकरेणोक्तं वामकेश्वरतन्त्र** एकलक्षात्मकमपि पुरश्चरणमुक्तमस्तीति वदन्तीति, तद्यद्येतद्व्याख्याभिप्रायेण तदा तदपि चिन्त्यमेव । पञ्चमपटले वक्ष्यमाणयुक्त्यभिप्रायेण चेद्युक्तमेव ॥ ४-५ ॥

**तासामपि यदा नासौ क्षोभं याति मनागपि ।**
**ततः स्वर्गनिवासिन्यो विद्रवन्ति सुराङ्गनाः ॥ ६ ॥**
**एवं लक्षत्रयं जप्त्वा व्रतस्थः साधकोत्तमः ।**
**संक्षोभयति देवेशि त्रैलोक्यं सचराचरम् ॥ ७ ॥**

तासामपि नागकन्याभिरपि । सम्बन्धसामान्ये षष्ठी । दर्शनेनेति शेष इत्यन्ये । ततस्तृतीयलक्षजपारम्भोत्तरम् । एवमुक्तरीत्या लक्षत्रयं जप्त्वा लक्षत्रयजपसमाप्तिपर्यन्तं क्रमपूजां कृत्वा । व्रतस्थो बलवत्तरविघ्नसमूहेऽप्यस्खलितब्रह्मचर्यः । अत एव साधकोत्तमश्चक्रसाधनकर्मठेष्वग्रगण्यः संक्षोभयति स्वायत्तीकुरुते । **मनोरमायां** तु 'त्रैलोक्यक्षोभणक्षमान्'इतिपदम् 'आशेषभुवनप्रथाकरान्' इति व्याख्यातम् ॥ ६–७ ॥

एवं सिद्धचक्रस्य काम्यार्चनाद्यात्मकांस्त्रिचत्वारिंशत्प्रयोगानाह–लिखित्वेत्यादिना पटलसमाप्तिपर्यन्तम् । तत्र कामनीयफलषाड्विध्यात्तत्साधनानि कर्माण्यपि षड्-भवन्ति । शान्तिवश्यस्तम्भनविद्वेषणोच्चाटनमारणभेदात् । तत्र शान्तिरुपद्रवनिवृत्तिः । वश्यं राजादीनां स्वायत्तीकरणम् । स्तम्भनं प्रवृत्तिनिरोधः । विद्वेषणं स्नेहभङ्गः । उच्चाटनं स्थानान्तरप्रापणम् । प्रसिद्धमन्यत् । परे तु रक्षाशान्तिजयलाभनिग्रह-निधनभेदात् षाड्विध्यमाहुः । प्रसज्ज्यमानोपद्रवप्रागभावपरिपालनं रक्षा । प्रसक्तो-पद्रवध्वंसः शान्तिः । रणद्यूतादिविजयो जयः । वाणिज्यादिभिरिष्टप्राप्तिर्लाभः । व्याध्युत्पादनं निग्रहः । शेषं प्रसिद्धम् । अत्र स्तम्भनस्य रक्षायां वश्याकर्षयोर्जये विद्वेषोच्चाटनयोर्निग्रहेऽन्तर्भावमिच्छन्ति । यद्यपि कामनानन्त्यात्तत्साधनानन्त्येन षट्संख्यातिक्रमेऽपि न तार्किकाणामिव क्वापि हानिस्तथाऽपि षट्स्वेव कर्मसु प्रातिस्विकमङ्गविशेषाणां **तन्त्रान्तरे** विधानात्तत्तत्कर्मान्तर्भावे तत्तदङ्गप्राप्तिः फलम् । तानि चाङ्गानि **सौभाग्यरत्नाकरे** त्रयोविंशे तरङ्गे द्रष्टव्यानि ।

तत्र वश्यप्रयोगमाह द्वाभ्याम् –

**लिखित्वा विपुलं चक्रं तन्मध्ये प्रतिमां यदा ।**
**नाम्ना लिखति संयुक्तां ज्वलन्तीं चिन्तयेत्ततः ॥ ८ ॥**

**शतयोजनमात्रस्था त्वदृष्टाऽपि च या भवेत् ।**
**भयलज्जाविनिर्मुक्ता साऽप्यायाति विमोहिता ॥ ९ ॥**

बिन्दुस्थाने वशकर्मभूतायाः प्रतिकृतेर्लेखनाय बिन्दुविरहितं विपुलं श्रीचक्रं लिखेत् । तत्र लेखनकरणद्रव्याकाङ्क्षायां वश्ये सिन्दूरादिरक्तद्रव्येण लेख्यमिति सामान्यविधिना वा, **'सिन्दूररजसा देवि कुङ्कुमेनाथवा पुनः'** इति प्रकृतौ विहितस्य चोदकाद्वा, **'कृत्वा सिन्दूररजसा चक्रं तत्र विचिन्तयेत्'** (१/१३१) इति **दक्षिणामूर्तिसंहितायाम्** । अस्मिन्नेव कर्मणि सिन्दूरविधानाच्छाखान्तराधिकरणन्यायेन कर्मैक्ये सति गुणोपसंहाराद्वा सिन्दूरादेरेव प्राप्तिः सम्भवतीत्याशयेन मूले तदनुक्तिः । यत्तु **'गोरोचनादिभिर्द्रव्यैश्चक्रराजं समालिखेत्'** इति **ज्ञानार्णवे**ऽस्यैव कर्मणः प्रकरणे वचनं तद्यद्यपि स्तम्भनकर्मण एवानुगुणं पीतद्रव्यत्वात् तथाऽपि वाचनिकत्वात् तदपि वैकल्पिकं लेखनद्रव्यम् । अत एव ज्ञापकाद्वश्यादिषट्कर्मभेदेन नियतानामङ्गानां **तन्त्रान्तरेषु** प्रकरणान्तरे कथितानामिह न प्राप्तिरित्यपि सुवचम् । एतेन षट्कर्मभूतकाम्यचक्रार्चनविशेषाणां चक्रसाधनान्तराधिकारककाम्यचक्रार्चनानां च त्रयोविंशद्वात्रिंशतरङ्गयोर्भेदेन लेखनं **सौभाग्यरत्नाकरे** संगच्छते । नाम्ना संयुक्तामिति प्रतिमाविशेषणम् । नाम्नश्च कामराजकूटेन विदर्भणमावश्यकम् । **'ज्वलन्तीं नामसहितां महाबीजविदर्भिताम्'** इति **तन्त्रान्तरात्** । 'महाबीजशब्देन कामराजबीजमुच्यते' इति **श्रीविद्यानन्दनाथो** व्याचख्यौ । विदर्भप्रकारस्तु **शारदातिलके**—

**'मन्त्रार्णद्वन्द्वमध्यस्थं साध्यनामाक्षरं लिखेत् ।**
**विदर्भ एष विज्ञेयः .................. ॥'**

इति । तद्यथा षडक्षरस्य कूटस्य द्वितीयतृतीयाक्षरयोर्मध्ये लक्ष्मीति साध्यनाम्नः प्रथमाक्षरं चतुर्थपञ्चमाक्षरयोर्मध्ये साध्यद्वितीयाक्षरं लेख्यमिति । साध्यनामाक्षराधिक्ये तु प्रतिप्रधानमिति न्यायेन मन्त्रं पुनः पुनरावर्त्य साध्यनामाक्षराणि सर्वाणि विदर्भयेत् । मन्त्रविदर्भणस्य नामसंस्काररूपत्वात् । **अर्थरत्नावलीकारा**स्तु—प्रतिमाया हृद्देशे मूलविद्यां लिखित्वा तस्या हृल्लेखाया हकारमध्ये साधकनाम षष्ठ्यन्तं विलिख्य तदधो रेफहकारयोर्मध्ये साध्यनाम द्वितीयान्तमाकर्षयेति क्रियापदं च लिखेदिति व्याचक्षते । तत्र मूलं त एव जानते । यन्त्रसामान्यविधितस्ततोऽप्यधिकानां लेखनीयाक्षराणां लाभात् । तदुक्तम्—

**'जीवः प्राणो जीवमन्त्रात्ममन्त्रौ शक्तिर्नेत्रे श्रोत्रयुग्मं च जिह्वा ।**
**साध्यः कर्ता कर्म तत्तत्क्रिया च द्वे गायत्र्यौ मन्त्रयन्त्रप्रभेदात् ॥**
**प्राणक्षेपो यन्त्रहृद्भूतबीजं रक्षावर्णो मातृकाभूतवर्णाः ।**
**इत्यङ्गानां विंशतिर्लेखनीया यन्त्रे यन्त्रे सम्प्रदायानुसारात् ॥'**

इति । अनयोः श्लोकयोरर्थस्तु **तृचभास्करे** सविस्तरं वर्णितो**ऽस्माभिः** । एतस्यापि यन्त्रत्वाद्विंशतिलेखनस्येष्टत्वे तु नित्यार्चनेऽपि चक्रराजे तल्लेखनापत्तिर्दुरुद्धरा । तत्रापीष्टापत्तौ सम्प्रदाय एव शरणमिति दिक् । ज्वलन्तीं **कामाग्नि** दह्यमानां विचिन्तयेत् । मन्त्रपावकशिखाविमोहितामित्येके । सा च शिखा तद्योन्यन्तरालोदिता चिन्त्येत्यपि **केचित्** । तत्सर्वं **तन्त्रान्तर**संवाद एव विश्रम्भणीयम् । शतयोजनेति शतशब्दोऽनेकपरः । **'योजनानां सहस्रं ते'** इति **तन्त्रान्तरात्** । स्पष्टमन्यत् । न चास्मिन्प्रयोगे चिन्तयेदितिविधिवशाच्चिन्तनमात्रमेव फलसम्बन्धात्प्रधानं नार्चनम-श्रवणादिति वाच्यम् । चक्रलेखनोक्त्यैव तदर्चनलाभात् । यथा तावत्सौर्यादिवाक्येषु निर्वपतिश्रवणं वायव्यादिवाक्येष्वालभतिश्रवणं च यजतेर्लक्षकं दर्शदैक्षप्रकृतिकत्वे लिङ्गं च तथेह चक्रपदमात्रेण तदर्चनस्य नित्यार्चनप्रकृतिकत्वस्य च लाभ इति **सम्प्रदायात्** । एवमुत्तरत्रापि । एते च सर्वे प्रयोगाः सप्तदिनावधिका इति **केचित्** । सकृदेव वा यावत्फलोदयमावृत्तिर्वेति तु युक्तम् । क्वचित्प्रयोगे सप्ताहाद्दासवत्किङ्करो भवेदित्युक्तमस्तीति चेत् । किं तावता षण्मासान्ध्यानयोगेनेत्यप्युक्तमस्त्येवेति ॥ ८-९॥

प्रयोगान्तरमाह द्वाभ्याम्–

**तन्मध्यगोऽथवा भूत्वा मन्त्री सञ्चिन्तयेद्यदा ।**
**सर्वमात्मानमरुणं साध्यमप्यरुणीकृतम् ॥ १० ॥**
**ततः सञ्जायते देवि सर्वसौभाग्यसुन्दरः ।**
**वल्लभः सर्वलोकस्य साधकः परमेश्वरि ॥ ११ ॥**

अथेति प्रयोगान्तरारम्भे, वेति विकल्पे । तन्मध्यगः, चक्रमध्ये स्थितः । अरुण-मुद्यत्सूर्यसहस्रतुल्यम् । साध्यं वशक्रियाकर्मीभूतम् । अरुणीकृतं स्वतेजसो व्याप्त्येति च्विप्रत्ययलभ्योऽर्थः । **तन्त्रान्तरे**ऽपि–

**'उद्यत्सूर्यसहस्राभमात्मानमरुणप्रभम् ।**
**साध्यमप्यरुणीभूतं चिन्तयेत्परमेश्वरि ॥'**

इति । **अर्थरत्नावलीकारा**स्तु–स्वीयां कुण्डलिनीं वहन्नाड्या बहिरानीय साध्यनासिका-द्वारा प्रवेश्य तत्कुण्डलिन्यैकीकृत्य तया कवलीकृतं साध्यजीवं स्वासनतां नीत्वा स्वब्रह्मरन्ध्रेन्दुमण्डलादारक्तामेव सुधाधारां निःसार्य तया सर्वमात्मानं साध्यसहित-माप्लावयेदिति वर्णयन्ति । तद**र्णवसंहितयो**र्न दृश्यते । साध्यवशीकारांशे पूर्वप्रयोगेण सहास्य विकल्पः । सौन्दर्यादिकमप्यस्य फलम् ॥ १०-११ ॥

**सर्वरक्तोपचारैस्तु पूजयेन्मुद्रया युतम् ।**
**यस्य नाम्नैव संयुक्तं स भवेद्दासवद्वशी ॥ १२ ॥**

मुद्राशब्दो यद्यपि नानार्थस्तथाऽपि प्रकृते गुरुमुखैकवेद्यं यद्योनिमुद्राबन्धनाख्यं मन्त्रदोषनिरासाय यत्**साम्प्रदायिकै**रनुष्ठीयते तदेवेह ग्राह्यम् । **'मुद्रासन्नद्धविग्रहः'** इति

**तन्त्रान्तरे** स्वशरीरे मुद्रया सन्नाहविधानाल्लिङ्गात् । व्याख्यातं च तथैव **ऋजुविमर्शिन्यां** नाम्नैव संयुक्तं विदर्भितं यथा तथा । तत्प्रकारश्च पूर्वमुक्तः । **'यस्य नाम विदर्भितम्'** इति **ज्ञानार्णवा**दियमेव व्याख्योचिता । ये तु साध्यसाधकयोर्नामद्वयं वशीकुर्विति क्रियापदं च लेख्यमिति व्याचक्षते तेषां मूलं मृग्यम् ॥ १२ ॥

प्रयोगान्तरमाह त्रिभिः –

**अदृष्टायास्तु संयोज्य नाम चक्रस्य मध्यगम् ।**
**विरच्य योनिमुद्रां च तामाकर्षयति क्षणात् ॥ १३ ॥**
**यक्षिणीं वाऽथ गन्धर्वीं किन्नरीं वा सुरेश्वरीम् ।**
**सिद्धकन्यां नागकन्यां यक्षकन्यां च खेचरीम् ॥ १४ ॥**
**विद्याधरीमप्सरसमृषिकन्यामथोर्वशीम् ।**
**मदनोद्भवविक्षोभस्फुरज्जघनमण्डलाम् ॥ १५ ॥**

अदृष्टाया यक्षिण्याद्यन्यतमरूपाया यन्नाम व्यवहारयोग्यं तच्चक्रस्य मध्यगं यथा तथा संयोज्य चक्रमध्ये तद्वाचकप्रातिपदिकमात्रं विलिख्य न तु मन्त्रेण सह विदर्भात्मक इह संयोगः । अदृश्यस्त्रीनामवर्णाश्चक्रमध्ये विलिख्य त्विति **संहितोक्तेः** । एतावानेव च पूर्वप्रयोगादस्य विशेषः । योनिमुद्राविरचने तु **तन्त्रान्तरे** विशेषो न श्रूयते । 'ये तु मन्त्रदोषनिरासे कथितं योनिमुद्राबन्धनमपि प्रोक्तसंक्षोभिण्यादि-दशकान्तर्गतमेवेति मन्यन्ते ते त्वसाम्प्रदायिका' इत्युक्तं **श्रीहर्षदीक्षितैः** । तस्मादिह **सम्प्रदाय** एव यावद्विशेषदर्शनं शरणम् । यक्षिणी यक्षतो भिन्नैव जातिः । अतो न यक्षकन्यापदेन पौनरुक्त्यम् । अप्सरसमित्यनेनैव सिद्धेऽप्युर्वशीग्रहणं गोबलीवर्दन्या-येन । इदं च यक्षिणीमित्यादिश्लोकद्वयस्थं पदजातं तामित्येकवचनान्तरस्य विशेषणम् । **केचित्** तु–वक्ष्यमाणप्रयोगस्थस्य सर्वयोषित इत्यस्य विशेषणं मन्यमाना इमं प्रयोगं मानुषीमात्रविषयं मन्यन्ते, तत् **तन्त्रान्तर**विरुद्धम् ॥ १३-१५ ॥

श्लोकार्धेनैव प्रयोगान्तरमाह–

**महाकामकलाध्यानात् क्षोभयेत्सर्वयोषितः ।**

यदेव कामकलाध्यानं क्रत्वर्थत्वेन पूर्वं विहितं तदेव कामनोद्देशेन क्रियमाणं काम्यमपि भवति । ततश्च संयोगपृथक्त्वन्यायेनोभयार्थमिदं ध्यानम् । सर्वयोषितो लोकत्रयस्थाङ्गनाः ।

**'महाकामकलाध्यानयोगात्तु सुरवन्दिते ।**
**क्षोभयेत् स्वर्गभूर्लोकपातालतलयोषितः ॥'**

इति **ज्ञानार्णवात्** । अत्र तुशब्दबलात्प्रथमप्रयोगादेतस्य भिन्नता सूचिता, तेन प्रकृततन्त्रेऽध्युष्टश्लोकैरेक एव प्रयोग इति भ्रमो गलहस्तितः ॥ १५$\frac{१}{२}$ ॥

अथार्चनमन्तरेणैव कतिचित् प्रयोगान् वक्तुमारभते–

**रोचनाकुङ्कुमाभ्यां वा सप्तभागं तु चन्दनम् ॥ १६ ॥**
**अष्टोत्तरशतं जप्त्वा तिलकं धारयेद् बुधः ।**
**ततो यमीक्षते वक्ति स्पृशते चिन्तयेच्च यम् ॥ १७ ॥**
**अर्थेन च शरीरेण स वशं याति दासवत् ।**

रोचना गोरोचनं कुङ्कुमं केसरम् । अनयोरन्योन्यं भागसाम्यं समं स्यादश्रुतत्वादिति न्यायात् । चन्दनं तु मिलिताभ्यामेताभ्यां समभागम् ।

**'रोचनाभागमेकं तु भागमेकं तु कुङ्कुमम् ।**
**अथ भागद्वयं देवि चन्दनं मर्दयेत्समम् ॥'**

इति **तन्त्रान्तरात्** । ये तु रोचनाकुङ्कुमयोर्भागद्वयं चन्दनभागमेकमेव योजयेदिति व्याचक्षते, ते निर्मूलत्वादुपेक्ष्याः । अर्थेनेति सहार्थे तृतीया ॥ १६-१७$\frac{१}{२}$ ॥

**तथा पुष्पं फलं गन्धं पानं वस्त्रं महेश्वरि ॥ १८ ॥**
**अष्टोत्तरशतं जप्त्वा यस्याः सम्प्रेष्यते स्त्रियाः ।**
**सद्य आकृष्यते सा तु विमूढहृदया सती ॥ १९ ॥**
**हठाकृष्टिरियं भद्रे न क्वचित्प्रतिहन्यते ।**

पुष्पमिति पत्रादेरुपलक्षणम् । फलमन्नताम्बूलादेः । गन्धं कर्पूरादेः । पान दधिदुग्धादेः । वस्त्रं भूषणादेः । यस्या इत्यत्र लिङ्गमविवक्षितम् । एवं पूर्वप्रयोगेऽपि यमीक्षत इत्यत्र । हठाकृष्टिरिति । यदि साध्येन परमन्त्रस्तम्भनाः प्रयोगा अनुष्ठीयन्ते तदा तत्सिद्धिप्राबल्यात्साधकप्रयोगस्य प्रतिहतिः स्यादेव । अयं तु प्रयोगो बलवताऽपि न प्रतिहन्यत इत्यर्थः । भद्र इति संबुद्धिः सप्तमी वा ॥ १८-१९$\frac{१}{२}$ ॥

अथ सार्धैरेकादशभिः श्लोकैरेकं प्रयोगमुपदिशति--

**लिखेद्रोचनयैकान्ते प्रतिमामवनीतले ॥ २० ॥**
**सुरूपां चारुशृङ्गारवेषाभरणभूषिताम् ।**
**तद्भालगलहृन्नाभिजन्ममण्डलयोजिताम् ॥ २१ ॥**
**जन्मनाममहाविद्यामङ्कुशान्तर्विदर्भिताम् ।**
**सर्वाङ्गसन्धिसंलीनमालिख्य मदनाक्षरम् ॥ २२ ॥**

**तदाशाभिमुखो भूत्वा त्रिपुरीकृतविग्रहः ।**
**बद्ध्वा तु क्षोभिणीमुद्रां विद्यामष्टशतं जपेत् ॥ २३ ॥**
**नियोज्य दहनागारे चन्द्रसूर्यकलालये ।**

गोमयेन रहःस्थाने भूमिमुपलिप्य तत्र गोरोचनेन साध्यस्त्रीप्रतिमां शृङ्गार-रसानुगुणैर्वेषेणाऽऽभरणैश्च युक्तां सम्यग्विलिख्य तस्या भालमारभ्य योनिपर्यन्तं तदीयजन्मनामसहितां श्रीविद्यां क्रोमित्यङ्कुशबीजविदर्भितां कृत्वा लिखेत् । अङ्कुशबीजं जन्मनामाद्याक्षरं विद्याक्षरद्वयं पुनरङ्कुशं जन्मनामद्वितीयाक्षरं विद्यातृतीयचतुर्थाक्षरे इत्यादिरीत्या लिखेत् । ततस्तत्प्रतिमाया देहे यावन्ति सन्धिस्थानानि तावत्सु स्थलेषु पुनः पुनर्द्वितीयकूटमेव विलिख्य तद्बीजं दाडिमीपुष्पाभं तत्तत्सन्धिषु लीनं विभाव्य साध्यस्त्री यस्यां दिशि तिष्ठति तदाभिमुख्येन देवताभावापादकान् न्यासान्कृत्वा वक्ष्यमाणलक्षणां क्षोभिणीमुद्रां [बद्ध्वा] तद्बीजं [चन्द्रसूर्यकलालये दहनागारे नियोज्य विद्यामष्टशतं जपेदिति स]मुदायार्थः । अत्र गोमयलेपः **संहितो**क्तः– **'लिप्तगोमयभूमौ तु लिखेद्रोचनया ततः'** इति । जन्ममण्डलशब्दो योनिपरः । **केचित्** तु–'भालपद-माज्ञाचक्रोपलक्षकम्, [जन्म]मण्डलपदं मूलाधारपरम्' इति वदन्तः षट्चक्रेषु विद्यां लिखेदित्याहुः । तदयथाक्षरम् । ये त्वङ्कुशोत्तरं विद्याक्षरद्वयं ततो जन्मनामाक्षरमिति व्याचक्षते, तेषां पाठक्रमपरित्यागे मूलं चिन्त्यम् । दाडिमीपुष्पप्रभत्वं तु **अर्णवो**क्तम्– **'लीनं दाडिमपुष्पाभे चिन्तयेद्देहसन्धिषु'** इति । मदनाक्षरपदस्य क्लींबीजपरत्वेन व्याख्यानमनादेयम् । **'सर्वाङ्गसन्धिसंलीनं कामकूटं समालिखेत्'** इति **संहिता**विरोधात् । एवम्–

**'क्षोभिणीबीजमुद्राभ्यां विद्यामष्टशतं जपेत् ।**
**योजयेत्तां कामगेहे चन्द्रसूर्यकलावृते ॥'**

इतिवचनान्मूलस्थो दहनागारशब्दो मदनमन्दिरपरः । तत्र योजनं तु मुद्राया एव योग्यताबलात् । **केचित्** तु–दहनागारशब्देन साधकस्य मूलाधारमुच्यते, तत्र योजनं साध्याया इत्याहुः । परे तु चन्द्रसूर्यकलायुक्ताग्निमण्डलं श्रीचक्रमेवेत्याहुः । तदुभयमपि **संहिता**विरुद्धम् ॥ २०-२३$\frac{१}{२}$ ॥

अथाऽऽकृष्यमाणां साध्यां वर्णयति–

**ततो विचलितापाङ्गामनङ्गशरपीडिताम् ॥ २४ ॥**
**दूरीकृतस्वचारित्रभयलज्जानयाङ्कुशाम् ।**
**आकृष्टहृदयां नष्टधैर्यामुड्डीनजीविताम् ॥ २५ ॥**
**वप्रप्रासादनिगडनदीयन्त्रसुरक्षिताम् ।**
**प्रोच्चलन्मदकल्लोलप्रस्फुरज्जघनस्थलीम् ॥ २६ ॥**

**शक्तिचक्रोच्चलच्छक्तिवलनाकवलीकृताम् ।**
**नवानुरागसन्धानवेपमानहृदम्बुजाम् ॥ २७ ॥**
**मनोधिकमहामन्त्रपवनापहृतांशुकाम् ।**
**विमूढामिव विक्षुब्धामिव श्रान्तामिव द्रुताम् ॥ २८ ॥**
**लिखितामिव निःसंज्ञामिव प्रमथितामिव ।**
**गलितामिव संभ्रान्तामिवोड्डामरितामिव ॥ २९ ॥**
**विहस्तामिव संकीर्णामिवाऽऽकुलितमानसाम् ।**
**निलीनामिव निश्चेष्टामिवान्यत्वं गतामिव ॥ ३२ ॥**
**भ्रमन्महानिलोद्भूतयन्त्राकारां नभस्थले ।**
**भ्रमन्तीमानयेन्नारीं योजनानां शतैरपि ॥ ३१ ॥**

विचलितावपाङ्गौ नेत्रयोरन्तौ यस्यास्ताम् । स्वे, आत्मीया जनाः । चारित्रमाचारः । नयो नीतिः । दूरीकृता आत्मीयादिनयान्ताः पञ्चाङ्कुशा यया ताम् । उड्डीनं जीवितं देहभानं यस्यास्ताम् । वप्रः प्राकारः। प्रासादो भूभुजां गृहम् । निगडः शृङ्खलादण्डो द्वारनिरोधकः । नदीयन्त्रमन्तर्गर्तितनदीका परिखा । एतैः सुरक्षितामपि प्रोच्चलद्भि-र्मदमयैः कल्लोलैर्महातरङ्गैः प्रस्फुरन्ती जघनस्थली यस्यास्ताम् । शक्तिचक्रात्साध-कोपास्यदेवीपरिवारादुच्चलन्त्याः शक्तेश्चक्रान्तर्गतान्यतमाया वलनया व्याप्त्या कवली-कृतां स्वायत्तीकृताम्, शक्तिचक्रं तदीयमूलाधारम्, तस्मादुच्चलन्त्याः शक्तेः कुण्ड-लिन्या इति **केचित्** । मनसोऽप्यधिकवेगेन मन्त्रवायुनाऽपहृतमाकृष्टमंशुकं यस्यास्ताम् । विमूढामिवेत्यादयश्चतुर्दशेवकाराश्चतुर्दशधोत्प्रेक्षार्थाः ।

**'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।**
**उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥'**

इत्यालङ्कारिकवचनेन तस्योत्प्रेक्षाव्यञ्जकत्वात् । उड्डामरितां भूताविष्टाम्, विहस्तां व्याकुलाम् । **'विहस्तव्याकुलौ समौ'** इति **अमरः** । अन्यत्वं गतामिव, अन्यादृशीमिव । स्पष्टमन्यत् ॥ २४-३१ ॥

अथ द्वौ रक्षाकरप्रयोगावाह—

**अथवा मातृकां सर्वां लिखित्वा चक्रबाह्यतः ।**
**धारयेद्बाहुमूले यः सोऽवध्यः सर्वजन्तुषु ॥ ३२ ॥**

भूर्जादिपत्रे चक्रं विलिख्य मातृकाभिर्बहिरावेष्ट्य संपूज्य यो धारयेत्स व्याघ्रादिदुष्टजन्तुष्ववध्यो भवति । उक्तं च **ज्ञानार्णवे**—

**'मातृका विलिखेच्चक्रबाह्यतः सकलाः प्रिये ।**
**भूर्जपत्रे स्वर्णपत्रे रौप्यपत्रेऽथ ताम्रके ॥**
**सोऽवध्यः सर्वजन्तूनां व्याघ्रादीनां विशेषतः ।'**

इति । **संहिता**यामपि–

**'अथवा मातृकाश्चक्रबाह्ये संवेष्ट्य मन्त्रवित् ।**
**तच्चक्रं पूजयेत्सम्यक् .................... ॥'**

इत्यादि ॥ ३२ ॥

अथ निकायिन्यायेन पूर्वपूर्वविकारानुत्तरोत्तरान् प्रयोगान् कतिचिदाह–

**तथैव हि महेशानि स्वसंज्ञाक्रमयोगतः ।**
**चन्दनागुरुकर्पूरैरजरामरतां व्रजेत् ॥ ३३ ॥**

तथैव पूर्वप्रयोगवदेव । स्वनामयोजनं चन्दनाद्यैरेव लेखनमिति तु विशेषः । **संहिता**यां तु कस्तूरीकेसरयोरपि मेलनमुक्तम् । अत्र नामलेखनादीतिकर्तव्यता-विस्तरो ग्रन्थविस्तरैकप्रयोजनकोऽ**र्थरत्नावल्यां** द्रष्टव्यः ॥ ३३ ॥

पुनर्वश्यप्रयोगानेवाऽऽह–

**एवं देवि विधानेन रोचनागुरुकुङ्कुमैः ।**
**लिखितं चक्रयोगेन(ण) यस्मिन्कस्मिन्नपि स्थितम् ॥ ३४ ॥**
**साध्यनाम स्वनाम्ना तु चक्रस्यान्तर्विदर्भितम् ।**
**करोति सकलाँल्लोकानचिरात्पादवर्तिनः ॥ ३५ ॥**

पूर्वोक्तरीत्या मातृकावेष्टितं चक्रं रोचनाद्यैर्विलिख्य तन्मध्ये स्वनाम्ना विदर्भितं साध्यनाम विलिख्य पूजयेत् । सर्वे जनाः पादसमीपवर्तिनो भवन्ति । चक्र-योगेन(ण) लेखनोपायेन भूर्जाद्याधारनियमो देहे धारणं च कृताकृतमित्याह– यस्मिन्निति ॥ ३४-३५ ॥

**मध्यं गतेन बीजेन महाकामकलात्मना ।**
**एकमेकमवष्टभ्य साध्यनामाक्षरं प्रिये ॥ ३६ ॥**
**बहिरप्यखिलैरेव वेष्टयेन्मातृकाक्षरैः ।**
**हेममध्यगतं कृत्वा धारयेद्वामके भुजे ॥ ३७ ॥**
**शिखायामथवा वस्त्रे धारयेद्यत्र तत्र वा ।**
**करोति दासभूतं हि त्रैलोक्यं सचराचरम् ॥ ३८ ॥**
**संमोहयति राजानं वाजिनं दुष्टकुञ्जरम् ।**
**चोरं केसरिणं सर्वं परचक्रं महाग्रहम् ॥ ३९ ॥**
**शत्रून्वज्राशनिं शस्त्रं वेतालं राक्षसं तथा ।**
**भूतप्रेतपिशाचांश्च धारिता चक्ररूपिणी ॥ ४० ॥**

महाकामकलात्मकं बीजं चतुर्थस्वरस्तेन मध्यंगतेन त्रिकोणान्तर्लिखितेन साध्यनामाक्षरमेकमेकमवष्टभ्य संपुटीकृत्य बहिश्चक्राधान्नवयोनिचक्राद् बहिर्मातृका-

भिर्वेष्टयेदिति तु **[ऋजु]विमर्शिन्यां** व्याख्यातम् । **[अर्थ]रत्नावलीकार**स्तु–मध्यंगतेन मूलविद्यामध्यस्थेन बीजेन कामराजकूटेन साध्यनामाक्षराणि ग्रथयित्वा त्रिकोणान्त-र्विलिख्य बहिः कामकूटाद् बहिस्त्रिकोणमध्य एव मातृकाभिः साध्यनामाक्षरग्रथन-रीत्यैव वेष्टयेदिति व्याचख्यौ । वस्तुतस्तु–मूले चक्रस्येतिपदाभावेऽपि निकायिन्या-येन पूर्वयागप्रकृतिकत्वाद्धारिता चक्ररूपिणीत्युपसंहाराच्च चक्रस्येत्यस्योपस्थितौ तस्य मध्यं तस्य बहिरित्येवार्थः । यत्तु **संहितायां** वचनम्–

**'कामकूटेन देवेशि सन्दर्भ्य पृथगक्षरम् ।**
**साध्यनाम्नां त्रिकोणान्तर्वेष्टयेन्मातृकाबहिः ॥'**

इति । तत्रापि चक्रं विलिख्येत्यस्य पूर्वश्लोकादनुवृत्तेस्तदविरोधेनैव चक्राद् बहिरित्येव व्याख्येयम् । तेन प्रकृतितः प्राप्तस्य बाधो न कृतो भवति । चतुर्थस्वरावष्टम्भो मातृकावष्टम्भश्च मानाभावात् **संहिता**विरोधाच्च नोपादेय इति युक्तम् । अत्राऽऽदौ कामकूटम्, ततो देवदत्तप्रथमाक्षरम्, पुनः कूटं वकारः, पुनः कूटं दकारः, कूटं त्तकारः कूटमिति ग्रथनक्रमः । **सहितायां** साध्यनाम्नामितिबहुवचननिर्देशादनेक-साध्योद्देशेन सकृदेवायं प्रयोग इति ध्वनितम् । तदनुसारेण साध्यनाम्नामक्षरमित्येव प्रकृते विग्रहः । सचराचरमित्यत्र तच्छब्दश्चक्रं परामृशतीति **[ऋजु]विमर्शिन्या**मुक्तम्, तदयुक्तमिति स्पष्टम् ॥ ३६-४० ॥

**तेन क्रमेण सन्दर्भ्य पुराणां नाम सुन्दरि ।**
**मध्ये चतुष्पथे चापि चतुर्दिक्षु निधापयेत् ॥ ४१ ॥**
**महान्कोलाहलस्तत्र ततो लोकस्य जायते ।**
**योषितां च विशेषेण विद्विष्टानामपीश्वरि ॥ ४२ ॥**

पूर्वोक्त एव प्रयोगे साध्यनामाक्षराणां स्थाने स्रुघ्नपाटलिपुत्रादिनगरनामाक्ष-राणीति विशेषः । नन्वेवं सति नगरस्यैव साध्यत्वात्पूर्वेणैव सिद्धमित्यत आह–मध्ये चेति । नगरस्य मध्यभागे चतुष्पथे पूर्वादिदिक्चतुष्टये च निखननार्थं षट्चक्राणि कार्याणीति विशेषान्न गतार्थतेति भावः । अत्र **संहितायां** दिक्षु पूर्वादिषु क्रमादित्युक्तेः प्रकृते चकारश्रवणाच्च षण्णां समुच्चय एव न विकल्पः । सर्वं नगरमेव स्ववशे तिष्ठतीति तात्पर्यार्थः ॥ ४१-४२ ॥

**एतन्मध्यगतां पृथ्वीं सशैलवनकाननाम् ।**
**चतुःसमुद्रपर्यन्तां ज्वलन्तीं चिन्तयेत्प्रिये ॥ ४३ ॥**
**षण्मासान्ध्यानयोगेन जायते मदनोऽपरः ।**
**दृष्ट्वैवाऽऽकर्षयेल्लोकान् दृष्ट्वैव कुरुते वशे ॥ ४४ ॥**

**दृष्ट्या संक्षोभयेन्नारीं दृष्ट्वैवापहरेद्विषम् ।**
**दृष्ट्या करोति वागीशं दृष्ट्या सर्वं विमोहयेत् ॥ ४५ ॥**
**दृष्ट्या करोति चाऽऽवेशं दृष्ट्या सर्वं विमोचयेत् ।**
**दृष्ट्या चातुर्थिकादींश्च नाशयेद्विषमज्वरान् ॥ ४६ ॥**

एतस्य चक्रस्य मध्यगतां सर्वां पृथ्वीं चिन्तयेत् । षण्मासानित्यत्यन्तसंयोगे द्वितीया । ज्वरपदमसाध्यरोगमात्रोपलक्षणम् ॥ ४३-४६ ॥

**एतत्प्रपूजितं रात्रौ चक्रं सिन्दूररञ्जितम् ।**
**करोति महदाकर्षं सुदूरादपि योषिताम् ॥ ४७ ॥**

सिन्दूरेण रञ्जितं लिखितम् । **'रात्रौ सिन्दूरलिखितं पूजयेदेकचित्ततः'** इति **संहितै**कवाक्यत्वात् । तेन हरिद्रादिना विलिख्य सिन्दूरं पूरयेदिति व्याख्यानमनादेयम् । महदिति चक्रविशेषणम् । महतामाकर्षमिति वा । महमुत्सवं ददातीति महः । स चासावाकर्ष इति वा ॥ ४७ ॥

**सदा दिक्षु विदिक्ष्वेवं यदा देवि प्रपूज्यते ।**
**दिगनुक्रमयोगेन(ण) तदा सर्वं जगद्वशे ॥ ४८ ॥**

यां दिशं सर्वां वशयितुमिच्छुस्तद्दिगभिमुखः सदाऽखण्डं पूजयेत् । एवं क्रमेण सर्वं जगद्वशयति । अत्र दिङ्नामैव साध्यनामेत्याहुः ॥ ४८ ॥

**भूर्जपत्रे विलिख्यैतन्नवे निर्विवरोदरे ।**
**रोचनागुरुकाश्मीरैर्मध्ये सन्दर्भयेत्पुरम् ॥ ४९ ॥**
**विपुलं देशमथवा विषयं मण्डलं तथा ।**
**स्वनामसहितं कृत्वा यदि भूमौ निधापयेत् ॥ ५० ॥**
**धारयेदथवा हस्ते कण्ठे वा बाहुमूलतः ।**
**शिखायामथवा वस्त्रे यत्र तत्र स्थितं च वा ॥ ५१ ॥**
**चक्रमेतन्महाभागे पुरक्षोभणमुत्तमम् ।**

नूतने निश्छिद्रे भूर्जे चक्रं विलिख्य तन्मध्ये स्वनाम्ना विदर्भितं नगरदेशमण्डलखण्डान्यतमं कृत्वा विलिख्य संपूज्य निखननधारणाद्यन्यतमं कुर्यादित्यर्थः ॥ ४९-५१$\frac{१}{२}$ ॥

**अर्कक्षीरं कुङ्कुमं च धत्तूरकरसं तथा ॥ ५२ ॥**
**रोचनालक्तकं लाक्षारसं मृगमदोत्कटम् ।**
**एकीकृत्या चक्रमेतल्लिख्यते यस्य संज्ञया ॥ ५३ ॥**

**तस्य चोरग्रहव्याधिरिपुसिंहाहिवाजिजम् ।**
**यक्षराक्षसवेतालभूतप्रेतपिशाचजम् ॥ ५४ ॥**
**लूतावृश्चिककीटानां कामलाशीतिकोद्भवम् ।**
**भयं न विद्यते तस्य परमन्त्राभिचारजम् ॥ ५५ ॥**
**नित्यं सन्धारणाद्देवि कालमृत्युयमादयः ।**
**न शक्ता हिंसितुं सम्यग् रोमैकमपि सर्वथा ॥ ५६ ॥**

अर्कक्षीरादिद्रव्यसप्तकं मेलयित्वा तेन चक्रं विलिख्य यस्य नाम मध्ये लिख्यते तस्य सर्वोपद्रवनिवृत्तिः । तेन तस्य नित्यं धारणे तु यावच्छरीरसम्पर्कस्ताव-त्कालमृत्युरपि तं न बाधत इत्यर्थः । इहालक्तकपदेन बर्बूरत्वगादिद्रव्ययोगजन्यो रसः । लाक्षारसस्य पृथगुपादानात् । तयोः सामानाधिकरण्येनान्वयस्तु नोपादेयः ।

**'उन्मत्तरसलाक्षार्कक्षीरकुङ्कुमरोचनाः ।**
**कस्तूर्यलक्तसहिता एकीकृत्य तु संलिखेत् ॥'**

इति **संहिता**विरोधात् । कामला ज्वरपल्ली । शीतिका शीतज्वरः । **'अकार-प्रश्लेषेण को ब्रह्मात्मानिलार्केषु'** इति **कोशाद्** वायुवाचकककारेण चाशीतिसंख्या वातजन्या रोगा वा गृह्यन्ते ॥ ५२-५६ ॥

**अथवा मध्यगो देवीं त्रिकोणोभयगां तथा ।**
**अधस्तान्नामसंयुक्तां रोचनाकुङ्कुमाङ्किताम् ॥ ५७ ॥**
**निधापयेच्च सप्ताहाद् दासवत्किङ्करो भवेत् ।**

त्रिकोणस्य कोणत्रये मध्ये चेति चतुर्वारं विद्या विलिख्य तदधः स्थानचतुष्के साध्यनामापि पुनः पुनर्लिखेदिति व्याचक्षते । कामकूटं चतुर्वारं लिखेदित्यपि **केचित्** । पक्षद्वयेऽपि मूलाक्षरारूढता चिन्त्या । त्रिकोणोदरगामिति क्वाचित्कः पाठः । तत्पक्षे त्रयः कोणा उदरं चेति समासः सुवचः । त्रिकोणोभयगामित्येव तु **तन्त्रान्तर**संवादी पाठः ॥ ५७-५७$\frac{१}{२}$ ॥

**अङ्कितां लिखितां नित्यं धारयेदुज्जिघृक्षताम् ॥ ५८ ॥**
**नाम्ना सर्वज्ञभूतोऽपि मूको भवति तत्क्षणात् ।**

ये तावत्स्वेन सहोज्जिघृक्षन्ति उद्ग्राहं कर्तुमिच्छन्ति शास्त्रीये लौकिके व्यवहारे वा विवदितुमिच्छन्ति, तन्नामसहितं चक्रं पीतद्रव्येण भूर्जादौ विलिख्य पूर्वाभिमुखः

पीतैरेव पुष्पैः पूजयित्वा धारयेत् । प्रतिवादिमुखस्तम्भो भवति । तदुक्तं **ज्ञानार्णवे**–

**'पीतद्रव्यैः समालिख्य पीतपुष्पैः समर्चयेत् ।**
**पूर्वाशाभिमुखो भूत्वा स्तम्भयेत्सर्ववादिनः ॥**
**सहस्रवदनो देवि मूको भवति तत्क्षणात् ।**
**नाम्ना यस्य स वाग्मी हि पाषाण इव जायते ॥'**

इति । क्वचिदिन्द्रदिङ्मुख इति मूलपाठः ॥ ५८-५८$\frac{१}{२}$ ॥

मारणप्रयोगमाह–

**महानीलीरसेनापि नाम संयोज्य पूर्ववत् ॥ ५९ ॥**
**दक्षिणाभिमुखो वह्नौ दग्ध्वा मारयते क्षणात् ।**

नीलीरसेन चक्रं विलिख्य ब्राह्मणभिन्नस्याधार्मिकस्य द्वेष्यस्य नाम पूर्वोक्तरीत्या संयोज्य दक्षिणाभिमुखोऽभ्यर्च्य वह्नौ दहेत्, रिपुर्म्रियते ॥ ५९-५९$\frac{१}{२}$॥

**महिषाश्वपुरीषाभ्यां गोमूत्रेणार्ङ्कितं लिखेत् ॥ ६० ॥**
**नाम्नाऽऽरनालमध्यस्थं विद्विष्टः सर्वजन्तुषु ।**

महिषपुरीषाश्वपुरीषयो रसं गोमूत्रेण सम्मेल्य तेन चक्रं विलिख्य तत्र देवदत्तयज्ञदत्तौ विद्वेषयेत्यादि विलिख्याभ्यर्च्य तच्चक्रं सौवीरमध्ये निक्षिपेत् । अथ काञ्जिके । **'आरनालकसौवीर'** इति **अमरः** । यस्य नाम्नाऽङ्कितं स सर्वजन्तुषु विद्विष्टो भवतीत्यन्वयः । महिषाश्वेति तु मिथोवैरस्य गोव्याघ्रादेरुपलक्षणमित्यन्ये । पुरीषद्वयमेव लेखनद्रव्ये । गोमूत्रेण तु चक्रस्य सेचनमात्रमित्यपि **केचित्** । तदुभयमपि **संहितादि**विरुद्धम् ॥ ६०-६०$\frac{१}{२}$ ॥

**युक्त्वा रोचनया नाम काकपक्षेण संलिखेत् ॥ ६१ ॥**
**नीलकर्पटके सम्यग्नीलसूत्रेण वेष्टयेत् ।**
**लम्बमानं तदाकाशे परमुच्चाटनं भवेत् ॥ ६२ ॥**

नीलवस्त्रे गोरोचनद्रव्येण काकपक्षोत्थलेखन्या चक्रं विलिख्य तत्र साध्यनाम संयोज्य पूजयित्वा तद्वस्त्रं नीलसूत्रेणाऽऽवेष्ट्य यष्टौ बद्ध्वाऽऽकाशे लम्बयेत् । उच्चाटनं भवति ॥ ६१-६२ ॥

**दुग्धलाक्षारोचनाभिर्महानीलीरसेन च ।**
**लिखित्वा धारयेच्चक्रं चातुर्वर्ण्यं वशं भवेत् ॥ ६३ ॥**

दुग्धादिद्रव्यस्येतरेतरयोगद्वन्द्ववशाच्चकाराच्च परस्परमिश्रितमेकमेव लेखन-द्रव्यम् । तदुक्तं **संहितायाम्**–

**'महानीलीरसोद्भिन्नारोचनादुग्धमिश्रितैः ।**
**लाक्षारसैर्लिखेच्चक्रं चतुर्वर्णान्वशं नयेत् ॥'**

इति । अत्रोद्भिन्ना पञ्चमं द्रव्यं योजनीयं विधीयते । महानीलीरोचनाभ्यां दुग्धलाक्षारसादिभिरित्यत्राऽऽदिपदेनाप्येतदेव द्रव्यं **ज्ञानार्णवे**ऽप्यभिप्रेतं दृश्यते । तदनुरोधेन मूले चकारोऽपि तत्समुच्चयार्थ एव व्याख्येयः । **सुरेश्वर**कृत**शब्दप्रदीपा-ख्ये** **भिषक्कोशे**–**'औद्भिन्नं क्षारिकायां स्यात्कडाहलवणेऽपि च'** इति । एतेन चत्वारि द्रव्याणि चतुर्णां वर्णानां वशीकरणे यथासंख्यमन्वियन्तीति **[ऋजु]विमर्शिनीकारो-**क्तिर्निरस्ता । श्वेतरक्तपीतनीलवर्णानां मृदादीनां **स्मृत्या**दिषु विप्रादिभेदेन व्यवस्था-दर्शनं तेषां भ्रममूलम्, तत्तु **तन्त्रान्तरे** विशेषदर्शनान्निवर्त्यम् ॥ ६३ ॥

**एतेनैव विधानेन जलमध्ये विनिक्षिपेत् ।**
**सौभाग्यमतुलं तस्य स्नानपानादिना भवेत् ॥ ६४ ॥**

एतेनैव दुग्धादिद्रव्यपञ्चककरणकलेखनादिरूपेणैव । आदिपदेन मुखप्रक्षालनं ये ये पिवन्ति ते ते वशगा भवन्तीति तु **तन्त्रान्तर**सिद्धोऽर्थः । यत्तु **[ऋजु]विमर्शिन्याम्** उक्तम्–दीक्षाभिषेकसमये कनकपट्टचक्रं कुम्भे निक्षेप्यम् । अभिषेकोत्तरं च तच्चक्रं गुरवे देयमित्ययमर्थोऽनेन लब्ध इति तत् **तन्त्रान्तरे** न दृष्टम् ॥ ६४ ॥

**एतन्मध्यगतां देवीं नागरीं वा सुराङ्गनाम् ।**
**सप्ताहात्क्षोभयेत्सत्यं ज्वलमानां विचिन्त्य ताम् ॥ ६५ ॥**

देवीं राजमहिषीम् । नागरीं नगरे भवां यां काञ्चित् । तां चक्रान्तर्ज्वलितां चिन्तयेदित्यादिरुक्तचर एवार्थः ॥ ६५ ॥

**महापातकयुक्तात्मा यदि देवीं प्रपूजयेत् ।**
**शमीदूर्वासहाश्वत्थपल्लवैरथ वाऽर्कजैः ॥ ६६ ॥**
**मासेन हन्ति कलुषं सप्तजन्मकृतं नरः ।**

शम्यादिपल्लवचतुष्टयं मिलितमेव पूजायां करणम् । द्वन्द्वावगतसाहित्य-स्योपादेयविशेषणत्वेन विवक्षितत्वात् । अत एव **'मल्लिकामालतीजातीकुन्दैश्च शत-पत्रैः'** इति **ज्ञानार्णव**श्लोकव्याख्यावसरे मल्लिकादीनां समुदितानां पूजासाधनत्व-मित्युक्तं **शङ्करानन्दैः** । **'सहा कुमारी तरणिः'** इति **अमरः** । अर्कजैरिति तु तत्पुष्पस्या-प्युपलक्षणमिति वदन्ति ॥ ६६-६६$\frac{1}{2}$ ॥

अथ सार्धैः सप्तभिः श्लोकैस्त्रयोदश प्रयोगानाह–

**लिखित्वा पीतवर्णेन चक्रमेतद्यदाऽर्चयेत् ॥ ६७ ॥**
**पूर्वाशाभिमुखो भूत्वा स्तम्भयेत्सर्ववादिनः ।**
**सिन्दूरेणाप्युल्लिखितं पूजयेदुत्तरामुखः॥ ६८ ॥**
**यदा तदाऽस्य वशगो लोको भवति सर्वथा ।**
**गैरिकेण तदालिख्य पूजयेत्पश्चिमामुखः ॥ ६९ ॥**
**सोऽपि सर्वाङ्गनाकर्षवश्यक्षोभकरो भवेत् ।**
**दक्षिणाभिमुखो भूत्वा कृष्णं चक्रे समर्चयेत् ॥ ७० ॥**
**यस्य नाम्ना तस्य नित्यं मन्त्रहानिस्तु जायते ।**
**तद्वद् दिगन्तरालेषु पूजितं परमेश्वरि ॥ ७१ ॥**
**स्तम्भविद्वेषणव्याधिशत्रूच्चाटनकारकम् ।**
**रोचनालिखितं देवि दुग्धमध्ये वशंकरम् ॥ ७२ ॥**
**क्षिप्तं गोमूत्रमध्ये तु शत्रूच्चाटनकारकम् ।**
**तैलमध्यगतं चक्रं विद्वेषणकरं परम् ॥ ७३ ॥**
**तक्रमध्यगतं चापि विद्वेषणकरं भवेत् ।**
**ज्वलज्ज्वलनमध्यस्थं सर्वशत्रुविनाशनम् ॥ ७४ ॥**

अत्र पीतपुष्पैरेवार्चनम्, दिगन्तरालेषु विदिक्षु, **'अग्निराक्षसवायव्यशम्भुकोणेषु पूजितम्'** इति **अर्णव**वाक्याल्लोके क्लृप्तत्वाच्चानेनैव क्रमेण स्तम्भनादिफलानि योज्यानि । तेन पूर्वोत्तरापरदक्षिणक्रमस्य पूर्वं क्लृप्तत्वादीशानाद्याग्नेयान्तः क्रम इति कल्पना परास्ता । ईशानादिवायव्यान्तः क्रम इति **[अर्थ]रत्नावलीकार**स्य तु महान् प्रमादः, निर्युक्तिकत्वात् । तद्वदित्यनेन स्तम्भनादिकर्मानुगुणं पीतद्रव्यादिकं लेखने करणमुक्तम् । तदनिर्णये प्रकृतितः प्राप्तं रोचनादिकमेव ज्ञेयम् ॥ ६७-७४ ॥

**अथवा देवदेवेशि यदेकान्ते चतुष्पथम् ।**
**तत्समीपे लिखेच्चक्रं सिन्दूरेण महाप्रभम् ॥ ७५ ॥**
**सर्वबाह्यत आरभ्य यावन्मध्यं महेश्वरि ।**
**अकारादिक्षकारान्तां मातृकां तत्र विन्यसेत् ॥ ७६ ॥**
**पूजयेद् रात्रिसमये कुलाचारक्रमेण यः ।**
**तत्क्षणात्स महेशानि साधकः खेचरो भवेत् ॥ ७७ ॥**

एकान्ते पशुजनवर्जिते चतुष्पथसमीपदेशे सिन्दूररजसा चक्रं विलिख्य तत्र मातृका अपि बाह्यमारभ्य मध्यपर्यन्तं लिखित्वा कुलाचाररीत्या मपञ्चकसाहित्येन रात्रौ पूजनेन खेचरत्वसिद्धिर्भवति । मातृकालेखस्तु--अणिमायाः स्थाने स्वाभिमुखाग्रं कोणं कृत्वेशानाऽग्नेयाभिमुख्येन द्वे वामदक्षिणरेखे विभाव्य मध्यबिन्दोरुपरि यथा तिर्यग्रेखा पतति तथा पूर्वरेखां विभाव्य तासां स्थानेऽकथादिषोडशषोडश मातृका विलिख्य कोणत्रये हळक्षाँल्लिखेदिति **केचित्** । अणिमाद्यखिलदेवतानामासनस्थाने प्रत्येकं वागुराकारेण सर्वमातृकाः पुनः पुनर्लेख्या इत्यन्ये । वस्तुतस्तु– **'चतुरस्रं मातृकार्णैर्मण्डितं सिद्धिहेतवे । 'त्रिवृत्तं मातृकान्वितम् ॥'** इत्यादि**ज्ञानार्णवा**दिज्ञापकात् **केरलसम्प्रदाय**सिद्धः श्रीचक्रे मातृकालेखप्रकारोऽस्ति, तस्यायं विधिरिति युक्तम् । स च प्रकारः **सुन्दरीमहोदये** द्रष्टव्यः ॥ ७५-७७ ॥

**पूजयित्वा महेशानि तद्वदेकतरौ गिरौ ।**
**अजरामरतां सत्यं लभते नात्र संशयः ॥ ७८ ॥**

एक एव तरुर्यस्मिंस्तादृशे पर्वते प्रागुक्तरीत्यैव पूजनादजरामरत्वं भवति । एकतर इति पाठं स्वीकृत्यासहाय इति व्याख्यानम् **अर्णवादितन्त्रान्तर**विरुद्धम् ॥ ७८ ॥

अथ समस्तसिद्धीनां साधकमेकमेव प्रयोगमाह--

**महाभूतदिने वाऽपि श्मशाने यदि पूजयेत् ।**
**पूर्ववन्निशि देवेशि साधकः स्थिरमानसः ॥ ७९ ॥**
**पादुकाखड्गवेतालसिद्धद्रव्यमनःशिलाः ।**
**अञ्जनं विवरं चेटी यक्षी दूरगतिस्तथा ॥ ८० ॥**
**यत्किञ्चित्सिद्धिसन्तानं विद्यते भुवनत्रये ।**
**तत्सर्वमेव सहसा साधयेत्साधकोत्तमः ॥ ८१ ॥**

**॥ इति श्रीनित्याषोडशिकार्णवस्य द्वितीयः पटलः ॥**

महाभूतदिनं चतुर्दशी । साऽपि कृष्णैवेति **केचित्** । साऽपि भौमयुक्तैवेत्यपरे । स्थिरमानसो निर्भयः । पादुकारूढस्य जलोपर्यपि गमनम् । खड्गे स्वयमेव प्रहृत्य पुनः स्वायत्तता । वेतालवशीकारः । सिद्धानां सहवासः । इच्छामात्रेण द्रव्याणामनर्घ्याणां निर्माणम् । मनसो निग्रहः । शिला चिन्तामणिलाभः । अञ्जनं व्यवहितदर्शनदम् । विवरं पातालबिलादिप्रवेशः । चेटीयक्ष्योर्देवताविशेषयोः स्वाधीनीकरणम् । दूरदेशे क्षणेन गमनम् । अन्यदपि यत्सिद्धिसन्तानमणिमादिरूपमनन्तविधं भुवनत्रयवर्ति तत्सर्वमनेनैव प्रयोगेण साधयेत् । अत एव स साधकेषूत्तमः । **संहितायां** त्वस्मिन्नेव प्रयोगे मासषट्कपर्यन्तमावृत्तिरुक्ता । **तन्त्रान्तरे**ष्वेतदुत्तरं बहुजन्मकृतपापक्षयफलकानि

प्रायश्चित्तात्मकानि पूजनान्युक्तानि तान्यप्यनेनैव प्रयोगेण साधनीयानीत्याशयेन यत्किञ्चिदित्युक्तम् । अनुक्तं सर्वमित्यर्थः । यत्किञ्चित्प्राचीनमग्नीषोमीयादित्यत्र यत्किञ्चित्पदस्य तथार्थवर्णनदर्शनादिति सर्वं शिवम् ॥ ७९-८१ ॥

**इति श्रीभास्करोन्नीते नित्याषोडशिकाम्बुधेः ।**
**व्याख्याने सेतुबन्धाख्ये विश्रामोऽभूद्द्वितीयकः ॥ २ ॥**

# अथ तृतीयो विश्रामः

एवमेकाशीतिश्लोकात्मकेन द्वितीयपटलेन चक्रसाधनं तत्साध्यांस्त्रिचत्वारिंश-त्प्रयोगांश्च निर्वर्ण्य मुद्राणामपि फलस्य चक्रसाधनोत्तरमेव सिद्धिं दिध्वनयिषुरिहैव तासां विरचनप्रकारं दिदर्शयिषुः परमशिवो विमर्शांशेन प्रश्नमवतारयति–

**श्रीदेव्युवाच**

**भगवंस्त्रिपुरामुद्राः सूचिता न प्रकाशिताः ।**
**कथं विरचनं तासां क्रियते वद शङ्कर ॥ १ ॥**

सूचिताः प्रथमपटले पूजायां कर्तव्यत्वेन विहिताः ॥ १ ॥

**श्रीभैरव उवाच**

**शृणु देवि प्रवक्ष्यामि मुद्राः सर्वार्थसिद्धिदाः ।**
**याभिर्विरचिताभिस्तु संमुखा त्रिपुरा भवेत् ॥ २ ॥**

संमुखेति स्वाङ्गाच्चोपसर्जनादित्यनेन पक्षे टाप् ॥ २ ॥

आवाहनस्य पूजायां प्रथममुपस्थिततत्वेन तदुपयोगिनीं वक्ष्यमाणनवमुद्रासमष्टिरूपां त्रिखण्डामुद्रां प्रथममाह--

**परिवर्त्य करौ स्पृष्टावङ्गुष्ठौ कारयेत्समौ ।**
**अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ॥ ३ ॥**
**कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरि ।**
**त्रिखण्डेयं महामुद्रा त्रिपुराह्वानकर्मणि ॥ ४ ॥**

परस्परान्तःप्रवेशिताङ्गुलिकौ हस्तौ मिथः सम्मुखौ कृत्वा दक्षतर्जन्या वामानामिकाग्रं वामतर्जन्या दक्षानामिकाग्रं च गृह्णीयात् । ततः कनिष्ठिकायुगलं मध्यमायुगलमङ्गुष्ठयुगलं च परस्पराभिमुख्येन सरलं कुर्यात् । सेयं युगलात्मकखण्डत्रयेण युक्ता त्रिखण्डा त्रिपुराया आह्वाने विनियुक्ता । अत्र परस्परान्तरङ्गुलीनां प्रवेश एव परिवर्तनपदेनोक्तः । स्पृष्टौ संयुक्तावङ्गुष्ठौ समौ सरलप्रसरौ । अनामे अन्तर्गते ययोस्ते तर्जन्यौ कुटिलाकृती आकुञ्चिताग्रे कृत्वा कनिष्ठिके द्वे नियुञ्जीत परस्परं योजयेत् । अत्र निजस्थानपदं लक्षणया मध्यस्थानस्थितमध्यमाङ्गुलिपरम् । मध्यमे अपि नियुञ्जीतेत्यर्थः । त्रिखण्डापदस्य यौगिकतया वा तल्लाभः । अत एवोक्तं **ज्ञानार्णवे**--

**'पाणिद्वये महेशानि परिवर्तनयोगतः ।**
**योजयित्वा तर्जनीभ्यामनामे धारयेत्प्रिये ॥**

**मध्यमे योजयेन्मध्ये कनिष्ठे तदधस्ततः ।**
**अङ्गुष्ठावपि संयोज्य त्रिधा युग्मक्रमेण तु ॥**
**त्रिखण्डा नाम मुद्रेयं त्रिपुराह्वानकर्मणि ।'**

इति । न च प्रकृततन्त्ररीत्या मध्यमायोगस्य स्पष्टमकथनाद्द्विखण्डाया एव वामादिकलात्रितयस्वरूपताया वक्ष्यमाणत्वात्त्रिखण्डेति नामास्तु । तन्त्रभेदेन मन्त्रयन्त्र-मुद्रादेर्भेदस्य बहुशो दर्शनादिति वाच्यम् । अविरोधे सम्भवति विरोधविकल्पयोर-न्याय्यत्वात् । अत एवानामान्तर्गते इत्यत्र बहुव्रीहिः । अनामाभ्यामन्तर्गते इत्यपि **केचित्** ॥ ३-४ ॥

**मध्यमे मध्यमे कृत्वा कनिष्ठाङ्गुष्ठरोधिते ।**
**तर्जन्यौ दण्डवत्कृत्वा मध्यमोपर्यनामिके ॥ ५ ॥**
**एषा तु प्रथमा मुद्रा सर्वसंक्षोभकारिणी ।**

कनिष्ठाङ्गुष्ठयोरग्रपर्वणी परस्पराभिमुख्येन सम्मेल्य तदुभयपर्वमध्यभागे मध्य-माग्रपर्वापि योजयेत् । कनिष्ठामध्यमाङ्गुष्ठानामग्रपर्वत्रयं परस्परसंलग्नं कुर्यादिति यावत् । तादृशं हस्तद्वयं संलग्नं कृत्वा दक्षानामिकां वाममध्यमामध्यपर्वोपरि वामानामिकां दक्षमध्यमामध्यपर्वोपरि प्रवेशयेत् । तर्जन्यौ तु सरले एव शून्य(भूम्य)-भिमुखाग्रे कृत्वा संस्थापयेत् । इदं च मध्यमोपरीतिपदस्वारस्याल्लब्धम् । सेयं मुद्रा सर्वसंक्षोभिण्याख्या भवति । एषा तु प्रथमेत्यनेन यत्र मुद्राणां प्रदर्शनं विधीयते तत्रेत आरभ्यैव प्रदर्शयेन्न त्रिखण्डामारभ्येति ध्वन्यते । इदं च मुद्राविरचनमक्षर-स्वारस्यलब्धमुक्तम् । **ज्ञानार्णवो**ऽप्यस्मिन्नेवार्थेऽनुकूलः –

**'विमुखौ तु करौ कृत्वा मध्यमे मध्यमे कुरु ।**
**अङ्गुष्ठाभ्यां कनिष्ठाभ्यां चाऽऽपीड्य सरले ततः ॥**
**तर्जन्यौ दण्डवत्कुर्यान्मध्यमस्थे ह्यनामिके ।**
**सर्वसंक्षोभिणी मुद्रा त्रैलोक्यक्षोभकारिणी ॥'**

इति । **तन्त्रराजे** त्वन्यथोक्तम्–

**'कनिष्ठानामिकामध्या नखैरन्योन्यसङ्गताः ।**
**कृत्वाऽङ्गुष्ठौ कनिष्ठास्थावृजू कुर्याच्च तर्जनी ॥**
**सर्वसंक्षोभिणी मुद्रा त्रैलोक्यक्षोभकारिणी ।'**

इति । **प्राञ्च**स्तु– मध्यमे मध्यगे एव न तु स्थानान्तरगते कुर्यात् । निजस्थान एव ते वसत इति यावत् । कनिष्ठाङ्गुष्ठरोधिते इत्यनामिकाविशेषणम् । तर्जन्यौ मध्यमोपरि दण्डवत्कुर्यादिति व्याचक्षते । एतत्पक्षे दूरान्वयः कतिपयपदवैयर्थ्यं **तन्त्रान्तर-**विसंवादश्चेति स्पष्टम् ॥ ५-५$\frac{१}{२}$ ॥

**एतस्या एव मुद्राया मध्यमे सरले यदि ॥ ६ ॥**
**क्रियते चेन्महेशानि सर्वविद्राविणी तदा ।**

एतस्याः सर्वसंक्षोभिण्या मध्यमे अपि तर्जनीवत्सरले भवतश्चेदित्यर्थः । न तु मध्यमे एव सरले इति ।

**'मध्यमे तर्जनीयुक्ते सरले चेतरा(त्तदा) भवेत् ।**
**सर्वविद्राविणी मुद्रा द्रावयेत्तु चराचरम् ॥'**

इति **तन्त्रान्तरात्** ॥ ६-६$\frac{1}{2}$ ॥

**मध्यमातर्जनीभ्यां तु कनिष्ठानामिके समे ॥ ७ ॥**
**अङ्कुशाकाररूपाभ्यां मध्यमे परमेश्वरि ।**
**इयमाकर्षिणी मुद्रा त्रैलोक्याकर्षकारिणी ॥ ८ ॥**

सर्वविद्राविण्यामेव तर्जन्योर्मध्यमयोश्चाऽऽकुञ्चिताग्रत्वे सर्वाकर्षिणी मुद्रा भवति । तदुक्तम्—

**'मध्यमातर्जनीयुग्मे वक्रे कुर्यात्सुलोचने ।**
**एतस्या एव मुद्रायास्तदाऽऽकर्षणकारिणी ॥'**

इति । अत्र मध्यमातर्जनीभ्यामिति तृतीयेत्थंभूतलक्षणे । वक्राभ्यां ताभ्यामुपलक्षिता मुद्रेत्यन्वयः । कनिष्ठानामिके तु समे । पूर्वमुद्रास्थाभ्यां स्वाभ्यामेव तुल्ये । मध्यम इति तु परमेश्वर्या विशेषणम् । एतासां मुद्राणां मध्ये वासनारूपेण वामादि-शक्तिरूपतयाऽवस्थित इत्यर्थः । अन्ये तु एतस्या एव मुद्राया इत्यनुवर्त्य कनिष्ठानामिके मुद्रामध्यगे मध्यमातर्जनीभ्यां समे च कार्ये इति योजयन्ति । अत्र साम्यं प्रमेयत्वादिनैव निर्वाह्यं वक्रत्वेन साम्ये तु कनिष्ठानामिके अप्याकुञ्चयेदिति विध्यर्थः स्यात् । तथा च **तन्त्रान्तर**विरोधोऽनुवृत्तिविरोधवैयर्थ्ये च ॥ ७-८ ॥

**पुटाकारौ करौ कृत्वा तर्जन्यावङ्कुशाकृती ।**
**परिवर्त्य क्रमेणैव मध्यमे तदधोगते ॥ ९ ॥**
**क्रमेण देवि तेनैव कनिष्ठानामिके अपि ।**
**संयोज्य निबिडाः सर्वा अङ्गुष्ठावग्रदेशतः ॥ १० ॥**
**मुद्रेयं परमेशानि सर्वावेशकरी स्मृता ।**

करयोः पुटाकारतोक्तिः परस्परपराङ्मुखत्वसिद्ध्यर्था । अन्यथाऽदृष्टार्थतापत्तेः । तेन **सम्प्रदाया**देव पराङ्मुखत्वलाभ इत्युक्तमपास्तम् । एवं पराङ्मुखौ परिवर्तयेत्पर-स्परान्तःप्रवेशिताङ्गुलिकौ कुर्यात् । ततस्तर्जन्यौ परस्पराभिमुख्येन कुञ्चिताग्रे कार्ये ।

तदधो मध्यमे, तदधोऽनामिके, तदध कनिष्ठिके अपि तेनैव क्रमेणाङ्कुशाकारता-क्रमेण संयोज्य निबिडाः सान्द्रा निरवकाशा अङ्गुलीः कृत्वा सर्वोर्ध्वमङ्गुष्ठौ न्युब्जौ निदध्यात् । कनिष्ठानामिके इत्यत्राल्पाच्तरमिति कनिष्ठायाः पूर्वनिपातः । सेयं मुद्रा सर्वाविशकरी, सर्ववशङ्करीत्यप्युच्यते ॥ ९-१०$\frac{१}{२}$ ॥

**सम्मुखौ तु करौ कृत्वा मध्यमामध्यगेऽनुजे ॥ ११ ॥**
**अनामिके तु सरले तद्बहिस्तर्जनीद्वयम् ।**
**दण्डाकारौ ततोऽङ्गुष्ठौ मध्यमानखदेशगौ ॥ १२ ॥**
**मुद्रैषोन्मादिनी नाम क्लेदिनी सर्वयोषिताम् ।**

दक्षकनिष्ठां वाममध्यमया वामकनिष्ठां च दक्षमध्यमया दृढं गृह्णीयात् । तद्ग्रहणं च द्वेधा सम्भवति अनामिकयोरुत्तानकनिष्ठिकोर्ध्वमवस्थापनेन तदधोऽव-स्थापनेन चेति । तत्र द्वितीयपक्षानुमतिद्योतनाय करौ सम्मुखौ कृत्वेत्युक्तम् । अनामिकयोः परस्पराभिमुख्येन संलग्नताया अस्मिन्नेव पक्षे संरक्षणात् । मध्यगेऽनुजे इत्यत्र सन्धिरार्षः । अनुजे कनिष्ठिके । अनुजशब्दः सतीसप्तम्येकवचनान्तो वा । ततोऽनामाद्वयं सरलं तद्बहिस्तत्पार्श्वयोर्दूरे तर्जनीद्वयमपि सरलम् । मध्यमयोरा-कुञ्चिताग्रयोर्नखोपरि न्युब्जौ दण्डाकारावङ्गुष्ठौ चेदेषा सर्वोन्मादिनी नाम मुद्रा भवति ॥ ११-१२$\frac{१}{२}$ ॥

**अस्यास्त्वनामिकायुग्ममधः कृत्वाऽङ्कुशाकृति ॥ १३ ॥**
**तर्जन्यावपि तेनैव क्रमेण विनियोजयेत् ।**
**इयं महाङ्कुशा मुद्रा सर्वकार्यार्थसाधिनी ॥ १४ ॥**

अस्या उन्मादिनीमुद्राया अनामिकायुग्ममङ्कुशाकारं कृत्वा, तर्जन्यावपि तेनैवाङ्कु-शाकाररूपेणैव क्रमेण योजयेत् । सेयं महाङ्कुशा नाम मुद्रा भवति ॥ १३-१४ ॥

अथ नवभिः खेचरीमुद्रामाह--

**सव्यं दक्षिणहस्ते तु दक्षिणं सव्यहस्ततः ।**
**बाहू कृत्वा महेशानि हस्तौ संपरिवर्त्य च ॥ १५ ॥**
**कनिष्ठानामिके देवि युक्त्या तेन क्रमेण तु ।**
**तर्जनीभ्यां समाक्रान्ते सर्वोर्ध्वमपि मध्यमे ॥ १६ ॥**
**अङ्गुष्ठौ तु महेशानि कारयेत्सरलावपि ।**
**इयं सा खेचरी नाम मुद्रा सर्वोत्तमा प्रिये ॥ १७ ॥**

वामबाहुं दक्षभुजोपरि दक्षं हस्तपरिवेष्टनक्रमेण वामहस्तोपर्यानीय मिथःप्रवेशिताङ्गुलिकौ कृत्वा, दक्षतर्जन्या वामे कनिष्ठानामे, वामतर्जन्या दक्षे कनिष्ठानामे गृह्णीयात् । मध्यमे तु सर्वोर्ध्वं सरले एवं स्थापयेत् । सेयं खेचरी नाम मुद्रा भवति । तदुक्तं **ज्ञानार्णवे**--

**'वामं भुजं दक्षभुजे दक्षिणं वामदेशतः ।**
**निवेश्य योजयेत्पश्चात्परिवर्त्य क्रमेण हि ॥**
**कनिष्ठानामिकायुग्मे तर्जनीभ्यां निरोधयेत् ।**
**मध्यमे सरले कृत्वा योनिवत्सरलौ ततः ॥**
**अङ्गुष्ठौ खेचरीमुद्रा पार्थिवस्थानयोजिता ।'**

इति । **तन्त्रराजे** तु--

**'सव्यदक्षकरौ सम्यग्व्यन्यसेत्कूर्परौ ततः ।**
**मणिबन्धौ च बध्नीयादञ्जलिं मध्यपृष्ठयोः ॥**
**विधाय भुग्ने तर्जन्यावङ्गुष्ठौ कारयेदधः ।**
**कनिष्ठानामिके कुर्याद्व्यत्यस्ते करपृष्ठगे ॥**
**इयं सा खेचरी मुद्रा ललिताप्रीतिकारिणी ॥'**

इति । वामबाहुं दक्षिणबाहोरधो योजयेदिति **अर्थरत्नावली**व्याख्यानं तु **अर्णव**विरोधादुपेक्ष्यम् । यदपि तर्जनीभ्यां मध्यमे समाक्रान्ते सर्वोर्ध्वे कुर्यात् । अङ्गुष्ठौ तु सरलौ मध्यमाङ्गुलीभ्यां संस्पृष्टौ दण्डवत्कुर्यादिति, तदपि **ज्ञानार्णव**विरुद्धमेव ॥ १५-१७ ॥

मुद्रामहिमानं वर्णयति–

**रचितेयं महादेवि सर्वतेजोपहारिणी ।**
**बद्धयैवैतया देवि दृश्यते साधकोत्तमः ॥ १८ ॥**
**योगिनीसर्ववृन्दैस्तु ज्वलत्पावकसन्निभः ।**
**डाकिनीराकिणीवृन्दैर्लाकिनीकाकिनीगणैः ॥ १९ ॥**
**साकिनीहाकिनीभिस्तु ध्यातेयं परमेश्वरि ।**
**एतया ज्ञातया देवि योगिनीनां भवेत् प्रियः ॥ २० ॥**
**यतः समयमुद्रेयं सर्वासां परिकीर्तिता ।**

एष खेचरीमुद्राबन्धो यतः सर्वासां शक्तीनां समयबन्धरूपस्तस्मादेतद्बन्धनेन सर्वतेजोपहारादिकमेतज्ज्ञानेन देवतावल्लभत्वादिकं च भवतीत्यर्थः । समयः सङ्केतः । यो यत्सङ्केतज्ञः स तत्कूटान्तर्भावीति व्याप्तेरिति भावः ॥ १८–२० $\frac{१}{२}$ ॥

अथैतामेवाऽऽश्रित्य गुणफलसम्बन्धमाह–

**प्रयतोऽप्रयतो वाऽपि शुचौ देशेऽथवाऽशुचौ ॥ २१ ॥**
**उत्थितो वोपविष्टस्तु चंक्रमन्निश्चलोऽपि वा ।**
**उच्छिष्टो वा शुचिर्भूत्वा भुञ्जानो मैथुने रतः ॥ २२ ॥**
**मुद्राया मध्यमाङ्गुल्यौ परिवर्त्य क्रमेण तु ।**
**पार्थिवे स्थानके युक्त्वा सद्यः खेचरतां व्रजेत् ॥ २३ ॥**

अस्या एव मुद्राया मध्यमयोः सरलतां निरस्य परिवर्तनं कृत्वा पार्थिवस्थाने योजयेत् । तावतैव खेचरत्वसिद्धिः । अत्राधिकारितावेदकप्र।यत्यादिकमधिकरणतावच्छेदकं शुचित्वादिकं कालनियमादयश्च प्रयोगान्तर इव नाऽवश्यकाङ्गानीत्यर्थः । **ज्ञानार्णव**मते तु पार्थिवस्थानयोगः खेचरीशरीरघटकत्वान्नित्यः, **वामकेश्वरमते** तु काम्य इति विशेषः । पार्थिवस्थानं नाम मूर्धस्थितमहाबिन्दुस्थानमित्याहुः । यत्तु **प्राचां** टीकासु खेचरीत्रैविध्यमिह वर्ण्यते । तत्तदनुसारेण मुद्राया इति श्लोकोऽपि योज्यते, तत्प्रकृतानुपयोगान्नोक्तम् **अस्माभिः** । खेचरीशब्दस्य नानार्थत्वेन तेष्वर्थेष्वेकस्य खेचरीत्वस्य सैन्धवत्वादेरिवाभावेन मनोनिरोधविशेषादेस्तद्विभाजकधर्मत्वाभावाच्च ॥ २१-२३ ॥

**परिवर्त्य करौ स्पृष्टावर्धचन्द्राकृती प्रिये ।**
**तर्जन्यङ्गुष्ठयुगलं युगपत्कारयेत्ततः ॥ २४ ॥**
**अधः कनिष्ठावष्टब्धे मध्यमे विनियोजयेत् ।**
**तथैव कुटिले योज्ये सर्वाधस्तादनामिके ॥ २५ ॥**
**बीजमुद्रेयमचिरात् सर्वसिद्धिप्रवर्तिनी ।**

आदौ मिथः स्पृष्टयोः करयोः परस्परान्तःप्रवेशिताङ्गुलिकत्वरूपं परिवर्तनं कुर्यात् । ततस्तर्जन्यङ्गुष्ठयुगलमर्धचन्द्राकृति कुर्यात्, गलहस्तितवदिति यावत् । युगपदित्यनेन युगलद्वयमपि तथा रचयेदिति लभ्यते । ततः स्वाधोभागे कनिष्ठिकाभ्यामवष्टब्धे कृत्वा मध्यमे अर्थादग्रभागे योजयेत् । मध्यमानामिकासन्धिद्वये कनिष्ठिकाग्रद्वयं विनिमयेन प्रवेश्य मध्यमयोः परस्परनखाग्रस्पर्शं कारयेदिति यावत् । ततः सर्वाधस्ताद्भागेऽनामिके वक्रे कृत्वा यथा सौख्यं भवति, तथैव व्यत्यस्ते योज्ये । सेयं बीजाख्या मुद्रा । अस्यामेव तर्जन्योरङ्कुशाकारताऽङ्गुष्ठयोर्नखाग्रयोगश्चोक्तः **तन्त्रराजे**–

**'मध्यमामध्यपार्श्वाधः कनिष्ठाग्रे विपर्ययात् ।**
**अनामिकेऽधो व्यत्यस्ते तर्जन्यावङ्कुशाकृती ॥**
**इतरे तन्नखाग्राग्रे बीजमुद्रेयमीरिता ।'**

इति । **केचित्** तु– कनिष्ठिकाभ्यामवष्टब्धे मध्यमे अधो विनियोजयेदिति वदन्तस्तर्जनीमध्यमयोः सन्धौ कनिष्ठिकाप्रवेशनं मन्यन्ते । परे तु– मध्यमावष्टब्धे कनिष्ठिके इति व्याचक्षाणाः कनिष्ठावष्टब्धपदे बहुव्रीहिं मन्यमाना मध्यमाद्वयेनाऽऽ-कुञ्चितेन कनिष्ठिकायुगलं गर्भीकुर्यादिति मेनिरे । तदुभयमपि **तन्त्रान्तर**विसंवादाद-नादृत्यम् । सम्भवतः संवादस्य त्यागायोगात् । **ज्ञानार्णवे** तु भूयोविसंवादाद्भिन्न एव प्रकारः । यथा–

**'परिवर्त्याञ्जलिं कृत्वा कनिष्ठाग्रगते ततः ।**
**मध्यमे स्थापयेद्देवि कनिष्ठे धारयेत्ततः ॥**
**अनामिकाभ्यां सुदृढं तर्जनीमध्यमायुगम् ।**
**अङ्गुष्ठाभ्यां समायोज्यमर्धचन्द्राकृति प्रिये ॥**
**बीजमुद्रेयमाख्याता सर्वानन्दकरी शिवे ।'**

इति ॥ २४-२५$\frac{१}{२}$ ॥

चरमां योनिमुद्रामाह--

**मध्यमे कुटिलाकारतर्जन्युपरिसंस्थिते ॥ २६ ॥**
**अनामिकामध्यगते तथैव हि कनिष्ठिके ।**
**सर्वा एकत्र संयोज्या अङ्गुष्टपरिपीडिताः ॥ २७ ॥**
**एषा तु प्रथमा मुद्रा योनिमुद्रेति या स्थिता ।**

तर्जन्यौ कुटिलाकारावङ्कुशाविव कृत्वा तादृशतर्जन्यग्रयोरुपरि मध्यमे उत्ताने निक्षिपेत् । ततः कनिष्ठिके व्यत्यस्ते कृत्वाऽनामिकाभ्यां गृह्णीयात् । एवम-नामाकनिष्ठाचतुष्टयमेकीकृत्याङ्गुष्ठाभ्यां निरुन्ध्यात् । अनामिकयोर्नखोपर्यङ्गुष्ठौ न्युब्जौ निदध्यादिति यावत् । यद्यप्यक्षरस्वारस्यादीदृश एवार्थो लभ्यते, तन्त्रभेदा-न्मुद्राभेदो न दोषायेत्यपि सुवचम्, तथाऽपि **तन्त्रान्तर**संवादायानामिके मध्यगते ययोस्ते इति बहुव्रीहिरेव युक्तः । ततश्चानामिके व्यत्यस्ते कृत्वाऽङ्कुशाकार-तर्जन्युत्तानमध्यमयोर्मध्ये प्रवेशयेत् । तयोरधः कनिष्ठिके व्यत्यस्ते अनामिकापृष्ठ-संलग्ने स्थापयेत् । अङ्गुष्ठपीडनं तु मध्यमामध्यपर्वणोरिति सिध्यति । तदुक्तं **तन्त्रराजे– 'कनिष्ठाङ्गुष्ठसंश्लेषान्महायोनिस्त्रिखण्डिका'** इति ।

सेयं योनिमुद्रा भवति । अस्या नवम्याः प्रथमत्वेन कीर्तनं कथमित्याशङ्क्य बहुधा समादधते–तत्र प्रथमा प्रथमकीर्तनीया, सर्वोत्तमत्वादित्यर्थ इति **केचित्** । परे तु बहिर्यागे सर्वसंक्षोभिणीमुद्रायाः प्राथम्यमन्तर्यागे तु योनिमुद्राया एवेति व्यवस्थाप्रदर्श-नार्थमित्याहुः । तत्र विनिगमनाविरहेण वैपरीत्यं कुतो नेति विचार्यम् । यद्वा--

चक्रनिर्माणे बिन्दोः प्रथममुत्पन्नत्वाद् बिन्दुचक्रे प्रदर्शनीयत्वादस्याः प्राथम्यम् । अथवा–

**'एका चैषा महामुद्रा योनिमुद्रात्वमागता ।**
**तया विभक्तः स्वात्मा तु संक्षोभादिप्रभेदतः ॥'**

इति **अभियुक्तो**क्त्या स्वेतरमुद्राजनकत्वात् प्राथम्यमित्यप्याहुः । अथवा– प्रथमपदेन देव्येव कथ्यते । **'अहमस्मि प्रथमजा ऋतस्य'** इति **श्रुतेः** । **'पूर्वजा त्रिपुराम्बिका'** इति **स्मृते**श्च । तत्र जननांशे गौणत्वात्सर्वकारणार्थकं प्रथमादिपदमेव तद्वाचकमिति निर्विवादम् । ततश्चैषा मुद्रा प्रथमैव देवीस्वरूपैवेत्यर्थः । यद्वा–पूर्वोक्तासु दशसु मुद्रासु त्रिखण्डाया एव प्रथमकीर्तनात् प्रथमशब्देन त्रिखण्डोच्यते । ततश्चैषा योनिमुद्रा त्रिखण्डैव, ततः किञ्चिद्विलक्षणेत्यर्थः । **'महायोनिस्त्रिखण्डिका'** इति **तन्त्रराजो**क्तेः । इत्थमुक्तिश्चानामिकामध्यगते इति पदे बहुव्रीहौ तात्पर्यग्राहिका, तेन तत्पुरुषलघीयस्त्वन्यायस्य नात्र प्रसरः । अथवा– चक्रपूजायाः संहारक्रम इव सृष्टिक्रमोऽपि **तन्त्रान्तर**सिद्धोऽस्त्येव । नहि सृष्टिक्रमेण पूजनेऽपि संक्षोभिण्यादि-क्रमेणैव मुद्राः प्रदर्शनीया इति नियन्तुं युक्तम्, नवसु चक्रेषु नवमुद्राणां नियमित-त्वात् । अत एव मध्यचक्रमात्रपूजादिसंक्षेपपक्षे न संक्षोभिण्यादिक्रमेणैव मुद्राप्रदर्श-नम् । अपि तु वश्यमुद्रादिक्रमेणैव । तथा च सृष्टिक्रमाभिप्रायेण प्राथम्योक्तिः । तया च सृष्टिक्रमेणार्चनध्वननमिति तत्त्वम् ॥ २६-२७ $\frac{१}{२}$ ॥

मुद्रानिरूपणमुपसंहरति–

**एता मुद्रा महेशानि त्रिपुराया मयोदिताः ॥ २८ ॥**
**पूजाकाले प्रयोक्तव्या यथानुक्रमयोगतः ।**

**॥ इति नित्याषोडशिकार्णवस्य तृतीयः पटलः ॥**

यथानुक्रमपदेन संहारक्रमे संक्षोभिण्यादिक्रमेण सृष्टिक्रमे योन्यादिक्रमेण संक्षेपात्पुरुषार्थत्वमात्रे ता मा भूदित्येतदर्थः । तेन संयोगपृथक्त्वन्यायेनाऽऽसा-मुभयार्थत्वसिद्धिः । तत्र फलकामप्रयोगस्तु सिद्धचक्रस्यैव नान्यस्य चक्रसाधनोत्तर-मस्याऽऽम्नानात् । न च समिदादिफलश्रवणस्येव मुद्राफलश्रुतिरर्थवाद इति मन्त-व्यम् । प्रकरणपाठबहिःपाठाभ्यां वैषम्यात् । **सुन्दरीतापिन्या**मपि तृतीयोपनिषदि स्वातन्त्र्येण मुद्राणां कथनादिति शिवम् ॥ २८-२८ $\frac{१}{२}$ ॥

**इति श्रीभास्करोन्नीते नित्याषोडशिकाम्बुधेः ।**
**व्याख्याने सेतुबन्धाख्ये विश्रामोऽभूत्तृतीयकः ॥ ३ ॥**

●

# अथ चतुर्थो विश्रामः

श्रीगुरुपादुका विजयतेतराम् । एवं सार्धाष्टाविंशत्या श्लोकैर्घटितेन तृतीयपटलेन मुद्रास्वरूपं निर्वर्ण्य चक्रसाधने सपरिकरे समाप्तेऽवसरप्राप्तं मन्त्रसाधनं विवक्षुस्तस्य कूटत्रयात्मकतया ततः पूर्वं विशेषणज्ञानविधयोपस्थितानां कूटानां प्रातिस्विकं साधनं वक्तुकामस्तेषां साधनविषये तत्स्वरूपनिरूपणायान्येष्वपि विषयेषु प्रश्नमवतारयति द्वाभ्याम्--

**श्रीदेव्युवाच**

**भगवन् सर्वमाख्यातं मुद्राणां ज्ञानमुत्तमम् ।**
**वदेदानीं महादेव्या एकैकाक्षरसाधनम् ॥ १ ॥**
**महाज्ञानं प्रभावं च व्याप्तिं स्थानं भवं लयम् ।**
**स्थूलसूक्ष्मविभेदेन शरीरे परमेश्वर ॥ २ ॥**

ज्ञानमिति करणे ल्युट् । महादेव्याः श्रीमहाविद्यायाः । एकैकस्याक्षरस्य कूटस्य साधनं प्रत्येकसिद्धिप्रकारम् । महच्च तज्ज्ञानं च महाज्ञानम् । ज्ञानज्ञेय-योरभेदाभिप्रायेणेत्थमुक्तम् । महज्ज्ञानं यस्य तमिति वा । ज्ञाने महत्त्वं च स्वसिद्ध्युत्तरं ज्ञातव्यांशानवशेषात् । **'यस्मिन्विज्ञाते सर्वमिदं विज्ञातं स्यात्'** इति **श्रुतेः** । प्रभावं ज्ञानमाहात्म्यम् । व्याप्तिं विश्वात्मना परिणामम् । स्थानं जगतः स्थितिम् । भवं जन्म । लयं संहारम् । भवस्थानयोश्छन्दोनुरोधेन वैपरीत्येनोक्तिः । शरीरे इति द्विवचनम् । तेनैत एकादश प्रश्नाः । चकारोऽनुक्तसमुच्चायकः । तेन करशुद्ध्यादिविद्यानां साधनादिकमायुधमन्त्रादिकं च कथयेत्यर्थः ।

अत्रेदं बोध्यम्– धौतोऽतिश्वेतः सुसूक्ष्मतमो महार्हो महापट इव निर्गुणः परशिवः । तस्यैवातिश्वेतेनान्नरसेन सर्वांशे लेपेन घनतापादने स एव घटित इत्युच्यते । तत्तुल्यः शक्तियुक्त उच्यते । तत्रैवं करिष्यमाणचित्रानुगुण्येन सूक्ष्माकारेण लाञ्छनाल्लाञ्छितो भवति । तत्तुल्यः सूक्ष्मसृष्टिविशिष्टः परशिवः सूत्रात्मेत्युच्यते । ततो विविधरञ्जनेन योगाद् रञ्जितः पटो विराट्पुरुषो भवति । अत्र परशिवाख्यं परब्रह्म स्वभावादनन्तशक्तिकम् । तदुक्तं **ज्ञानवासिष्ठे–'सर्वशक्तिपरं ब्रह्म नित्यमापूर्णमव्ययम्'** इत्यादि । तद्गतशक्तिकदम्बसमष्टिरेव त्रिपुरसुन्दरी । **'देवात्मशक्तिं स्वगुणैर्विगूढाम्'** इत्यादि **श्रुतिभिः** शक्तिशक्तिमतोरभेदाच्च न ब्रह्मणो निर्धर्मकत्वभङ्गः । तदुक्तं **श्रीपद्मपादाचार्यैः**– आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः । अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्त इति । अत एव तादृशशक्तिविशिष्टमेव परं

ब्रह्मेति **तान्त्रिक**सिद्धान्तः । तेन शक्तेरपि ब्रह्मकोटावेव निवेशः । **संक्षेपशारीरके**ऽपि– 'चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते' इति ।

ततश्च शुद्धपटस्येव लाञ्छनाद्यसम्भवात्सान्द्रत्वापादिकाया अन्नरसस्थानीयायाः शक्तेरेव सृष्टिजनकत्वम् । परशिवस्य सान्निध्यमात्रेणैव कारणत्वं यत्तु कारणतावच्छेदकतायाः पर्याय एव । ततश्च शिवनिष्ठा शक्तिरेव सृष्ट्यात्मना परिणमते । यथा चास्मिन्पक्षे विवर्तवादिभिरुद्भावितानि दूषणान्यलग्नकानि स्युस्तथा **वरिवस्यारहस्या**दौ विस्तरः । अत्रान्नरसस्य पटे सर्वांशेन सम्बन्धो जनिष्यमाणसृष्टिद्वयात्मना परिणामश्च व्याप्तिः । लाञ्छनं सूक्ष्मं शरीरम् । रञ्जनं स्थूलम् । द्वयोः शरीरयोराद्यक्षणं सम्बन्धो भवः । तयोः किञ्चित्कालमवस्थानम् । सूक्ष्मशरीरमेवोत्पत्तिः स्थूलशरीरमेव स्थितिरिति वा । चित्रस्य क्षालनेन पुनः पटस्यान्नरसगन्धमात्रविशिष्टत्वेनावस्थानं लयः । एवंप्रकारेण तत्त्वानुभवो महाज्ञानम् । तत्फलरूपो मोक्षः प्रभाव इति विवेकः । **केचित्** तु– महाज्ञानं प्रकाशः । प्रभावो विमर्शः । व्याप्तिस्तयोः सामरस्यम् । स्थानं परा वाक् । भवः पश्यन्ती । लयो मध्यमा । स्थूलशरीरं वैखरीति व्याचक्षते । तत्र मूलं मृग्यम् ॥ १-२ ॥

**श्रीभैरव उवाच**

**शृणु देवि महाज्ञानं सर्वज्ञानोत्तमं परम् ।**
**येनानुष्ठितमात्रेण भवाब्धौ न निमज्जति ॥ ३ ॥**

सर्वेषां परिणामानां ज्ञानान्यपेक्ष्योत्तमं परिणामिविषयकं महाज्ञानम् । परं परतत्त्वविषयकं शृणु । येन ज्ञानेन । अनुष्ठितमात्रेण, उदितमात्रेण । तादृशज्ञानस्य सहकार्यन्तरानपेक्षणादिति भावः ॥ ३ ॥

**त्रिपुरा परमा शक्तिराद्या ज्ञानादितः प्रिये ।**
**स्थूलसूक्ष्मविभेदेन त्रैलोक्योत्पत्तिमातृका ॥ ४ ॥**

सर्वस्य जगतः प्रलयकालस्यावधिपर्यन्तं हि विनष्टप्राणिनां कर्माणि सूक्ष्मरूपेणान्तर्निगीर्यैकमेवाद्वितीयं ब्रह्म तिष्ठति । तत्परिपाकवैचित्र्यवशादेव हि सिसृक्षादिरूपा ब्रह्मशक्तिः पूर्वमव्यक्ततया स्थिताऽपि तदा व्यक्तीभवति । सेयमेव त्रिपुराख्या परमा शक्तिः सृष्टेराद्या प्रथमा कारणभूतेति यावत् । ततोऽप्याद्यं यद्यपि परं ब्रह्मास्ति, तथाऽपि तत्प्रलयप्रथमक्षणमारभ्य तच्चरमक्षणपर्यन्तं विद्यमानमपि न सृष्टिक्षममासीत् । इयं तु सिसृक्षादिरूपा शक्तिः स्वयं व्यक्ता सत्युत्तरोत्तरं सृष्टिं व्यधादित्याशयेनास्या एवाऽऽद्यत्वेन व्यपदेशः कृतः। इयं शक्तिरिच्छारूपाऽपि निर्विषयकचिन्मात्रभवत्वात् तद्रूपाऽपि भवति । इयमेव हि ज्ञेयज्ञात्रादित्रिपुटीकल्पन-

क्षमेत्यत उक्तं ज्ञानादित इति । ज्ञानज्ञातृज्ञेयरूपत्रिपुटीत इत्यर्थः । अत एव त्रिभ्यः पुरेतिव्युत्पत्तिध्वननाय त्रिपुरापदेन विशेष्यनिर्देशः । ज्ञानेति भिन्नं पदं त्रिपुराया विशेषणम् । ज्ञानरूपेति तदर्थः । आदित इत्यस्य सर्वादिभूताद् ब्रह्मणः सकाशा-दित्यर्थ इति तु **केचित्** । ज्ञानेच्छाक्रियात्मकशक्तित्रितयस्याऽऽद्या तत्समष्टिरूपशान्ता-त्मिकेत्यर्थ इति **अन्ये** । सेयं शक्तिः स्रक्ष्यमाणसूक्ष्मत्रैलोक्य-स्थूलत्रैलोक्ययोरुत्पत्तौ मातृका माता तज्जनिकेति यावत् । **केचित्** तु त्रैलोक्यं विद्याकूटत्रयं तदुत्पादिका मातृका स्थूलसूक्ष्मभेदेन वैखरीमध्यमादिभेदेन द्विविधा ज्ञानादितो हकाररूपशिवा-ज्जातेत्यर्थ इत्याहुः ॥ ४ ॥

ननु प्रलयकालेऽनुपलभ्यमानयोस्त्रैलोक्ययोरुत्पत्तिर्न सम्भवति । सम्भवे वा शशशृङ्गादेरपि तथात्वाविशेषादुत्पत्त्यापत्तिरित्यत आह–

**कवलीकृतनिःशेषतत्त्वग्रामस्वरूपिणी ।**

प्रलयकाले कवलीकृता निगीर्णा निःशेषास्तत्त्वग्रामाः षट्त्रिंशत्तत्त्वसमूहा येन तादृशस्वरूपवती । ततश्च सूक्ष्मरूपेण स्वान्तःस्थितमेव विश्वं सृष्टिकाले प्रकटयति नान्यत् । तदुक्तं भगवता **वसिष्ठेन–**

**'यथाऽण्डान्तर्जले बर्ही सर्वाऽस्तीदं तथाऽऽत्मनि ।**
**फलपत्रलतापुष्पशाखाविटपमूलवान् ॥**
**वृक्षबीजे यथा वृक्षस्तथेदं ब्रह्मणि स्थितम् ।'**

इति । तथा च [1]फलवशेन शशशृङ्गादेः संस्काररूपेणाप्यसत्त्वकल्पनया न तदुत्पत्तिप्रसङ्ग इति भावः ॥ ४$\frac{१}{२}$ ॥

ननु निखिलं विश्वं कवलयन्त्याः शक्तेरपि सूक्ष्माकारेण परशिव एव निलीनतया सशक्तिकजगत्कारणत्वेनाभ्युपगन्तव्येन परेणैवोपपत्तेः किमन्तर्गडुना शक्तिकल्पनेन तद्धेतोरेवास्तु तद्धेतुत्वं किं तेनेतिन्यायविरुद्धेनेत्यत आह–

**तस्यां परिणतायां तु न कश्चित्पर इष्यते ॥ ५ ॥**

तुशब्दः पूर्वपक्षव्यावर्तक आवश्यकत्वव्यञ्जकश्च । शक्तिपरिणामकल्पनस्याऽऽ-वश्यकत्वेन तत एवोपपत्तेः प्रत्युत परशिवकल्पनमेव व्यर्थत्वान्नेष्यत इत्यर्थः ।

अयं भावः–**औपनिषदानां** पक्षस्तु परस्य चिद्रूपस्य ब्रह्मणः शक्तिर्मायाख्या । सा च जडैव । सैव च जगतः परिणाम्युपादानम् । परं ब्रह्म तु विवर्तोपादानम् । अत एव जगतोऽपि मायिकत्वाज्जडत्वं मिथ्यात्वं च । अद्वैत**श्रुतय**स्तु– पारमार्थिक-व्यक्तिरेकैवेत्येवंपराः । सर्वं ब्रह्मेतिसामानाधिकरण्यं तु बाधायामित्यादिः ।

---

1. फलबलेन –ख.

**तान्त्रिकाणां** पक्षस्तु–परचिन्निष्ठा या चिच्छक्तिरौपनिषदानामपि सम्मता सैवानन्तरूपत्वात् मायेत्युच्यते । **'पराऽस्य शक्तिर्विविधैव श्रूयते', 'माया चाविद्या च स्वयमेव भवति'** इत्यादि**श्रुते**ः । तत्परिणाम एव प्रपञ्चः । अत एव च चिद्रूपः । **'चिद्विलासः प्रपञ्चोऽयम्'** इति **ज्ञानवासिष्ठात्** । अत एव च सत्योऽपि । सर्वं ब्रह्मेतिसामानाधिकरण्यस्यात्यन्ताभेद एव स्वारस्यात् । न चाद्वैत**श्रुति**विरोधः । विरोधापादकस्यैकस्य भेदस्यैव मिथ्यात्वाङ्गीकारादित्यादिः । प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । आत्मकृतेः परिणामात् । तदनन्यत्वमारम्भणशब्दादिभ्य इत्यादि**वैयासिकसूत्रा**णामप्यस्मिन्नेवार्थे स्वरस इति स्पष्टमेव । एवं च पक्षद्वयेऽपि प्रपञ्चकारणतया शक्तेरावश्यकत्वे परशिव एवान्तर्गडुत्वान्नौ**पनिषदैः** कल्प्यः । नहि घटं प्रति परिणामिमृत्तिकापेक्षया विवर्तरूपं किञ्चित्कारणान्तरमुपलभामहे । अत एवैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय यथा सौम्यैकेन मृत्पिण्डेन विज्ञातेनेत्यादिदृष्टान्तप्रदर्शनं **श्रुति**षूपपद्यत इति ॥ ५ ॥

ननु दाहकत्वादिशक्तेर्वह्न्यादिनिष्ठताया दर्शनेन धर्मिणमन्तरेण धर्मरूपायाः शक्तेरवस्थानायोगेन शक्तित्वनिर्वाहायैव धर्मी परशिवः कल्पनीय इत्यत आह--

**परो हि शक्तिरहितः शक्तः कर्तुं न किञ्चन ।**
**शक्तस्तु परमेशानि शक्त्या युक्तो यदा भवेत् ॥ ६ ॥**

अयं भावः-- न वयं शक्तिव्यसनितया कल्पयामः । अपि तु क्षित्यादिप्रपञ्चस्य कार्यत्वेन कारणमन्तरेण तदयोगात् । **तार्किका** अपि क्षित्यादेः सकर्तृकत्वं कार्यतयैवानुमिमते । **औपनिषदा**नामप्ययमेवार्थः सम्मतः । यदाहुः **भूतपञ्चकविवेके विद्यारण्यश्रीपादाः** –

**'निस्तत्त्वा कार्यगम्याऽस्य शक्तिर्मायाऽग्निशक्तिवत् ।**
**नहि शक्तिं क्वचित्कश्चिद् बुध्यते कार्यतः पुरा ॥'**

इति । ततश्च कार्यत्वान्यथानुपपत्त्या कल्प्यमानः परशिवो निर्धर्मकश्चेदनुपपत्तेरपरिक्षयात् तत्रैका शक्तिरपि तत्परिक्षयाय कल्पनीयैव । उक्तं च **देवीभागवते–**

**'शक्तिः करोति ब्रह्माण्डं सा वै पालयतेऽखिलम् ।**
**इच्छया संहरत्येषा जगदेतच्चराचरम् ॥**
**न विष्णुर्न हरः शक्रो न ब्रह्मा न च पावकः ।**
**न सूर्यो वरुणः शक्ताः स्वे स्वे कार्ये कथञ्चन ॥**
**तया युक्ता हि कुर्वन्ति स्वानि कार्याणि ते सुराः ।**
**कारणं सैव कार्येषु प्रत्यक्षेणावगम्यते ॥'**

इत्यादि । **'चितिः स्वतन्त्रा विश्वसिद्धिहेतुः'** इति **शक्तिसूत्रं** च । नैवं शक्तिकारणतावादिनामस्माकं परशिवस्याकल्पने कार्यत्वानुपपत्तेरपरिक्षयोऽस्ति । धर्मत्वानुपपत्तिस्त्वेकस्यैव वस्तुनो धर्मधर्म्युभयात्मकत्वकल्पनयाऽपि सुपरिहरा । शक्तिशक्तिमतोरभेदस्य **औपनिषदै**रप्यङ्गीकारादिति । परः शक्तिरहितश्चेन्न कार्यं कर्तुं शक्तो भवति । उपादानगोचरापरोक्षचिकीर्षाकृतिमत्त्वस्यैव कर्तृत्वरूपतया तस्येच्छाज्ञानक्रियात्मकशक्तित्रयघटितत्वात् । तादृशशक्तिसहितश्चेत्कार्यक्षमो भवति । नैवं शक्तेः शिवसाहित्येऽन्वयव्यतिरेकौ सम्भवतः । अतो न परस्याऽऽवश्यकतेत्यर्थः ॥ ६ ॥

ननु जगत्कर्तृत्वस्यान्यथोपपत्तावपि कर्मठानां कर्मफलदानार्थं ज्ञानिनां मोक्षार्थमुपासकानामुपास्त्यर्थं च परशिवः कल्प्यः । कर्मणां जडत्वेन फलदातृत्वायोगात्, निर्गुणस्यैव मुक्तोपसृप्यत्वात्, उपास्यमन्तरेणोपासनायोगादित्याशङ्क्य निरस्यति–

**शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते ।**<br>**ज्ञातेनापि महादेवि शर्म कर्म न किञ्चन ॥ ७ ॥**<br>**ध्यानावष्टम्भकाले तु न रतिर्न मनःस्थितिः ।**

उपासना हि नामकीर्तनादिरूपा निर्धर्मकस्य न संगच्छते । शक्यतावच्छेदकलक्ष्यतावच्छेदकयोर्धर्मरूपत्वेन तदभाववति नाम्नामप्रवृत्तेः । पदे बोधकत्वशक्तेरिवार्थे बोध्यत्वस्यापि शक्तिविशेषरूपतया तदङ्गीकारेणैव तन्निर्वाहे लाघवाच्छक्त्यैवोक्तरीत्योपपत्तौ कृतं परशिवेन । शक्त्या शक्यतावच्छेदकादिरूपेण धर्मेण । सूक्ष्मे प्रवृत्तिनिमित्तशून्यत्वाद्दुर्ज्ञेये, नाम वाचकलक्षकशब्दजातम् । धाम प्रकाशः पदजन्यं ज्ञानम् । न विद्यते न सम्भवतीत्यर्थः । एतेन चक्रराजमध्ये यो बिन्दुर्लिख्यते स कामेश्वरस्य स्वरूपमिति रहस्यं ध्वनितम् । तदङ्के देव्या यन्त्रणं गुरुमुखैकवेद्यमन्तरेण केवलस्य कामेश्वरस्य न पृथक्पूजनम् । कामेश्वरस्य सूक्ष्मत्वेन नामधामोभयाभावादेव । 'नेति नेति' इति**श्रुत्या** सर्वनिषेधशेषत्वेनैव तस्य ज्ञेयतया सगुणत्वाभावात् । अत एव कामेश्वरायुधानां गत्यन्तराभावेन देव्यायुधैः सहैव पूजनमष्टमपटले वक्ष्यति ।

**'त्रिकोणरूपा योनिस्तु बिन्दुना बैन्दवं भवेत् ।**<br>**कामेश्वरस्वरूपं तद् विश्वाधारस्वरूपकम् ॥'**

इत्यादीनि **तन्त्रान्तर**वचनान्यमुमेवार्थं प्रतिपादयन्तीत्यन्यदेतत् । ननु कल्पितधर्मसाहित्येन शब्दानां प्रवृत्तिस्तज्जन्यज्ञानविषयता च सम्भवत्येव । धर्मेषु धर्मिसमानसत्ताकत्वस्यानावश्यकत्वादित्यत आह–ज्ञातेनापीति । परेणेति शेषः । यथाकथञ्चित् परशिवस्य ज्ञानोपपादनेऽपि तादृशज्ञाने मोक्षजनकतायाः कर्मोपयोगस्य चायोगः । तादृशज्ञानस्य सार्वदिकत्वेनातिसुलभत्वात् । **'तमेव भान्तमनुभाति सर्वम्'** इति **श्रुते**रिति

भावः । तथा ज्ञातेन परेण शर्म सुखं मोक्षः कर्म च किमपि न भवतीत्यर्थः । अत एव–

**'शिवोऽपि शवतां याति कुण्डलिन्या विवर्जितः ।**
**शक्तिहीनो हि यः कश्चिदसमर्थः स्मृतो बुधैः ॥'**

इति **देवीभागवत**मुपपद्यते । ननु घटमहं जानामीत्यादिज्ञानेषु ब्रह्मणो मानेऽपि सविकल्पकज्ञानस्य पुरुषार्थसाधनतां [न] ब्रूमः । किं तु सकलधर्मशून्यैक-विषयकनिर्विकल्पकस्येत्यत आह–ध्यानेति । शुभाशुभधर्महीनस्यासुन्दरत्वेन तत्र मनसो रतेरयोगान्न ध्यानं सम्भवति । बलात्काराद्विना तत्र मनसः प्रवर्तनेऽपि कतिपयक्षणस्थायित्वमेव स्यान्न चिरकालस्थितिस्तेन न ध्यानस्यावष्टम्भरूपं स्थैर्यं निर्विकल्पसमाध्यपरपर्यायं स्यात् । तदभावे तु न पुरुषार्थसिद्धिरिति भावः । शक्तेस्तु धर्मधर्म्युभयात्मकत्वेन नाम धाम शर्म कर्म रतिः स्थितिश्चेति सर्वमप्युपपद्यत इत्यर्थादुक्तं भवति । अत एव **भागवते**–

**'एवं सर्वगता शक्तिः सा ब्रह्मेति विविच्यते ।**
**सगुणा निर्गुणा चेति द्विविधोक्ता मनीषिभिः ॥**
**सगुणा रागिभिः सेव्या निर्गुणा तु विरागिभिः ।**
**धर्मार्थकाममोक्षाणां स्वामिनी सा निराकुला ॥**
**ददाति वाञ्छितानर्थानर्चिता विधिपूर्वकम् ॥**

इति ॥ ७-७ $\frac{१}{२}$ ॥

एवं परशिवमन्तरेण परा शक्तिर्नास्त्येवेति प्रत्यवस्थातारं जल्पकथया निरस्येदानीं वादकथामनुसृत्य व्याप्तिभवशरीरद्वयप्रश्नान्समाधत्ते–

**प्रविश्य परमार्गान्तः सूक्ष्माकारस्वरूपिणी ॥ ८ ॥**
**कवलीकृतनिःशेषबीजाङ्कुरतया स्थिता ।**

वामा शिवेतिपदद्वयमुत्तरश्लोकस्थमिहैवान्वेति । परः परशिव एव मार्गः । स्वव्याप्त्याधारत्वात् । परस्य मार्ग इति वा । परशिवस्य यावान्मार्गो व्याप्तिस्थानं तावतः सर्वस्याप्यन्तः प्रवेशेन शून्याकारमपि परशिवेन्दुमुच्छूनतापादनेन विद्धतरमिव कृत्वा सूक्ष्माभ्यामाकारस्वरूपाभ्यां युक्ता सती कवलीकृतानां निःशेषाणां षट्त्रिंशत-स्तत्त्वानां यानि बीजानि सूक्ष्मशरीररूपाणि यानि च स्थूलशरीराणि तत्तदङ्कुराणि तत्तद्रूपतया स्थिता सतीयं शिवा वामेत्युच्यते । वामा विश्वस्य वमनादिति व्युत्पत्तिः । अत्राऽऽकारोऽवयवसंस्थानम् । यथा वृक्षस्य पत्रपुष्पफलशाखादिमत्ता । स्वरूपं वृक्षत्वमित्यनयोर्भेदः । पटे गन्धात्मनाऽवस्थितोऽन्नरसो घनतया सर्वं पटं व्याप्य पश्चादुत्पत्स्यमानचित्रबिन्दुभावेन तत्पश्चात् लाञ्छनरूपेण च परिणत इवेति भावः ॥ ८-८$\frac{१}{२}$ ॥

एवं व्याप्तिं भवं सूक्ष्मस्थूले शरीरे च कथयित्वा स्थानलयप्रश्नौ समाधत्ते–

**वामा शिवा तथा ज्येष्ठा शृङ्गाटाकारतां गता ॥ ९ ॥**
**रौद्री तु परमेशानि जगद्ग्रसनरूपिणी ।**

अङ्कुरादिफलान्तावयवकं यद्रूपं षड्भावविकारेषु विपरिणामान्तमेतदात्मना परिणाम एव स्थितिः । इदं च रूपं प्रधानत्वाद्वा शिखरवत्सर्वान्त्यत्वाद्वा दलद्वय–रूपाङ्कुरस्य विषाणसाम्याद्वा शृङ्गपदेन व्यपदिश्यते । ईदृशे रूपेऽटतीति शृङ्गाटा देवी । यत्तु शृङ्गाटपदेन त्रिकोणं व्यपदिश्यते तत्राप्येषैव व्युत्पत्तिः । विषाणाकाररेखाद्वये तिर्यग्रेखाया अटनात् । चतुर्णां पथां मेलने जलोद्भवफलविशेषेऽप्येवमाकारवत्त्वादेव निरूढलक्षणेत्यन्यदेतत् । ईदृशदशाप्रवृत्तिनिमित्तवती देवी ज्येष्ठेत्युच्यते । एवं प्रपञ्चस्थितिकाले समाप्ते जगतो ग्रासेन या संहारं कुरुते सा तादृशप्रवृत्ति-निमित्तकत्वाद् रौद्रीपदेन त्रिपुरैव व्यवह्रियत इत्यर्थः । **दीपकाचार्यास्तु**–स्वाग्रमारभ्ये-शानाग्नेयान्तं प्रसृते रेखे वामाज्येष्ठे । बिन्दोः पूर्वस्यां तिर्यग्रेखा रौद्री । एतत्त्रितय-समष्टिरम्बिका शृङ्गाटाकारतां त्रिकोणाकारतां यातेति व्याचक्षते ॥ ९-९$\frac{१}{२}$ ॥

ननु प्रपञ्चोत्पत्तेः पूर्वमेव त्रिपुटीतः पूर्वत्वादस्या युक्तं त्रिपुरात्वं न स्थित्यादि-दशायामित्याशङ्क्य सर्वदैव महादेव्यास्त्रिपुरात्वमनपनोद्यमित्याह द्वाभ्याम्–

**एषा सा परमा शक्तिरेकैव परमेश्वरी ॥ १० ॥**
**त्रिपुरा त्रिविधा देवि ब्रह्मविष्ण्वीशरूपिणी ।**
**ज्ञानशक्तिः क्रियाशक्तिरिच्छाशक्त्यात्मिका प्रिये ॥ ११ ॥**
**त्रैलोक्यं संसृजत्येषा त्रिपुरा परिकीर्त्यते ।**

वामाज्येष्ठारौद्र्य एव पुंवेषेणाऽऽविष्टा ब्रह्मविष्णुरुद्रा भवन्ति । तच्छक्तिभूता भारतीपृथिवीरुद्राण्य एव ज्ञानेच्छाक्रिया इत्युच्यन्ते । कर्तृत्वशरीरघटिका अप्येता एव तिस्रः । तदुक्तम्–

**'या सा शक्तिर्जगद्धातुः कथिता ब्रह्मणः परा ।**
**इच्छात्वं तस्य सा देवी सिसृक्षोः प्रतिपद्यते ॥**
**एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम् ।**
**ज्ञापयन्ती झटित्यन्तर्ज्ञानशक्तिर्निगद्यते ॥**
**एवंभूतमिदं वस्तु भवत्विति यथा पुनः ।**
**ज्ञाता तदेव तद्वस्तु कुर्वत्यत्र क्रियोच्यते ॥'**

इति **मालिनीविजयतन्त्रे** । **'स्वाभाविकी ज्ञानबलक्रिया च'** इति **श्रुति**रपि । अत्र बलमिच्छेति तद्व्याख्यातारः । एतास्तिस्रोऽपि ब्रह्मणः स्वभाव एव न ततो भिन्ना

इत्यर्थः । ततश्च सृष्टिसमये ज्ञानादित्रयरूपत्वादितरकालेष्वपि वामादिब्रह्मादित्रय-रूपत्वात् त्रिपुरात्वमस्या न व्याहन्यत इति भावः । पुरशब्दः शरीरार्थः । त्रीणि पुराणि यस्याः सेति विग्रहः ॥ १०-११$\frac{1}{2}$ ॥

लयकालेऽप्येषा त्रिपुरैवेति द्योतयँल्लयप्रकारमाह सार्धैश्चतुर्भिः –

**यदोल्लसति शृङ्गाटपीठात्कुटिलरूपिणी ॥ १२ ॥**
**शिवार्कमण्डलं भित्त्वा द्रावयन्तीन्दुमण्डलम् ।**
**तदुद्भवामृतस्यन्दपरमानन्दनन्दिता ॥ १३ ॥**
**कुलयोषित्कुलं त्यक्त्वा परं पुरुषमेति सा ।**
**निर्लक्षणं निर्गुणं च कुलरूपविवर्जितम् ॥ १४ ॥**
**ततः स्वच्छन्दरूपा तु परिभ्राम्य जगत्पुनः ।**
**तेनाऽऽचारेण सन्तुष्टा पुनरेकाकिनी सती ॥ १५ ॥**
**रमते स्वयमव्यक्ता त्रिपुराख्यातिमागता ।**
**तत्त्वत्रयविनिर्दिष्टा वर्णशक्तित्रयात्मिका ॥ १६ ॥**

यदा स्थितिकालावधेः समाप्तिस्तदा क्षित्यादिप्रपञ्चस्य स्थूलरूपतया प्रथन-रूपाच्छृङ्गाटपीठात्कुटिलरूपिणी परावर्तमानतया प्रत्यङ्मुखत्वाद्वक्ररूपिणी सती शिवा देवी शिवरूपं चार्कमण्डलमुच्छूनबिन्दुकामाख्यं रविमपि भित्त्वा तद्रूपं परिहृत्य ततोऽपि प्राक्तनं शून्याकारं बिन्दुममृतमयत्वादिन्दुमण्डलमपि विद्राव्य तत्र विद्यमानो यः पीयूषस्रावनिभः परमानन्दस्तेन नन्दिता तत्समरसभावमापद्यते । एतावान्हि प्रपञ्चस्य लयप्रकारः । कामकलास्वरूपे हि यो मुखत्वेन परिणममानो बिन्दुः, स सूर्यरूपः । ततोऽपि सूक्ष्मस्तुरीयबिन्दुस्तु चन्द्ररूप इति **तान्त्रिकाणां** समयरहस्यम् । इममेवार्थं समासोक्त्यलङ्कारेण स्वैरिणीवृत्तान्तं स्मारयन्पुनर्वर्णयति–कुलयोषिदिति । कुलं सजातीयसमूहः । साजात्यं चैकज्ञानविषयत्वेन त्रिपुट्याः । तत्सम्बन्धिनी योषित् । स्थूलप्रपञ्चात्मना परिणतेति यावत् । पक्षे कुलीना स्त्री, कुलं प्रपञ्चं त्यक्त्वा, पक्षे स्वकीयं सद्वंशमविगणय्य, परं पुरुषं परशिवम् । पक्षे जारम् । निर्लक्षणमसाधारणधर्महीनम्, पक्षे सामुद्रिकोक्तसुलक्षणहीनम् । निर्गुणं सत्त्वादि-गुणत्रयातीतम् , पक्षे चातुर्यादिगुणरहितम् । कुलं मातृमेयादि तत्प्रयुक्तं रूपं सविषयत्वं तेन विवर्जितं निर्विषयचिद्रूपमिति यावत् । पक्षे दुष्टवंशोत्पन्नमसुन्दरं च । एति अभेदेन प्राप्नोति । पक्षे तेन सह रमते । सृष्टिप्रलययोर्मुहुर्मुहुरावर्तनमाह--तत इति । ततः शिवशक्त्योः समरसभावरूपानन्दैकनिकेतनस्य प्रलयस्यानन्तरम् । पुनरपि स्वच्छन्दरूपा स्वैरवृत्तिशीला, **'स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति'** इति **शक्तिसूत्रात्** । अत्र स्वपदं चिच्छक्तिपरम् । **'चितिः स्वतन्त्रा विश्वसिद्धिहेतुः'** इति पूर्वसूत्रे तस्या एवोपक्रान्तत्वात् । जगत्परिभ्राम्य प्रपञ्चात्मनाऽनेकधा परिणता ।

पुनस्तेनाऽऽचारेण स्वैरिण्याचारेण सन्तुष्टा स्वयमेकाकिनी त्यक्तानेकरूपा । पक्षे त्यक्तदास्यादिजना । अव्यक्ता वाङ्मनसयोरगम्या, पक्षे जनैरनालोकिता सती रमते सृष्ट्यादिक्रीडाः कुरुते । अव्यक्तत्वमेव स्फुटयति–तत्त्वेति । षट्त्रिंशत्तत्त्वानि व्यक्तानि । तानि तत्त्वत्रयरूपेणाऽऽत्मविद्याशिवनामकेन प्रविलापयति । तदुक्तम्–

**'मायान्तमात्मतत्त्वं विद्यातत्त्वं सदाशिवान्तं स्यात् ।**
**शक्तिशिवौ शिवतत्त्वं तुरीयतत्त्वं समष्टिरेतेषाम् ॥'**

इति । तथा शब्दसृष्टिमेकपञ्चाशन्मातृकारूपां स्वाभिन्नविद्याकूटत्रये प्रविलापयति । कूटानां क्रमेणाकथादिहळक्षरूपत्वात् । तथा चक्रसृष्टिं शक्तिवृन्दरूपामिच्छाज्ञान-क्रियारूपसूक्ष्मशक्तित्रये प्रविलापयति । एवं व्यक्ततापरिहारदशायामपि त्रित्रिरूप-त्वात् त्रिपुरेतिख्यातिमागता । इह ग्रन्थे मूलाधारपीठस्थत्रिकोणगा कुलकुण्डलिनी सूक्ष्मरूपेण सुषुम्णामार्गान्तः प्रविश्यानाहतमण्डलस्थं रविं भित्त्वा सहस्रारस्थेन्दु-मण्डलं विद्राव्याकुलकुण्डलिन्या संगता तदुत्थामृतधाराभिराप्यायिता परावृत्य स्वस्थानमायातीत्यप्यर्थ उत्तरतन्त्रे वक्ष्यमाणः श्लेषेणोक्तः ॥ १२-१६ ॥

ईदृश्या त्रिपुरया सहाभेदं प्रकृतविद्याया उपदिशति–

**वागीश्वरी ज्ञानशक्तिर्वाग्भवे मोक्षरूपिणी ।**
**कामराजे कामकला कामरूपा क्रियात्मिका ॥ १७ ॥**
**शक्तिबीजे परा शक्तिरिच्छैव शिवरूपिणी ।**
**एवं देवी त्र्यक्षरी तु महात्रिपुरसुन्दरी ॥ १८ ॥**

वाग्भवकामराजशक्तिबीजेषु त्रिषु ज्ञानशक्त्यात्मिका वागीश्वरी मोक्षप्रदा, क्रिया-शक्त्यात्मिका कामकला कामप्रदा, इच्छाशक्त्यात्मिका परा शक्तिर्धर्मप्रदा क्रमेण तिष्ठति । शिवरूपिणी धर्मप्रदा । एवंप्रकारेण श्रीमहात्रिपुरसुन्दर्येव श्रीविद्या-रूपेत्यर्थः ॥ १७-१८ ॥

इदानीं महाज्ञानप्रभावप्रश्नौ समाधत्ते–

**पारम्पर्येण विज्ञाता भवबन्धविमोचनी ।**
**संस्मृता पापहरणी जप्ता मृत्युविनाशिनी ॥ १९ ॥**
**पूजिता दुःखदौर्भाग्यव्याधिदारिद्र्यघातिनी ।**
**हुता विघ्नौघशमनी ध्याता सर्वार्थसाधिका ॥ २० ॥**

ईदृशं देवीतत्त्वविषयकं महाज्ञानं परमशिवादिस्वगुरुपर्यन्ताविच्छिन्नपारम्पर्योप-देशक्रमेण लब्धं चेदेव भवबन्धं मोचयति । पुस्तकावलोकनादिनोपायान्तरेण लब्धं तु न फलति । प्रत्युतानर्थायैव ।

**'पारम्पर्यविहीना ये ज्ञानमात्रेण गर्विताः ।**
**तेषां समयलोपेन विकुर्वन्ति मरीचयः ॥'**

इत्युत्तरतन्त्रे (७।८१) वक्ष्यमाणत्वात् । पारम्पर्येणेत्युक्त्या विद्याया गुरुमुखात् सप्तविधान्यतमदीक्षापुरःसरमेवोपदेशो ग्राह्य इति ध्वनितम् । एवं गुरुमुखाद्विज्ञाय ततः संस्मृता पुनः पुनश्चिन्तिता पापं हरति । जपपूजाहोमध्यानैर्मृत्युनाशादिफलप्रदा भवतीत्यर्थः । **ज्ञानार्णवेऽप्युक्तम्**–

**'एषा विद्या वरारोहे पारम्पर्यक्रमागता ।**
**भवबन्धं नाशयति स्मृता पापापहारिणी ॥**
**जप्ता मृत्युञ्जयेशानि ध्याता सर्वार्थसाधिनी ।**
**दुःखदौर्भाग्यदारिद्र्यभयघ्ना पूजिता भवेत् ॥**
**महाविघ्नौघशमनी हवनान्नात्र संशयः ॥'**

इति । अत्र विधीयमाना जपहोमादयः स्वतन्त्रा एव । प्रत्येकं फलान्वयात् । पुरश्चर्याहोमादयस्तु जपाङ्गमिति सिद्धान्तः । तत्रापि समप्रधानत्वं स्वीकृत्य राजसूयादिवत्परस्परसाहित्यमात्रमङ्गमित्यपि सुवचम् । अत्र प्राञ्चष्टीकाकाराः– विंशतेः श्लोकानां व्याख्यामतीव विस्तृत्य यथेच्छमेव स्वातन्त्र्येण वर्णयन्तोऽत्रत्यपारम्पर्यपदेन लोपामुद्रासन्तानकामराजसन्तानदिव्यसिद्धमानवौघतद्भेदादिकं बहु विस्तृत्य लिखन्तः स्वोत्प्रेक्षितार्थं ईदृशपरम्परायात इति वदन्ति । तत्सर्वं प्रामाणिकमप्यक्षरस्वारस्यानाक्रान्तत्वात्, मूलानुपयुक्तत्वाद् ग्रन्थगौरवभयाच्चोपेक्षितम् **अस्माभिः** ।। १९-२० ।।

एवमष्टौ प्रश्नान्समाधायावशिष्टप्रश्नत्रयं समाधित्सुः शिष्यावधानायाऽऽह--

**एतस्याः शृणु देवेशि बीजत्रितयसाधनम् ।**

स्पष्टोऽर्थः ॥ २०$\frac{१}{२}$ ॥

तत्राऽऽदौ वाग्भवबीजसाधनं पुरश्चरणमाह–

**धवलाम्बरसंवीतो धवलावासमध्यगः ॥ २१ ॥**
**पूजतयेद्धवलैः पुष्पैर्ब्रह्मचर्यरतो नरः ।**
**धवलैरेव नैवेद्यैर्दधिक्षीरौदनादिभिः ॥ २२ ॥**
**संकल्पधवलैर्वाऽपि यथाकामफलप्रदाम् ।**
**संपूज्य परमेशानि ध्यायेद्वागीश्वरीं पराम् ॥ २३ ॥**

धवलावासः सौधगृहम् । इदमुपलक्षणं शुक्लाकल्पादेः । अत एवोक्तं **तन्त्रान्तरे**--

**'शुक्लाम्बरपरीधानो गन्धकस्तूरिकायुतः ।**
**मुक्ताफलस्फुरद्धारभूषणः शुक्लमाल्यधृत् ॥'**

इति । ब्रह्मचर्यरतः, अष्टविधमैथुनत्यागी । क्षीरौदनादिभिरित्यादिपदेन घृतगोलकनारिकेलोदकादिपरिग्रहः । धवलपदार्थसंग्रहासमर्थस्य त्वाह–संकल्पेति । यथोप-

पन्नानेव पदार्थान्धवलत्वेन विभावयेदित्यर्थः । ध्यायेदिति । ध्यायञ्जपेदित्यर्थः । अत्र **प्राञ्चः**–द्विभुजा श्वेतवर्णा बालारूपा पुस्तकाक्षमालाधारिणी ध्येयेत्याहुः । तदिदं स्वकपोलकल्पितं **तन्त्रान्तर**ानवलोकनकृतमित्युपेक्ष्यम् । तथा च **ज्ञानार्णवे**–

**'वाग्भवाख्यां जपेद्विद्यां वागीशीं संस्मरन्बुधः ।**
**कर्पूरधवलां शुभ्रपुष्पाभरणभूषिताम् ॥**
**अत्यन्तशुभ्रवसनां वज्रमौक्तिकभूषणाम् ।**
**मुक्ताफलामलमणिजपमालालसत्कराम् ॥**
**पुस्तकं वरदानं च दधतीमभयप्रदाम् ।**
**एवं ध्यायेन्महेशानि सर्वविद्याधिपो भवेत् ॥'**

इति । जपसंख्या तु विशेषादर्शनादक्षरलक्षन्यायेनैकलक्षरूपा यावद्विशेषदर्शनं निर्णेया ॥ २१-२३ ॥

एवं सिद्धमन्त्रस्य काम्यप्रयोगमाह–

**बीजरूपामुल्लसन्तीं ततोऽनङ्गपदावधि ।**
**ब्रह्मग्रन्थिं विनिर्भिद्य जिह्वाग्रे दीपरूपिणीम् ॥ २४ ॥**

ततो मन्त्रसिद्ध्युत्तरं वाग्भवबीजाभिन्नां कुण्डलिनीरूपां वागीश्वरीं ब्रह्मग्रन्थिं मूलाधारचक्रोपरि विद्यमानं ग्रन्थिं विनिर्भिद्य, अनङ्गोऽशरीरः कामेशात्मा परशिवस्तस्य पदं ब्रह्मरन्ध्रं तदवध्युल्लसन्तीमूर्ध्वं यान्तीं ततोऽमृतं संस्राव्य जिह्वाग्रे ज्योतीरूपतया स्थितां चिन्तयेदित्युत्तरश्लोकस्थेनान्वयः । यद्यपि **ज्ञानार्णवे**–

**'मूलादिब्रह्मरन्ध्रान्तं स्रवत्पीयूषवर्षिणीम् ।**
**तस्माज्ज्योतिर्मयीं ध्यायेद् जिह्वाग्रेऽमृतधारिणीम् ॥**
**पाषाणेन समो वाऽपि मूर्खो जीवसमो भवेत् ।'**

इत्यत्र प्रकृततन्त्रे वा कुण्डलिनी न श्रूयते तथाऽपि मूले ब्रह्मग्रन्थिविभेदनाल्लिङ्गात् **तन्त्रान्तरे**ऽमृतस्रावोक्त्या च साऽनुमीयते । ब्रह्मग्रन्थिपदं ब्रह्मरन्ध्रपरमिति तु **केचित्** । **प्राञ्चस्तु**– पुरश्चरणकाम्यप्रयोगयोरसंसर्गाग्रहादिदं सर्वमेकप्रयोगत्वेन व्याचक्षते । तत् **तन्त्रान्तरा**नाकलनादुपेक्ष्यम् ॥ २४ ॥

अथ नवभिः श्लोकैरस्य प्रयोगस्य फलं वर्णयति–

**चिन्तयेन्नष्टहृदयो ग्राम्यो मूर्खोऽतिपातकी ।**
**शठोऽपि यः पदं स्पष्टमक्षरं वक्तुमक्षमः ॥ २५ ॥**

**जडो मूकोऽतिदुर्मेधा गतप्रज्ञो विनष्टधीः ।**
**सोऽपि सञ्जायते वाग्मी वाचस्पतिरिवापरः ॥ २६ ॥**

नष्टं कलुषितं हृदयं चित्तं यस्य सः । त्यक्तधैर्य इत्यन्ये । ग्राम्यो नागरिकचातुर्यहीनः । अतिपातकी पातककृतप्रतिबन्धवान् । जडः अलसः । अतिदुर्मेधा दुःसाधतरधारणः । गतप्रज्ञः प्रतिभाशून्यः । विनष्टधीर्भ्रान्तबुद्धिरप्यपरो वाचस्पतिरिव वाग्मी सम्यग्जायते ॥ २५-२६ ॥

**सत्पण्डितघटाटोपजेताऽप्रतिहतप्रभः ।**
**सत्तर्कपदवाक्यार्थशब्दालङ्कारसारवित् ॥ २७ ॥**
**वाताहतसमुद्रोर्मिमालातुल्यैरुपन्यसेत् ।**
**सुकुमारतरस्फारवृत्तालङ्कारपूर्वकम् ॥ २८ ॥**
**पदगुम्फैर्महाकाव्यकर्ता देवेशि जायते ।**

सत्पण्डितानां पण्डितोत्तमदिग्गजानां घटा समूहस्तस्याऽऽटोपो गर्वस्तस्य जेता हर्ता । स्वयमप्रतिहताऽकुण्ठिताऽम्लाना वा प्रभा प्रतिभा मुखश्रीर्वा यस्य सः । शास्त्रं चतुर्विधम्–पदशास्त्रम्, पदार्थशास्त्रम्, वाक्यशास्त्रम्, वाक्यार्थशास्त्रं चेति । अन्येषां शास्त्राणामिहैवान्तर्भाव इति तु **वृत्तचन्द्रोदया**दौ विवेचितम् **अस्माभिः** । तेषामिह पदवाक्यार्थपदेन ग्रहणम् । तेषां सत्तर्कत्वं विशेषणम् । वेदाविरुद्धाबाधितयुक्तिमन्तीति तदर्थः । अथवा पदवाक्यपदेनैव तेषां परामर्शः । अर्थशब्द उत्तरत्रान्वयी, अर्थालङ्कारशब्दालङ्काराविति । एतेषां सारं निष्कर्षं वेत्तीति तथा । सत्पदं तर्कादिषट्के **केचि**दन्वियन्ति । तत्पक्षे पदवाक्यातिरेकेण शब्दः कीदृश इति प्रश्ने ध्वन्यात्मकगीतरूप इत्युत्तरं वाच्यम् । वातेति । चण्डवातनिर्धूतोदधितरङ्गसमूहतुल्यैः शब्दैरुपन्यसेत् । शास्त्रनिर्माणमुक्त्वा काव्यनिर्माणमप्याह– सुकुमारेति । सौकुमार्यं शब्दगतो गुणविशेषः । वृत्तं गुरुलघ्वानुपूर्वीविशेषः । अलङ्कारा यमकोपमादयः । पदानां गुम्फैर्ग्रथनविशेषैः । महाकाव्यमिति दशानां रूपकाणामष्टादशानामुपरूपकाणां संकीर्णादीनामप्युपलक्षणम् ॥ २७-२८$\frac{1}{2}$ ॥

**वेदवेदाङ्गवेदान्तसिद्धान्तज्ञानपारगः ॥ २९ ॥**
**ज्योतिःशास्त्रेतिहासादिमीमांसास्मृतिवाक्यवित् ।**
**पुराणरसवादादिगारुडानेकमन्त्रवित् ॥ ३० ॥**
**पातालशास्त्रविज्ञानभूततन्त्रार्थतत्त्ववित् ।**
**विचित्रचित्रकर्मादिशिल्पानेकविचक्षणः ॥ ३१ ॥**
**महाव्याकरणोदारशब्दसंस्कृतसर्वगीः ।**
**सर्वभाषारुतज्ञानी समस्तलिपिकर्मकृत् ॥ ३२ ॥**

**नानाशास्त्रार्थशिक्षादिवेत्ता भुवनविश्रुतः ।**
**सर्ववाङ्मयवेत्ता च सर्वज्ञो देवि जायते ॥ ३३ ॥**

**वेदा ऋग्वेदा**दयः कर्मकाण्डाः । **वेदाङ्गानि छन्दःकल्पनिरुक्तानि** त्रीणि । अन्येषां पृथग्ग्रहणात् । **वेदान्ता उपनिषदः** । **सिद्धान्तः** पञ्चाम्नायात्मकं शास्त्रम् । **ज्योतिःशास्त्रं गर्गा**द्यष्टादशसिद्धान्तरूपम् । **इतिहासो भारता**दिः । आदिना **रामायणवासिष्ठादि-**काव्यानि । **मीमांसाः** पूर्वोत्तरभक्तिभेदेन तिस्रः । **स्मृतयो मन्वा**दिप्रणीताः । वाक्यं **वररुचिकृतं** लौकिकं वा । **पुराणानि** षट्त्रिंशत् । **रसवादः** पारदादिविषयकः । आदिना **चरकसुश्रुता**दि । **गारुडम्** ऐन्द्रजालम् । **पातालशास्त्रं** बिलद्वारप्रवेशविषयकम् । **चित्रकर्म** चित्रलेखः । आदिना गृहनिर्माणादिविषयकं **विश्वकर्मशास्त्रम्** । शिल्पा-नेकेत्यत्र विशेषणस्य **बाहुलकः** परनिपातः । **महाव्याकरणं महाभाष्या**दि । सर्वभाषा महाराष्ट्र्याद्या मागध्याद्याश्च । **रुतानि** पशुपक्षिभाषाः । समस्तलिपयो यवना-न्यादयोऽष्टादश लिपयः । नानाशास्त्राणि **जैनबौद्धचार्वाका**दीनि । तदर्थं शिक्षादिः, अध्यापनोद्ग्राहणादिः **पाणिन्यादि शिक्षाप्रातिशाख्या**दिर्वा । सर्ववाङ्मयानि यावनादीनि । सर्वज्ञस्त्रिकालज्ञः ॥ २९-३३ ॥

वाग्भवसाधनोपसंहारपूर्वकं कामराजसाधनं प्रतिजानीते–

**एवमेतन्महादेवि वाग्भवस्य तु साधनम् ।**
**ततस्तु शृणु वक्ष्यामि कामराजस्य साधनम् ॥ ३४ ॥**

स्पष्टम् ॥ ३४ ॥

**तथा कामकलारूपा मदनाङ्कुरगोचरे ।**
**उद्यदादित्यबिम्बाभा समुज्ज्वलवपुः प्रिये ॥ ३५ ॥**
**स्फुरद्दीपशिखाकारा बिन्दुधाराप्रवर्षिणी ।**

अत्र **प्राञ्चः** सार्धैः सप्तभिः श्लोकैरेकं प्रयोगमाहुः । **अन्ये** तु– तथेत्येकेन पदेनैव वाग्भवसाधनधर्मातिदेशं वदन्तस्तावतैव कामराजसाधनमुक्तप्रायं मन्यमाना इतरांशं सर्वमेककाम्यप्रयोगपरत्वेन योजयन्ति । वस्तुतस्तु–आदौ सार्धश्लोकेन पुरश्चरणं ततः षड्भिः श्लोकैः काम्यप्रयोगौ द्वौ वर्ण्येते इति युक्तम् । **ज्ञानार्णवै**कवाक्यत्वलाभात् । तद्यथा–

**'अथ कामकलासक्तः साधकः परमेश्वरि ।**
**रक्तालङ्कारसुभगो रक्तगन्धानुलेपनः ॥**

**रक्तवस्त्रावृतः सम्यङ्मध्यकामकलात्मना ।**
**रक्तपुष्पैश्च विविधैः कुङ्कुमादिभिरर्चयेत् ॥**
**मूलादिब्रह्मरन्ध्रान्तं स्फुरद्दीपस्वरूपिणीम् ।**
**बन्धूककुसुमाकारकान्तिभूषणभूषिताम् ॥**
**इक्षुकोदण्डपुष्पेषु वरदाभयसत्कराम् ।'**

इति **ज्ञानार्णवो**क्तः पुरश्चर्याप्रकारः । स एवेहोच्यते । मदनाङ्कुरो गोचरो यत्र तन्मदनाङ्कुरगोचरं कामबीजम् । अथवा मदनाङ्कुरः कामबीजम् । बीजस्याङ्कुर-रूपत्वात् । तद्विषये कामकलाऽपि तथा वागीश्वरीवत्साधनीया । सा यथा स्ववर्ण-समानवसनाभरणगन्धपुष्पनैवेद्यादिभिः साधिता तथेयमपि स्ववर्णानुगुणैरेव साध्येति यावत् । मदनमन्दिरान्तर्वर्तिमांसविशेषो मदनाङ्कुर इति **प्राचां** व्याख्यानम-मूलकत्वादनादृत्यम् । पुरश्चरणे वनितामूलाधारे रक्तधारावर्षणविभावनाया अप्रस्तुतत्वाच्च । **तन्त्रान्तरे** प्रकृतबीजविषयककाम्यप्रयोगेऽपि तदनुक्तेश्च । प्रकृत-देव्याश्च को वर्ण इत्याकाङ्क्षायामाह–उद्यदादित्येति । बिम्बं पक्वतुण्डीफलम् । ताभ्यां सदृशी । सादृश्यं तु रक्तिम्नैव बिम्बपदसमभिव्याहारात् । तेनोद्यदादित्य-बिम्बमित्येकमेवोपमानं मन्यमानानां **प्राचाम्** आदित्यदीपशिखयोः परस्परविरुद्धत्वादु-भयतुल्यता कथमित्याक्षिप्य तत्समाधानार्थं व्यवस्थादिकल्पनमपास्तम् । स्फुरन्त्या मूलादिब्रह्मरन्ध्रपर्यन्तं व्याप्ताया दीपकलिकाया इवाऽऽकारो यस्याः । अन्तर्यागे विभाव्यमानतेजस्तन्तुवदिति यावत् । बिन्दोरमृतस्य धारां प्रवर्षतीति तथा । अनया भङ्ग्या **तन्त्रान्तरो**क्तमिहैव सूचितमिति द्रष्टव्यम् ॥ ३५-३५ $\frac{१}{२}$ ॥

एवं सिद्धमन्त्रस्य काम्ये विनियोगमाह–

**समस्तभुवनाभोगकवलीकृतजीविता ॥ ३६ ॥**
**महास्वमहिमाक्रान्तिस्वस्थाहंकृतिभूमिका ।**
**क्रमेण तु ततोऽनङ्गपर्यन्तं प्रोल्लसन्त्यपि ॥ ३७ ॥**
**शरीरानङ्गपर्यन्तमेकैवमुभयात्मिका ।**

समस्तभुवनेषु त्रैलोक्य आभोगो विस्तारः स्वकीयारक्तकान्तिभरितता । तादृशध्यानमिति यावत् । तेन कवलीकृतानि स्ववशे कृतानि जीवितानि समस्तप्राणिनां यया सा । तत्रोपपत्तिमाह--महेति । महत्या स्वमहिमाक्रान्त्या स्वीय-महत्त्वव्याप्त्या स्वस्थाया यथास्थानस्थितताया अचञ्चलाया वाऽहंकृतेः पराहन्ताया भूमिकाऽऽधारः ।

अयं भावः–पुरश्चरणदशायां मूलादिब्रह्मरन्ध्रान्तं यो ध्यातः सावयवो रक्ततेजस्तन्तुस्तन्महसा सर्वं जगदरुणीकृतं भावयेत् । तेन त्रैलोक्यं वशं भवति । कुतः । स्वविभुत्वस्य सर्वत्राऽऽक्रान्त्या सर्वस्यापि स्वशरीरत्वेन सर्वत्राहन्ता-

बुद्धेरुदयेन स्वशरीरस्येव सर्वशरीराणां स्ववशंवदत्वावश्यंभावात् । ध्वस्ताहंकृतीति पाठेऽहंकृतिशब्देन तत्तत्प्राणिनामहङ्कारा ग्राह्याः, न पराहन्ता । अहं स्वतन्त्रो नान्याधीन इत्यभिमानस्यागलितत्वादित्यर्थः । अयं त्रैलोक्यवशीकारफलक एकः प्रयोगः । तथा च **ज्ञानार्णवे**—

> **'तदीयकान्तिसिन्दूरभरितं भुवनत्रयम् ।**
> **चिन्तयेत्परमेशानि त्रैलोक्यं मोहयेत्क्षणात् ॥**
> **राजानो वशमायान्ति पन्नगा राक्षसाः सुराः ।**
> **कन्दर्प इव देवेशि योषितां मानहारकः ॥**
> **मनसा चिन्तयेद् योषिद् दासीव वशगा भवेत् ।'**

इति । अत्र तदीयेत्यस्य पूर्वोपक्रान्ततेजस्तन्तुरूपदेवीसम्बन्धीत्यर्थः । राजान इति भूलोकस्य, पन्नगा राक्षसा इति पातालस्य, सुरा इति स्वर्गस्योपलक्षणं सत्त्रैलोक्य-पदविवरणम् । कन्दर्प इत्यादि चिन्तयेदित्यन्तेन प्रयोगान्तरम् । तस्य फलं योषिदित्या-दिनोक्तम् । तत्र चिन्तनीयार्थस्य स्पष्टमकथनेऽपि प्रकृततन्त्रे तत्कथयति--क्रमेणेति । तुशब्दः पूर्वप्रयोगव्यावृत्त्यर्थः । ततो मूलाधारमारभ्यानङ्गपर्यन्तमशरीरकामेश्वर-शिवपर्यन्तं क्रमेण स्वाधिष्ठानादिचक्रक्रमेण प्रोल्लसन्त्यपि प्रकर्षेणोर्ध्वं गच्छन्ती पुनरपि ब्रह्मरन्ध्राच्छरीरानङ्गपर्यन्तमायान्ती चिन्तनीयेति । स्वाभिलषितायाः स्त्रियाः शरीरे मूलाद्ब्रह्मरन्ध्रान्तं तस्मात्पुनर्मूलान्तमेवं पुनः पुनर्यातायातं कुर्वती कामकलादेवी चिन्तनीयेति यावत् । अत्र शरीरानङ्गपदेन मदनशरीरं शरीरवान्मदन इति वा प्रतिपाद्यते । तच्च योनिमण्डलमेवेत्येतद्बलादिदं चिन्तनं स्त्रीशरीर एवेति लभ्यते । एवंप्रकारेणैकैव देवी, उभयात्मिका प्रयोगभेदेन द्विविधा, चिन्तनीयेति शेषः । **प्राञ्चस्तु**—पुरश्चरणं प्रयोगद्वयं च विविच्याजानाना इमान् श्लोकान् प्रकारान्तरेण व्याचक्षते । तद्विस्तरभयादनुपयोगाच्च न प्रदर्शितम् । **अस्मद्** उक्तोऽर्थः क्लिष्टोऽपि **तन्त्रान्तर**संवादादादर्तव्य इति ॥ ३६-३७$\frac{१}{२}$ ॥

अथ द्वितीयप्रयोगस्य फलमाह—

> **ततो भवति देवेशि सर्वशृङ्गारमानिनाम् ॥ ३८ ॥**
> **रागिणां साधको देवि बाधको मदनाधिकः ।**
> **तद्दृष्टिपथगा नारी सुरी वाऽप्यथवाऽऽसुरी ॥ ३९ ॥**
> **विद्याधरी किन्नरी वा यक्षी नागाङ्गनाऽथवा ।**
> **प्रचण्डतरभूपालकन्यका सिद्धकन्यका ॥ ४० ॥**

**ज्वलन्मदनदुःप्रेक्ष्यदहनोत्तप्तमानसा ।**
**क्लिन्ना प्रचलितापाङ्गा विमूढा मदविह्वला ॥ ४१ ॥**
**निवेदितात्मसर्वस्वा वशगा देवि जायते ।**

कामबीजस्य साधको रागिणां सौन्दर्याद्यभिमानवतां बाधको भवति । यतोऽयं मदनादप्यधिकः सौन्दर्यादिगुणविशिष्टः, अत एव सुरासुरादिकन्यकाः सर्वा अपि साधकध्यानोपनीतमदनज्वालादुःसहदहनातितप्तमानसाः सत्यः स्खलनेन क्लिन्नवस्त्रा विमूढहृदया मदव्याकुलाः सत्यः सर्वस्वमात्मानं च साधकाय समर्प्य दासीभूय वशे तिष्ठन्तीत्यर्थः ॥ ३८-४१$\frac{१}{२}$ ॥

प्रयोगान्तरमाह–

**चलज्जलेन्दुसदृशी बालार्ककिरणारुणा ॥ ४२ ॥**
**चिन्तिता योषितां योनौ संक्षोभयति तत्क्षणात् ।**

चञ्चलोदकान्तःप्रतिबिम्बितारक्तचन्द्रमण्डलवदेषैव देवी साध्याया योनौ चिन्त्येत्यर्थः ॥ ४२-४२$\frac{१}{२}$ ॥

प्रयोगान्तरमाह–

**सैव सिन्दूरवर्णाभा हृदये चिन्तिता सती ॥ ४३ ॥**
**सम्मोहोन्मादनाविष्टचित्ताकर्षकरी स्मृता ।**

योषितामित्यनुवर्तते । [तच्च] हृदय इत्यनेनान्वीयते । सम्मोहोन्मादनाविष्टं चित्तं यस्यास्तादृशीं कृत्वा तदाकर्षिकेत्यर्थः ॥ ४३–४३$\frac{१}{२}$ ॥

प्रयोगान्तरमाह–

**नियोजिताऽथवा मूर्ध्नि वर्षन्ती रक्तबिन्दुभिः ॥ ४४ ॥**

योषितां मूर्ध्नि शोणितबिन्दून्वर्षन्ती स्थितेव चिन्तिताऽप्याकर्षणकरी भवति ॥ ४४ ॥

**धारणासंप्रयोगेण करोति वशगं जगत् ।**

उक्तरूपाया देव्या दृढध्यानाभ्यासमात्रेणापि विश्ववशीकार इत्यपि प्रयोगान्तरम् । **प्राञ्चस्तु**– अनेनार्धद्वयेनैकं प्रयोगं व्याचक्षाणाः स्वमूर्धन्येव स्थितां रक्तबिन्दुवर्षिणीं दृढं ध्यायेदित्याहुः । तत् **'तस्या मूर्ध्नि स्मरेद्बीजम्'** इति **ज्ञानार्णव**विरोधादुपेक्ष्यम् ॥ ४४$\frac{१}{२}$ ॥

अथ रहस्यतरं प्रयोगं वक्तुं प्रतिजानीते–

**अथान्यं शृणु वक्ष्यामि प्रयोगं भुवि दुर्लभम् ॥ ४५ ॥**

**येन विज्ञातमात्रेण साधको मदनायते ।**

ज्ञातमात्रेण किमुतानुष्ठितेनेत्यर्थः ॥ ४५-४५½ ॥

**सुन्दरीतापिन्यां** तृतीयोपनिषद्युक्तं कामकलाचक्रमुपदिशति–

**कामस्थं काममध्यस्थं कामोदरपुटीकृतम् ॥ ४६ ॥**
**कामेन कामयेत्कामं कामं कामेषु निक्षिपेत् ।**
**कामेन कामितं कृत्वा कामस्थं क्षोभयेद् ध्रुवम् ॥ ४७ ॥**

पञ्चकामेश्वरीमन्त्रे यानि पञ्च बीजानि– हृल्लेखा, कामबीजम्, वाग्भवम्, चतुर्थबाणः, स्त्रीबीजं चेति । तेषां क्रमेण संज्ञा **ज्ञानार्णवे** बालान्यासप्रकरणे कथिताः– कामो मन्मथः कन्दर्पो मकरध्वजो मीनकेतुश्चेति । **दक्षिणामूर्तिसंहितायां** तु मीनकेतुरिति मकरध्वजस्यैव संज्ञान्तरम् । स्त्रीबीजस्य तु महाकाम इति संज्ञा । अस्यैव **तन्त्रान्तरे** मोहन इति संज्ञा । एवं स्थिते कामराजबीजसाधनप्रकरणे पठितस्य–

**'कामं मन्मथमध्यस्थं कुर्यात्कन्दर्पवेश्मगम् ।**
**तत्पुटस्थं मीनकेतुं महाकामे समस्तकम् ॥'**

इति **संहिता**श्लोकस्यायमर्थः–पूर्वपूर्वबीजमुत्तरोत्तरबीजेनाऽऽवेष्टयेदिति । इदमेव च स्पष्टमुक्तं **तन्त्रान्तरे–**

**'कामं प्राणं प्रकुर्वीत मन्मथं कारयेत्तनुम् ।**
**कन्दर्पं मन्दिरं कृत्वा द्विधाभूतं च पार्वति ॥**
**मकरध्वजं न्यसेद्देवि षट्स्थानेष्वस्य सुव्रते ।**
**मोहनाभ्यन्तरे कृत्वाऽऽवेष्टयेत्तस्य मायया ॥'**

इति । अस्यार्थः–आदौ कामं हृल्लेखाबीजं विलिख्य तदभितो मन्मथं क्लींकारं लिखेत् । तथा सति कामोऽन्तःस्थितत्वात्प्राणस्थानीयो मन्मथस्तु बहिष्ठत्वाच्छरीर-स्थानीयो भवति । तत्परितो द्विधाभूतं कन्दर्पमे(ऐं)कारं लिखेत् । ऐंकारस्य त्रिकोणाकारत्वेन तद्द्वैगुण्यै षट्कोणता फलति । ततश्च मन्मथं गर्भे संस्थाप्य षट्कोणं लिखेदिति सिध्यति । तदिदं प्राणिनो मन्दिरस्थानीयं भवति । ततोऽस्य षट्कोणेषु मकरध्वजं ब्रूं(ब्लूं)बीजं षड्वारं लिखेत् । तच्च वचनान्तरात्कोणानां गर्भ एव लेख्यम्, न बहिर्भागे । तदिदं सर्वं मोहनस्य स्त्रीमितिबीजस्याभ्यन्तरे कुर्यात् । स्त्रीबीजाभ्यन्तरेऽपीकारीयरेखाद्वयमध्य एव लेख्यमिति, अत उक्तम्– तस्य माययाऽऽवेष्टयेदिति । **केचित्** तु– एतद्बहिर्माययाऽध्युष्टवारं वेष्टयेदिति व्याख्यन् ।

तत्र प्रमाणं मृग्यम् । **सौभाग्यरत्नाकरकारास्तु**– अत्र पञ्चमकूटाक्षरलेखने तदक्षरवह्निस्थानगं सकलयन्त्रं यथा भवति तथा गुरुमुखाद्विज्ञाय समालेख्यमिति तु सम्प्रदायरहस्यमित्याहुः । तेनैतेषां पक्षे तकाररेफमध्यावकाश एव मकरध्वजान्तं समस्तयन्त्रं लेख्यं भवति । **ज्ञानार्णवे** तु विशेषः कामराजकूटसाधनं प्रस्तुत्य,

> **'एतत्कामकलाध्यानात् पञ्च कामा वरानने ।**
> **मोहयन्ति जगत्सर्वं प्रयोगं शृणु पार्वति ॥**
> **पूर्वोक्ताः कामा देवेशि ज्ञातव्याः पञ्चसंज्ञकाः ।**
> **विदर्भ्याऽऽद्येन कामेन मन्मथान्तर्गतं कुरु ॥**
> **कन्दर्पसम्पुटं कृत्वा कोणगर्भगतं ततः ।**
> **मकरध्वजसंज्ञार्णं सर्वमेतद्वरानने ॥**
> **मीनकेतुगतं कुर्यान्मोहयेज्जगतीमिमाम् ।**
> **त्रैलोक्यमोहनो नाम प्रयोगोऽयं प्रकीर्तितः ॥'**

इति । अत्र प्राथमिककामबीजेन यो विदर्भ उक्तः, स यद्यपि **'विदर्भो ह्यन्तरः प्रोक्त इतिलक्षणलक्षितः'** द्वितीयपटले कथितस्तथाऽपि प्रकृते ममामुकं वशं कुर्विति-वाक्यस्यैव भुवनेश्वरीगर्भे लेखनमिति सम्प्रदाय इति ध्वनितं **[सौभाग्य]रत्नाकरे** । तल्लेखने तु यद्यपि चत्वारः पक्षाः **पुरश्चरणकौस्तुभे** परमगुरुचरणैः प्रपञ्चिताः, तथाऽपि पक्षद्वय एव ते पर्यवस्यन्तीति निरूपितं **तृचभास्करेऽस्माभिः** । एवं च बहुतन्त्रसम्मतैतद्यन्त्रपरत्वेनैव मूलस्थो ग्रन्थसन्दर्भो योजनीयः । यथा कामेन कामन-योपलक्षितः साधको यं कामं कामनीयं देवदत्तादिकं कामयेद्वशीकर्तुमिच्छेत्तं कामं साध्यं कामस्थं कुर्यात् । पञ्चसु कामेषु प्रथमोपस्थितहृल्लेखागर्भ उक्तान्यतररीत्या लिखेत् । ततस्तं हृल्लेखार्णं द्वितीयस्य कामस्य मन्मथबीजस्य मध्यस्थं कुर्यात् । अथ तं मन्मथार्णं तृतीयकामयोः कन्दर्पयोः षट्कोणतामापन्नयोरुदरे गर्भे पुटीकृतं सम्पुटितं कुर्यात् । ततस्तस्य कन्दर्पस्य कामेषु मदनमन्दिरेषु षट्सु योनिषु चतुर्थं कामं मकरध्वजं निक्षिपेत् । ततस्तं षट्कोणं कामेन मीनकेतुना पञ्चमबीजेन कामितं वेष्टितं कुर्यात् । स्रक्चन्दनादीनां हि कामनागर्भेऽवस्थानमेवेच्छाविषयत्वमतः कामितपदस्य वेष्टितमित्यर्थो युज्यते । एवं कृत्वा साधकः कामस्थं प्रथमकामान्त-र्लिखितं साध्यं ध्रुवं निश्चलमपि क्षोभयेद्वशयेदिति ।

अत्र पञ्चानामपि कामानां विशेषसंज्ञान्तरसत्त्वेऽपि यः सामान्यसंज्ञयैव दुर्बोधो व्यवहारः, स पुनरस्य यन्त्रस्य 'क इदं कस्मा अदात्' इति**श्रुति**गम्यताध्वननेन तस्या अर्थविवरणार्थः । इदं साध्यत्वेनाभिमतं वस्तु कः कस्मा अदादिति प्रश्नः । कामः कामाय, प्रथमकामो द्वितीयकामायादादित्युत्तरम् । ह्रींबीजे स्थितं साध्यं क्लींबीजे स्थितं भवतीति यावत् । कामो दाता, अयं कामः स्वयमप्यस्मै दत्तवान् । कामः

प्रतिग्रहीता, तद्दत्तमिदं तृतीयकामस्त्रिकोणरूपः स्वयमेव स्वस्य प्रतिकूलो भूत्वा गृहीतवान् । प्रत्यगग्रस्य प्रागग्रत्वमेव प्रातिकूल्यम् । एकोऽप्यैंकारो द्विधा भूत्वा प्रातिकूल्यं चावलम्ब्य षट्कोणो भूत्वा स्वगर्भे सर्वमस्थापयदिति यावत् । कामं समुद्रमाविश । बहुकोणत्वात्तृतीयकाम एव समुद्रः । तदन्तः प्रविशेति चतुर्थं कामं प्रति वक्ष्यमाणसम्बोधनपूर्वकमुक्तिः । कामेन त्वा प्रतिगृह्णामि कामैतत्ते । हे काम ब्लूंकार, एतत्ते कृत्यम् । यत्समुद्रमाविश्यत्वमपि बहुरूपः समुद्र एवाजायथाः । नैव हि कामस्यान्तोऽस्ति न समुद्रस्येति **श्रुत्यन्**तरात् । अतः समुद्रे मर्यादाया आवश्यकत्वात् त्वामहं कामेन स्त्रींबीजेन प्रतिबध्नामि । एषा ते काम दक्षिणा, हे काम कामुक साधक, एषा, एतद्यन्त्रेण साधिता स्त्रीव्यक्तिर्वा तव दक्षिणाऽनु-कूलाऽस्त्विति**श्रुत्य**र्थात् । **केचित्** तु– कामं साध्यं कामस्थं मूलाधारस्थं विभाव्य, ततः काममध्यस्थं स्वाधिष्ठानस्थं विभाव्य, पश्चात् कामोदरेण मणिपूरोदरेण पुटितं विचिन्त्य तदनु कामेनानाहतेन वेष्टितं कामयेच्चिन्तयेत् । ततः कामेषु कण्ठ-वदनभ्रूमध्यललाटब्रह्मरन्ध्रेषु कामं यथेच्छं साध्यं क्रमेण निक्षिप्तं विभावयेत् । इति नवसु स्थलेषु साध्यविभावनमेकः प्रयोगः ।

प्रयोगान्तरमाह– कामेन कामितमिति । कामेन स्वेच्छयोक्तनवकान्यतमस्थले कामितं चिन्तितं कृत्वा कामस्थं स्वेच्छाविषयं क्षोभयेदित्यर्थ इत्याहुः । परे तु– कामं ह्लींकारं मूलाधारे ब्रह्मरन्ध्रे च सञ्चिन्त्याधःस्थेन ज्वालादिभिर्दह्यमानं साध्यमुप-रिस्थेनामृतधाराभिः प्लाव्यमानं चिन्तयेत् । एवमेव मन्मथकन्दर्पाभ्यां प्रत्येकं दह्यमानं प्लाव्यमानं च चिन्तयेत् । सोऽयं कामस्थमित्यादिपदत्रयस्यार्थः । कामेन कामयेत् कामम् । पूर्वोक्तबीजत्रयेण साध्यमुक्तरीत्या वशयेत् । कामं कामेषु निक्षिपेत् । मकरध्वजं षडाधारेष्वपि निक्षिप्य दहनाप्लावने कुर्यात् । मीनकेतुनाऽनाहत एव साध्यं वेष्टितं कृत्वा कामस्थविषयं क्षोभयेदित्यर्थ इति वदन्ति । तदुभयं शिष्य-प्रतारणमात्रमिति मनीषिण एव जानन्तु । **अन्ये** तु–कामराजकूटसाधनप्रकरणे पाठाल्लिङ्गादन्यत्र कामपदैः प्रकृतविद्याद्वितीयकूटमेव ग्राह्यमित्याहुः । तत्पूर्वोपदर्शित-स्पष्टतर**ज्ञानार्णव**वचनविरोधादनादेयम् । **श्रुति**विरोधोऽपि यथा–'अथातः कामकला-[भूत]चक्रं व्याख्यास्यामो ह्रीं क्लीं ऐं ब्लूं स्त्रीं एते पञ्च कामाः सर्वचक्रं व्याप्य वर्तन्ते । मध्यमं कामं सर्वावसाने सम्पुटीकृत्य ब्लूंकारेण व्याप्तं सम्पुटषट्चक्रं कृत्वाऽऽदिमद्वयेन मध्यवर्तिनं साध्यं बद्ध्वा भूर्जे यजति । तच्चक्रं यो वेत्ति स सकललोकं कर्षति । स सर्वविषं स्तम्भयति । नीलीयुतं च[क्रं] शत्रून्मारयति, गतिं स्तम्भयति, लाक्षायुतं कृत्वा सकललोकं वशीकरोति' इति । ततश्च मूले क्षोभयेदिति पदमाकर्षणादिफलोपलक्षणं व्याख्येयम् ॥ ४६-४७ ॥

कामराजबीजसाधनोपसंहारपूर्वकं शक्तिबीजसाधनं प्रतिजानीते–

**एतद्धि देवदेवेशि कामराजस्य साधनम् ।**
**प्रवक्ष्यामि समासेन शक्तिबीजस्य साधनम् ॥ ४८ ॥**

स्पष्टम् ॥ ४८ ॥

वाग्भवादिसाधन इव शक्तिसाधने रूपादिकृतविशेषाभावान्मन्त्रसाधनसामान्य-प्रकार एवास्याः साधने प्रकार इत्यभिप्रेत्य पुरश्चरणे ध्येयदेव्या इच्छाशक्तेः स्वरूपनिष्कर्षमात्रमाह–

**शक्तिबीजस्वरूपा तु सृष्ट्वा संहरते यदा ।**

त्रिपुरसुन्दरी सर्वं जगत्सृष्ट्वा परिपाल्य संहारोन्मुखी यदा भवति तदा तादृशसंजिहीर्षां प्रवृत्तिनिमित्तीकृत्य शक्तिबीजपदवाच्यतां सैव प्रतिपद्यत इत्यर्थः । पुरश्चरणकालेऽस्या ध्यानमुक्तं **ज्ञानार्णवे**–

**'सृष्टिसंहारपर्यन्तं शरीरे चिन्तयेत्पराम् ।**
**स्रवत्पीयूषधाराभिर्वर्षन्तीं विषहारिणीम् ॥**
**हेमप्रभाभासमानां विद्युन्निकरसुप्रभाम् ।**
**स्फुरच्चन्द्रकलापूर्णं कलशं वरदाभये ॥**
**ज्ञानमुद्रां च दधतीं साक्षादमृतरूपिणीम् ।'**

इति । अत्र तन्त्रे कूटत्रयेऽपि ध्यानानुक्तिरुक्तध्यानमात्रेण निर्वाहं ध्वनयति ॥ ४८$\frac{1}{2}$ ॥

एवं पुरश्चरणमुक्त्वा सिद्धमन्त्रस्य काम्यप्रयोगमाह–

**सृष्टिसंहारपर्यन्तं शरीरे परिचिन्तयेत् ॥ ४९ ॥**

कुलपद्मादकुलपद्मपर्यन्तं कुण्डलिन्याः प्रयाणं सृष्टिः । अकुलपद्मात्कुलपद्मपर्यन्तं परावर्तनं संहारः । तयोरवधिं स्वशरीरे चिन्तयेत् ॥ ४९ ॥

एतस्य फलमाह त्रिभिः –

**ततो भवति देवेशि वैनतेय इवापरः ।**
**नागानां दर्शनादेव जडीकरणकारकः ॥ ५० ॥**
**देहिनाममृतासारधीरधाराधरोपमः ।**
**स्थिरकृत्रिमशङ्कादिविषोपविषनाशनः ॥ ५१ ॥**
**दुष्टव्याधिग्रहानीकडाकिनीरूपिकागणैः ।**
**भूतप्रेत[1]पिशाचाद्यैस्त्रिनेत्र इव दृश्यते ॥ ५२ ॥**

---

1. पिशाचौघैस्त्रि –ख.

जङ्गमविषवत्स्थावरादीन्यपि हरतीत्याह–स्थिरेति । स्थिरं काकोलादि । कृत्रिमं द्रव्ययोगोद्भवम् । शङ्का मयेदं भक्षितमिति भ्रमः । तस्याप्युपद्रवकारित्वाद्विषत्वम् । नागादिविषाणि महाविषाणि, कृम्यन्तरभवान्युपविषाणि । त्रिनेत्र इवेति तु परिकराङ्कुरालङ्कारेण प्रलयकालाग्निसाहित्याभिप्रायगर्भं सत्तन्नाशकत्वं ध्वनयति । सुगममन्यत् ॥ ५०-५२ ॥

अथ कूटत्रयसाध्यं प्रयोगमाह–

**अथवा येन विद्येयं परिपूर्णा विचिन्त्यते ।**
**जन्ममण्डलहृत्पद्ममुखमण्डलमध्यगा ॥ ५३ ॥**
**केवलैव महेशानि पद्मरागसमप्रभा ।**
**तस्याष्टगुणमैश्वर्यमचिरात्संप्रवर्तते ॥ ५४ ॥**

कूटत्रयस्य प्रातिस्विकसाधनोत्तरं क्रियमाणाः पूर्वोक्ताः प्रयोगा एकैककूटेनैव भवन्ति । अयं तु प्रयोगस्त्रयाणां कूटानां मेलनेन भवति । अत एव चैकैक-कूटस्योक्तरीत्या प्रत्येकं कृतपुरश्चरणत्रयस्यैवात्राधिकारः । न पुनः सम्पूर्णविद्या-पुरश्चरणोत्तरमेवात्राधिकार इति भ्रमितव्यम् । तथात्व उत्तरपटल एव तत्पुर-श्चरणस्य कथनीयतापत्तेः । अत एवात्राथवेत्युक्तिः केवलैवेत्युक्तिश्च संगच्छते । परिपूर्णा विद्येत्युक्तिस्तु कूटत्रयसमुच्चये सत्यर्थात्परिपूर्णैव भवतीत्याशयेनेति ज्ञेयम् । अत एव **अर्णवे– 'अथ त्रिकूटा सम्पूर्णा'** इत्यत्र त्रिकूटेति विशेषणमुक्तार्थद्योतकं सत्सार्थकम् । एतेन पञ्चमपटले वक्तुं योग्योऽपि प्रसङ्गात्स्वतन्त्रत्वाच्चेहैव परशिवेनोक्त इति समाधानमपास्तम् । अथवेति । प्रत्येकं कूटत्रयं साधितवता प्रत्येकं वोक्तरीत्या कूटानि कामनायां विनियोजनीयानि वक्ष्यमाणरीत्या समुच्चित्यैव वा विनियोज्यानीत्यर्थः । परिपूर्णा परस्परसमुच्चितकूटत्रया । जन्ममण्डलं मूलाधार-पद्मम् । हृत्पद्ममनाहतपद्मम् । मुखमण्डलमध्यमाज्ञापद्मम् । एतानि त्रीणि स्थानानि गच्छतीति तथा । त्रिषु स्थलेषु क्रमेण त्रीणि कूटानि पद्मरागप्रभाण्येव चिन्तनीयानीत्यर्थः । परं तु पूर्वकूटसाधनानन्तरं स्म(स्व)स्थना(ला)वधि स्पष्टं चिन्तनीयम् । तृतीयं तु ब्रह्मरन्ध्रावधि । अत एव **ज्ञानार्णवे** प्रत्येककूटमुत्तरोत्तर-कूटसाधनानन्तरं स्मर्यते–

**'अथ त्रिकूटा सम्पूर्णा महात्रिपुरसुन्दरी ।**
**चिन्तिता साधकस्याऽऽशु त्रैलोक्यवशकारिणी ॥**
**क्रमेण नाभिहृद्वक्त्रमण्डलस्थाऽरुणप्रभा ।**
**पद्मरागमणिस्वच्छा चिन्तनात्सुरवन्दिते ॥**
**तस्याष्टगुणमैश्वर्यं सौभाग्यं च प्रजायते ।'**

इति । अत्र नाभिमण्डले वाग्भवचिन्तनोक्तिरुक्तरीत्या मूलाधारचिन्तनोक्त्या न विरुध्यते । इदं च **ऋजुविमर्शिन्य**नुसारेणोक्तम् । **अर्थरत्नावल्यां** तु मूलेऽपि नाभिमण्डलेत्येव पाठ आदृतः । केवलैवेति पूर्णविद्यापुरश्चरणं वक्ष्यमाणं विनैवेत्यर्थः । अष्टगुणमणिमादिवशित्वान्तम् । ये तु कूटत्रयस्य चिन्तने रूपभेदमाहुः, ते **तन्त्रान्तरा**विरोधेऽपि प्रकृतप्रयोगे तथात्वे मानाभावादुपेक्ष्याः ॥ ५३-५४ ॥

अथ त्रिकूटाबीजानि प्रत्येकं साधितवतामतिसुलभसाध्यानि कतिचित्फलानि पञ्चभिराह–

**मनसा संस्मरत्यस्या यदि नामापि साधकः ।**
**तदैव मातृकाचक्रे विदितो भवति प्रिये ॥ ५५ ॥**
**यदैव जपते विद्यां महात्रिपुरसुन्दरीम् ।**
**तदैव मातृचक्राज्ञा संक्रामत्यस्य विग्रहे ॥ ५६ ॥**
**सर्वासां सर्वसंस्थानां योगिनीनां भवेत्प्रियः ।**
**पुत्रवत्परमेशानि ध्यानादेव हि साधकः ॥ ५७ ॥**
**यदा तु परमेशानि परिपूर्णां प्रपूजयेत् ।**
**प्रयच्छन्ति तदैवास्य [1]खेचरीं सिद्धिमुत्तमाम् ॥ ५८ ॥**
**चतुःषष्टिर्यतः कोट्यो योगिनीनां महौजसाम् ।**
**चक्रमेतत्समाश्रित्य संस्थिता वीरवन्दिते ॥ ५९ ॥**

एतन्नाम्नो मानसस्मरणमात्रेण मातृकाचक्रसारस्वतसमूहविषये विदितो ज्ञानवान् । अथवा मातृणां मण्डले प्रसिद्ध इत्यर्थः । अस्या जपमात्रेण मातृणामाज्ञा साधके संक्रामति । आज्ञा कलेति **केचित्** । मन्त्रसिद्धिरिति **अन्ये** । मातृणामाज्ञा यथा लोकेष्वप्रतिहता तथाऽस्यापीत्यपरे । वस्तुतस्तु **ज्ञानार्णवे** दीक्षाप्रकरणे–

**'दृष्ट्याऽवलोकयेत्तं तु दृष्ट्या दृष्टिं प्रमेलयेत् ।**
**आज्ञासंक्रमणं कुर्याद्यावन्निश्चलता भवेत् ॥'**

इत्यत्रोक्तमाज्ञासंक्रमणनामकं यद्गुरोः कृत्यं तन्मातर एव स्वयं कुर्वन्तीत्यर्थः । श्रीगुरुः शिष्यदृष्ट्यन्तः स्वदृष्ट्या पश्यन्योगमहिम्ना स्वतनोः सकाशात्स्वचैतन्यं स्वनेत्रद्वारा बहिर्निष्कास्य शिष्यनेत्रद्वारा तच्चैतन्यरूपः स्वयं शिष्यस्य मनो वेधयेत् । तदिदमाज्ञासंक्रमणं गुरुमुखैकवेद्यं रहस्यम् । अस्या ध्यानमात्रात्सर्वासां योगिनीनामस्मिन्पुत्रवात्सल्यं भवति । सर्वसंस्थानां भूजलाकाशपातालादिनिवासिनीनाम् । अस्याश्चक्रपूजनमात्रेण खेचरीसिद्धिः । परिपूर्णां प्रपूजयेदित्यनेन तत्प्रतिमायाः पूजा

---

1. खचरीसि –क. ग.

मा प्रसाङ्क्षीदत आह–चतुःषष्टिरिति । एकैकमिति शेषः । त्रैलोक्यमोहनादि-सर्वानन्दमयान्तचक्रनवके प्रतिचक्रं चतुःषष्टिः कोट्यो योगिन्यः सन्तीत्यर्थस्य **तन्त्रराजे** स्पष्टत्वात् ॥ ५५-५९ ॥

ईदृशस्यैव प्रयोगान्तरमाह–

**आदौ सम्बन्धिनि पदे मध्ये बीजाष्टकं बहिः ।**
**कलां ध्यात्वाऽङ्गनारङ्गे जायतेऽनङ्गवत्प्रियः ॥ ६० ॥**

अत्र यद्यप्यादिमध्यान्तेषु व्यवस्थया किञ्चिद्विधीयत इति वाक्यछायया भासते तथाऽपि **वृद्धै**रन्यथा व्याख्यातम् । आदौ सम्बन्धिनि पदे प्रथमनिष्पन्ने चक्रे नवयोनि-चक्र इति यावत् । श्रीचक्रलेखनावसरे तावत एवाऽऽदौ निष्पन्नत्वात् । मध्ये बिन्दु-स्थाने । कलां कामकलाम् । बहिरष्टयोनिषु बीजाष्टकं वशिन्यादिबीजाष्टकं चेत्येव-मङ्गनायारङ्गे योनिमध्ये विचिन्त्य स्वयं तस्या अनङ्गवत्प्रियो भवतीत्यर्थः । **ज्ञानार्णवे** त्वत्रैव श्लोके **'कामराज इवापरः'** इति चतुर्थश्चरणः पठ्यत इत्येव विशेषः । अत्र बिन्दुचिन्तनं नास्ति । कामकलया तस्यापोदितत्वात् ॥ ६० ॥

एवं कण्ठरवेणोक्तानेकादश प्रश्नान् समाधाय चकारेण क्रोडीकृतानन्यान् प्रश्नान् समाधत्ते–

**करशुद्ध्यादिविद्यानामेकैकं परमेश्वरि ।**
**रुद्रयामलतन्त्रे तु कर्म प्रोक्तं मया पुरा ॥ ६१ ॥**

पूर्वमस्मिन्नेव तन्त्र उद्धृतानामपि करशुद्ध्यादिविद्यानां पुरश्चरणं काम्यकर्माणि च नात्र कथनीयानि । अस्य तन्त्रस्य प्रधानविद्यार्थमेव प्रवृत्तेः । अन्यासामुद्धारमात्रं त्वावश्यकं तासामिहाङ्गत्वेन विनियोगात् । **रुद्रयामलतन्त्र**स्य तु बहुदेवता-विषयकत्वात् तत्रैवैतासां विद्यानां साधनादिकं कर्म मया प्रत्येकं पुरैव कथितम्, तावन्मात्रोपासकैस्तदेव तन्त्रं द्रष्टव्यमिति भावः । एकैकपदं प्रत्येकार्शकम् । **रुद्रयामलोक्त**स्तासां साधनप्रकारः सुन्दर्युपास्तावनुपयुक्तत्वाद् विस्तृतत्वाच्च **अस्माभि-**रपि नेह प्रदर्शितः ॥ ६१ ॥

अथ शिवशक्त्योरायुधबीजान्युद्दिधीर्षुस्तत्प्रभावं वर्णयति–

**मादनैर्मदनो भूत्वा पाशाङ्कुशधनुःशरैः ।**
**क्षोभयेत्स्वर्गभूर्लोकपातालतलयोषितः ॥ ६२ ॥**
**तथैव शाक्तैर्देवेशि त्रिपुरीकृतविग्रहः ।**
**साधयेत् सिद्धगन्धर्वदेवविद्याधरानपि ॥ ६३ ॥**

मदनः शिवकामेश्वरः । तत्सम्बन्धिभिर्मादनैः । शक्तिस्त्रिपुरसुन्दरी तत्सम्बन्धिभिः शाक्तैः । शैवायुधमन्त्रसाधानात् स्त्रियो वश्या भवन्ति । शाक्तायुधमन्त्रसाधनात्पुरुषा इति भावः ॥ ६२–६३ ॥

**तत्र शाक्ता महावज्रप्रस्तारे जनिताः शराः ।**
**मादनास्त्वादिपरतः सर्वाधस्तान्नियोजिताः ॥ ६४ ॥**

**महावज्रप्रस्तार**नामा तन्त्रविशेषः । तस्मिंस्तन्त्रे, सर्वाधस्तात्सर्वमन्त्रोद्धारान्ते, आदिपरतः शाक्ता मदनाश्च शरा जनिताः । आदौ शक्तिबाणबीजान्युद्धृत्य पश्चाच्छिवबाणबीजान्युद्धृतानीत्यर्थ इति **प्राञ्चो** व्याचक्षते । वस्तुतस्तु–प्रकृततन्त्र आदिचतुःशतीतः परा या चतुःशती तस्यां सर्वान्ते शाक्ताः शरा उद्धृता इत्यर्थः । उत्तरतन्त्रान्त उद्धरिष्यन्त इति यावत् । मादनास्तु **तन्त्रान्तर** उद्धृतास्तत्रैव द्रष्टव्या इति व्याख्यातुं युक्तम् । उत्तरतन्त्रान्ते शक्तिबाणबीजानामुद्धारदर्शनात् । **तन्त्रान्तरे** तदुद्धारो यथा–

**'थान्तद्वयं समालिख्य वह्निसंस्थं क्रमेण तु ।**
**मुखवृत्तेन नेत्रेण बिन्दुनोपरिभूषितम् ॥**
**बाणद्वयमिदं प्रोक्तं मादनं भूमिसंस्थितम् ।**
**चतुर्थस्वरबिन्द्वाढ्यं नादरूपं वरानने ।**
**फान्तं शक्रेण संयुक्तं वामकर्णविभूषितम् ॥**
**बिन्दुनादसमायुक्तं सर्गवांश्चन्द्रमाः प्रिये ।**
**पञ्च बाणानिमान्विद्धि नामानि शृणु पार्वति ॥**
**क्षोभणो द्रावणो देवि तथाऽऽकर्षणसंज्ञकः ।**
**वश्योन्मादौ क्रमेणैव नामानि परमेश्वरि ॥'**

इति । अस्यार्थः–थान्तो दकारः, तद्द्वयं वह्निसंस्थं रेफारूढं कृत्वा, तयोराद्यं मुखवृत्तेनाऽऽकारेण द्वितीयं तु नेत्रेण वामनेत्रेण दीर्घेकारेण योजयित्वा, सबिन्दुकौ कुर्यात् । द्रां द्रीमिति सिद्धं बीजद्वयम् । मादनं ककारो भूमिसंस्थितं लकारारूढं तुर्यस्वरबिन्दुनादैर्युतं क्लीम् । फान्तं बकारः । शक्रेण लकारेण वामकर्णेन षष्ठस्वरेण बिन्दुनादाभ्यां च युक्तं ब्लूम् । चन्द्रमाः सकारः सर्गवान्विसर्गसहितः सः । एवं पञ्च बीजानि ॥ ६४ ॥

शिवशक्त्योः पाशबीजे उद्धरति–

**आद्यन्तगो महापाशः पौरुषेयः प्रकीर्तितः ।**
**रुद्रशक्तिः कुण्डलाख्या माया स्त्रीपाश उच्यते ॥ ६५ ॥**

आदिर्मातृकाप्रथमोऽकारः, तस्यान्तग आकारः, पौरुषेयः पुरुषसम्बन्धी महापाशः । बिन्दुयोगप्राप्तिस्तु पूर्वमेवोक्ता न विस्मर्तव्या । रुद्रः शिव एव शक्तिः

सामर्थ्यं यस्य स हकार इति **केचित्** । रुद्रे शक्तिर्यस्य वर्णस्य स रुद्रवाचको हकार इति युक्तम् । कुण्डलवान्कुण्डलः । मत्वर्थीयोऽच्प्रत्ययः । तेन कुण्डली सर्प इत्यर्थः । तस्याख्या यस्य तादृशो भुजङ्गेशो रेफः । श्रीकण्ठादिन्यासे हि रेफस्थाने भुजङ्गेशो न्यस्यते । तेन कुण्डलाख्यशब्देन रेफो गृह्यते । माया ईकारः । तेन भुवनेश्वरी-बीजमेव स्त्रीपाश इत्यर्थ इति **प्राञ्चः** । वस्तुतस्तु–मायापदेनैव सम्पूर्णबीजस्य लाभसम्भवान्नेयं कुसृष्टिर्युक्ता । कुण्डलाख्येतिस्त्रीलिङ्गानुपपत्तिश्च स्यात् । अतो रुद्रस्यैवापरा शक्तिः कुण्डलिनीत्युच्यते । तदभिन्नेति मायायाः स्तुतिः । अथवा कुण्डलं दूरीकरणम् । संहार इति यावत् । विषमा कुण्डलनामिवापिता । तदा विधिः कुण्डलनां विधोरपीति प्रयोगात् । तेन शिवनिष्ठा संहाराख्या शक्तिरित्यर्थः । हृञ् हरण इति धातोरेव ह्रींबीजनिष्पत्तेरिति ॥ ६५ ॥

चापाङ्कुशावुद्धरति–

**तुरीयमरुणावर्गे द्वितीयमपि पार्वति ।**
**पुंस्त्रीकोदण्डयुगलं कामोऽग्निर्व्यापकोऽङ्कुशः ॥ ६६ ॥**

वशिन्याद्यष्टकेऽरुणावर्गस्तवर्गः । तत्र चतुर्थमक्षरं धं शिवधनुः । द्वितीयं थं शक्तिधनुः । कामः ककारः । अग्नी रेफः । व्यापकस्त्रयोदशस्वरः, सम्प्रदाया-द्बिन्दुश्चेत्यर्थ इति **प्राञ्चः** । अत्र व्यापकशब्दस्य त्रयोदशस्वरबोधकत्वे कोशो मृग्यः । वस्तुतस्तु–प्रणवाधिकारे सर्वबीजोत्पादकं चेति **नन्दनीयमातृकाकोश**दर्शनात् प्रणव एवेह सर्वोत्पादकत्वाद्व्यापकशब्देन परामृश्यते । तेन बिन्द्वर्थं **सम्प्रदायो**ऽपि न प्रार्थनीय इति । एकमेवं चेदमङ्कुशबीजं स्त्रीपुंसयोरुभयोरपि विशेषानुक्तेरिति प्रामाणिकाः, तेन षष्ठस्वरत्रयोदशस्वरभेदेनात्रापि द्वैविध्यं वदन् **विद्यानन्दनाथः** किंमूलक इति विचार्यम् ॥ ६६ ॥

अथाऽऽयुधबीजवन्मुद्राणामपि बीजानि कुतो नोद्धृतानीत्याशङ्क्याऽऽह–

**मुद्रा यास्त्रिपुरायास्तु देवि सिद्ध्यष्टकान्विताः ।**
**ता एव सर्वचक्रेषु पूजाकाले प्रदर्शयेत् ॥ ६७ ॥**

त्रिपुरासम्बन्धिन्यो या मुद्रास्ताः स्वरूपेणैव सिद्ध्यष्टकप्रदा न पुनर्मन्त्रसाधनादि-सापेक्षतया । अतः पूजाकाले प्रतिचक्रं ता एव प्रदर्शयेत् । एवकारेण मन्त्रानावश्यकत्वध्वननादमन्त्रकमेव प्रदर्शयेदित्यर्थः । **केचित्** तु–मुद्राप्रदर्शनविधिमात्र-मेतदिति व्याचक्षाणा मन्त्रराहित्यसाहित्ययोरुदासीन एवायं श्लोक इति मन्यन्ते । परे

तु सिद्धयोऽणिमादिदशकम् । अष्टकं ब्राह्म्याद्यष्टकम् । आभ्यामन्विता इत्यनेन तत्पूजनोत्तरकाल उच्यते । प्रपूजयेदित्येव तु पाठः । तेन कालविशिष्टमुद्रापूजाविधिरेवायमित्याहुः । परं तु प्रकृतपटले मन्त्रसाधनकथनप्रकरणे मुद्रादर्शनपूजनविध्योरसंगतत्वस्य कः परिहार इति विचार्यम् । सिद्ध्यष्टकान्विता इत्यनेन कालबोधनं क्लिष्टं च । प्रथमपटलान्ते मुद्राप्रदर्शनस्याष्टमपटलान्ते तत्पूजनस्य च कथनात्पुनरुक्तं च ॥ ६७ ॥

ननु करशुद्ध्यादिविद्यानां साधनादिप्रकारस्**तन्त्रान्तर** इवेहापि कुतो न वर्ण्यत इत्यत आह–

**अतः प्रधानविद्येयं त्रिपुरा परमेश्वरी ।**
**नैतस्याः सदृशी काचिद् विद्या देवेशि विद्यते ॥ ६८ ॥**

अत इति निर्धारणषष्ठ्यास्तसिः । एतत्तन्त्र उद्धृतानामासां विद्यानां मध्य इयं त्रिपुरा प्रधानविद्या । अन्या अङ्गभूताः । तेन प्रधानविद्योपास्तिप्रकरणेऽङ्गविद्योपास्तिकथनस्यासंगतत्वापत्तेस्ता इह न वर्णिता इति भावः । न केवलमियमास्वेव प्रधाना, अपि तु सर्वमन्त्रेष्वपीत्याह– नैतस्या इति ॥ ६८ ॥

अत एव हरिस्मरयोरेतदुपास्तिकृतमेव मोहिनीरूपधारणकर्तृत्वादिरूपं माहात्म्यं **ब्रह्माण्डपुराण-कालिकापुराण**योः क्रमेण स्मर्यत इत्याह–

**एतामेव पुराऽऽराध्य विद्यां त्रैलोक्यमोहिनीम् ।**
**त्रैलोक्यमोहनं रूपमकार्षीद् भगवान् हरिः ॥ ६९ ॥**
**कामदेवोऽपि देवेशि महात्रिपुरसुन्दरीम् ।**
**समाराध्याभवल्लोके सर्वसौभाग्यसुन्दरः ॥ ७० ॥**

एतच्छ्लोकद्वयविवरणपर एव **भगवत्पादैः सौन्दर्यलहर्याम्– 'हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननीम्,** इति श्लोक उक्तः । उक्तं च **ज्ञानार्णवे–**

**'एतामाराध्य देवेशि कामः सौभाग्यसुन्दरः ।**
**हरिश्च परमेशानि त्रिपुराराधनात् प्रिये ।**
**त्रैलोक्यमोहनो भूत्वा स्थितिकर्ताऽभवत्सदा ।**
**एतत्समाराधनात्तु ब्रह्मा सृष्टिकरोऽभवत् ॥**
**चन्द्रसूर्यौ वरारोहे सृष्टिसंहारकारकौ ॥'**

इति ॥ ६९-७० ॥

एतस्या विद्याया अत्युत्तमत्वादेवात्युत्तमोऽप्यहमस्या उपासकोऽस्मीत्याह–

**मयाऽप्येतद्व्रतस्थेन क्रियतेऽद्यापि सुव्रते ।**
**जप्यं त्रिसन्ध्यमेतस्यास्तदेतत्पदसिद्धये ॥ ७१ ॥**

त्रिसन्ध्यं सन्ध्यावन्दनाख्यकर्मत्रयकाले । एतद्व्रतस्थेन प्रत्यक्षपरिदृश्यमानस्नानादि-नियमयुक्तेन मयाऽपि कर्मपाशविनिर्मुक्तेनापि लोकसंग्रहार्थं जप्यं क्रियतेऽतोऽन्येन कर्मपाशबद्धेन लोकेनेदृशव्रतग्रहणपूर्वकं सन्ध्यावन्दनादिकर्माणि जपविशिष्टानि यावज्जीवं कर्तव्यानि । तद्ब्रह्मरूपं यदेतत्पदं मदभिन्नं स्थानं तस्य सिद्धये प्राप्त्यर्थम् । अस्मिंस्तन्त्रेऽयमेव स्नानसन्ध्यादिकर्मविधिः । तदितिकर्तव्यता तु **कल्पसूत्राद्** ग्राह्ये-त्युक्तं प्राक् ॥ ७१ ॥

इदानीं चक्रराजस्यार्चनभेदान् फलसहितानाह–

**मध्यप्रपूजनाद्देवि वाक्पतिर्जायते नरः ।**
**तथैवापरकन्दर्पो बाह्यमध्यान्तपूजनात् ॥ ७२ ॥**
**सर्वेण सर्वदा सर्वदेवीयुक्तेन पार्वति ।**
**साधयेत्खेचरीं सिद्धिमणिमादिगुणान्विताम् ॥ ७३ ॥**

**॥ इति श्रीनित्याषोडशिकार्णवस्य चतुर्थः पटलः ॥**

**तन्त्रराजे** हि पूजाभेदः पञ्चविध उक्तः –

**'पूजाविशेषान् देवेशि शृणु नित्यक्रमोदितान् ।**
**अशक्तानां तु विस्तारे तथाऽऽपत्सु च शस्यते ॥**
**अन्यथाऽनर्थकारि स्यात् संकोचार्चनमीश्वरि ।**
**हेतिभिर्मध्यमाद्यं स्याद् द्वितीयं नवयोनिषु ॥**
**चतुर्दशारान्मध्यान्ता चतुर्थं प्रोक्तरूपतः ॥**
**पञ्चमं सर्वदुःखार्तिनाशनं वाञ्छितप्रदम् ।**
**तत्प्रकारं तु देवेशि कुरुकुल्लार्चने शृणु ॥**
**इति पञ्चप्रकाराऽर्चा प्रोक्ता सर्वार्थसिद्धिदा ॥'**

इति । आयुधादिबिन्द्वन्ता– १, वशिन्यादिबिन्द्वन्ता– २, चतुर्दशारादिबिन्द्वन्ता– ३, भूगृहादिबिन्द्वन्ता–४ चेति चतुर्विधा पूजा । पञ्चमी पूजा तु **कुरुकुल्लापटले** वक्ष्यते । सा च भूगृहाष्टदलनवयोनिपूजारूपा । आस्वेका सम्पूर्णेव । अन्याश्चतस्रः संक्षिप्ताः । विस्तृतपूजासमर्थस्य संक्षिप्तार्चनेन न फलं प्रत्युतानर्थायेति समुदायार्थः । एवं सति मूले विधीयमाने मध्यचक्रार्चन-बाह्यमध्यार्चन-सर्वार्चनभेदेन त्रैविध्ये मध्यार्चन-पदेनाऽऽयुधार्चनं नवयोन्यर्चनं वा प्रतिपाद्यत इति व्याख्यातुं युक्तम् । तेन यद्

**ऋजुविमर्शिन्याम्** उक्तं त्रिकोणबिन्दुगतदेवताचतुष्टयमात्रपूजनमेव मध्यपदेनोच्यत इति तन्मानाभावादनादेयम् । वस्तुतस्तु षष्ठे पटले (श्लो. १३) –

**'नवयोन्यात्मकमिदं चिदानन्दघनं महत् ।**
**चक्रं नवात्मकमिदं नवधाभिन्नमन्त्रकम् ॥'**

इति वचनेन नवयोनिचक्रमात्रस्यैव त्रैलोक्यमोहनादिसर्वानन्दमयान्तचक्रात्मकताया वक्ष्यमाणत्वादिहत्यमध्यपदेन नवयोन्यात्मकं चक्रमेव ग्राह्यम् । एवं बाह्यमध्यार्चनपदेन मन्वस्रादिबिन्द्वन्तपूजा विवक्षिता । मध्यपदेन नवयोनिरूपसंहारचक्रस्य बाह्यपदेन तद्बहिःस्थितस्थितिचक्रस्य चोपादातुं युक्तत्वात् ।

**'त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम् ।**
**दशारयोः षोडशारं भूगृहं भुवनास्रके ॥'**

इति वचनानुगुण्येनास्यैव सर्वचक्रत्वेन पूर्वं व्यवहृतत्वाच्च । तेन यत् **सुन्दरीमहोदयकारेण** उक्तम्– बाह्यमध्यगतपदेन स्थितिचक्रमात्रमुच्यत इति, यदपि **[अर्थ]रत्नावल्याम्** उक्तं षोडशाराद्यन्तर्दशारान्तविहितं चक्रं मध्यपदेनोच्यते, षोडशदलाष्टदलपद्ममात्रविनिर्मुक्तं तु बाह्यमध्यगतपदेनोच्यत इति, तदुभयमपि परास्तम् । षष्ठे पटले वक्ष्यमाणस्य चक्रत्रैविध्यस्याज्ञानेनैवेदृशोक्तेः । तस्य पदस्य तावन्मात्रे रूढौ स्वेनापि प्रमाणान्तरस्यालेखनाच्च । प्रथमपक्षे प्रधानदेवतापूजानापत्तेश्च । मध्यान्तेत्यत्रान्तपदमवध्यर्थकम् । बाह्यान्मध्यपर्यन्तमित्यर्थः । सर्वदेवीयुक्तेन अणिमादिशक्तियुक्तेन । स्पष्टमन्यत् । **ज्ञानार्णवे**ऽपि त्रैविध्यमेवोक्तम्–

**'चक्रं समर्चयेद् देवि सकलं नियतव्रतः ।**
**बाह्यमध्यगतं वाऽपि मध्यं वा चक्रमर्चयेत् ॥'**

इति । अत्राऽऽदौ नवाऽऽवरणानि मुख्यानि । तदभावे मन्वस्रादिषडावरणानि । तदयोगे त्रीण्यावरणानि पूजयेदित्यर्थः । इदं च संक्षिप्तार्चनद्वयं प्रथमपटलान्त एव संगतमपि नोक्तम् । तत्रोक्तौ हि चक्रसाधनादिष्वपि तदुत्तरं कथ्यमानत्वादर्चन आवरणविकल्पः प्राप्यते । अतो मुख्यपक्ष एव चक्रसाधनादिषु यथा स्यादित्येवमर्थं तावन्मात्रस्यैव तत्रोक्तौ मुख्यार्चनसापेक्षेषु कर्मसामान्येषु गौणार्चनकथनस्यावसर इत्याशयेनात्रैवार्चनविभागः कृत इति सर्वं शिवम् ॥ ७२-७३ ॥

**इति श्रीभास्करोन्नीते नित्याषोडशिकाम्बुधेः ।**
**व्याख्याने सेतुबन्धाख्ये विश्रामोऽभूच्चतुर्थकः ॥ ४ ॥**

श्रीगुरुचरणारविन्दमिलिन्दोऽहम् ॥ श्रीः ॥

●

## अथ पञ्चमो विश्रामः

एवं त्रिसप्तत्या श्लोकैश्चतुर्थपटलेन बीजसाधनादिरहस्यजातं प्रतिपाद्यावसरप्राप्तं मन्त्रसाधनादिकं विवक्षुर्वृत्तकथनपूर्वकं वर्तिष्यमाणप्रश्नमवतारयति–

**श्रीदेव्युवाच**

**सर्वमेतत्त्वया प्रोक्तं त्रिपुराज्ञानमुत्तमम् ।**
**कामतत्त्वविधिज्ञानं मोक्षतत्त्वपदावधि ॥ १ ॥**
**इदानीं जपहोमानां विधानं वद शङ्कर ।**
**येनानुष्ठितमात्रेण मन्दभाग्योऽपि सिध्यति ॥ २ ॥**

कामः परशिवस्तस्य तत्त्वं वास्तवस्वरूपम्, तस्य विधिः प्रकारः सोपपत्तिकमिति यावत् । मोक्षात्मकं तत्त्वं तस्य भावो ब्रह्मभावः । स एव पदं तदवधि । अथवा काम इति त्रिवर्गोपलक्षणम् । चतुर्विधपुरुषार्थसाधनज्ञानमुक्तम् । साम्प्रतं जपहोमादिप्रकारं वद । येन पुरश्चरणेन दैवहीनस्यापि मन्त्रसिद्धिर्भवति किमुतान्येषां वक्तव्यम् ॥ १-२ ॥

**श्रीभैरव उवाच**

**शृणु देवि प्रवक्ष्यामि त्रिपुरामन्त्रसाधनम् ।**
**जपहोमविधानं च समीहितफलप्रदम् ॥ ३ ॥**

मन्त्रसाधने हि द्वावुपायौ– यावज्जीवं नियतो जपः, पुरश्चरणरूपश्च । ऐहिके काम्यप्रयोगे तु पुरश्चरणं विना नाधिकारः । आमुष्मिकमात्रार्थे पुरश्चरणं विनाऽपि नित्यजपमात्रेण निर्वाह इति स्थितिः ॥ ३ ॥

तत्राऽऽद्यमाह–

**चक्रमभ्यर्च्य सकलं विधिवत्परमेश्वरि ।**
**मध्यं वा केवलं देवि बाह्यमध्यगतं च वा ॥ ४ ॥**
**तदग्रसंस्थितो मन्त्री सहस्रं यदि वा जपेत् ।**
**व्रतस्थः परमेशानि ततोऽनन्तफलं भवेत् ॥ ५ ॥**

त्रिविधचक्रार्चनेषु पूर्वोक्तेषु शक्त्यनुसारेणैकं कृत्वा प्रत्यहं सहस्रं नियमविशिष्टो जपेदित्यर्थः । अत्र श्लोके यदि वेत्युक्तिस्वारस्यादित्थं व्याख्यातम् । यदि तु व्रतस्थ इतिपदस्योत्तरश्लोक आरभेतेतिपदस्य च स्वारस्यमवलोक्यते, तदा **ज्ञानार्णवै**कवाक्य-

त्वाय पुरश्चरणजपारम्भमात्रपरमिति तु द्वितीयपटलोक्तमास्थेयम् । **केचित्** तु योनिमुद्रा-माबध्य यो जपो मन्त्रदोषनिरासार्थत्वेन सकृत्सहस्रसंख्याकस्**तन्त्रेषु** विहितो दृश्यते स तावन्मात्र एवेह पुरश्चरणत्वेन विधीयत इत्याहुः ।तद्बहूनामसम्मतं निर्मानत्वात् ॥ ४-५॥

मध्यचक्रमात्रपूजनेऽप्यसमर्थस्याऽऽह–

**ध्यात्वा वा हृद्गतं चक्रं तत्रस्थां परमेश्वरीम् ।**
**पूर्वोक्तध्यानयोगेन सञ्चिन्त्य जपमारभेत् ॥ ६ ॥**

पूर्वं प्रथमपटले (श्लो.१३८) उक्तं **'ततः पद्मनिभाम्'** इत्यादिनाऽभिहितम् ॥ ६ ॥

स्वरभेदेन जपभेदानाह–

**निगदेनोपांशुना वा मानसेनापि सुव्रते ।**
**पूर्वोक्तन्याससंयुक्तो मुद्रासन्नद्धविग्रहः ॥ ७ ॥**

नितरां गद्यत इति निगदः । उच्चैर्निगदेनेति **श्रुति**विहितोच्चारणेनेत्यर्थः । उपांशुना स्वकर्णमात्रगोचरेण, मानसेन मनसैवोच्चारितैरक्षरैः । तदुक्तं **ज्ञानार्णवे**–

**'निगदः परमेशानि स्पष्टवाचा निगद्यते ।**
**अव्यक्तस्तु स्फुरद्वक्त्र उपांशुः परिकीर्तितः ॥**
**मानसस्तु वरारोहे चित्तान्तर्गतरूपवान् ।'**

इति । एतेषु त्रिषूत्तरोत्तरमधिकफलम् । उक्तं च–

**'विधियज्ञाज्जपो यज्ञो विशिष्टो दशभिर्गुणैः ।**
**उपांशुः स्याच्छतगुणः सहस्रो मानसः स्मृतः ॥'**

इति । जप मानस इतिधात्वर्थानुगुण्यादन्त्यो मुख्योऽन्यौ तु गौणाविति द्रष्टव्यम् । पूर्वोक्ता न्यासा वशिन्यादयः । मुद्रा योनिमुद्रा गुरुमुखैकवेद्या ॥ ७ ॥

जपोपयोगिनीं मालामाह–

**मुक्ताफलामलमणिस्फीतवैदूर्यसम्भवाम् ।**
**पुत्रजीवकपद्माक्षरुद्राक्षस्फटिकोद्भवाम् ॥ ८ ॥**
**प्रवालपद्मरागादिरक्तचन्दननिर्मिताम् ।**
**कुङ्कुमागुरुकर्पूरमृगनाभिविभाविताम् ॥ ९ ॥**
**अक्षमालां समाहृत्य त्रिपुरीकृतविग्रहः ।**

पद्मरागादीत्यादिपदेन माणिक्यहीरकादिपरिग्रहः । कुङ्कुमादिना विभावनं तु मालासंस्कारोपलक्षणम् । **'अक्षमालां प्रपूज्याथ चन्दनेन विलेपयेत्'** इति **ज्ञानार्णवात्** ।

एतेषां मणिभेदानां फलभेदस्य **आगमान्तरेषु** कथनेऽपि संयोगपृथक्त्वार्थत्वं ज्ञेयम् । तथा च **ज्ञानार्णवे**–

**'अथ मुक्ताफलमयी [1]साम्राज्यफलदायिनी ।**
**[सर्वसिद्धिप्रदा नित्यं सर्वराजवशङ्करी ॥]**
**त(य)था मुक्ताफलमयी तथा स्फटिकनिर्मिता ।**
**रुद्राक्षमालिका मोक्षे भवेत्सर्वसमृद्धिदा ॥**
**प्रवालमालिका वश्ये सर्वकार्यार्थसाधिका ।**
**माणिक्यमाला [2]विमला साम्राज्यफलदायिनी ॥**
**पुत्रजीवकमाला तु लक्ष्मीविद्याप्रदायिनी ।**
**पद्माक्षमालया लक्ष्मीर्जायते च महद्यशः ॥**
**रक्तचन्दनमाला तु भोगदा वश्यदा भवेत् ।'**

इत्यादि । अक्षमालापदेनाकारादिक्षकारान्तमातृकामालोच्यते । **'अक्षमालां समाश्रित्य मातृकावर्णरूपिणीम्'** इति **ज्ञानार्णवात्** । एतेन मालामणिसंख्यायां विकल्पस्तत्संस्कारादिजातं च **तन्त्रान्तराद्** ग्राह्यमित्युक्तं भवति ॥ ८-९ १/२ ॥

इदानीं नवलक्षजपात्मकं पुरश्चरणमाह सार्धैः सप्तभिः –

**लक्षमेकं जपेद्देवि महापापैः प्रमुच्यते ॥ १० ॥**
**लक्षद्वयेन पापानि सप्तजन्मकृतान्यपि ।**
**नाशयेत्त्रिपुरा देवी साधकस्य न संशयः ॥ ११ ॥**
**जप्त्वा लक्षत्रयं मन्त्री यन्त्रितो मन्त्रविग्रहः ।**
**पातकं नाशयेदाशु यदि जन्मसहस्रगम् ॥ १२ ॥**
**जप्त्वा विद्यां चतुर्लक्षं महावागीश्वरो भवेत् ।**
**पञ्चलक्षाद्दरिद्रोऽपि साक्षाद् वैश्रवणो भवेत् ॥ १३ ॥**
**जप्त्वा षड्लक्षमेतस्या महाविद्याधरेश्वरः ।**
**जप्त्वैव सप्त लक्षाणि खेचरीमेलको भवेत् ॥ १४ ॥**
**अष्टलक्षप्रमाणं च जप्त्वा विद्यां महेश्वरि ।**
**अणिमाद्यष्टसिद्धीशो जायते देवपूजितः ॥ १५ ॥**
**नवलक्षप्रमाणं तु जप्त्वा त्रिपुरसुन्दरीम् ।**
**विधिवज्जायते मन्त्री रुद्रमूर्तिरिवापरः ॥ १६ ॥**
**कर्ता हर्ता स्वयं [3]गौरि लोकेऽप्रतिहतप्रभः ।**
**प्रसन्नो मुदितो धीरः स्वच्छन्दगतिरीश्वरः ॥ १७ ॥**

---

1. 'साम्राज्य' इत्यस्य स्थाने 'वाङ्मोक्ष' इति प्रकाशिते ज्ञानार्णवे ।
2. 'विमला' इत्यस्य स्थाने 'फलदा' इति प्रकाशिते ज्ञानार्णवे ।
3. गौरीलो–ख. ग.

यन्त्रितो यन्त्रात्मकशरीरवान् । अत एव **ज्ञानार्णवे–'ततो लक्षत्रयं जप्त्वा मन्त्रयन्त्रकलेवरः'** इत्युक्तम् । खेचरीणां योगिनीनां मेलक एकीकरणसमर्थः । 'नवलक्षजपं कृत्वा रुद्रत्वं प्राप्नोति' इति **श्रुतिं** व्याचष्टे–रुद्रमूर्तिरिति । स्वच्छन्दगति-र्निखिलब्रह्माण्डेष्वप्रतिहतगतिः ॥ १०-१७ ॥

अथ निगदादिषु फलतारतम्यमाह–

**निगदेन तु यज्जप्तं लक्षं चोपांशुना समम् ।**
**मानसेन महेशानि कोटिजाप्यफलं भवेत् ॥ १८ ॥**

एक उपांशुजपो निगदलक्षजपेन समः । एको मानसजप उपांशुकोटिजपेन तुल्य इत्यर्थः । मानसजपेतिकर्तव्यता त्वष्टमपटले मूल एवोपदेक्ष्यते ॥ १८ ॥

क्षेत्रविशेषे जपमाह–

**यत्र वा कुत्रचिद्देशे लिङ्गं वै पश्चिमामुखम् ।**
**स्वयम्भु बाणलिङ्गं वा इतरद्वाऽपि सुव्रते ॥ १९ ॥**
**तत्र स्थित्वा जपेल्लक्षं त्रिपुरीकृतविग्रहः ।**
**ततो भवति देवेशि त्रैलोक्यक्षोभकारकः ॥ २० ॥**

ब्रह्माण्ड इव पिण्डाण्डेऽपि स्वयम्भ्वादिलिङ्गान्युत्तरपटले वक्ष्यन्ते । तत्परत्वे-नैतद्ग्रन्थव्याख्यानं [**अर्थ**]**रत्नावलीकार**स्य व्यामोह एव तत्र स्थित्वेत्यंशस्वारस्यहानेः । इतोऽप्यधिकानां स्थलानाम् **आगमान्तरे**ऽस्मिन्नेव प्रकरणे कथनस्यानुपपत्तेश्च । तदुक्तम् **अर्णवे**–

**'यत्र वा कुत्रचिद्भागे लिङ्गं वै पश्चिमामुखम् ।**
**स्वयम्भु बाणलिङ्गं वा वृषशून्यं जले स्थितम् ॥**
**पश्चिमायतनं वाऽत्र इतरद्वाऽपि सुव्रते ।**
**शक्तिक्षेत्रेषु गङ्गायां नद्यां पर्वतमस्तके ॥**
**पवित्रे सुस्थले देवि जपेद्विद्यां प्रसन्नधीः ।**
**तत्र स्थित्वा जपेल्लक्षं साक्षाद्देवीस्वरूपकः ॥**
**ततो भवति विद्येयं त्रैलोक्यवशकारिणी ।'**

इति ॥ १९-२० ॥

जपविधिमुपसंहृत्य होमं विधत्ते–

**एवं जपं यथाशक्ति कृत्वाऽऽदौ साधकोत्तमः ।**
**होमं कुर्याद्दशांशेन कुसुमैर्ब्रह्मवृक्षजैः ॥ २१ ॥**

अत्र कृत्वेतित्वाप्रत्ययेन होमस्य जपाङ्गत्वं बोध्यते । 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यत्र वाजपेयाङ्गताया बृहस्पतिसवे बोधनात् । न च होमस्यापि

विघ्ननाशादिफलार्थत्वान्नाङ्गत्वमिति वाच्यम् । फलश्रवणस्य बृहस्पतिसवेऽपि तुल्यत्वात् । न च पौरोहित्यफलकबृहस्पतिसवोऽङ्गभूतात् तस्माद्भिन्न एवेति वाच्यम् । प्रकृतेऽपि तथाकल्पनोपपत्तेः । प्रकरणान्तरन्यायलभ्यभेदस्य मासाग्निहोत्रादौ **उत्तरमीमांसकै**-र्निरस्तत्वाच्च । अत एव 'अङ्गमन्त्रेषु फलश्रवणमपि नार्थवादः' इति पक्षः कामेश्वरीबीजोद्धारे प्राक्प्रतिपादितः । होमस्यापि प्राधान्यमेव । 'साहित्यमात्रं त्वङ्गम्' इत्यपि पक्ष उक्त एव । 'पञ्चाङ्गं पुरश्चरणम्' इत्यादिवचनान्यप्यत्रैव साधकानि । जपहोमतर्पणमार्जनब्राह्मणभोजनरूपपञ्चावयवकमिति तदर्थात् । हृदयमुपांशुयाज इत्यवयवप्रायपाठादुपांशुयाजस्य प्राधान्यमिति सिद्धान्तात् । यथाशक्ति सामर्थ्य-मनतिक्रम्य । आदौ जपः, पश्चाद्धोमः । स च ब्रह्मवृक्षजैः कुसुमैः पलाश-पुष्पैर्जपदशांशः कार्य इत्यर्थः ।

अत्रेदं विचार्यम्– पुरश्चरणजपस्य कियती संख्या यद्दशांशो होम उच्यते । किं प्रथमं विहितः सहस्रजपो मध्ये विहित एकादिनवलक्षान्तजपोऽन्ते विहितो लक्षजपश्चेति त्रयमपि मिलित्वैकं पुरश्चरणमुत त्रीण्यपि प्रत्येकं पुरश्चरणानि, अथवैतेषां मध्येऽन्यतममेकमेव द्वयमेव वा पुरश्चरणमुतैतेभ्योऽन्यदेव पुरश्चरणमिति । तत्र चरमः पक्षः **सौभाग्यरत्नाकरेण** अवलम्बितः। तन्मते लक्षत्रयस्य पुरश्चर्यात्वात् । मध्ये विहितस्तु एकादिनवलक्षान्तः । सम्भूय पञ्चचत्वारिंशल्लक्षपरिमितः काम्यजप इत्याहुः । **नव्या**स्तु–एकादिलक्षाणां प्रत्येकं फलवत्त्वकीर्तनं त्ववयवद्वाराऽवयविनो नवलक्षजपस्य स्तुत्यर्थम्, द्वादशकपालपुरोडाशविधेरर्थवादत्वेन यदष्टाकपालो भवतीत्यादेर्वैश्वानराधिकरण उपपादनात् । **'नवलक्षप्रजप्ताऽपि तस्य विद्या न सिध्यति'** इत्यादितत्तत्स्तोत्रविधिवाक्यशेषे नवलक्षजपस्य मन्त्रसिद्धिफलकत्वानुवाददर्शनात् । अतो नवलक्षजप एव पुरश्चरणमित्याहुः । तच्चिन्त्यम् । वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इत्युपक्रम्य यदष्टाकपालो भवतीत्यादिभिरष्टादिद्वादश[1] कपालानां पृथक्पृथक् पञ्च फलान्युक्त्वा 'यस्मिञ्जात एतामिष्टिं निर्वपति' इत्युपसंहारवाक्ये 'पञ्चापि फलानि वैश्वानरेष्टेर्भवन्ति' इत्युक्त्योपक्रमोपसंहाराभ्यामेकवाक्यता-प्रतीतेस्तन्निर्वाहा[योपक्रमोपसंहा]रयोरदर्शनेन सर्वेषां भिन्नवाक्यत्वोपपत्तेः । ततश्चैकलक्षद्विलक्षादिजपाः सर्वेऽपि भिन्नानि कर्माणि भवन्तु । एतेषु चरमस्य नवलक्षजपस्य सर्वव्यापकत्वेन ततोऽपि प्रकृतस्तोत्राभावे सिद्ध्यभावः किमु तत्र न्यूनजपैः कर्मभिरित्येवंपरतयाऽप्युक्तवाक्यशेषोपपत्तेः । किं च भिन्नकर्मनवकपक्ष उत्तरत्र **'एवं जपं यथाशक्ति कृत्वाऽऽदौ साधकोत्तमः'** इति यथाशक्तिवचनमुपपद्यते । सर्वस्यैककर्मत्वे तु न तत्समञ्जसं परं तु पञ्चचत्वारिंशल्लक्षात्मकमेकं कर्मेति वदतामेकवाक्यत्वस्यावश्यमङ्गीकार्यत्वाद् वैश्वानरन्यायविरोधो **नव्यै**रुद्भावयितुं युज्यत

1. कपालान्तानां– ख.

एव । कर्मभेदपक्षे तु न तद्विरोधः । वस्तुतस्तु–कर्मनवकपक्षेऽन्ते पुनर्लक्षजपविधानं प्रथमकर्मणा पुनरुक्तं स्यात् । अन्ते लक्षत्रयस्य विधानमिति **[सौभाग्य]रत्नाकरा**दिव्याख्यानेऽपि तृतीयकर्मणा पुनरुक्तिः । अतो मध्ये नवलक्षजपात्मकमेकमेव पुरश्चरणरूपम् । अन्ते स्थलनियमविशिष्टमेकलक्षजपात्मकमेव पुरश्चरणत्वेन विधीयत इति युक्तम् । अस्मिन्नपि पक्षे यथाशक्तिवचनस्योपपत्तेए(रे)तदनुपपत्त्यैवा-मध्यान्तविधिभिरेकं कर्मेत्युत्प्रेक्षणं परास्तम् । त्रीण्यपि भिन्नानि पुरश्चरणानीति **[अर्थ ]रत्नावली**पक्षस्तु सहस्रस्य पुरश्चरणताया निरस्तत्वादेव निरस्तः । अन्त्यो विधिर्लक्षत्रयस्येति स्वीकारस्तु **शंकरानन्दनाथा**देर्महत्साहसमित्युक्तम् । **'एकलक्षजपः काम्यः'** इति पक्षेऽपि यथाशक्तिवचनानुपपत्तिः । एतेन **श्रीक्रमसंहितै**कवाक्यत्वमपि लभ्यत इत्यादिकं तु द्वितीयपटलारम्भ एवोक्तम्, **दक्षिणामूर्तिसंहितायां** लक्षत्रयजप उक्त इति चेत् । **तन्त्रराज** एकविंशतिलक्षजपोऽप्युक्त एवेति किं तेन । प्रकृततन्त्ररीत्या तु द्विविधं पुरश्चरणमनाबाधमेवेति । **ज्ञानार्णवे**ऽपि **अस्मद्** उक्तार्थ एव स्वरस इति तूक्तमेव ॥ २१ ॥

पलाशकुसुमालाभे त्वाह–

**कुसुम्भकुसुमैर्वाऽपि त्रिमध्वक्तैर्यथाविधि ।**
**ततो भवति विद्येयं महाविघ्नौघघातिका ॥ २२ ॥**
**सर्वकामप्रदा देवि भुक्तिमुक्तिफलप्रदा ।**

त्रिमधुपदेन क्षीरमध्वाज्यमुच्यते, शर्करामध्वाज्यं वा । इदं च पलाशपुष्पपक्षेऽप्यन्वेति । तथाविधीत्यनेन होमेतिकर्तव्यताऽन्यतो ग्राह्येति ध्वनितम् । बहुदिन-साध्यजपेषु विघ्नानामावश्यकत्वात् तत्परिहाराय कयाचित्संख्यया जपं संस्थाप्य तावद्दशांशहोमादिकं समाप्य पुनरवशिष्टजपं समापयेदिति शिष्टसम्मतोऽर्थः । सोऽयं महाविघ्नौघघातिकेत्यनेन सूचितः ॥ २२-२२ $\frac{१}{२}$ ॥

अथ होमोपयुक्तानि कुण्डानि तेषां संयोगपृथक्त्वन्यायेन क्रत्वर्थपुरुषार्थोभयरूपतां च दर्शयति–

**योनिकुण्डे भगाकारे वर्तुले वाऽर्धचन्द्रके ॥ २३ ॥**
**नवत्रिकोणकुण्डे वा चतुरश्रेऽष्टपत्रके ।**
**योनिकुण्डे भवेद्वाग्मी भगे चाऽऽकृष्टिरुत्तमा ॥ २४ ॥**
**वर्तुले तु भवेल्लक्ष्मीरर्धचन्द्रे त्रयं भवेत् ।**
**नवत्रिकोणकुण्डे तु खेचरत्वं प्रजायते ॥ २५ ॥**
**चतुरश्रे भवेच्छान्तिर्लक्ष्मीः पुष्टिररोगता ।**
**पद्माभे सर्वसम्पत्तिरचिरादेव जायते ॥ २६ ॥**

**अष्टकोणे तु सुभगे समीहितफलं भवेत् ।**

खातनाभिभुजकोटिमेखलायोन्यादिभिः सलक्षणैर्युतं कुण्डमित्युच्यते । तच्चाष्टविधम् । योनिकुण्डादिभेदात् । भगाकारमश्वत्थपत्राकारं योनिकुण्डं त्रिकोणमिति तयोर्भेदः । अष्टपत्रकपदे ककारः कोणनामैकदेशः । तेनाष्टपत्रमष्टकोणं चेति कुण्डद्वयपरम् । उत्तरत्र द्वयोः पार्थक्येन फलविधिदर्शनात् । ग्रन्थान्तरे तु पञ्चषट्सप्तास्राणि कुण्डान्यप्युपलभ्यन्ते । 'त्रिकोणे मेधावी भवति' इति **श्रुति**मनुसृत्याऽऽह–वाग्मीति । आकृष्टिराकर्षणम् । **श्रुतौ** तु 'भगाङ्कं कुण्डं कृत्वाऽग्निमाधाय हुत्वा वशीकरोति' इत्युक्तम् । तेन भगे चाऽऽकृष्टिरिति **स्मृतिः श्रुत्य**न्तरमूलिकाऽवसेया । 'वर्तुले हुत्वा श्रियमतुलां प्राप्नोति' इति **श्रुतिं** व्याचष्टे–वर्तुले त्विति । अर्धचन्द्रे त्रयं वाग्मित्वमाकर्षणं लक्ष्मीश्च । पद्माभं चतुष्पत्रमष्टपत्रं चेति द्विविधं ग्रन्थान्तरे । एतन्निर्माणप्रकारस्तेषामाहुतिसंख्याभेदेन परिमाणभेदः खातनाभ्यादिलक्षणानि च **ज्ञानार्णवे शारदातिलका**दौ च द्रष्टव्यानि ॥ २३-२६$\frac{१}{२}$ ॥

इदानीं पुरश्चरणाङ्गहोममाश्रित्यैव गुणकामानाह–

**मल्लिकामालतीजातिपुष्पैराज्यमधुप्लुतैः ॥ २७ ॥**
**हुतैर्भवति वागीशो मूकोऽपि परमेश्वरि ।**

अत्र 'पुष्पाणि हुत्वा विजयीभवति' इति **श्रुतौ** पुष्पपदं मल्लिकादित्रयपरम् । विजयपदं परवादिजयपरमित्यर्थः । मल्लिकादिकुसुमत्रयस्य द्वन्द्वावगतं साहित्यमुपादेयविशेषत्वाद्विवक्षितम् । ततश्चैकैको होमस्त्रित्रिपुष्पकरणकः । होमसंख्या तु पुरश्चरणजपदशांशरूपैव । निखिलकाम्यद्रव्यविधानान्ते **'यथाशक्ति जपं कृत्वा तद्दशांशेन होमयेत्'** इति **ज्ञानार्णव**वचनात् । तेन नित्यद्रव्यस्य किंशुककौसुम्भान्यतरस्य बाधः । गोदोहनेनेव चमसस्य काम्यं नित्यस्य बाधकमितिन्यायात् । यत्तु **'नित्यहोमं पुरा कृत्वा काम्यहोमं समाचरेत्'** इति **अर्णव**वचनं तत्तु नैवेद्यान्तर्गतहोमोत्तरकालविधानपरं न पुनर्नित्यद्रव्यकरणकहोमसमुच्चायकम् । आज्यमधुप्लुतैरिति तु क्षीरशर्करयोर्बाधनाय । एवं सति यावदपेक्षितस्य काम्यद्रव्यस्य यद्यलाभस्तदा काम्ये प्रतिनिधेर्यथाशक्त्युपबन्धस्य च षाष्ठन्यायविरुद्धत्वादप्राप्तौ वाचनिकोऽपवादः । तथा च काम्यहोमप्रकरणान्ते **ज्ञानार्णव**वचनम्–

**'नानाद्रव्यैः पृथग्भूतैर्मिश्रितैर्वा वरानने ।**
**यथाशक्त्या तु मिलितैर्होमं कुर्याद्विचक्षणः ॥'**

इति । एवं च **'मल्लिकामालतीभिश्च त्रिमध्वक्तैर्वचःपतिः'** इति **संहितायां** द्रव्यद्वयस्यैव ग्रहणमलाभाभिप्रायेणेति ज्ञेयम् । एवमुत्तरत्राप्युन्नेयम् ॥ २७-२७$\frac{१}{२}$ ॥

**करवीरजपापुष्पाण्याज्ययुक्तानि पार्वति ॥ २८ ॥**
**हुत्वाऽऽकर्षयते मन्त्री स्वर्भूपातालयोषितः ।**
**चन्द्रं कस्तूरिकामिश्रं हुत्वा कुङ्कुममीश्वरि ॥ २९ ॥**
**ततः कन्दर्पसौभाग्योल्लाससामर्थ्यवान् भवेत् ।**

अत्रापि जपाकरवीरयोरुक्तन्यायेन समुच्चित्य करणत्वम् । द्वन्द्वसमासबलात् । **ज्ञानार्णवे**–**'जपापुष्पैराज्ययुक्तैः करवीरैस्तथाविधैः'** इत्यत्र द्वन्द्वाभावेऽपि प्रकृततन्त्रवचनेनोपसंहारात् साहित्यविवक्षा । अत्र ज्ञापकं **'क्षीरं मधु च दध्याज्यं पृथग्घुत्वा वरानने'** इति वचने पृथक्पदे । तत्रापि द्वन्द्वाभावेनैव पार्थक्ये सिद्धे पुनः पृथगित्युक्तेः कण्ठरवेण पार्थक्यानुक्तौ मिश्रणानुमितिज्ञापनार्थत्वात् । तेन **संहितायाम्**–**'करवीरजपापुष्पैराज्याक्तैर्भुवनत्रये'** इत्युपपन्नम् । एतेन **ज्ञानार्णवी**यवचने द्वन्द्वाभावे सर्वत्राविशेषेण पृथक्साधनत्वमिति तु **शंकरानन्दनाथ**स्य भ्रम एव । **तन्त्रान्तरा**दिविरोधात् । चन्द्रं कर्पूरम्, कुङ्कुमं केसरम् । एतदुभयमेव काम्यद्रव्यम् । कस्तूरिका तु संस्कारिका । कन्दर्पस्य यानि सौभाग्योल्लाससामर्थ्यानि तद्वानिति विग्रहः । उक्तं च **ज्ञानार्णवे**–

**'कर्पूरं कुङ्कुमं देवि मिश्रं मृगमदेन हि ।**
**हवनान्मदनो देवि मन्त्रिणा विजितो भवेत् ॥**
**सौभाग्येन विलासेन सामर्थ्येनाऽपि सुव्रते ।'**

इति ॥ २८-२९$\frac{1}{2}$ ॥

**चम्पकं पाटलादीनि हुत्वा वै श्रियमाप्नुयात् ॥ ३० ॥**

पाटलादीत्यादिपदेन **संहितो**क्तानां चाम्पेयकुसुमानां पाटलादिफलानां च परिग्रहः । चाम्पेयस्य चम्पकाद्भिन्नत्वात् । **ज्ञानार्णवे** तु जगतीस्तम्भनमपि फलमुक्तम् । **सुन्दरीमहोदये** तु 'चम्पकैः श्रीः पाटलैः स्तम्भः' इति व्याख्यातं तदेतत्तन्त्रविरोधादनादेयम् ॥ ३० ॥

**श्रीखण्डमगुरुं चापि कर्पूरं पुरसंयुतम् ।**
**हुत्वाऽमरपुरन्ध्रीणां देवि क्षोभकरो भवेत् ॥ ३१ ॥**

पुरो गुग्गुलुः । स च संस्कारः श्रीखण्डादित्रयस्य । **ज्ञानार्णवे** तु तस्य पार्थक्येन द्रव्यत्वमुक्तम् । एतेषामपि पार्थक्येन वा मिलितानां वा साधनत्वम् । **'नानाद्रव्यैः'** इत्युक्तवचनात् । एकफलार्थत्वेनानेकद्रव्याणामेकेन विधिना विधानस्थले सर्वत्र तस्य प्रवृत्तेः । द्वन्द्वावगतसाहित्यापवादकमात्रं तदिति **सुन्दरीमहोदयकारा**शयस्तु **तन्त्रान्तरा**नवलोकनात् स्वकीयतन्त्रस्थपृथक्पदस्वारस्यादर्शनाच्चेत्युक्तम् ॥ ३१ ॥

**दासोऽपि लभते सद्यो लक्षाम्भोरुहहोमतः ।**
**दुर्भगः सुभगो भूयाल्लक्षकह्लारहोमतः ॥ ३२ ॥**

अम्भोरुहं कमलं सकण्टकनालम् । कह्लारं निष्कण्टकनालमिति भेदः । अनया लक्षसंख्यया दशांशसंख्या न्यूनाऽधिका वा बाध्यते ॥ ३२ ॥

**हुत्वा पलं त्रिमध्वक्तं कृत्वा स्मृत्वा महेश्वरीम् ।**
**खेचरो जायते देवि गत्वा रात्रौ चतुष्पथे ॥ ३३ ॥**

रात्रौ चतुष्पथे गत्वा पलं मांसं **तन्त्रान्तर**वशाच्छागसम्बन्धि त्रिमध्वक्तं कृत्वा मन्त्रेण महेश्वरीं स्मृत्वा हुत्वा खेचरो जायत इत्यन्वयः ॥ ३३ ॥

**तथा दधिमधुक्षीरमिश्राल्लाँजान् महेश्वरि ।**
**हुत्वा न बाध्यते रोगैः कालमृत्युयमादिभिः ॥ ३४ ॥**

अत्र लाजा होमकरणद्रव्यम् । दध्यादित्रयं द्रव्यसंस्कारः । तेनाऽऽज्यस्य वैकल्पिकशर्करायाश्च बाधः । **ज्ञानार्णवे** तु–

**'होमो दधिमधुक्षीरलाजाभिर्वीरवन्दिते ।**
**रोगहन्ता कालहन्ता मृत्युहन्ता न संशयः ॥'**

इत्युक्तत्वाच्चतुर्णामपि द्रव्यत्वमेवेत्युक्तं **सुन्दरीमहोदये** । वस्तुतस्तत्रापि दधिमधुक्षीरैर्लाजा इति तृतीयातत्पुरुष एव न चतुष्पदो द्वन्द्वः । भक्ष्येण मिश्रीकरणमिति सूत्रेण समासः । प्रकृततन्त्राविरोधाय तथैव व्याख्यातुं युक्तत्वात् । एतेन मधुसर्पिर्दधिक्षीरलाजैर्होमादरोगतेति **दक्षिणामूर्तिसंहिता**यामपि समासो व्याख्यातः । एतत्पक्षे तु न घृतबाध इत्येव विशेषः । यमादिभिरित्यादिपदेन परकृत्यादिग्रहणम् । व्याधिग्रहणमिति **प्राचां** व्याख्याने रोगव्याध्योर्भेदश्चिन्त्यः । कालमृत्युयमास्तु देवताविशेषरूपत्वाद्भिन्ना एव ॥ ३४ ॥

एवं मुमुक्षुजनाधिकारके ग्रन्थे काम्यकर्मविस्तरस्यानुचितत्वं मन्यमानः **तन्त्रान्तरे**षूक्तानितोऽप्यनवधिकान् प्रयोगान् संक्षिप्याऽऽह–

**समस्तमन्त्रकल्पोक्तैर्ध्यानहोमजपादिभिः ।**
**प्रयोगाः कथिता देवि सिध्यन्त्येव न संशयः ॥ ३५ ॥**

समस्तानां सप्तकोट्यादिसंख्यानां मन्त्राणां ये ये कल्पास्तन्त्राणि तेषूक्ता ये ध्यानैकसाध्या होमैकसाध्या जपैकसाध्या आदिपदादर्चनादिसाध्याश्च काम्यप्रयोगास्ते सर्वेऽप्यनेन सिध्यन्तीत्यत्र कियत्प्रातिस्विकं वक्तव्यमत्र च न संशयः कार्य इत्यर्थः ॥ ३५ ॥

अन्यमन्त्रकरणकाः प्रयोगा अनया विद्यया कथं सिध्यन्तीत्याशङ्क्याऽऽह–

**तत्तन्मन्त्राक्षरस्थाने विद्यामेतां तु विन्यसेत् ।**
**एतस्यां साधितायां तु सिद्धा स्यान्मातृका यतः ॥ ३६ ॥**

**तन्त्रान्तरो**क्तेष्वन्यमन्त्रकरणकप्रयोगेषु यत्र मन्त्रान्तरस्य विनियोगस्तत्र सर्वत्रेमामेव पञ्चदशीं विद्यां विन्यसेत् । तं मन्त्रं निष्कास्येमं मन्त्रं तत्स्थाने प्रयुञ्जीत । अथवा मन्त्रान्तरैरेव ते प्रयोगा अनुष्ठीयन्ताम् । न तन्निष्कासनेनायं मन्त्रस्तत्स्थाने निधीयताम् । न च मन्त्रान्तराणां पुरश्चर्याभावेन कथं तदीयकाम्यप्रयोगेष्वेतदुपासकस्याधिकार इति वाच्यम् । सर्वेषां मन्त्राणां मातृकासरस्वतीप्रकृतिकत्वेन प्रकृतिभूतनिखिलाक्षरसिद्धौ विकृतिसिद्धेरावश्यकत्वात् । श्रीविद्यायाश्च मातृकया सहाभेदेनैतत्सिद्धौ तस्या अपि सिद्धत्वादित्याह–एतस्यामिति । ततश्चैतत्सिद्ध्यैव सर्वमन्त्राणां सिद्धत्वात्सर्वेऽपि प्रयोगा विद्योपासकानां फलदा एवेति विशिष्य तत्तत्कथनं व्यर्थमेवेति भावः ॥ ३६ ॥

यद्यनया विद्ययैव ते प्रयोगाः साधनीया इत्याग्रहस्तदा मन्त्रान्तराणां स्थानेष्वेषा विद्या न केवला निधेयाऽपि तु मातृकापुटितैव प्रयोज्येत्याह–

**गुरूपदिष्टमार्गेण मातृकान्तरितां न्यसेत् ।**
**कर्तव्यं परमेशानि सर्वसिद्धिप्रदायकम् ॥ ३७ ॥**

मातृकाभिः सम्पुटीकरणमानुलोम्येनैव वाऽनुलोमप्रतिलोमतया वेत्येतत्स्वगुरुमुखाद्विज्ञाय तदाज्ञया सर्वं कर्तव्यं सिद्धिरवश्यं भवत्येवेत्यर्थः ॥ ३७ ॥

ननु देवताभेदेन ध्यानजपहोमानां परस्परविलक्षणानां व्यवस्थितत्वेनैकेनान्यस्य साधने सर्वसांकर्यापत्त्या व्यवस्थापकशास्त्राणामानर्थक्यापत्त्या बहु व्याकुली स्यादित्याशङ्क्य स्थूलध्यानजपहोमादिप्रवीणैः स्थूलदृग्व्यवस्थामन्तरेणैव प्रयोक्तुं युज्यते, सूक्ष्मदृशा सर्वस्यैकरूपत्वादिति समाधातुकामो गूढाभिसन्धिः सूक्ष्माणि ध्यानादीन्याह–

**न ध्यानं मुखमुद्रादिकलानां परिकल्पनम् ।**
**ध्यानं शक्तिसमावेशात् सुमहत्सामरस्यकम् ॥ ३८ ॥**

मुखादीनां वराभयमुद्रादीनां रक्तादिवर्णानां च कलानामवयवानां परिकल्पनं न ध्यानम्, न तात्त्विकमित्यविवक्षितं वाच्यम् । मनसा परिकल्पिततत्वेन कृत्रिमत्वादेवेति भावः । इदं च नहि निन्दान्यायेन वास्तवस्तुत्यर्थम् । ब्रह्मस्वरूपं यच्छुद्धचैतन्यं तदेवाऽऽणवकार्ममायीयाख्यमलत्रयरूपाविद्यकबन्धेन युक्तं जीव इत्युच्यते । तेन जीवेऽपि ब्रह्मणि विद्यमाना निखिलाः शक्तयः सन्त्येव, परं तु तास्तिरोहिताः । तिरोधानापाकरणे चोपाया आणवशाम्भवशाक्तभेदेन त्रिविधाः **शिवसूत्रे** वर्णिताः । तदन्य-

तमोपायेन स्वनिष्ठानां शक्तीनां सर्वासामुल्लासे सति ब्रह्मैव भवति । तदिदम् **'स्वशक्तिप्रचयो[ऽस्य] विश्वम् । शक्तिचक्रानुसन्धानाद्विश्वसंहारः । महाह्रदानुसन्धानान्मन्त्रवीर्यानुभवः । शिवतुल्यो जायते । भूयः स्यात्प्रोक्तमीलनम्'** इत्यादिसूत्रेषु **क्षेमराजा**दिभिः सविस्तरं निरूपितम् । तदिदमाह–ध्यानमिति । शक्तिसमावेशात् स्वशक्तिचक्रोल्लासात् । सुमहतो महतो महीयसो ब्रह्मणः सामरस्यमेकीभावः । अज्ञाते कप्रत्ययः । तदेव ध्यानमकृत्रिममित्यर्थः ॥ ३८ ॥

अथ सूक्ष्मजपमाह–

**संयतेन्द्रियसञ्चारं प्रोच्चरेन्नादमान्तरम् ।**
**एष एव जपः प्रोक्तो न च बाह्यजपो जपः ॥ ३९ ॥**

संयतो निरुद्ध इन्द्रियाणां ज्ञानकर्मेन्द्रियाणां सञ्चारः स्वस्वविषयाभिमुखी प्रवृत्तिर्यस्मिन्कर्मणि तद्यथा भवति तथाऽऽन्तरमन्तरकृत्रिमतया प्रसरन्तं नादमनाहतं प्रोच्चरेत् । एष एव जपः सर्ववर्णप्रकृतिभूतनादाभ्यासेन सर्वमन्त्राणां युगपदेव सिद्धिजनकत्वात् । बाह्यो वैखरीरूपवर्णानुपूर्वीविशेषोच्चारणरूपो जपो न जपो, नाखिलमन्त्रसिद्धिदायकः । तत्तदानुपूर्वीमात्रसिद्धिजनकत्वादिति भावः ॥ ३९ ॥

अथ सूक्ष्महोममाह–

**तावदग्नौ न होतव्यं तत्तत्तन्त्रोदितं यथा ।**
**यावदात्ममहावह्नौ मनःपूर्णाहुतिं हुनेत् ॥ ४० ॥**

संकल्पविकल्पात्मकस्य मनस एव सर्वजगत्कल्पकताया **ज्ञानवासिष्ठा**दौ सविस्तरं प्रतिपादनात् 'मन एव विश्वरूपं हविः । आत्मैव सर्वभक्षकत्वादग्निः' । अत एव **शक्तिसूत्रम्– 'चिद्वह्निरवरोहपदे छन्नोऽपि चिन्मात्रया मेयेन्धनं प्रू(प्लु)ष्यति'** इति । ततश्च यावदात्माग्नौ विश्वस्य पूर्णाहुतिर्न हुता तावत्तत्तत्तन्त्रोक्तमग्नौ होतव्यम्, यत्तद्धोतव्यं न भवति । हविषोऽप्रक्षीणत्वात् । मनस्यात्मनि हुते तु बाह्यहोमोऽपि होम एवेत्यर्थः । तदुक्तम्–

**'अन्तर्निरन्तरमनिन्धनमेधमाने**
**होमा(मोहा)न्धकारपरिपन्थिनि संविदग्नौ ।**
**कस्मिंश्चिदद्भुतमरीचिविकासभूमौ**
**विश्वं जुहोमि वसुधादिशिवावसानम् ॥'**

इति पूर्णाहुतिपदेन विश्वविषयका मनोविकल्पा वृत्तिरूपा यावन्तस्तावतां सर्वेषां विलापनमुच्यते । **'होमो विश्वविकल्पानामात्मन्यस्तमयो मतः'** इति **तन्त्रराजो**क्तेः । आन्तरहोमस्यान्योऽपि प्रकारो **ज्ञानार्णवे** द्रष्टव्यः ॥ ४० ॥

नन्वीदृशात्मोपासकानां सर्वप्रयोगसाङ्कर्यस्य युक्तत्वे त्रिपुरोपासकानां किमायात-मित्याह–

**स्वसंवित्त्रिपुरा देवी लौहित्यं तद्विमर्शनम् ।**
**पाशाङ्कुशौ तदीयौ तु रागद्वेषात्मकौ स्मृतौ ॥ ४१ ॥**
**शब्दस्पर्शादयो बाणा मनस्तस्याभवद्धनुः ।**
**विश्वप्रतीतिजनिकाः शक्तयश्च क्रमेण याः ॥ ४२ ॥**

स्वसंवित्स्वात्मैव त्रिपुरा देवी । त्रिपुटीतः पूर्वकालीनत्वाद् द्योतमानत्वाच्च । तस्य स्वात्मनो विमर्शनमितराविषयकत्वे सति तदेकविषयकमनुसन्धानम् । तच्च स्वात्मन्य-नुरागरूपमेवेति लौहित्यमुच्यते । उक्तं च **तन्त्रराजे**–

**'स्वात्मैव देवता प्रोक्ता ललिता विश्वविग्रहा ।**
**लौहित्यं तद्विमर्शः स्यादुपास्तिरिति भावना ॥'**

इति । षट्त्रिंशत्तत्त्वेषु रागात्मकं तत्त्वं पाशस्य सूक्ष्मं रूपम् । बन्धकत्वाविशेषात् । अङ्कुशस्य वासनात्मकं रूपं द्वेषः क्रोधः । द्वेष्याद्दारकत्वात् । यत्तु उत्तरपटलेऽ-ङ्कुशस्य ज्ञानरूपत्वं वक्ष्यते, तद्विरोधस्तत्रैव परिहरिष्यते । शब्दस्पर्शादय इत्यादिपदेन रूपरसगन्धाः । एते पञ्च तत्त्वात्मका विषया बाणाः पुष्पसायकात्मकाः । मुखे सुरूपत्वे सति परिणामे परुषत्वात् । तस्य स्वात्मनो धनुरिक्षुकोदण्डं तु मनस्तत्त्वम्, विषयपरमार्थस्वरूपाणामिन्द्रियाणां तत्तद्विषयेषु प्रेरकत्वात् । यथा चोक्तं **रहस्यनामसाहस्रे**–

**'रागस्वरूपपाशाढ्या क्रोधाकाराङ्कुशोज्ज्वला ।**
**मनोरूपेक्षुकोदण्डा पञ्चतन्मात्रसायका ॥'**

इति । विश्वविषयकस्फूर्तिजनिका या मनोवृत्तयस्ता एव क्रमेण चतुरस्रादि-बिन्दुचक्रान्तक्रमेण विद्यमानाः शक्तयो ज्ञेयाः । तदुक्तं **वासनापटले**–

**'अन्यास्तु शक्तयश्चक्रगामिन्यो याः समन्ततः ।**
**तास्तु विश्वविकल्पानां हेतवः समुदीरिताः ॥'**

इति । पञ्चाब्जानि सप्तार्बुदानि षट्कोटयश्च गुप्तनामिकाः शक्तयश्चक्रनवके विद्यमानत्वेन **मन्त्रवैभवपटले** प्रतिपादिताः । ता एव मनोवृत्तिरूपा इत्यर्थः ।

**'ललिताचक्रनवके प्रत्येकं शक्तयः प्रिये ।**
**चतुःषष्टिर्मताः कोट्यस्ताः सम्भूय पुरोदिताः ॥'**

इति । नत्वेता वृत्तयोऽणिमाद्यावरणशक्तय इति भ्रमितव्यम् ॥ ४१-४२ ॥

**पूर्वपश्चिमकौ द्वारौ प्राणापानात्मकौ स्मृतौ ।**
**कालो धामानि भूतानि नव चक्राण्यनुक्रमात् ॥ ४३ ॥**

चक्रोद्धारावसरे भूगृहे द्वारचतुष्टयकथनेऽपि पूजाप्रकरणेऽणिमां पश्चिमद्वार इत्यादिना पूर्वपश्चिमदिशोरेव द्वारानुवादाद्द्विद्वारकपक्षाभिप्रायेण वासनेयम् । प्राण-वायुः पूर्वद्वारमपानवायुः पश्चिमद्वारमिति । काल एको जाग्रत्स्वप्नसुषुप्त्याख्यं धामत्रयं पञ्च भूतानि चेति क्रमेण नव चक्राणि । अथवा धामानि तुर्यावस्थया सह चत्वारि । कालशब्देनाणिमादिषण्णवतिशक्तिवासनोक्ता । एकविंशतिः सहस्राणि षट्-शतानीत्येतावत्संख्याकश्वाससमष्टिरूपस्याहोरात्रात्मककालस्य सपादशतद्वयश्वासरूपाः कालखण्डाः षण्णवतिर्भवन्ति । ते क्रमेणाणिमादिशक्तिरूपा इति रहस्यं सप्तविंशे पटले **मनोरमायां** स्पष्टम् । **तन्त्रराजे** कालादिनवात्मकत्वस्य चक्राणामनुक्तावपि तद्व्याख्यातृभिः पञ्चत्रिंशे पटले **'यन्त्राणि मन्त्राः सर्वत्र'** इतिश्लोकव्याख्यावसरे चक्र नवकवासनामेतामेव कथयित्वा तत्संमत्यर्थं **नित्याषोडशिकार्णवे** प्रोक्तमिति ग्रन्थेन कालो धामानि भूतानीत्यर्धमेव लिखितम् । एवं सति यत्प्राचीनैः **[ऋजु]विमर्शिन्यादि-टीकाकारैः** सर्वैरेककण्ठ्येन मूलस्थपञ्चमपटलस्य चतुःस्त्रिंशता श्लोकैरेव समाप्तिं मन्यमानैरुत्तरत्र पठ्यमानान् दश श्लोकान् पुस्तकेषूपलभ्यमानान् संगतानपेक्षितानपि परित्यजद्भिः किमभिप्रेतमिति त एव द्रष्टव्याः । यदि पुनः सार्धत्रिंशदधिकचतुः-शतश्लोकघटिताया अस्याः पञ्चपटल्याः पूर्वचतुःशतीतिसमाख्यासमर्थनार्थमिदं साहसम् । प्रथमचक्रोद्धारान्ते सार्धत्रयाणाम्, द्वितीयचक्रोद्धाररूपाणां सप्तदशाना-मत्रत्यानां दशानां च श्लोकानां त्याग इत्याशयः स्यात् । तदाऽप्ययुक्तमेव । अति-प्राचीनैः **मनारेमाकारैः** एतत्तन्त्रीयत्वेन लिखितश्लोकाल्लिङ्गात् पुस्तकेषूपलम्भाच्च कतिपयानामप्रक्षिप्तत्वे निश्चिते सति समाख्याया एवाल्पन्यूनाधिकभावाविवक्षया गौणत्वेन निर्वोढुं युक्तत्वात् । **शारदातिलक**प्रथमश्लोके **'पञ्चाशदर्णैः'** इतिपदस्य संख्याया नैकट्यादेकपञ्चाशत्परतेति **श्रीहर्षदीक्षितै**र्व्याख्यातत्वदर्शनात् । **सूतसंहिता**स्थ-द्वात्रिंशच्छब्दस्य –

**'एकधा च द्विधा चैव तथा षोडशधा स्थिता ।**
**द्वात्रिंशद्भेदभिन्ना वा या तां वन्दे परात्पराम् ॥'**

इत्यत्रत्यस्य पञ्चत्रिंशद्व्यञ्जनपरत्वेन व्याख्यानाच्च । षडष्टचरणाद्यात्मकगाथाश्लो-कत्वस्यापि कतिपयेषु सम्भवाच्च ।प्रतिपटलं शतमेव श्लोका इतिनियमरक्षणायेदृशन्याय-स्यैव **मनोरम**ायामाश्रितत्वाच्च ।**अस्माभि**स्तु तन्निष्कर्षो निरर्थकत्वादुपेक्षितः ॥ ४३ ॥

अथ देवीपूजनवासनामाह–

**करणेन्द्रियचक्रस्थां देवीं संवित्स्वरूपिणीम् ।**
**विश्वाहंकृतिपुष्पैस्तु पूजयेत्सर्वसिद्धये ॥ ४४ ॥**

**॥ इति नित्याषोडशिकार्णवस्य पञ्चमः पटलः ॥**

करणानामान्तराणामिन्द्रियाणां ज्ञानकर्मभेदभिन्नानां चक्रं समूह एव श्लेषाच्छक्तिचक्रं तन्मध्यस्थां देवीं त्रिपुरसुन्दरीं संवित्स्वरूपिणीं निर्विषयज्ञानैकरूपां सर्वसिद्धये सर्वात्मत्वलाभाय तद्द्वारा समस्त**तन्त्रो**क्तैहिकप्रयोगसिद्ध्यर्थं पूजयेत् । पुष्पैरित्युपचारमात्रोपलक्षणम् । ते चोपचारा विश्वाहंकृतिरूपाः । विश्वस्मिन् षट्त्रिंशत्तत्त्वात्मके सर्वत्राहंभावो ब्रह्मैवाहमित्याकारिका सार्वदिकी पराहन्ताभावनेति यावत् । तदुक्तं **तन्त्रराजे**–'**उपचाराश्चलत्वेऽपि तन्मयत्वाप्रमत्तता**' इति ।

अननुसन्धानावश्यंभावसमये स्वप्नादावपि ब्रह्ममयत्वभावनाविषये प्रमादाभाव एक एव सर्वेऽप्युपचाराः किमुत जाग्रद्दशायामिति तदर्थः । अन्यदप्युक्तं तत्रैव–

**'ज्ञाता स्वात्मा भवेज्ज्ञानमर्घ्यं ज्ञेयं बहिःस्थितम् ।**
**श्रीचक्रं पूजनं तेषामेकीकरणमीरितम् ॥'**

इति ।अत्र कामाकर्षिण्यादिकतिपयनित्याकलावासनारूपकरणेन्द्रियमात्रस्यावयुत्यानुवादबलात् **तन्त्रराजे**–'**गुरुराद्या भवेच्छक्तिः**' इत्यारभ्य '**इति प्रोक्तास्तु वासनाः**' इत्यन्तैरेकविंशत्या श्लोकैरुक्तानां वासनानां ग्रहणमिति ध्वनितम् । तत्प्रकारश्च तत्रैव द्रष्टव्यो विस्तरभयान्नेह प्रपञ्च्यते**ऽस्माभिः** । एवं चतुश्चत्वारिंशता श्लोकैर्मन्त्रसाधनस्यैव प्रकारो बाह्य आन्तरश्च संक्षिप्योक्तः । इत उत्तरो ग्रन्थसन्दर्भस्तु प्रायेणाऽऽन्तरैकविषयको भविष्यतीति सर्वं शिवम् ॥ ४४ ॥

**इति श्रीभास्करोन्नीते नित्याषोडशिकाम्बुधेः ।**
**व्याख्याने सेतुबन्धाख्ये विश्रामः पञ्चमोऽभवत् ॥ ५ ॥**

●

# अथ षष्ठो विश्रामः

एवं सार्धत्रिंशदधिकचतुःशतैः श्लोकैर्बाह्यमेव यागं प्रपञ्च्यान्तर्यागं प्रपञ्चेनोपदेष्टु-कामः परशिवस्तद्विषयकं देवीप्रश्नमवतारयति–

**श्रीदेव्युवाच**

**देवदेव महादेव परिपूर्णप्रथामय ।**
**वामकेश्वरतन्त्रेऽस्मिन्नज्ञातार्थास्त्वनेकशः ॥ १ ॥**
**तांस्तानर्थानशेषेण वक्तुमर्हसि भैरव ।**

द्योतत इति देवः प्रकाशैकस्वभाव इति यावत् । तत्त्वं च जीवमात्रेष्व-विशिष्टमतस्तेष्वपि देवेत्युक्तम् । तेष्वनुस्यूततया क्रीडमान इत्यर्थः । **'एको देवः सर्व-भूतेषु गूढः'** इत्यादि**श्रुते**ः । अत एव महादेवो महाप्रकाशरूपः । **'एक एव महानात्मा देवता'** इति **निरुक्तात्** । **'आन्महत'** इत्यात्वम् । महाप्रकाशत्वादेव परिपूर्णप्रथामयः परितः सर्वविषयावच्छेदेन पूर्णा व्याप्ता प्रथा विस्तारो ज्ञप्तिस्तन्मयस्तद्रूपः, **'ब्रह्ममयं जगत्'** इत्यादावभेदेऽपि मयटः प्रयोगात् । ज्ञानैकशरीरत्वे सति सर्वविषयकत्वस्य रहस्यजातविषयकत्वव्याप्यत्वात् प्रकटार्थानामिव रहस्यार्थानामप्युपदेशे तवैवाधिकार इति त्रिभिर्विशेषणैर्ध्वन्योऽर्थ इति परिकरालङ्कारः । वामाः सुन्दरा अर्थास्त एवाज्ञाता वामकास्तेषु ईश्वरं तद्विषयज्ञापने समर्थं यत्तन्त्रं पूर्वोत्तर**चतुःशती**-द्वितयात्मकं तत्र । अज्ञाते कप्रत्ययः । अस्मिन्निति पदेनोत्तरचतुःशत्या अपि **वामकेश्व-रा**न्तर्गतत्वद्वारा पूर्वोत्तरभागयोरैकशास्त्र्यमिति ध्वनितम् । तेन प्रकटरहस्यार्थरूपा-वान्तरविषयभेदेऽपि त्रिपुरसुन्दर्युपास्तिरूपेण विषयैक्यान्न शास्त्रभेद इति भावः । अत एव कर्मकाण्डब्रह्मकाण्डार्थप्रतिपादकयोरपि पूर्वोत्तर**मीमांसयो**र्वेदार्थविषयकत्वा-विशेषादैकशास्त्र्यमिति ध्वनितम् **'एक आत्मनः शरीरे भावात्'** इत्यधिकरणे **शङ्करभगवत्पादैः** । सुन्दरा अर्था बहिर्यागान्तर्यागभेदेन द्विविधा अप्यज्ञाता एव स्थिताः । तेष्वेकविधा यद्यपि ज्ञापितास्तथाऽप्यनेकशोऽद्याप्यज्ञातार्थाः सन्तीति तुशब्देन ध्वनितम् । अनेकश इति शस्प्रत्ययेन रहस्यार्थस्य बाहुल्यमुचितमित्यप्युक्तं भवति, **'बह्वल्पार्थाच्छस्कारकात्'** इति सूत्रे **वार्तिक**कृतौचित्यार्थ एव शसो नियमितत्वात् । ये तु पूर्वपटलान्ते कतिपये रहस्यार्था उक्तास्ते त्वल्प इत्यप्यनेकश इत्यनेनैव व्यञ्जितम् । एवमधुनाऽपि ये ये तावदज्ञातार्थास्तांस्तानर्थान्निःशेषान् वक्तुं योग्योऽसि । अज्ञातार्थास्त्रिविधाः – चक्रसङ्केतमन्त्रसङ्केतपूजासङ्केतभेदात् । तेष्वेकै-कोऽपि पुनरवान्तरविषयभेदाद्वैकल्पिकपक्षबाहुल्याच्च बहुविधः । तत्र तांस्तानिति

वीप्सया त्रिविधा अर्था अपि वक्तव्या इति कथितम् । अशेषेणेति पदेनावान्तर-विषयसाकल्यमुक्तम् । तेन सर्वेऽपि साङ्केतिकार्थाः प्रत्येकं सर्वांशेन वक्तव्या इत्यर्थः । भैरवः सर्वशक्तिभरितः । तथा च **शिवसूत्रम्** : – **'उद्यमो भैरवः'** इति । **वार्तिक**मपि–

**'उद्यमोऽन्तःपरिस्पन्दः पूर्णाहंभावनामकः ।**
**स एव सर्वशक्तीनां सामरस्यादशेषतः ॥**
**विश्वतोभरितत्वेन विकल्पानां विभेदिनाम् ।**
**अलं कवलनेनापीत्यन्वर्थादिव भैरवः ॥'**

इति । यद्वा भैरवो भयङ्करः सर्वनियन्तोच्यते । **'भीषाऽस्माद्वातः पवते'** इति **श्रुतेः** । **'महद्भयं वज्रमुद्यतम्'** इत्यादि**श्रुता**वुपात्तस्य भयङ्करत्वस्य परब्रह्मलिङ्गतायाः कम्पनाधि-करणे वर्णनात् । भैरवत्वादेव विध्याद्यर्थकं वदेति लोटं विहाय वक्तुमर्हसीत्येवोक्तम् । **'ब्रूयाच्छिष्याय भक्ताय रहस्यमपि देशिकः'** इति वचनेन योग्यगुरूणां योग्यशिष्यायो-पदेशस्याऽऽवश्यकत्वाद्वदेति ध्वन्यः ॥ १-१$\frac{१}{२}$ ॥

**श्रीभैरव उवाच**

**शृणु देवि महागुह्यं योगिनीहृदयं परम् ॥ २ ॥**
**त्वत्प्रीत्या कथयाम्यद्य गोपितव्यं विशेषतः ।**

गुहायां भवं गुह्यं जीवात्मपरमात्मनोरैक्यम् । **'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे, यो वेद निहितं गुहायां परमे व्योमन्'** इत्यादि**श्रुतेः** । तत्फलकत्वादु-पासनमपि गुह्यम् । तच्च बाह्याभ्यन्तरभेदेन द्विविधमपि रहस्यमेव । तयोर्मध्येऽप्य-तीव रहस्यत्वान्महागुह्यम् । अत एव परं चतुःशतीतः परत्र कथनीयम् । बहिर्यागा-नुष्ठानपरम्परया शुद्धचित्तस्यैवात्राधिकारात् । अत एव **वेदे**ऽप्यु**पनिषद** उपासना-काण्डस्य वेदान्तसंज्ञा, तदर्थप्रतिपादकशास्त्रस्योत्तर**मीमांसे**ति च । **योगिनीहृदय**नामकं योगिन्यास्त्रिपुरसुन्दर्या हृच्चित्तं प्रत्ययते गच्छति प्राप्नोति, देवीमनोगतमिति यावत् । देव्युपदेशमन्तरेण ज्ञातुमशक्यमिति तु ध्वनिः । अतिरहस्यत्वादेवाद्यावधि न कस्यापि कथितम् । अद्यैव तु त्वत्प्रीत्या त्वयि स्नेहवशेन मदिच्छाशक्तिरूपायास्तवाऽऽज्ञाया अनतिक्रमणीयतया वा, **'एवं त्वयाऽहमाज्ञप्तो मदिच्छारूपया प्रभो'** इति तन्त्रान्ते (८/२११) वक्ष्यमाणत्वात् । अहं कथयामि त्वं शृणु विषयान्तरव्यापृतं मनो मा कृथाः । तादृशानां दुरवगाहत्वादिति ध्वनिः । अकथनीयस्याप्यस्य कथने हेत्वन्तरमाह–गोपितव्यमिति । विशेषेभ्यो गोपनीयम् । अविशेषेण सर्वेभ्यो न वक्तुमर्हं कतिपयेभ्य एव तु वक्तुं योग्यमित्यर्थः । तव सच्छिष्यत्वेन त्वय्यगोपनीयत्वात् । **'ब्रूयाच्छिष्याय भक्ताय रहस्यमपि देशिकः'** इति वचनादिति भावः । **प्राञ्च**स्तु यतो

रहस्यं कथयाम्यतस्त्वयाऽपि विशेषतो गोपनीयमिति हेतुहेतुमद्भाववैपरीत्येन व्याचक्षते ॥ २-२$\frac{१}{२}$ ॥

इदानीमेतत्तन्त्रं योग्येभ्यः प्रचारयितुमाज्ञापयति–

**कर्णात्कर्णोपदेशेन सम्प्राप्तमवनीतलम् ॥ ३ ॥**

कर्णाकर्णिकयैवेदं तन्त्रमवनीतलं प्रति सम्यक् प्राप्तं कुर्विति शेषः । संप्राप्तं यथा स्यात्तथा गोपितव्यं त्वयेति पूर्वेणान्वयो वा । अवनी च तलं च तयोः समाहारोऽवनीतलम् । अवनी मध्यभुवनम् । तलं तदधोभुवनम् । ऊर्ध्वभुवने स्थित्वैव त्वियमुक्तिः । अत एव **स्वच्छन्दतन्त्रे**–'**प्रश्नोत्तरपरैर्वाक्यैस्तन्त्रं समवतारयत्**' इति प्रयोगः । ऊर्ध्वदेशापादानकाधोदेशप्राप्तेरेवावतारपदार्थत्वात् । तेन भुवनत्रयेऽप्ये- तस्य प्रचारं कुर्वित्यर्थः । कर्णादिति ल्यपो लोपे पञ्चमी । त्वत्कर्णं प्राप्य त्वन्मुखान्निःसृतं त्वच्छिष्यकर्णं प्राप्नोतु । एवमुत्तरत्र । तेन पुस्तकाद्युपायान्तरेण ग्रहणनिषेधो ध्वनितः । कुर्वित्यस्याध्याहारादिमन्तरेणैव पूर्वमेव संप्राप्तमस्तीति व्याख्यानं त्वयेतिपदस्वारसिकार्थविरुद्धम् ॥ ३ ॥

ते के के विशेषजना येभ्यो न देयम्, येभ्यश्च देयम्, तानसाधारणैर्धर्मै- र्विशिनष्टि–

**न देयं परशिष्येभ्यो नास्तिकानां न चेश्वरि ।**
**न शुश्रूषालसानां च नैवानर्थप्रदायिनाम् ॥ ४ ॥**

अत्र देयमित्यस्योत्तरत्र त्रिष्वपि चरणेषु प्रत्येकमन्वयः, नञश्चतुर्वारं प्रयोगदर्शनात् । तेनैते चत्वारो निषेधाः । ततश्च परशिष्यत्वनास्तिकत्वाशुश्रूषुत्वा- नर्थप्रदातृत्वाख्याश्चत्वारो धर्माः प्रत्येकमनुपदेश्यतावच्छेदका इति सिध्यति । अन्यथा धर्मचतुष्क एकद्व्यादिन्यूनतायामपि तस्योपदेशग्रहणेऽधिकारः स्यात् । एतेन–

**विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।**
**असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम्' ॥**

इति **यास्क**लिखित**श्रुतौ** नकारस्य प्रत्येकमन्वयः कार्य इत्युपबृंहितं भवति. । विद्या श्रीविद्या, ब्राह्मणं ब्रह्माधीते ब्रह्म वेद वा ब्राह्मणस्तम्, प्रत्याजगाम आगत्योवाच । ब्रह्मशब्दात्तदधीते तद्वेदेत्यण् ।

**'न शिल्पादिज्ञानयुक्ते विद्वच्छब्दः प्रयुज्यते ।**
**मोक्षैकहेतुविद्या च श्रीविद्या नात्र संशयः ॥'**

इति **ब्रह्माण्डपुराणाद्** विद्यापदेन प्रकृतविद्यैव मुख्यतयोच्यते । एतत्प्रतिपादकत्वाद् **वेदा**दिविद्या गौण्य उच्यन्ते । सा विद्या किमुवाचेत्यत आह–गोपेति । मां गोपाय त्वं

तव निधिरस्म्यहम् । मद्गोपनमात्रेण तुभ्यं सकलपुरुषार्थान् दास्यामीत्यर्थः । गोपनं नाम कीदृशं तदाह–असूयेति । शास्त्रगुप्तश्च योऽभ्यसूयति । **'अस्ति नास्ति दिष्टं मतिः'** इति ठक् । अनृजुः शुश्रूषायां वक्रः । अयतः असंयतारिषड्वर्गः, क्रोधलोभाद्यधीन इति यावत् । ईदृशेभ्यो मां न ब्रूयाः । तान्प्रत्यनुक्तौ किं स्यादत आह–वीर्येति । तथा चेद्वीर्यवती यथोक्तफलदानसमर्था स्याम्, तदभावे न स्यामित्यर्थः । उपबृंहितं चेदम् **आत्मपुराणे** –

**'ब्रह्मविद्याऽतिसंखिन्ना ब्रह्मिष्ठं ब्राह्मणं ययौ ।**
**वाराङ्गनासमां मा हि मा कृथाः सर्वसेविताम् ॥**
**गोपाय मां सहैव त्वं कुलजामिव योषितम् ।**
**शेवधिस्त्वक्षयस्तेऽहमिह लोके परत्र च ॥'**

इत्यारभ्य–

**'निन्दा गुणवतां तद्वत्सर्वदाऽऽर्जवशून्यता ।**
**इन्द्रियाधीनता नित्यं स्त्रीसङ्गश्चाविनीतता ॥**
**कर्मणा मनसा वाचा गुरौ भक्तिविवर्जनम् ।**
**एवमाद्या येषु दोषास्तेभ्यो वर्जय मां सदा ॥**
**एवं हि कुर्वतो नित्यं कामधेनुरिवास्मि ते ।**
**वन्ध्याऽन्यथा भविष्यामि लतेव फलवर्जिता ॥'**

इत्यन्तेन । एवं च नास्तिकादिसम्बन्धमात्रेण गुरोरपि विद्यानैष्फल्ये नास्तिकादीनां तु विद्याप्राप्तावपि सुतरां फलाभाव उक्तः । ततश्च नास्तिकादेरुपदेशे फलाभाव एव दूषकताबीजमिति यावत् । अत एव तेषामनधिकारव्यवहारः संगच्छते, फलभोक्तृत्व-स्यैवाधिकारपदवाच्यत्वात् । **कादिमते**ऽपि सच्छिष्यलक्षणान्ते– **'एवंविधो भवेच्छिष्य इतरो दुःखकृद्गुरोः'** इत्युक्त्वा गुरुदुःखपदत्वं दूषकताबीजमुक्तम् । **कुलार्णवे**ऽपि– **'दुष्टान्ववायजं दुष्टम्'** इत्यादिना त्याज्यशिष्यानुक्त्वोपसंहृतम्–

**'तस्मादेवंविधं शिष्यं न गृह्णीयात् कथञ्चन ।**
**यदि गृह्णाति मोहेन तत्पापैर्व्याप्यते गुरुः ॥'**

इति । तेन शिष्यपापप्राप्तिर्दूषकताबीजमुक्तं भवति । इत्थं च सति यः परशिष्योऽपि सन्नन्यस्मिन् सद्गुरावपि भक्तियुक्तः शुश्रूषया वत्सराधिकमुषित आस्तिकत्वादि-गुणविशिष्टश्च, तस्य परित्यागे किं दूषकताबीजं कथं वा तस्यानधिकारः । न चोक्त**श्रुतिस्मृति**बलादेवेति वाच्यम्, अनसूयत्वाच्छुश्रूषुत्वादपापत्वाच्च । किं च–

**'मधुलुब्धो यथा भृङ्गः पुष्पात्पुष्पान्तरं व्रजेत् ।**
**ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं श्रयेत् ॥'**

इति वचनविरोधः, परशिष्यत्वस्यैवानधिकारितावच्छेदकत्वे गुर्वन्तराश्रयणविध्यसम्भवात् । न च भवन्मतेऽपि–'**लब्ध्वा कुलगुरुं सम्यङ् न गुर्वन्तरमाश्रयेत्**' इति वचनविरोध इति वाच्यम्, तस्य कौलधर्मलाभे वैष्णवादिधर्मोपदेष्टारं नाऽऽश्रयेदित्येवंपरत्वेनाप्युपपत्तेः । अथवा कौलधर्माणामतिगहनत्वेन तेषां सर्वेषामेकस्मादेव गुरोर्लाभसम्भवेऽपि ततः किञ्चिदन्यस्मात् किञ्चिदेवं बहुगुरूपास्तिर्न कार्येत्यर्थः । एकस्माद् गुरोस्तेषां सर्वांशेनालाभे तु गुर्वन्तरादपि ज्ञानं सम्पाद्यमेव 'मधुलुब्धः' इति वचनात् । अत एव **शक्तिरहस्ये**–'कौलिके गुरवोऽनन्ताः' इति । 'एकगुरूपास्तिः' इति **कल्पसूत्र**मपि ज्ञानपूर्णगुरुलाभपरमेव । न च **वैष्णवादिमता**न्तरप्रवीणगुरोः शिष्यः परशिष्यपदेनोच्यत इति वाच्यम्, देवतान्तरभक्तेः प्रत्युत सुन्दरीभक्त्याधायकत्वेन सुन्दरीभक्त्युदये तस्यापि ग्रहीतुं युक्तत्वात् । वस्तुतस्तु सुन्दरीदीक्षावतो बहिर्यागप्रवीणस्यान्तर्यागाधिकारविचारे कथं देवतान्तरभक्तः परशिष्यपदेन ग्रहीतुं युक्तः । न च **कुलार्णवे**–'**परशिष्यं च पाखण्डं धूर्तं पण्डितमानिनम्**' इत्यादिना परित्यागं विधाय '**तस्मिन्गुरौ सशिष्ये तु देवताशाप आपतेत्**' इति विपक्षे दण्डविधानादेव तत्त्याग इति वाच्यम्, दूषकताबीजाभावे शापस्यापि वक्तुमयुक्तत्वात्, 'मधुलुब्धः' इति वचनस्यानवकाशापत्तेरुक्तत्वाच्चेति चेत्; मैवम्, इह परशिष्यपदेन परस्मिन्नेव गुरौ यस्य दृढतरा भक्तिर्न स्वस्मिंस्तस्य ग्रहणात् । न च तस्य गुरुभक्त्यभावादेवानधिकारः, पूर्वगुरौ भक्तिसत्त्वेन गुरुभक्तिसामान्याभावाभावात् । अथवा परस्य गुरोरभिमानदार्ढ्याद् गुर्वन्तराश्रयणे यदि पूर्वगुरोश्चित्तक्षोभः स्यात्तादृशशिष्यस्येह परशिष्यपदेन ग्रहणम् । '**हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन**' इति वचनेन गुरुकोपात्मकप्रतिबन्धे सति प्रकृतज्ञानेनापि फलानुदयस्य सुवचत्वात् । ततश्च पूर्वगुरोर्यद्यनुमतिस्तदा तादृशपरशिष्यायापि सगुणाय वक्तव्यमेव । अत एव **कुलार्णवे**–

**'मन्त्रागमाद्यमन्यत्र श्रुतं नाथे निवेदयेत् ।**
**गुर्वाज्ञया तद्गृह्णीयात्तदनिष्टं विवर्जयेत् ॥'**

इति वचनं संगच्छते । न च यदा पूर्वगुरुरल्पज्ञः परगुरुसेवां च शिष्यस्य सर्वथा नानुमन्यते तादृशशिष्यस्य का गतिरिति वाच्यम्, तदा गुरुद्वयज्ञानतारतम्यनिश्चये सति पूर्वगुरोरुत्पथप्रतिपन्नत्वे तत्परित्यागस्यैवारिमन्त्रत्यागस्येव कर्तुं युक्तत्वात्,

**'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।**
**उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥'**

इति वचनात् । तारतम्यनिश्चये स्वयमसमर्थश्चेदिह जन्मनि मम ज्ञानादृष्टं नास्तीति निश्चित्य पूर्वगुरुमेवोपासीनस्तिष्ठेत् । तदयं मथितोऽर्थः–यदि परशिष्यः सकल-गुणसम्पन्नः स्वमुपास्ते तदा तद्गुरावजीवति निःशङ्कं तं परिगृह्णीयात्, जीवति तु तस्मिन्नुत्पथप्रतिपन्ने सति तदनुमतिं विनाऽपि परिगृह्णीयात् । उत्पथमप्रतिपन्ने तु

तदनुमत्यैव गृह्णीयादिति । इयं च व्यवस्था मूल एव 'परशिष्येभ्यः' इति सम्प्रदानचतुर्थ्याऽन्यत्र षष्ठ्या च सूचिता । परस्वत्वोत्पादन एव चतुर्थी, तदभावे षष्ठीति ब्राह्मणाय वासो ददाति रजकस्य वासो ददातीति प्रयोगयोः सिद्धत्वात् , स्वत्वस्य स्वामित्वनिरूपितत्वेन स्वामित्वस्य तज्जन्यफलभोक्तृत्वरूपत्वेन च सम्प्रदानत्व तदभावयोरधिकारानधिकारस्वरूप एव पर्यवसानात् । ततश्च परशिष्याणां त्वदीय-मानज्ञानजन्यफलभोक्तृत्वमस्ति, अन्येषां नास्तीति विभक्तिद्वयेन सूचिते सति न देयमितिनिषेधोऽत्र गुर्वनुमतिरहितपरशिष्यविशेषपरोऽन्यत्र सर्वपर इति सिध्यति ।

**प्राञ्चस्तु**–ये विद्यान्तरेषु पारम्पर्येणाधिगताशेषरहस्यपरमार्थाः प्राप्तपूर्णाभिषे-काश्च ते परशिष्या इह विवक्षिता इत्याहुः । तत्र विद्यान्तरपदेन कामराज-लोपामुद्रादिविद्याविभेदा विवक्षिता उत बगलाश्यामलादिविद्याः । नाऽऽद्यः, तासाम-भेदस्य विद्योद्धारावसर एवोपपादितत्वेन तदीयपारमार्थिकरहस्यस्याप्यभेदेन तदधिगमे हातव्यार्थाभावेन गुर्वन्तरापेक्षाया एवाभावात् । नान्त्यः, बगलादिशक्त्युपास्तेः सुन्दर्युपास्तिपूर्वभूमिकारूपत्वेन तदुपास्त्या सुन्दरीभक्त्युदये सति तस्यापि ग्राह्यत्वात् । अस्यामेव विद्यायां पूर्णाभिषेकसदसद्भावाभ्यां व्यवस्था तु मानाभावपराहता । यत्तु **'पूर्णाभिषेककर्ता यो गुरुस्तस्यैव पादुका'** इति वचनं तत्पादुकामन्त्रान्ते गुरुनामयोजनविधौ बहुगुरुकस्य विकल्पप्राप्तौ नियामकं सन्न भवदभिमतव्यवस्थापना-यालम् ।

यदपि नास्तिकानां न देयमित्यर्थे **गीतावचनं** लिख्यते– **'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्'** इति, तदपि चिन्त्यम् । नास्तिककर्मठयोरत्यन्तं भेदात् । गुरुशुश्रूषा श्रोतुमिच्छा निरूढलक्षणया गुरुसेवोच्यते,तस्याः प्रायेण गुर्वाज्ञावाक्यशुश्रूषापूर्वकत्वात् । तद्विषयेऽलसानां विमुखानाम् । अनर्थोऽनिष्टं तत्प्रदायिनां रिपूणाम् । अत एवेन्द्रेण प्रतर्दनाय ब्रह्मविद्योपदेशे सन्देहः कृतः । **'यद्यप्यस्मिन् गुणाः सन्ति तथाऽप्येष रिपुर्हि नः'** इत्युक्तम् **आत्मपुराणे** । यद्वा, अर्थो धनम् । तत्प्रदायिभिन्ना अनर्थप्रदायिन-स्तेषाम्, **'गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा'** इति वचनात् ॥ ४ ॥

**परीक्षिताय दातव्यं वत्सरोर्ध्वोषिताय च ।**

**एतज्ज्ञात्वा वरारोहे सद्यः खेचरतां व्रजेत् ॥ ५ ॥**

वत्सरोर्ध्वेति परीक्षायोग्यकालोपलक्षणम्, **'शीलं संवसता ज्ञेयं तच्च कालेन भूयसा'** इति वचनान्तरानुगुण्यात् । तेन **तन्त्रान्तरे** वत्सरत्रयपरीक्षोक्तिर्व्याख्याता । एतद् वक्ष्यमाणं सङ्केतत्रयम् । खे परमे व्योम्नि चरतीति खेचरी देवी तस्या भावः

खेचरता, 'त्वतलोर्गुणवचनस्य' इति पुंवद्भावः । तथा च **शिवसूत्रम्**–**'विद्यासमुत्थाने स्वाभाविके खेचरीमुद्रा शिवावस्था'** इति । इदं च व्याख्यातं वार्तिककारैः –

> **'विद्यायाः प्राक्समाख्यातरूपायाः शङ्करेच्छया ।**
> **स्वाभाविके समुत्थाने समुल्लासे स्वभावजे ॥**
> **अवस्था या शिवस्यान्तरवस्थातुरभेदिनी ।**
> **स्फुरत्तामेव सम्पूर्णस्वानन्दोच्छलनात्मिकाम् ॥**
> **मुदं रातीत्यतो मुद्रा खेचरी चिन्नभश्चरी ।**
> **व्यज्यते साधकस्यास्या विश्वोत्तीर्णस्वरूपिणः ॥'**

इति । **'यो वेद निहितं गुहायां परमे व्योमन्'** इति **श्रुति**श्च । ततश्च य एव तन्महागुह्यं वेद स महागुह्यमेव भवतीत्यर्थः **'ब्रह्म वेद ब्रह्मैव भवति'** इति **श्रुतेः** ॥ ५ ॥

शास्त्रोत्तरार्धमारभते–

> **चक्रसङ्केतको मन्त्रपूजासङ्केतकौ तथा ।**
> **त्रिविधस्त्रिपुरादेव्याः सङ्केतः परमेश्वरि ॥ ६ ॥**
> **यावदेतन्न जानाति सङ्केतत्रयमुत्तमम् ।**
> **न तावत्त्रिपुराचक्रे परमाज्ञाधरो भवेत् ॥ ७ ॥**

चक्रं शक्तिसमूहस्तस्य सङ्केतो रहस्यं रूपम् । मन्त्रपूजयोः सङ्केतकौ मन्त्रसङ्केतकः पूजासङ्केतकश्चेत्यर्थः । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते । त्रिषु कप्रत्यय-स्त्वज्ञातार्थकः । सङ्केतत्रयज्ञाने ब्रह्म भवतीत्यन्वयमुक्त्वा व्यतिरेकमाह–यावदिति । त्रिपुराचक्रे त्रैपुरशक्तिसमूहमध्ये । परमा च सा आज्ञा च परमाज्ञा वेदान्तर्गत-विधिनिषेधात्मकलिङादिवाच्या, यां शब्दभावनेति **मीमांसका** मन्यन्ते । सा हि त्रिपुर-सुन्दर्याज्ञारूपैवेति समर्थितं **मीमांसावादकौतूहलेऽस्माभिः** । उक्तं च **कूर्मपुराणे** हिमवन्तं प्रति भगवत्या–

> **'ममैवाऽऽज्ञा परा शक्तिर्वेदसंज्ञा पुरातनी ।**
> **ऋग्यजुःसामरूपेण सर्गादौ सम्प्रवर्तते ॥'**

इति । तस्या धर आश्रयो देव्येव । एतदज्ञाने देवीस्वरूपो न भवेदित्यर्थः । 'निजसंविद्देवताचक्रेश्वरत्वप्राप्तिः' इति **शक्तिसूत्रे** । **'शुद्धविद्योदयाच्चक्रेशत्वसिद्धिः'** इति **शिवसूत्रे**ऽप्ययमेवार्थः प्रतिपादितः ॥ ६-७ ॥

तत्राऽऽदौ चक्रवासनां वक्तुं पूर्ववर्णितं चक्रमनूद्य शिष्यावधानाय प्रतिजानीते–

**तच्छक्तिपञ्चकं सृष्ट्या लयेनाग्निचतुष्टयम् ।**
**पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसम्भवः ॥ ८ ॥**
**एतच्चक्रावतारं तु कथयामि तवानघे ।**

शक्तित्रिकोणैः पञ्चभिर्वह्नित्रिकोणैश्चतुर्भिश्च मिलितैर्मध्यचक्रमात्रमुत्पन्नं तासां नवयोनीनां संवेष्टनरूपात् संयोगादर्थात् पद्मद्वयभूगृहैः । तेन पूर्णचक्रस्य नवावयवकस्य यस्य सम्भवस्तदेतच्चक्रावतारं रेखारूपचक्रस्य मूलभूतं तात्त्विकं रूपं तव कथयामीत्यर्थः । शक्तिसृष्टिलयवह्निशब्दानामर्थाः पूर्वमेवोक्ताः । **प्राञ्चस्तु**–– शक्तिवह्नीनामेव परस्परसंश्लेषपरत्वेन संयोगपदं व्याचक्षते । तन्मते मध्यचक्रमात्रस्य सम्भव इत्येव पर्यवसानादुत्तरत्र बाह्यचक्रस्यापि वासनानां वर्णनीयतया सन्दर्भ-विरोधापत्तिः । न च तथाऽपि बिन्दुवासनानामपि वर्णयिष्यमाणत्वात् सम्भ-वस्येहानुक्तौ सन्दर्भविरोधतादवस्थ्यमिति वाच्यम्, बिन्दोः कामेश्वराभिन्नस्य निर्गुण-परशिवरूपतायाः पूर्वमुक्तत्वेन तस्योत्पत्त्यभावात् । चक्रोद्धारदशायामेव कर्काटकेन वृत्तलेखनदशायामर्थतो बिन्दुसिद्ध्यभिप्रायेण तदनुक्तेर्वा ॥ ८-८ $\frac{१}{२}$ ॥

इदानीं बिन्द्वादिभूगृहान्तचक्रसमष्टिसम्भवं सामान्येनाऽऽह–

**यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी ॥ ९ ॥**
**स्फुरत्तामात्मनः पश्येत्तदा चक्रस्य सम्भवः ॥**

पूर्वतन्त्रे हि सृष्टिक्रमः कथितः । तत्र **'त्रिपुरा परमा शक्तिराद्या ज्ञानादितः प्रिये'** (४/४) इत्यनेन ज्ञानेच्छाक्रियातः पूर्वं सृष्टिप्रागभावस्य विनश्यदवस्थतारूपा दशाऽपि काचित्त्रिपुरानाम्नी परा शक्तिः कथितैव, तां स्मारयितुं 'यदा सा परमा शक्तिः' इति सिद्धवत्कृत्येह निर्देशः कृतः । सा देवी स्वेच्छया स्वनिष्ठां स्फुरत्तां यदा पश्यतिं तदा चक्रस्य विश्वाभिन्नस्य त्रिकोणादिचक्रस्य सम्भव उत्पत्तिर्भवतीत्यर्थः ।

अयं भावः–मन्त्रार्थवादेतिहासपुराणादिप्रामाण्याज्जगतः सृष्टिप्रलयौ वर्तेते एवेत्य-विवादः । तयोश्च व्यक्तिभेदेन परस्परानन्तर्यं घटीयन्त्रस्थघटानामिव पुनः पुनरावृत्तिरनादिसिद्धेत्यप्यविवादमेव । ततश्च सृष्टिं वर्णयता यं कञ्चित् प्रलयमारभ्यैव वर्णनीया । तत्र प्रलयो नामानन्तशक्तिकस्य ब्रह्मणः स्वरूपमात्रेण कञ्चित्कालमवस्थानं सुषुप्तिकाले जीवस्येव, पूर्वसृष्टिदशायां ये तावज्ज्ञानानुदयान्न मुक्तिमापन्ना जीवराशयस्ते तत्तददृष्टानि च पञ्च महाभूतानि स्थूलसूक्ष्माणि च कार्पासबीजे पटा इव सूक्ष्मरूपेण प्रलयकालीनब्रह्मणि तिष्ठन्ति, **'यथाण्डान्तर्जले बर्ही(मही)'** इत्यादि पूर्वलिखितवचनात् । अत एव **'चिद्वह्निरवरोहपदे छन्नोऽपि चिन्मात्रया मेयेन्धनं प्लुष्यति'** इति **शक्तिसूत्रे** भाष्यम् । मात्रापदस्येदमाकूतं यत्कवलयन्नपि

न सार्वात्म्येन ग्रसतेऽपि त्वंशेन संस्कारात्मना तत्स्थापयतीति । ततश्च सुप्तस्य जीवस्य स्वत एवोत्थाने तदीयं कर्मैव यथा कारणं

**'सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति ।**
**पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः ॥'**

इत्यादि **श्रुति**सिद्धम्, तथा पूर्वसृष्टिकालप्राण्यदृष्टवशादेव ता[दृ]स(श)सशक्तिके ब्रह्मणि प्राथमिकवृत्त्युद्गम इति न तत्र कारणान्तरं मृग्यम् । न चादृष्टस्यैव प्रथमवृत्तिं प्रति कारणत्वे प्रलयारम्भमध्यकालयोरपि तदापत्तिरिति वाच्यम्, अस्य पर्यनुयोगस्य सुषुप्तावपि तुल्यत्वात्, अभिघातादेः कालान्तरे वेदनाजनकत्वस्यापि दर्शनेन कारणवैचित्र्यादेवोपपत्तेश्च । सा च वृत्तिरिच्छारूपा स्वनिष्ठस्फुरत्ता दर्शनविषयिणी, स्वेच्छयाऽऽत्मनः स्फुरत्तां पश्येदिति मूलस्वरसात् । यदि पुनरात्मनः स्फुरत्तामहं पश्येयमित्याकारकेच्छां प्रति स्फुरत्ताज्ञानस्य कारणत्वादिच्छातः पूर्वं ज्ञानस्याऽऽवश्यकत्वान्नेच्छावृत्तेः प्राथम्यमित्युच्यते, तदा पाठक्रमादर्थक्रमस्य बलवत्त्वादात्मनः स्फुरत्तां दृष्ट्वेच्छेदिति वैपरीत्येन व्याख्येयम्, उक्त**श्रुतौ 'स्वपिति प्रबुद्धः'** इत्यस्य सुप्तः प्रबुध्यतीति व्याख्यानवत् । वस्तुतस्तु **'तदैक्षत बहु स्यां प्रजायेय'** इति **श्रुता**वीक्षणस्य बहु स्यामित्याकारकताप्रदर्शनात्प्राथमिकी वृत्तिरिच्छाज्ञानोभयरूपा । **'सोऽकामयत बहु स्याम्'** इतिवाक्यान्तरैकवाक्यत्वाच्च । किं बहुना 'तत्तपोऽकुरुत' इत्यादिश्रुत्यन्तरपर्यालोचनया सैव च कृतिरूपाऽपि, इच्छात्वज्ञानत्वकृतित्वानां साङ्कर्यस्यापि श्रुतिबलादङ्गीकारे बाधकाभावात् । साङ्कर्यभिया तेषामजातित्वाद्वा साङ्कर्यस्य जात्यबाधकत्वाद्वेत्यन्यदेतत् । एतेन **'स्वाभाविकी ज्ञानबलक्रिया च'** इति **श्रुति**रप्युपपद्यते, तत्र बलशब्दस्येच्छापरत्वेन **प्राचीनै**र्व्याख्यानात् । इच्छाज्ञानकृतीनां धर्मिणा सहाभेदे तत्रोत्पद्यमानाया वृत्तेरपि त्रिरूपत्वस्य न्यायसिद्धत्वात्, एकवचनेन कर्मधारयध्वननादन्योन्याभेदसिद्धेश्च । स्वेच्छयेत्यभेदे तृतीया, इच्छाभिन्नेक्षणवतीत्यर्थः , तस्यां वृत्तौ विषयं प्रदर्शयति–स्फुरत्तामात्मन इति । आत्मनिष्ठां स्फुरत्तामित्यर्थः । सा च सृष्टिरेव । तथाहि प्रकाशस्य ह्येष स्वभावो विषयव्याप्त्यैव स्वस्फूर्तिरिति । दीपप्रभातपचन्द्रिकाणां गृहाङ्गणादिसम्बन्ध इवान्तरिक्षेऽपि तृणपर्णपक्षादिव्याप्तिमन्तरेणैव स्फूर्त्यभावात् । न च दीपस्य विषयसम्बन्धमन्तरेणापि स्फूर्तिदर्शनेन तत्रोक्तनियमव्यभिचार इति वाच्यम्, दीपस्य प्रभापटलाश्रयरत्नस्येव प्रकाशाद्भिन्नत्वात् । न च तस्य तद्भिन्नत्वे तेजस्यन्तर्भावानापत्तिः, रत्नवदेव तस्यापीष्टत्वात् । न च रत्ने गुरुत्वघनत्वयोर्दर्शनेन तस्य पार्थिवत्वेऽपि दीपे तयोरभावेन पार्थिवत्वानुपपत्तिरिति वाच्यम्, धूमपटले तयोरदर्शनेन तयोः पार्थिवत्वव्याप्यत्वाभावात्, पञ्चीकरणप्रक्रियायाः सर्वत्राविशेषेऽपि पार्थिवांशाधिक्येनैव पार्थिवत्व-

व्यवहारस्य निर्वोढतया दीपे घनताविशेषदर्शनेन प्रभापेक्षया पार्थिवांशाधिक्यस्य स्वीकर्तुं युक्तत्वाच्च, तैजसत्वव्यवहारस्य कांस्यादाविव प्रकाशाश्रयत्वेनोपपत्तेश्च ।

एतेन चन्द्रसूर्यावपि व्याख्यातौ । ततश्च प्रकाशमात्रस्य विषयाधीनस्फूर्तिकत्वाद्विषयस्यापि प्रकाशसम्बन्धेनैव स्फुर[णात् स्फुर ]णज्ञानस्यापि प्रकाशस्वरूपत्वात्तस्य विषयैः सह यः सम्बन्धो विषयविषयिभावाख्यस्तत्त्वमेव स्फुरणलक्षणम् । तद्वत्त्वं च प्रतियोगित्वानुयोगित्वतादात्म्यान्यतमसम्बन्धेन । तेन ज्ञानं स्फुरति, घटः स्फुरति, तयोः सम्बन्धः स्फुरतीति त्रिविधव्यवहारस्याप्युपपत्तिः । एवं ब्रह्मणोऽपि प्रकाशैकरूपत्वेन तन्निष्ठस्फुरत्ताया विषयितासम्बन्धेन सृष्टिरूपविषयत्वैकस्वरूपत्वात् स्फुरत्तापदस्य सृष्टिरित्यर्थो युज्यत एव । विषयतत्संसर्गनिष्ठयोः स्फुरत्तयोर्निरासायाऽऽत्मन इति पदम् । सेयं स्फुरत्तारूपा सृष्टिरेव क्रिया, कृतिः क्रिया यत्नः सृष्टिरित्येतेषां पदानामनर्थान्तरत्वात्, यत्नतद्विषययोरभेदोपचाराद्वा । अत एव **व्यासेन** कृतेऽपि **पुराणा**दौ व्यासस्य कृतिरिति व्यवहारः । तेनेच्छया स्फुरत्तां पश्येदिति पदत्रयेणेच्छाकृतिज्ञानानामैक्यध्वननादिच्छादित्रयसमष्टिरूपशान्तादेवीस्वरूपमीक्षणमित्युक्तं भवति ।

तदयं निष्कर्षः – सृष्टिमहं वितनुयामित्याकारिकी प्राथमिकी वृत्तिरिच्छाज्ञानक्रियात्मिका शान्तानाम्नी यदा जाता, तदा तत्काल एव चक्रस्य सम्भवः, **'इच्छामात्रं प्रभोः सृष्टिः'** इति वचनेन विलम्बाभावात्, वृत्तेरपि सृष्ट्यन्तर्गतत्वेन तदातनत्वस्याविरोधाच्चेति ॥ ९-९$\frac{१}{२}$ ॥

अथेदृशी शान्तात्मिका प्रथमा वृत्तिरेव बिन्दुचक्रस्य वासनेति प्रतिपादयति –

**शून्याकाराद्विसर्गान्ताद्‌ बिन्दुप्रस्पन्दसंविदः ॥ १० ॥**
**प्रकाशपरमार्थत्वात् स्फुरत्तालहरीयुतात् ।**
**प्रसृतं विश्वलहरीस्थानं मातृत्रयात्मकम् ॥ ११ ॥**

शून्याकारत्वादिभिः पञ्चभिर्विशेषणैराक्षिप्तं परब्रह्म विशेष्यम् । तादृशविशेषणपञ्चकविशिष्टब्रह्मणः सकाशात् प्रसृतं चक्रं बैन्दवं भवतीत्युत्तरश्लोकस्थपदद्वयाकर्षणेनान्वयः **प्राञ्च**स्तु–'बिन्दोर्जातं बैन्दवम्, 'तत्र जातः' इत्यण् । बिन्दुसम्भूतं त्रिकोणचक्रमित्यर्थ इत्याहुः । एतत्पक्षे त्रिकोणचक्रमिति वक्तव्ये बैन्दवमित्युक्तिस्तु क्वचिद्वासनायां बिन्दुत्रिकोणयोरभेदध्वननार्थेति वक्तव्यम्, **'त्रिकोणे बैन्दवं श्लिष्टम्'** इति **ब्रह्माण्डपुराणात्** । तत्प्रयोजनं च मन्वस्रे व्यक्तीभविष्यति । चक्रस्य स्वरूपमाह– मातृत्रयात्मकमिति । मातरो विश्वजनन्य इच्छाज्ञानाक्रियानामिका देव्यस्तत्त्रितयसमष्टिरेवाऽऽत्मा स्वरूपं यस्य तत्, उक्तायाः प्राथमिकवृत्तेरिच्छादित्रय[समष्टि]-

रूपत्वात् । मातृपदेनैवेच्छादिपरामर्शस्तु वामादित्रयसमष्टिरूपतायाः श्लेषेण पश्यन्त्यादिमातृकात्रयसमष्टिरूपतायाश्च ध्वननार्थम् । मातृरूपत्वादेव विश्वलहरीस्थानं च विश्वं षट्त्रिंशत्तत्त्वात्मकमेव लहर्यस्तरङ्गास्तेषां स्थानमाधारः । विश्वस्य लहरीत्वोक्त्या तादृशवृत्तेः समुद्रतुल्यता ध्वनिता । तादृशवृत्त्युद्गमोत्तरमेव क्रमेण सर्वसृष्टीनां जायमानत्वाद्विश्वजनकमित्यर्थः । बैन्दवपदस्य त्रिकोणपरत्वपक्षे त्रिकोणस्य बैन्दवत्वविधानं त्वेतत्कारणं परब्रह्मैव बिन्दोर्वासनेति ध्वनयितुम् । तेन परब्रह्मैव बिन्दुस्तस्येक्षणात्मा वृत्तिरेव त्रिकोणमिति **प्राचां** मतस्थितिः । वस्तुस्तु प्रथमोपस्थितत्वाद् बैन्दवपदस्वारस्याच्छ्रुत्यानुगुण्याच्चायं ग्रन्थो बिन्दुचक्रवासनाप्रतिपादनपर एव युक्तः । न चैवं सत्युत्तरग्रन्थे त्रिकोणवासनाया अकथनेन सन्दर्भविरोधः, त्रिकोणवसुकोणयोर्मेलनेन नवयोनिचक्रस्यैकवासनावर्णनेन तदभावात् । त्रिकोणमात्रवासनाया अतिविस्तृतत्वेन ब्रह्माण्डपिण्डाण्डयोरैक्यभावनासिद्ध्युत्तरकालैकविभावनीयतयोत्तमाधिकारिकत्वेन **'आत्मनः स्फुरणं पश्येत्'** (६/३६) इत्यादिना पार्थक्येनाग्रे वक्ष्यमाणत्वाच्च । तस्मादिच्छाज्ञानक्रियेति त्र्यात्मकमीक्षणमेव बिन्दुचक्रस्य वासना । तस्मिन् पूजनीयं यत्तदेव परं ब्रह्म । तथा च **आथर्वणाः** शौनकशाखीया आमनन्ति–

> **'अष्टाचक्रा नवद्वारा देवानां पूरयोध्या ।**
> **तस्यां हिरण्मयः कोशः स्वर्गो लोको ज्योतिषाऽऽवृतः ॥**
> **तस्मिन् हिरण्मये कोशे त्र्यरे त्रिप्रतिष्ठिते ।**
> **तस्मिन् यद्यक्षमात्मन्वत्तद्वै ब्रह्म ॥'**

तैत्तिरीयशाखायां तु प्रथमान्तमिति विशेषः । त्रैलोक्यमोहनादिसर्वसिद्धिप्रदान्तचक्राष्टकयुक्तं नवयोनिघटितमन्येषामसाध्यं देवतावासभूतं श्रीचक्रनगरं यत्तत्राप्युत्तमः कोशो ज्योतिर्मयः स्वर्गतुल्यस्त्रिकोणनामकोऽस्ति, तस्मिन् कोणे त्रिधा प्रतिष्ठितं त्रिसमष्टिस्वरूपं बिन्दुचक्रमस्ति । तस्मिन् बिन्दुचक्रे स्वात्मनीव यद्यक्षं महाभूतं पूजनीयं तद् ब्रह्मैवेति वासनामज्ञा जानन्ति । भ्राजनादिविशेषणविशिष्टामपराजिताख्यां नगरीं प्रति ब्रह्मैव यस्मादाविवेशेति समुदायार्थः । ब्रह्मोपासकानां गन्तव्या पुनरावृत्तिवर्जिताऽपराजिताख्या नगरी काचिदस्ति । यस्यामरनामकोण्यनामकश्चेति द्वौ ह्रदौ सुधामयौ वर्तेते इत्यादिकं तु श्री**शङ्करभगवत्पादैः** सूत्रभाष्यान्ते वर्णितम् । तन्नगराभिन्नमिदं श्रीचक्रम् । अत्र त्रिप्रतिष्ठित इति शब्दो न त्र्यरस्य विशेषणम्, तथात्वे तस्मिन्निति पदद्वयस्य वैयर्थ्यापत्तेः, अतो बिन्दुपर एव । तेन बिन्दुचक्रस्य त्र्यात्मकत्ववासना सिद्धा भवतीति द्रष्टव्यम् । बिन्दुचक्रस्य मूलभूतमीक्षितृ परं ब्रह्म विशिनष्टि– शून्याकारादित्यादिना । शून्या अविद्यमाना आकारा आकृतयोऽवयवसंस्थानविशेषा यस्मिंस्तच्छून्याकारम्, तस्मान्निराकारादिति यावत् । विविधः सर्गो विसर्गो नानाविधा सृष्टिस्तस्यान्तो लयो यस्मिंस्तद्विसर्गान्तम्,

तस्मात्प्रलयकालीनादिति यावत् । 'स्पदि किञ्चिच्चलने' इति धातोरल्पचलनार्थकः स्पन्दशब्दः । स च प्रकृष्टः प्रस्पन्दः, अत्यल्पतरचलनम् । बिन्दूनां प्रस्पन्दा बिन्दु-प्रस्पन्दास्तादृशाः संविदो ज्ञानस्वरूपा जीवराशयो यस्मिंस्तस्माद्बिन्दुप्रस्पन्दसंविदः । यस्य चिदम्भोधेर्बिन्दुतुल्या अंशा ईषद्भिन्ना जीवा इत्यर्थः । **'ममैवांशो जीवलोके जीवभूतः सनातनः'** इति वचनात् । भेदस्यात्यल्पत्वोक्त्या तस्य भानमात्रम्. न तु तत्त्वतः सोऽस्तीति ध्वनितम् । 'स्यन्दू प्रस्रवणे' इति धातुतो निष्पन्नप्रस्यन्द-पदपाठेऽपि बिन्दुप्रस्रावा जीवा इत्यर्थोऽपि न विरुध्यते । परमार्थस्य सत्यस्य भावः परमार्थत्वम्, पारमार्थिकं रूपमिति यावत्, प्रकाश एव परमार्थत्वं यस्य तस्मात्प्रकाश-परमार्थत्वात्, प्रकाशैकस्वरूपादित्यर्थः । स्फुरत्ताः सृष्टय एव लहर्य ऊर्मयस्ताभि-र्युतात् स्फुरत्तालहरीयुतात् । सृष्टेस्तरङ्गस्थानीयत्वोक्त्या चिदम्भोधेस्तस्याश्चा-त्यन्ताभेदः, भासमानो भेदस्तु कल्पित इति सूचितम् । अत एव नानारूपं ब्रह्म मा प्रसाङ्क्षीदतः प्रकाशैकरूपत्वमुक्तम् । तेनेतरेषां रूपाणां विश्वसम्बन्धितोक्ता,

**'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चके ।**
**आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥'**

इति **अभियुक्तो**क्तेरिति ।

अथ रहस्यार्थो यथा–अर्थसृष्टिशब्दसृष्ट्योर्युगपदेवाङ्कुरतच्छाययोरिव परस्पर-सम्पृक्तयोरुत्पत्तिः, पदार्थमात्रस्य शब्दानुविधत्वात्, **'वागर्थाविव सम्पृक्तौ'** इति **अभियुक्तो**क्तेः । ततश्च सृष्टिकारणे ब्रह्मणि शिवशक्तिरूपेऽर्थत्ववच्छब्दत्वमप्यस्तीति वक्तव्यम् । तत्र चाकारः शिवस्य रूपं हकारः शक्तिरूपम् । तदुक्तं **सङ्केतपद्धत्याम्**–

**'अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।**
**हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ॥'**

इति । तौ चाकारहकारौ न वैखरीरूपाविवातिस्पष्टस्वरूपौ । किं तु सूक्ष्मतम-स्वरूपौ, वैखरीतोऽपि सूक्ष्मसूक्ष्मतरसूक्ष्मतमानां मध्यमापश्यन्तीपरारूपाणां त्रिविधवर्णानां सत्त्वात्, **'गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति'** इति **श्रुतेः** । अन्योऽप्यस्य रहस्यतरः प्रपञ्चो **वरिवस्यारहस्य**व्याख्याने स्फुटीकृतो**ऽस्माभिः** । तदिदं द्योतयितुमाह–शून्याकारादिति । शून्यश्चासावकारश्चेति कर्मधारयः । विसर्गो हकार एवान्तश्चरमावयवो वा बन्धको वा यस्य स विसर्गान्तः । 'अति अदि बन्धने' इति धातुपाठादन्तपदस्य बन्धकार्थता । हकारानुबद्धोऽकारः शक्तिरूप-धर्मानुबद्धः शिवरूपो धर्मीत्यर्थः । विसर्गान्तपदेनैव वा षोडशः स्वर उच्यते । स चाकारहकारोभयरूप एव । तस्य शून्याकारादिति विशेषणम् । निराकारादित्येव पूर्ववदर्थः । प्रथमपक्षे शून्यपदस्याकार एवान्वितत्वेन हकारे शून्यत्वं न भायात्, अस्मिन् पक्षे तु द्वयोरपि शून्यरूपता लभ्यत इति विशेषः । किं च, विसर्गान्तो ह्येकमखण्डमकारहकारोभयरूपस्याप्यखण्डताप्रतीत्या तादृशस्य निर्गुणब्रह्मरूपता

प्रतीयते । प्रथमपक्षे तु स्वभिन्नवर्णान्तरवैशिष्ट्येन शबलब्रह्मताप्रतीतिः स्यादिति च विशेषः, तेन प्रथमपक्षादरः **प्राचां** नाऽऽदर्तव्यः । निराकारादित्यनुक्त्वा शून्याकारादित्युक्त्याऽकारस्यैकबिन्द्वाकारता विसर्गरूपहकारस्य बिन्दुद्वयाकारता च ध्वनिता । विसर्गपदेनैव षोडशस्य स्वरस्य लाभेऽप्यन्तपदं विमर्शानुबद्धः प्रकाश इत्यर्थलाभाय । तेनायमर्थो ध्वनितः– यथा लोके स्त्रीपुंसयोः सामरस्यदशायां यदा ब्रह्मरन्ध्रस्थितः शुक्लबिन्दुः काममन्दिरं प्रविष्टः शोणबिन्दुनैकीभवति तदैव बाह्या-[भ्य]न्तरभानविहीनमानन्दमात्रावशेषं ब्रह्मैव भासत इत्यनुभवसिद्धम् । **श्रुति**रपि– **'यथा प्रियया संपरिष्वक्तो न बाह्यं किञ्चन वेद नाऽऽन्तरम्'** इति । सुषुप्तिदशायामज्ञानवृत्तिरस्ति, सामरस्ये तु न साऽपि तिष्ठति । एवं सति तादृशसामरस्यनिष्ठस्याऽऽनन्दात्मकत्वे सति गर्भोत्पादकत्वरूपसाधारणधर्मस्य सृष्टिप्राक्कालीनशिवशक्तिसामरस्येऽपि दर्शनात् लौकिकप्रक्रिययैवालौकिकप्रक्रियाऽप्यूह्या । तत्र यो ब्रह्मरन्ध्रस्थितो बिन्दुः स निःशेषेण न कामालयं प्रविशति किं त्वंशेन, अन्यथा पुनः सामरस्यानापत्तेः । ततश्च विधिबिलस्थितो बिन्दुस्तुरीयबिन्दुरनामा । तदंशो मन्दिरस्थितस्तु कामाख्यो बिन्दुर्यः कामेश्वर इत्युपासकैश्चिन्त्यते । अत एव काममन्दिरनामधेयादीनि सम्भवन्ति । न ततः पूर्वम् **'शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते'** (४/७ ) इति पूर्वमुक्तत्वात् ।

कामबिन्दोः शोणबिन्दुना सह परस्परानुप्रविष्टत्वे सति विस्पष्टत्वे बिन्दुद्वयं विसर्गो हकारो विमर्श इत्यादिसंज्ञा, केवलशिवस्येव केवलशक्तेरपि सृष्ट्यादिजनकत्वायोगात् । अन्यथा परशिवाङ्गीकारस्यैव वैयर्थ्यापत्तेः । पूर्वं कृतः परशिवनिरासस्तु शक्तिनिरासवादिनो जल्पकथया मुखमुद्रणमात्रार्थो न तु वादकथयेत्युक्तम् । इयं हकाररूपा शक्तिरेव च कलेत्युच्यते, **'हकारोऽन्त्यः कलारूपः'** इति **सङ्केतपद्धत्या**दिवचनात् । सेयं कामकला भवति । कामविशिष्टा कलेति मध्यमपदलोपी समासः, कामश्चासौ कला चेति कर्मधारयो वा । निर्धर्मकेऽपि ब्रह्मणि तदभिन्नशक्तेरङ्गीकाराच्छक्त्यन्तर्भूतस्वरूपमात्रं निष्कृष्य केवले तुरीयबिन्दुता । तस्यैव शक्तिसम्बन्धमात्रं शक्यतावच्छेदकीकृत्य विवक्षायां कामबिन्दुपदवाच्यता । तस्यैव सम्बन्धस्याभेदात्मकसामरस्यत्वेन विवक्षायां विसर्गादिपदवाच्यता । तस्यैव सामरस्यस्याऽऽनन्दान्तर्भावेन विवक्षायां कलापदवाच्यता । ईदृशसमष्टिरूपकामकलायामीकारस्य शक्तिः । ईकारस्य कामकलेत्यप्यत एव नाम । यस्तु **वृद्धा**नामीकारलेखने कामविसर्गकलानामवयवभावेन प्रदर्शनोपदेशः, स मन्दप्रज्ञानां बुद्ध्यारोहाय कल्पितो न वास्तविकः,

**'उपायाः शिक्षमाणानां बालानामुपलालनाः ।**
**असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥'**

इति **भर्तृहरिणो**क्तेः ।

अत एव कामकलालेखनस्य कालचक्रादौ यत्र विधिस्तत्राऽऽदौ बिन्दुस्तद-धस्तिर्यग्बिन्दुद्वयं तदधो हंसपदमिति लिखन्ति **साम्प्रदायिकाः** । आनन्दस्य लेखना-सम्भवात्तत्कलाभिव्यक्तिस्थानत्वात् कामालयस्य द्योतको हंसपदाकारलेखः । इदमेव च **भगवत्पादैः**–

**'मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो**
**हरार्धं ध्यायेद्यो हरमहिषि ते मन्मथकलाम् ।'**

इत्यत्रोक्तम् । तत्र मुखबिन्दुः कामबिन्दुः, कुचयुगं विमर्शबिन्दुद्वयम् । हरस्यार्ध-नारीश्वररूपस्यार्धमुत्तरार्धम्, योनिरिति तदर्थः । हकारार्धमित्यादावपि हकारस्य विमर्शस्यार्धम्, शक्तिसम्बन्ध्यर्थ(र्ध)मिति तदर्थः । सपरार्धमित्यस्यापि स एव, सकारात्परो हकार इति तदर्थात् । तेन हकारलेखनतत्प्रदर्शनमपि गुरूणां मन्दप्रज्ञानुग्रहार्थमेव । तदिदं सर्वं द्योतयितुं विमर्शानुबद्धप्रकाशादित्युक्तम् । बन्धन-स्योक्तसामरस्यरूपत्वात् । ईदृशमन्तपदेन ध्वनितमेवार्थं स्पष्टमाह–बिन्दुप्रस्यन्दसंविद इति । बिन्द्वोः सितशोणयोः प्रस्यन्दः स्वस्थानाच्चलनं प्रस्रावो वा, संविद्रहस्यरूपभूतं सारं यस्य तस्मादित्यर्थः । तत्रत्यप्रक्रियातुल्यप्रक्रियापाकादिति यावत् । मानुषादि-शरीरेषु पाषाणादिभ्यो विशेषभूतं रहस्यं सारं संविदेव । अतः संवित्पदं रहस्यसारे गौणम् । इत्थं च यस्माद् बिन्दोस्त्रिकोणमुत्पन्नं स कामकलारूप इति ध्वन्योऽर्थः । अत एवोपसंहारे वक्ष्यति–**'चक्रं कामकलारूपं प्रसारपरमार्थतः'** (६।२४) इति ।

बिन्दुप्रस्पन्दात्मकमप्येतन्न बाह्यदृष्टान्तमनुसृत्य जडं मन्तव्यमित्याह–प्रकाशेति । प्रकाशैकस्वभावत्वे विविधस्वभावा सृष्टिः कस्मादुत्पन्नेत्यत आह–स्फुरत्तेति । समुद्रलहरीणां जलैकरूपत्ववद्विश्वमपि प्रकाशैकरूपमेव,

**'चिद्विलासः प्रपञ्चोऽयं सखे ते दुःखदः कथम् ।**
**किमिन्द्रवारुणी राम सितया कटुकी कृता ॥'**

इति **वासिष्ठात्** । सितया कृतेन्द्रवारुणी कटुकी किमित्यन्वयः । ततश्च प्रकाशैकस्वभावातिरिक्तं भासमानं सर्वं भ्रम एवेति भावः । सोऽयमतिरहस्यरूपोऽर्थः शिष्यानुजिघृक्षया भगवतीप्रेरणया चेह लिखितः । यस्तु **कामकलाविलास-चिद्वल्लीकारा**दिभिः कामकलास्वरूपनिष्कर्षप्रकारो लिख्यते, सोऽपि फलतोऽत्रैव पर्यवस्यति। उपपादने परं विसंवादः । सोऽपि **'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः'** इति भाणान्नातीव दुष्यतीति मन्तव्यम् । **प्राञ्चस्**तु–विसर्गसहिताच्छून्यादकारात् कामबिन्दुरुत्पन्नस्तस्मात् प्रस्पन्दो बिन्दुद्वयमुत्पन्नम् । तस्मात् संवित्, हार्धकलोत्पन्ना । प्रकाशपरमार्थत्वात्, प्रकाशसम्पर्केण विमर्शे स्रावस्य जातत्वात् । स्फुरत्तालहरीयुतात्,

स्फुरत्ता विमर्शशक्तिस्तस्या लहरी बिन्दुद्वयान्तरालान्निःसृता हार्धकला तद्युक्तात्कामकलाक्षराद् मातृत्रयात्मकं पश्यन्तीमध्यमावैखरीरूपं बैन्दवं सदाशिवाख्यतुरीयबिन्दोरुत्पन्नं मध्यत्रिकोणचक्रं प्रसृतमिति व्याचक्षते । तदिदं निरर्थकमेव, लक्षणाध्याहारव्यवायविपरिणामव्यवधारणादिनिखिलदोषदुष्टं सृष्टिक्रमाननुगुणं सिद्धान्तविरुद्धं चेत्युपेक्ष्यम् ॥ १०-११ ॥

इदानीं क्रमप्राप्तामपि त्रिकोणचक्रवासनामुत्तमाधिकारिकत्वद्योतनायोत्तरत्रैव वक्ष्यमाणत्वात्परित्यज्य प्रकृतविभावनाधिकारिमात्रोपयोगितया वसुकोणचक्रसम्मेलनेनैव त्रिकोणचक्रभावनावश्यकत्वध्वननाय द्वे अपि चक्रे सम्मेल्य नवयोनिचक्रस्य वासनामाह—

**बैन्दवं चक्रमेतस्य त्रिरूपत्वं पुनर्भवेत् ।**
**धर्माधर्मौ तथाऽऽत्मानो मातृमेयौ तथा प्रमा ॥ १२ ॥**
**नवयोन्यात्मकमिदं चिदानन्दघनं महत् ।**
**चक्रं नवात्मकमिदं नवधा भिन्नमन्त्रकम् ॥ १३ ॥**
**बैन्दवासनसंरूढसंवर्तानलचित्कलम् ।**
**अम्बिकारूपमेवेदमष्टारस्थं स्वरावृतम् ॥ १४ ॥**

एतस्य त्रिरूपस्य बिन्दुचक्रस्यैव पुनः पुनस्त्रिरूपत्वम्, एकैकरूपस्य त्रित्रिरूपत्वं भवेदित्यर्थः । नवरूपत्वमिति यावत् । **केचित्** तु—एकमेव त्रिकोणं पुनरपि सृष्टिलयभेदेन शक्तिवह्नित्रिकोणतां प्राप्य त्रिधाऽभवदित्यर्थ इत्याहुः । त्रिरूपत्वमित्यनेन बिन्दोस्त्रिकोणोत्पत्तिरुक्तेति भ्रमो मा प्रसाङ्क्षीदित्यत आह—धर्मेति । धर्माधर्मौ पुण्यपापे । आत्मानश्चत्वारः – आत्माऽन्तरात्मा, परमात्मा, ज्ञानात्मेति भेदात् । एते च पीठन्यासे परस्परभिन्नदेवतात्वेन प्रसिद्धाः । तेषु त्रयाणां लक्षणानि तावद् **आत्मोपनिषद्याथर्वणे** राम्नातानि । देहे ब्रह्माऽऽत्मा, भोक्ताऽन्तरात्मा, सूक्ष्मो जीवः परमात्मेति तन्निष्कर्षः । ज्ञानात्मा तु ब्रह्मैव जीवाभिन्नमिति बोध्यम् । यद्यपि जीवात्मान इत्येवं व्याख्यातुं युक्तम्, नवयोनिचक्रस्य वासनाया अपि नवात्मकत्वमेवाऽऽवश्यकमिति नियमाभावात्, वक्ष्यमाणषोडशदलाष्टदलभूगृहवासनासु व्यभिचारात्, तथाऽपि सम्भवतः संख्यैक्यस्य स्थूलदृशां चमत्काराधायकतया भक्त्यतिशयोत्पादकत्वेन 'त्यागायोगः' इति न्यायेन **प्राचीनै**रित्येव व्याख्यातम् । नवात्मकमिति विशेषणमप्यस्यार्थस्यात्म[म]ते ज्ञापकम् । मातृमेयप्रमास्त्रिपुटी अज्ञायि, ज्ञातॄणां जीवानामानन्त्येऽपि मातृत्वेनैक्यम् । एवं मेयप्रमयोरपि । उक्तप्राथमिकवृत्तौ धर्माधर्मौ क्रियांशेनाऽऽत्मानो मातरश्चेच्छांशेन मेयप्रमे ज्ञानांशेनेति विवेकः । एवं वसुकोणेषु

वशिन्यादिक्रमेण धर्मादयो मध्यत्रिकोणे प्रमेति विवेकः । एकैकस्मिन् कोणे तिस्रस्तिस्रो देवता इति वा तथेति पदद्वयेन[द्वे] षड् एकेत्येवं कोणत्रयदेवता इति वा भ्रमस्तथाऽपि स्यादेवेत्यतः कण्ठरवेण नाम्ना निर्दिशति– नवयोन्यात्मकमिति । इदं नवयोन्यात्मकं चक्रं नवात्मकं वासनयाऽपि नवरूपम् । नवधा भिन्नमन्त्रकं वशिन्यादि-मन्त्राष्टकं मूलविद्या चेतिमन्त्रनवकयुक्तम् । त्रिकोणस्थदेवतात्रयेऽप्येकस्य मूलस्यैव त्रेधा विभज्य विनियोगान्न नवत्वहानिः । तैस्तैर्मन्त्रैः सह तत्तदुत्पत्तिध्वननायैवमुक्तिः । बिन्दुरेव बैन्दवं स्वार्थिकोऽण् । तदेवाऽऽसनमीक्षणात्मकवृत्तिरूपं तस्मिन्नारूढे संवर्तानलः प्रलयकालीनाग्निः सर्वजगद्भक्षकः कालाग्निरुद्रश्चित्कला त्रिपुरसुन्दरी च यस्मिन्नवयोनिचक्रे तिष्ठतस्तत्तथा ।

**प्राञ्चस्तु**–बैन्दवं सदाशिवात्मकतुरीयबिन्दुरूपम् । अत्रैव वक्ष्यति– **'सदाशिवासनं देवि महाबिन्दुमयं परम्'** (७/५६) इति । क्षित्यादिसदाशिवान्ततत्त्वोपर्येव शिवशक्त्योः स्थितत्वादित्याहुः । अस्मिन् पक्षे इदं च विशेषणं नवयोनिचक्रग्रहणे बिन्दुसहितस्य ग्रहणं यथा स्यादित्येवमर्थमिति वक्तव्यम् । वामाज्येष्ठारौद्रीसमष्टिरम्बिकाशक्तिः । इदमुपलक्षणमिच्छाज्ञानक्रियासमष्टेः शान्तायाः, पश्यन्तीमध्यमावैखरीसमष्टेः पराया अपि । सा चेक्षणात्मकवृत्तिरूपा । तज्जन्यत्वान्नवयोन्यात्मकचक्रमप्यम्बिकाशान्तापरा-रूपम् । नव योनयः काः का इत्यत आह–अष्टेति । अष्टारस्थं वसुकोणेषु स्थितं सत्स्वरावृतं मध्यत्रिकोणम् । तद्धयकारादिबिन्द्वन्तैः पञ्चदशभिः स्वरैस्त्रिधा विभक्तै-राकलितत्रिरेखं विसर्गस्वराक्रान्तमध्यभागं च । एवमेतानि नव योनय इत्यर्थः । त्रिकोणमिति विहाय स्वरावृतमित्युक्तिस्त्रिकोणचक्रेण सहैव स्वराणामुत्पत्तिरिति स्फोरणाय । वस्तुतस्तु त्रिकोणसहितमिदमष्टारमम्बिकारूपमेव, बिन्दूत्पन्नमेव न तु बिन्दुतस्त्रिकोणं तस्मादष्टारमिति क्रमेणेति त्रिकोणपार्थक्यस्य निरासार्थोऽयं ग्रन्थः । **प्राञ्चस्तु** चक्रं नवात्मकमित्यर्धं त्रैलोक्यमोहनादिसर्वानन्दमयान्तचक्रनवकपरत्वेन कर-शुद्ध्यादिचक्रेश्वरीमन्त्रनवकपरत्वेन च व्याख्याय बैन्दवासनेतिश्लोकं त्रिकोणमात्र-परत्वेन व्याचक्षते, तन्नवयोनिचक्रप्रकरणासंगतत्वादनादेयम् । अस्तु वा प्रकरण-साङ्गत्याय नवयोन्यात्मकचक्रस्यैव भूगृहादिनवचक्रात्मकत्वेन स्तुतिः । उपपद्यते च–

**'त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम् ।**
**दशारयोः षोडशारं भूगृहं भुवनाश्रके ॥'**

इति **ब्रह्माण्डपुराणात्** शक्त्यनलात्मकनवयोनिचक्रे एव नवचक्री । सा च नवयोनि-त्वाविशेषात्मकतया नवयोनिचक्रेऽप्यस्तीत्यर्थः । अत एव चक्री प्रतिनिधित्वेन बाह्यमध्यगतं तदसम्भवे मध्यगतमेव वा चक्रं पूजयेदित्युक्तं प्राक् ॥ १२-१४ ॥

अथान्तर्दशारस्य वासनामाह–

**नवत्रिकोणस्फुरितप्रभारूपदशारकम् ।**
**शक्त्यादिनवपर्यन्तदशार्णस्फूर्तिकारकम् ॥ १५ ॥**

नवसंख्यानि त्रिकोणानि यस्मिंस्तन्नवत्रिकोणमिति बहुव्रीहिः, द्विगुपक्षे ङीबापत्तेः, तेन बिन्दुत्रिकोणवसुकोणात्मकं संहारचक्रमर्थः, नवयोन्यात्मकचक्रग्रहणे बिन्दुसाहित्यस्यानुपदमेव ज्ञापितत्वात् । अन्ये तु नवपदेनैव नव योनयस्त्रिकोणपदेन लक्षणया बिन्दुस्तयोश्च पदयोर्द्वन्द्व इति मन्यन्ते । तदिदमिहत्यत्रिकोणपदस्य बिन्दुपरत्वेन पूर्वतनबैन्दवपदस्य च त्रिकोणपरत्वेन व्याख्यानमपूर्वम् । वस्तुतस्तु नवावयवकानि त्रिकोणानीति मध्यमपदलोपी समासः । न चैवं नवानां दशप्रभाकथनमसङ्गतमिति वाच्यम्, वासनाविषये संख्यासाम्यस्याप्रयोजकत्वोक्तेः, प्रयोजकत्वे वा षट्त्रिंशदक्षराणां हादिविद्यायां समष्टिपार्थक्यकल्पनया **प्राचां** मते सप्तत्रिंशत्तायाः **कामकलाविलासकार**सम्मताया इव प्रकृते नवानां समष्ट्या सह दशसंख्याकत्वमित्यस्य सुवचत्वाद्वा । युक्तं चैतत्, बिन्दोः सूर्यत्वेन तच्छायाया असम्भवात् । एवं च नवत्रिकोणान्येका समष्टिरित्येवं दशानां स्फुरिता याः प्रभास्तद्रूपं दशारकं प्रथमदशारचक्रं शक्त्यादिवर्णदशकस्फूर्तिकारकं भवतीत्यर्थः । प्रकाशांशेन तत्प्रभारूपं विमर्शांशेन मकाराद्यक्षरस्वरूपं च विभावयेदिति यावत् । प्रपूर्वश्लोकस्थं चक्रपदमेव विशेष्यत्वेन सुदूरमनुवर्तते । शक्तिर्मकारः, पञ्चाम्बा नव नाथाश्चेति चरणादिन्यासक्रमे पठितानां नवानां हसक्षमलवरयऊमिति नवाक्षरस्वरूपाणामुन्मन्याकाशानन्दनाथादीनां मध्ये चतुर्थस्थाने पठितस्य शक्त्याकाशानन्दनाथस्य मकारस्वरूपत्वात् । स आदिर्येषां ते नव मकारादिहकारान्ताः, पर्यन्तो मातृकान्त्यः क्षकार एकः, एवं दशार्णानां स्फोरकमित्यर्थः । ळकारस्य लकारेण सहाभेदाभिप्रायेणान्तर्मातृकान्यग्रहन्यासादिषु बहुषु निरासदर्शनात्, मध्यत्रिकोणे स्वरस्फूर्तेरुक्तत्वेन द्वितीयदशारे ककारादिदशकस्य मन्वस्रे टकारादिचतुर्दशानां च स्फूर्तेर्वक्ष्यमाणत्वेन तदुत्तरोपस्थितमकारादेरस्मिंश्चक्रे स्फुरणस्य वक्तुं युक्तत्वाच्च । **सुभगार्चापारिजाता**दिषु सर्वज्ञादिदेवतासु मकारादियोगस्य लेखनाच्च । एतेन क्वचित् **तन्त्रे** रमाशक्तिबीजोद्धारे '**चन्द्रः शक्तिर्महाशक्तिर्ब्रह्माणि कामिकादिकम्**' इति श्लोके रेफे शक्तिपदप्रयोगदर्शनादिह शक्तिपदेन रेफो गृह्यते, तस्याऽऽदिर्यकारस्तदाद्या नव तेषां पर्यन्तः क्षकार एक इति **प्राचां** व्याख्यानं परास्तम्, शक्त्यादिशब्देनैव यकारग्रहणे प्रभृतिवाचकादिपदान्तरस्याभावाच्च । किं च, यकारादिनवकस्य दशमस्य च पार्थक्येन निर्देशस्वारस्यं विरुध्येत, यकारादिदशकस्यैव निर्देष्टुं युक्तत्वात् । अस्मत्पक्षे तु ळकारपरित्यागाय तथोक्तेरेव युक्तत्वादित्यवधेयम् ॥ १५ ॥

अथ बहिर्दशारस्य वासनामाह–

**भूततन्मात्रदशकप्रकाशालम्बनत्वतः ।**
**द्विदशारस्फुरद्रूपं क्रोधीशादिदशार्णकम् ॥ १६ ॥**

व्योमादिभूतपञ्चकं शब्दादितन्मात्रपञ्चकं चैवं यद्दशकं तत्प्रकाशस्तदभिव्यक्तिस्त-दालम्बनत्वरूपधर्मेण तत्साधनत्वेनोपलक्षितम् । क्रोधीशः ककारः, श्रीकण्ठादिन्यासे क्रोधीशककारयोरेकस्थानकत्वात् । तत्प्रभृतिदशवर्णयुक्तं चक्रं द्वितीयदशारं स्फुरद्रूपं प्रकटितरूपमासीदित्यर्थः । **केचित्** तु यथा सूर्यस्याऽऽतपोऽङ्गणे, आतपस्य प्रकाशो गृहान्तः स्फुरतीति तत्सूर्यस्यैव छायाद्वयम्, तथा संहारचक्रछायाद्वयं दशारद्वयमिति मूलस्थद्विदशारपदस्वारस्यमनुसरन्तो मन्यन्ते । तदुक्तं **कामकलाविलासे**–

**'नवकोणं मध्यं चेत्यस्मिंश्चिद्दीपदीपिते दशके ।**
**तच्छायाद्वितयमिदं दशारचक्रद्वयात्मना दृष्टम् ॥'**

इति । तदनुयायिनस्तु– भूततन्मात्रेत्यर्धं प्रथमदशारपरत्वेन योजयन्तो द्वितीयदशारे स्फुरद्रूपपदेनेन्द्रियदशकविषयान् वचनादिशब्दादिरूपान् गृह्णन्तः प्रथमदशारस्थशब्दा-दिभिः पौनरुक्त्यमाशङ्क्य शब्दादिपञ्चकस्य सूक्ष्मस्थूलभेदेन द्वैविध्यमाश्रित्यान्त-र्दशारे तन्मात्रशब्देन सूक्ष्मशब्दादीनां बहिर्दशारे स्थूलशब्दादीनां ग्रहणेन समादधिरे । तदिदं प्रथमपक्षव्याख्यानव्याजेन प्रत्याख्यानमेव ध्वनयति, मूललापनक्लेशस्य तैरेव प्रदर्शनात् ॥ १६॥

अथ चतुर्दशारचक्रवासनामाह–

**चतुश्चक्रप्रभारूपसंयुक्तपरिणामतः ।**
**चतुर्दशाररूपेण संवित्तिकरणात्मना ॥ १७ ॥**
**खेचर्यादिजयान्तार्णपरमार्थप्रथामयम् ।**

चतुरवयवकानि चक्राणि चतुश्चक्राणि । 'त्रिगुणसचिवस्त्र्यक्षरमयः' इत्यादाविव मध्यमपदलोपी समासः, अतो न द्विगोरिति ङीप् । तानि चाव्यवहितानि त्रिकोणादिबहिर्दशारान्तान्येव । बिन्दुस्तु सूर्यस्थानीय एवेति न तस्य ग्रहणम् । नहि वृक्षाधः शाखाफलपत्राणामिव सूर्यस्यापि छाया पतति । एतेषु चक्रेषु संहत्य यद्यपि एकोनत्रिंशत्त्रिकोणानि, तथाऽपि त्रिकोणस्य बिन्द्वभेदविवक्षाया ज्ञापितत्वादष्टाविंश-तिरेव भवन्ति । वस्तुतस्तु त्रिकोणचक्रस्य पार्थक्येनेह वासनाया अकथनात्तत्पार्थ-क्याभावस्य **'अम्बिकारूपमेवेदम्'** (६।१४) इत्यत्र कण्ठरवेणोक्तत्वाच्च, तदुक्तेरष्टा-विंशतियोन्यात्मकतापादनस्यै[व]प्रयोजनत्वाच्च, प्रथमदशारोत्पत्तौ नवत्रिकोणेतिपदेन कण्ठरवेण मध्यत्रिकोणस्योट्टङ्कनेन तत्र ग्रहणेऽपि प्रकृते तदग्रहणं च ।

चतुश्चक्रेत्युक्तिरपि बिन्दुरष्टारं दशारद्वयमित्येतत्परैव त्रिकोणस्य पूर्वमकथनात् । ईदृशचतुश्चक्रपदस्वारस्यविरोधादपि बैन्दवपदस्य त्रिकोणपरत्वेन व्याख्यानं प्रागुक्तं नाऽऽदर्तव्यम् । ततश्चाष्टाविंशतियोनीनां याः प्रभाश्छायास्तासां रूपं यत्संयुक्तं परस्परसंयुक्तं स्वरूपमित्यर्थः । 'विशेषणं विशेष्येण बहुलम्' इति बाहुलको विशेष्यस्य पूर्वनिपातः । द्वयोर्द्वयोस्त्रिकोणछाययोरेकैकः संयोग इति यावत् । संयोगस्य द्विनिष्ठत्वेन द्वयोरेव मेलनस्य संयुक्तपदस्वरसलब्धत्वात्, वृक्षाधश्छायानां मेलनस्य बहुशो दर्शनात् । तादृशस्वरूपात्मको यः परिणामः कार्यं तेनेति तृतीयार्थे तसिः, प्रभारूपाणां संयुक्तो यः परिणामस्तेनेति वा । संवित्तिर्ज्ञानं करणफलमिति यावत् । तेन कर्मेन्द्रियफलानामपि संग्रहः । तेषां फलानां यानि करणानीन्द्रियाणि, तानि च ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकमन्तःकरणचतुष्कं चेति चतुर्दश । तदात्मना तदभिन्नेन चतुर्दशारस्वरूपेणोपलक्षितं चक्रं खेचर्यादिचतुर्दशवर्णानां पारमार्थिकी या प्रथा विस्तारस्तन्मयं तद्विकाररूपमासीदित्यर्थः, **'टष्टङ्कारः कपाली च सोमवाः खेचरी ध्वनिः'** इति **कोशात्** । टकारादिवर्णविकार एवेदं चक्रमिति यावत् । यद्यपि श्रीकण्ठादिशक्तिषु टकारस्थाने खेचर्या मकारस्थाने जयायाश्च न्यासेन पञ्चदशाक्षराण्युक्तानीति प्रतीयते, तथाऽपि मकारोत्पत्तेः पूर्वमुक्तत्वाच्चतुर्दशारसंख्याधिक्यापाताज्जयाऽन्ते येषामित्यतद्गुणसंज्ञानो बहुव्रीहिरुपेयः । अथवा जयाऽन्ते यस्य जयान्तो भकारः । खेचर्यादयस्त्रयोदश जयान्त एकश्चेति द्वन्द्वः । जयाशब्देनैव भकार इति **प्राचां** व्याख्याने तु मूलं मृग्यम्, **'कालभद्रो जया वेधा'** इति **नन्दना**दिबहुकोशविरोधात् । **केचित्** तु– बिन्द्वाद्यन्तर्दशारान्तानि चक्राणि चत्वारि, बहिर्दशारस्थत्रिकोणानि दशेत्येवं चतुर्दशानामेषा छाया । चतुश्चक्रप्रभारूपैश्चतुर्भिः संयुक्तानि बहिर्दशारस्थत्रिकोणानि तेषां परिणामत इति मूलार्थः । तेषां दूरस्थत्वादेकैकचक्रस्यैकैका छाया बहिर्दशारस्य सन्निहितत्वादवयवशश्छाया पततीत्युपपत्तिरित्याहुः ॥ १७-१७ $\frac{१}{२}$ ॥

अथ बिन्द्वादिचक्राणां व्यष्टिवेषेणोक्तां वासनामुपसंहरंस्तत्समुच्चितं समष्टिवासनान्तरमाह–

**एवं शक्त्यनलाकारस्फुरद्रौद्रीप्रभामयम् ॥ १८ ॥**

पञ्चशक्तिचतुर्वह्न्याकारतया स्फुरच्चक्रमेवंरूपं पूर्वोक्तनानारूपं सदपि रौद्रीप्रभामयं समष्टिवेषेण रौद्र्याः शक्ते रूपान्तरं भवति । एवमितिपदेन पूर्ववासनावैशिष्ट्येनोद्दिश्य वासनान्तरविधानादुद्देश्यतावच्छेदकस्य विधेयव्याप्यत्वनियमाद् व्यष्टिसमष्टिवासनयोरनुष्ठाने समुच्चयः सूचितः ॥ १८ ॥

अथावशिष्टचक्रत्रयस्य वासनामाह–

**ज्येष्ठारूपं चतुष्कोणं वामारूपं भ्रमित्रयम् ।**

अत्र भ्रमित्रयमित्यनेन वृत्तत्रयगर्भीकृतमष्टदलषोडशदलपद्मद्वयं लक्ष्यते । तच्च वामाशक्तिरूपम्, भूगृहं तु ज्येष्ठारूपम् । रौद्रीशक्त्यनन्तरं ज्येष्ठाया उपस्थितत्वादादौ भूगृहस्यैव वासनोक्ता मूले । नैतावता विभावनदशायां स एव क्रम आदर्तव्य इति मन्तव्यम् ॥ १८ $\frac{1}{2}$ ॥

इदानीमीदृश्यां विस्तृतभावनायामशक्तं प्रति संक्षिप्तं वासनान्तरमाह–

**चिदंशोऽन्तस्त्रिकोणं च शान्त्यतीताऽष्टकोणकम् ॥ १९ ॥**
**शान्त्यंशा द्विदशारं च तथैव भुवनारकम् ।**
**विद्याकलाप्रभारूपदलाष्टकसमावृतम् ॥ २० ॥**
**प्रतिष्ठावपुषा स्पष्टस्फुरद्द्व्यष्टदलाम्बुजम् ।**
**निवृत्त्याकारविलसच्चतुष्कोणविराजितम् ॥ २१ ॥**

आकाशाद्वायुरित्यादिक्रमेण वाय्वाद्योषध्यन्तजनकतावच्छेदकतावच्छेदकशक्तिविशेषा गगनादिभूतपञ्चकस्थाः शान्त्यतीता शान्तिर्विद्या प्रतिष्ठा निवृत्तिश्चेत्येतन्नामिकाः कलाः सन्तीति तु **गुरुमुखागमः** । अन्तःशब्देन बिन्दुरित्युच्यते । स च त्रिकोणं चेत्येतद्द्वयं चिद्रूपम्, बिन्दुत्रिकोणयोरभेदस्य पूर्वं ज्ञापितत्वात् । अन्तःस्थितं यत्त्रिकोणमिति व्याख्याने तु बिन्दुवासनाया अलाभादनुवृत्तिरादरणीया स्यात् । त्रयोदशश्लोकस्थस्य **'चक्रम्'** इत्यस्यैतावत्पर्यन्तमधिकारः । स्पष्टमन्यत् ॥ १९-२१॥

अस्या अपि वासनायाः क्वचिदेकैकम्, क्वचिद् द्वयम्, क्वचित् त्रयमित्याकारकविषमसंख्याकचक्रविषयकत्वेन गहनत्वादिहाशक्तस्यातिसुलभं वासनान्तरमाह–

**त्रैलोक्यमोहनाद्ये तु नव चक्रे सुरेश्वरि ।**
**नादो बिन्दुः कला ज्येष्ठा रौद्री वामा तथा पुनः ॥ २२ ॥**
**विषघ्नी दूतरी चैव सर्वानन्दा क्रमात् स्थिताः ।**

भृगृहमारभ्यैव पूजनस्य पूर्वमुक्तत्वात्तदनुरोधेनैव झटित्युपस्थितये वासना उक्ताः । नवेति भिन्नं पदम् । नादादयो नव देवताविशेषाश्चक्रे क्रमात् स्थिता इत्यन्वयः । नवचक्र इत्येकं पदं स्वीकृत्य जातावेकवचनमिति **प्राञ्चः**, तन्न, सुबुपात्तैकत्वसंख्यान्वयाय प्रातिपदिकस्यैकजातिपरत्वे विशेषणोपात्तनवत्वसंख्याया जातावन्वयायोगात् ॥ २२-२२$\frac{1}{2}$ ॥

इदानीं लाघवादेतद्वासनादेवतानामभिरेव चक्राण्यनूद्यैतोऽपि सुलभं वासनान्तरमाह–

**निरंशौ नादबिन्दू च कला चेच्छास्वरूपकम् ॥ २३ ॥**
**ज्येष्ठा ज्ञानं क्रिया शेषमित्येवं त्रितयात्मकम् ।**

निरंशोऽवयवविवक्षाशून्यः समष्टिरूपः । स चात्र पूर्वोक्तेक्षणात्मकः । तद्रूपौ नादबिन्दू भूगृहषोडशारपद्मौ भावनीयौ । कलाऽष्टदलपद्ममिच्छारूपम्, ज्येष्ठा चतुर्दशारं ज्ञानशक्तिरूपम् । शेषं रौद्र्यादिसर्वानन्दान्तं बहिर्दशारादिबिन्दुचक्रान्तं क्रियाशक्तिरूपं भावयेत् । एतासु चतसृषु वासनासु शिष्याय यथाधिकारमेकैकां वासनामुपदिशेत् । स च तथैव भावयेत्, न तु वासनान्तरसाङ्कर्यं कुर्यात् । अतो व्यवस्थितो विकल्पः, अन्यथा कस्या अपि वासनाया दृढाभ्यासाभावेन चित्तजयरूपफलानुदयापत्तेः, **योगवासिष्ठा**दावेकतत्त्वदृढाभ्यासस्यैव तदुपायत्वकथनात्, उपास्तीनां चित्तजयद्वारैव पुरुषार्थत्वात्, अङ्गावबद्धानामुद्गीथाद्युपासनानामपि **कल्पसूत्रकारैः** क्रतुप्रयोगमध्येऽङ्गान्तरवदनिबन्धनेनानारभ्याधीतपर्णतादेरिव न क्रत्वर्थत्वमित्यस्य **औपनिषदैः** सिद्धान्तितत्वात् । अत एव तासामुपास्तीनां क्रतुप्रकरणाद्बहिः **अथर्ववेदे** वेदशिरोभागे च पाठः । क्रत्वर्थत्वे हि व्रीहियववदैच्छिको विकल्पः स्यात् । तस्मादधिकारानुसारेण यां काञ्चिदेकामेवोपासनामवलम्ब्याऽऽजन्माभ्यसेदित्युपासनाकाण्डविदां सिद्धान्तः । स च न्यायः सर्वोऽप्यत्र सञ्चारणीयः, **कल्पसूत्रकारै**रनिबन्धनस्य **पूर्वचतुःशत्यां** पूजाप्रकरणे विधानाभावस्य तच्छिरोभागे पाठस्य च तुल्यत्वात् ।

इयांस्तु विशेषः– प्रातरनुवाकादिकालेऽध्वर्य्वादिभिः क्रियमाणा उपास्तयः क्रतुमध्य एव न सार्वकालिक्यः । **'मनो ब्रह्मेत्युपासीत'** इत्यादयस्तु क्रतुबहिर्भूताः सार्वकालिक्यः । अत्रत्या उपास्तयस्तु पूजामध्ये तद्बहिश्च भवन्ति, पूजायाः काण्डभेदेन द्विःकथनाल्लिङ्गात् । तद्धि प्रकरणबहिर्भावान्तर्भावोभयसिद्ध्यर्थम् । अत एवात्र पूजासङ्केतस्य सर्वान्ते निबन्धनम् । सर्वादौ निबन्धने हीतरयोः सङ्केतयोस्तत्प्रकरणे पाठापत्त्योपास्तीनां क्रतुमध्य एव प्रयोगः सिध्येत् । न चात्र वक्ष्यमाणा पूजा मासाग्निहोत्रन्यायेन **पूर्वचतुःशती**विहितपूजातः कर्मान्तरमिति वक्तुं शक्यम्, अनुपादेयगुणसाचिव्याभावेन प्रकरणान्तरलक्षणाभावात् । किं च कर्मभेदे हि प्रकृतिविकृतिभावो नामातिदेशादिभिः कल्पनीयः । स न चात्र सम्भवति, अर्घ्यस्थापनाद्यैकैकपदार्थरूपाणामप्यङ्गानामवयवशो विभज्योभयत्र कथनाल्लिङ्गात् । एकत्र सर्वाङ्गोपदेशो यत्र तत्रैव प्रकृतित्वेन प्रकृते तदभावात् । अत एव च ग्रहमेधीयसोमवदन्यतरस्यापूर्वत्वम् । एतेन चक्रसङ्केतमन्त्रसङ्केतविहितोपास्तीनामेव प्रकरणित्वकल्पनयोत्तरत्र विहितपूजाया एतदङ्गत्वमस्त्वित्यपास्तम्, पूर्वं विहितायाः पूजायाः प्रधानभूताया एवेह विभज्याङ्गकथनप्रत्यभिज्ञादिभिरैक्यसिद्धेर्भाव्यान्तराकाङ्क्षाभावेऽन्याङ्गत्वकल्पनानुदयात्, अत्रत्योपास्तीनां फलश्रवणाभावेन प्रकरणित्वायोगाच्च, **'सद्यः खेचरतां व्रजेत्'** (६/५) इतिफलश्रुतेस्तु सङ्केतत्रयोद्देशेन कथिततयाऽत्रत्योपास्तिमात्रस्य प्रधानत्वनिर्णायकत्वाभावात् । तस्मात्पूर्वोत्तरकाण्डभेदेन विभज्य कथितं

चक्रार्चनमेकमेव कर्म । तस्य च द्वौ प्रयोगौ–उपास्तिरहित एकः, तत्सहितोऽन्यः । **वेदे**ऽपि त्रय्यां विहितानामेव कर्मणाम् **अथर्वणवेदे गोपथब्राह्मणे**–'अथातो देवयजनान्यात्मा देवयजनं श्रद्धा देवयजनम्' इत्यादिनाऽऽधानादिविश्वसृजामयनान्त-कर्मणां प्रत्यङ्गं प्रायेण वासनानां भूयसीनां कथनेऽपि तेषां **कल्पसूत्रकारै**रनुपसंहारेण तद्राहित्यसाहित्याभ्यामेकैकस्य कर्मणो द्वौ द्वौ प्रयोगाविष्टावेव । तौ चाधिकारिभेदेन व्यवस्थितौ । अधिकारस्तु चित्तशुद्धितारतम्यप्रयुक्तो भिन्नो भिन्न इति तु ग्रन्थारम्भ एवोक्तम् । तयोराद्यस्य तु द्वितीयोऽशक्य एव । द्वितीयस्य त्वाद्यः प्रयोगः सुशकत्वादैच्छिको न तूत्तराश्रमिणां पूर्वाश्रमधर्म इव निषिद्धः । ततश्च यदि द्वितीयाधिकारवान् प्रथमं द्वितीयं वा प्रयोगं चिकीर्षति तदाऽत्र कथितैरल्पैरेवाङ्गैः कर्मपूर्तिः । अत एवास्य तन्त्रस्य तादृशाधिकारित्वात्तं प्रति पञ्चपञ्चिकादिपूजा-विस्तारस्यानपेक्षितत्वादिहाकथनम् । प्रथमाधिकारिकतन्त्रेष्वेव तदावश्यकत्वध्वननाय तत्कथनम् । अस्य तन्त्रस्य स्वतन्त्रत्वमपि तादृशाधिकारिधौरेयं प्रत्येव नोपासक-सामान्यं प्रति । **तन्त्रराजं** त्वाद्याधिकारिणं प्रत्येव स्वतन्त्रम्, द्वितीयाधिकारिणं प्रति त्वेतत्तन्त्रापेक्षमेव । द्वितीयाधिकारिणामपि शक्तितारतम्येनानेकविधत्वाद्वासना-विकल्पाः कथ्यमाना नानुपपन्नाः । तस्माद्यो यो यादृशोपास्तावधिकारी स तादृशीमेव गुरुमुखाद्विज्ञायाऽऽसुप्तेरामृतेर्दृढतरमभ्यस्येदिति सिद्धम् । अधिकं पूर्वोत्तरमीमांसा-न्यायविद्भिरूहनीयमिति दिक् ॥ २३-२३$\frac{१}{२}$ ॥

इदानीमुक्तासु चतसृष्वपि वासनास्वावश्यकमंशं पूरयितुमाह–

**चक्रं कामकलारूपं प्रसारपरमार्थतः ॥ २४ ॥**

उक्तरीत्या कामकलायाः सकाशात्सम्पूर्णस्य चक्रस्योत्पन्नत्वात्सर्वं चक्रं कामकला-रूपमेव, यो यत्प्रसरः स तदीयपारमार्थिकस्वरूपः । यथा घटो मृत्प्रसरस्तस्य पारमार्थिकं स्वरूपं मृदेव । **'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'** इति **श्रुतेः** । अयमेव चार्थस्तृतीयकूटेऽपि कथित इति प्रदर्शितं **वरिवस्यारहस्ये** । तस्मात्सर्वं कामकलात्वेन विभावयेदित्यर्थः ॥ २४ ॥

एवं बहिश्चक्रपूजाधिकारिका वासनाः कथयित्वा ततोऽप्युत्तमाधिकारिणो ब्रह्माण्ड-पिण्डाण्डयोरैक्यभावनादार्ढ्यशीलान् प्रति तद्देह एव त्रिविधामान्तरचक्रभावनामाह–

**अकुले विषुसंज्ञे च शाक्ते वह्नौ तथा पुनः ।**
**नाभावनाहते शुद्धो लम्बिकाग्रे भ्रुवोऽन्तरे ॥ २५ ॥**

**इन्दौ तदर्धे रोधिन्यां नादे नादान्त एव च ।**
**शक्तौ पुनर्व्यापिकायां समनोन्मनगोचरे ॥ २६ ॥**
**महाबिन्दौ पुनश्चैवं त्रिधा चक्रं तु भावयेत् ।**

अत्राकुलादीनि महाबिन्द्वन्तान्येकोनविंशतिः स्थानान्युक्तानि, समनोन्मनगोचर इत्यस्य समनगोचर उन्मनगोचरे चेत्यर्थात्, उत्तरत्र मूल एव तयोः स्वरूपभेदस्य वक्ष्यमाणत्वात् । लिङ्गशरीरे हि सुषुम्नानाडीमाश्रित्य द्वात्रिंशत्पद्मानि । तेष्वाद्यन्तयोः सहस्रारे पद्मे द्वे ऊर्ध्वाधोमुखे वर्तेते । सर्वाधःस्थितसहस्रदलकमलोपर्यष्टदलम्, तदुपरि षड्दलम्, तदुपरि मूलाधारादीनि चक्राणीति स्थितिः । तत्र मूलाधाराधःस्थितं षड्दलमेव कुलपद्मम्, तदधःस्थिते अष्टदलसहस्रदले अकुले, कुलपद्माद्भिन्नत्वात् । एवं चाकुलपदेन द्वयोरपि ग्रहणे प्रसक्तेऽष्टदलव्यावर्तनाय विषुसंज्ञ इत्यकुलस्य विशेषणम् । 'विष्लृ व्याप्तौ' इति धातोर्व्यापक इत्यर्थः । व्यापकत्वं सर्वाधःस्थितत्वमिति यावत् । तेनाकुलविषुपदाभ्यामेकमेवाधःस्थितसहस्रारपद्माख्यं स्थानमुच्यत इति **प्राञ्चः** । तच्चिन्त्यम्, भवल्लिखित**स्वच्छन्दसंग्रह**वचन एवाधःसहस्रारस्य कुलपद्मत्वोक्तेः । **'अधश्चोर्ध्वं सुषुम्नायाः सहस्रदलसंयुतम्'** इति प्रकृत्य–

**'शक्तिरूपं महादेवि कुलाकुलमयं शुभम् ।**
**पङ्कजद्वयमीशानि स्थितं शाश्वतमव्ययम् ॥**
**तयोर्मध्ये सुषुम्नान्तस्त्रिदशाऽऽधारपद्मकाः ।'**

इति वचनात् । अधस्थं पङ्कजं कुलमयमुपरिस्थमकुलमयमिति यथाक्रममन्वयस्य स्पष्टत्वात् । किं च, तत्रैव–**'अधःपद्मं सहस्रारं कर्णिकाकेसरान्वितम्'** इति प्रकृत्य **'कर्णिकामध्यतो देवि कुलदेवी च संस्थिता'** इत्युक्तिरपि तस्य कुलपद्मत्वमेव गमयति । यदप्यष्टदलपद्ममकुलमित्युक्तम्, तदपि न । तत्रैव–

**'तत्पद्मोर्ध्वं सुषुम्नाया मध्ये त्वेकाङ्गुलोपरि ।**
**पद्ममष्टदलैर्युक्तम्...................... ॥'**

इति प्रकृत्य **'तन्मध्ये कौलशक्त्या तु सञ्चितं च स्मरेत्ततः'** इत्याद्युक्तेः । **'एकाङ्गुलप्रमाणोर्ध्वं षड्दलं कुलपङ्कजम्'** इति वचनात् षड्दलस्यापि कुलरूपत्वम् । अत एव–

**'कुलयोषित्कुलं त्यक्त्वा परं पुरुषमेति सा ।**
**निर्लक्षणं निर्गुणं च कुलरूपविवर्जितम् ॥'**

इति **पूर्वचतुःशत्याम्**(४।१४) अधःस्थितपद्मानि सर्वाणि त्यक्त्वा ब्रह्मरन्ध्रस्थितसहस्रारपद्ममेतीत्येव पूर्वाचार्याणां व्याख्योपपद्यते । तस्मादेवं व्याख्येयं कुलभिन्नमकुलमिति न तत्पुरुषः, अपि तु न विद्यते कुलं यस्मादिति बहुव्रीहिः । यदपेक्षया

स्थूलमधो वा कुलपद्मान्तरं नास्ति सर्वाधःस्थितं सर्वाधिकं च कुलपद्ममित्यर्थः । तादृशं च कुलपद्ममधःस्थितं सहस्रारमेव, अन्येषां तदुपर्येव स्थितत्वादल्पदलत्वाच्च । एवं चाकुलपदेनैवेतरव्यावृत्तौ विषुसंज्ञ इति न तस्य विशेषणम्, विषुपदस्य सर्वाधारार्थकत्वाभावाच्च संज्ञापदस्यालग्नकत्वाच्च । तेनाष्टदलषड्दलयोरन्यतरस्य विषुरिति संज्ञैव **तन्त्रान्तरे** स्यादित्यनुमीयते, तदुपरिस्थमूलाधारादीनां पार्थक्येन निर्देशात्, सहस्रारमूलाधारमध्यस्थितवाचकत्वावसायात्, प्रसिद्धपदसमभिव्याहारस्यापि शक्तिग्राहकत्वात् । अन्यतरयोरेकतरनिश्चयस्तु विशेषदर्शिभिः कार्यः । एतेनाकुले विषुसंज्ञे चेति चकारोऽप्युपपद्यते । न चैवं सत्याज्ञाचक्र इन्दौ चेति द्विर्बिन्दु-विभावनापत्तिः, अकुलादिमहाबिन्द्वन्तस्थानकैकविभावनपक्षे तदापत्तावपि भावना-भेदवादिनामस्माकं तदनापत्तेर्वक्ष्यमाणत्वात् । किं च, चरमपटले जपप्रकरण एकैककूटस्य त्रित्रिचक्राभेदेन विभावनमुक्त्वा कूटान्त्यकामकलावयवसपरार्धकला-त्रयस्याऽऽधारहृदाज्ञास्थितकुण्डलिनीत्रयस्य चाभेदेन विभावनं विधीयत इति भवद्भिरेव व्याख्यास्यते । तदिदम् **अस्मत्** पक्षे कूटान्त्यस्वरत्रयस्य कुण्डलिनीत्रयस्य चैकस्थाननिपातितत्वादुपपद्यते । कुलविष्वोरेकत्वे तु स्वाधिष्ठानविशुद्धिललाटमध्य-स्थानेष्वेव कूटत्रयान्त्यस्वरपातावश्यंभावात्तत्तदधश्चक्रस्थितवह्न्यादिकुण्डलिनीत्रयस्य वैयधिकरण्यादभेदविभावनमसमञ्जसं स्यात् । किं च, मूलाधारादुत्थितस्य नादस्य मन्त्रविषुवादिभावनघटकता वक्ष्यते । सा चाऽऽद्यकूटस्याऽऽधारे समाप्तावेव तदीयनादस्य तत उत्थानमुपपद्यते । स्वाधिष्ठानान्तमपकर्षे तु न तत्समञ्जसमिति । शाक्ते मूलाधारस्थचतुर्दले, शक्तिरूपायाः कुण्डलिन्याः स्थानत्वात् । वह्नौ स्वाधिष्ठान-स्थषड्दले, तत्र वह्नेर्विद्यमानत्वात् । तदुक्तमाचार्य**भगवत्पादैः** –

**'महीं मूलाधारे कमपि मणिपूरे हुतवहं**
**स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि ।'**

इति । यत्तु **प्राञ्चः–स्वच्छन्दतन्त्रे** मूलाधारे कर्णिकायां वह्निबिम्बस्य कथनात् स्वाधिष्ठानकर्णिकायां हृल्लेखारूपशक्तेरवस्थानकथनाच्चैते एव क्रमेण वह्निशाक्त-पदवाच्ये । तेन मूले वह्नौ शाक्त इति व्यत्ययेन पठितव्यमित्याहुः । तदतीव साहसम्, व्यत्ययमन्तरेणाप्युपपादनात् । नाभौ मणिपूराख्ये दशदले । अनाहते हृदयस्थे द्वादशदले । शुद्धौ कण्ठस्थषोडशदले विशुद्धिनामके । लम्बिकाग्रे **'अन्तरेण तालुके य एष स्तन इवावलम्बते'** इति **श्रुति**प्रसिद्धेन्द्रयोनिपदवाच्ये सूक्ष्मजिह्वास्थानी-याष्टदलपद्मे । भ्रुवोऽन्तरे भ्रुवोर्मध्यस्थे द्विदल आज्ञानामके । अत्र सर्वत्र प्रमाणभूतानि वचनानि **प्राचां** टीकासु द्रष्टव्यानि । इन्दौ बिन्दौ, तदर्धेऽर्धचन्द्रे । बिन्द्वादीनां स्थानादीनि मूल एवानुपदं वक्ष्यति । एते च बिन्द्वाद्युन्मन्यन्ता भागा देहे मन्त्रे च साधारणाः । चक्रेऽपि साधारणा एवेति **प्राञ्चः** । मात्रार्धमात्रा-

कालविधानादाज्ञाचक्रोर्ध्वं स्थलविधानाच्च मन्त्रदेहावयवत्वेऽपि चक्रावयवत्वे किं मानम् । किं च, बिन्द्वाद्युन्मन्यन्तस्थले भावनीयानि किं त्रैलोक्यमोहनादिचक्राण्येव किं वा ततो भिन्नानि? आद्ये तान्येव पुनर्गणितानीति कीदृशं चक्रसाधारण्यम् । अन्त्ये नवात्मकत्वनवमन्त्रकत्वविरोधः । बिन्द्वाद्युन्मन्यन्तावयवकमेकमेव चक्रमिति, कल्पनाऽपि प्रमाणदार्ढ्य एव विश्रम्भणीया । बिन्दुमपेक्ष्य कालतः स्थानतश्च भिन्नानामर्धचन्द्रादीनां बिन्दावन्तर्भावस्यायुक्तत्वाच्च । अर्धचन्द्राद्यष्टकस्य तु नादनामैकाक्षरावयवत्वम्, **'हल्लेखात्रयसंभूतैस्तिथिसंख्यैस्तथाऽक्षरैः'**(७।६५) इत्यादिज्ञापकात् । अक्षराष्टकत्वमपि सम्भवतीति तु **वरिवस्यारहस्य**व्याख्यायां विस्तरः । महाबिन्दुस्तु देह एव न मन्त्रे । एवमेतेष्वेकोनविंशतौ स्थानेषु श्रीचक्रं त्रिप्रकारं पुनश्च भावयेत्, पूर्वस्थाननवके भावितान्येव चक्राण्युत्तरस्थाननवके तेनैव क्रमेण पुनश्चिन्तयेत् । पुनरपि तान्येवैकोनविंशे स्थाने महाबिन्दौ चिन्तयेदित्यर्थः ॥ २५-२६$\frac{१}{२}$ ॥

अथ तिसृणां चक्रविभावनानामधिकारिभेदेन स्थानभेदं व्यवस्थापयति–

**आज्ञान्तं सकलं प्रोक्तं ततः सकलनिष्कलम् ॥ २७ ॥**
**उन्मन्यन्ते परे स्थाने निष्कलं च त्रिधा स्थितम् ।**

अकुलाद्याज्ञान्तस्थाननवके त्रैलोक्यमोहनादिबिन्द्वन्तचक्रनवकं क्रमेण भावयेत् । अत एव ग्रहन्यासे भ्रूमध्यस्य बिन्दुस्थाने **'सुधासूतिम्'** (८।२२) इति निर्देशः करिष्यमाणः संगच्छते । तदिदं विभावनं सकलपदवाच्यम् । अत एवात्र सकलनामका अशुद्धा उपासका अधिकारिणः । तत आज्ञाचक्रानन्तरम् । इन्दुमारभ्येत्यर्थः । इन्द्वाद्युन्मन्यन्तनवके त्रैलोक्यमोहनादिबिन्द्वन्तचक्रनवकस्य क्रमेण विभावनं सकलनिष्कलमित्युच्यते । तत्र न केवलं शुद्धा नापि केवलमशुद्धा एतादृशमिश्राः प्रलयाकलनामका उपासका अधिकारिणः । परे स्थाने महाबिन्दौ । तत्रोक्तचक्रनवकस्य परस्परभेदमन्तरेण निर्विषयकसंविन्मात्रात्मककामकलैकावशेषेण विभावनं निष्कलमुच्यते । तत्र शुद्धा विज्ञानकेवलनामका उपासका अधिकारिणः । त्रिविधोपासकानां लक्षणादीनि तु **सौभाग्यभास्करे**– **'पशुपाशविमोचनी'** इति नामव्याख्यानावसरे प्रपञ्चितानि **अस्माभिः** । इयं च व्यवस्था सकलादिसंज्ञाकरणेनैव मूलकृता सूचिता, अन्यथा तासां वैयर्थ्यापत्तेः, उत्तरत्र व्यवहार उपयोगदर्शनात्, कलयांशेनांशांशिभावघटकभेदमानेन स्थूलमालिन्येन सहितं सकलमित्यादिव्युत्पत्तिभिरशुद्धमिश्रशुद्धाधिकारिकत्वस्य यौगिकवृत्त्याऽपि स्फोरणाच्च । सकलादिपदान्येव वा सकलाधिकारिकमित्याद्यर्थपराणि न संज्ञापराणीति मन्तव्यम् । त्रिधा स्थितं पूर्वं यत्त्रैविध्यमुक्तं तदनया रीत्या व्यवस्थितमित्यर्थः । अयं च **श्रीमुखागम**लब्धोऽर्थो

मूलारूढीकरणेन विशदीकृतः । येषां तु मते विषुसंज्ञत्वमकुलविशेषणम्, तदनुयायिनस्तावदिन्दौ सर्वानन्दमयचक्रस्य सकलभावनं त्रैलोक्यमोहनचक्रस्य मिश्रभावनं चेत्युभयोरेकमेव स्थानमाहुः, अन्यथा तेषां निष्कलभावनाया अनवकाशापत्तेः । परं त्वाज्ञान्तं सकलमितिमूलविरोधः कथं परिहार्यः । इदं तु तैः सुवचम्–आज्ञाया अन्त आज्ञान्त इन्दुः । आज्ञान्तपदात्पूर्वमाङः प्रश्लेषः । स चाभिविध्यर्थकः । इन्दुमभिव्याप्येति पर्यवसितोऽर्थः । तत इति पदमपि नाऽऽनन्तर्यार्थकमपि तु इन्दुमारभ्येत्यर्थकम् । ल्यब्लोपे पञ्चमी । तत्पदमाज्ञान्तपरामर्शीति स्वीकारसम्भवादिति ।

**प्राञ्चस्तु**– त्रैलोक्यमोहनाद्युन्मन्यन्तान् स्थूलसूक्ष्मसूक्ष्मतरांश्चक्रभागानकुलाद्युन्मन्यन्तेषु स्थूल-सूक्ष्म-सूक्ष्मतरेषु भागेषु महाबिन्दौ च भावयेत् । तत्राकुलविषुमारभ्याऽऽज्ञान्तं चतुरस्रादित्रिकोणान्तस्थूलचक्राष्टकभावनं सकलम् । बिन्द्वाद्युन्मन्यन्तस्थानेषु बिन्दुचक्रस्य सूक्ष्म-सूक्ष्मतरभागाणां विभावनं सकलनिष्कलम् । महाबिन्दौ शून्यसंविदो भावनं निष्कलमिति वदन्ति । एतेषां मतेऽष्टांशस्थानकमेकं विभावनम्, तदवयवानामेव तु सकलादिसंज्ञात्रयमित्यभिसन्धिः । स च महाबिन्दौ पुनश्चैवमिति पुनःपदस्य सकलादिसंज्ञाकरणस्य च स्वरसविरुद्धः । एतद्भ्रममूलिकैव त्वकुले विषुसंज्ञकत्वस्य विशेषणतया योजनाय प्रवृत्तिरिति तदाकूतरहस्यम् ॥ २७-२७$\frac{१}{२}$ ॥

इदानीं बिन्द्वाद्युन्मन्यन्तानां प्रातिस्विकं स्थानाकृतिरूपकालानाह–

**दीपाकारोऽर्धमात्रश्च ललाटे वृत्त इष्यते ॥ २८ ॥**

दीपस्यैवाऽऽकारः कान्तिर्यस्य स दीपाकारः । अर्धा मात्रा यस्य सोऽर्धमात्रः । मात्रा नाम ह्रस्वस्योच्चारणकालः । स च षट्पञ्चाशदुत्तरशतद्वयलवैर्भवति । लवो नाम कालपरमाणुः ।

**'नलिनीपत्रसंहत्याः सूक्ष्मसूच्यभिवेधने ।**
**दले दले तु यः कालः स कालो लवसंज्ञितः ॥**
**अतः सूक्ष्मतमः कालो नोपलभ्यो भृगूद्वह ।'**

इति वचनात् । अत एवोक्तं **वृत्तचन्द्रोदये–'लवानां कालपीलूनां षट्पञ्चाशच्छतद्वयम् । मात्रैका........॥'** इति । तेनाष्टाविंशत्युत्तराः शतं लवा बिन्दोरनुस्वारस्य कालः, **'व्यञ्जनं त्वर्धमात्रिकम्'** इति वचनात् । ललाटे ललाटमध्ये वृत्तो वर्तुलाकृतिः । इन्दुरिति शेषः ॥ २८ ॥

**अर्धचन्द्रस्तथाकारः पादमात्रस्तदूर्ध्वतः ।**
**ज्योत्स्नाकारा तथाऽष्टांशा रोधिनी अस्रविग्रहा ॥ २९ ॥**

तथा स्वनामसमानावेवाऽऽकारौ कान्त्याकृती यस्य सः । कान्त्याकृत्या नाम्नाऽप्यर्धचन्द्र इत्यर्थः । तथा दीपवदाकारो यस्येति तु **केचित्** । पादमात्रश्चतुःषष्टिलवकालोच्चार्यः । तदूर्ध्वतो बिन्दोरुपरि । इदं च पदमुन्मनान्ते । शब्दो (शब्दाः? ) विकारन्यायेनानुवर्तन्ते । ज्योत्स्नाकारा चन्द्रिकाकान्तिः । अष्टांशा द्वात्रिंशल्लवकाला । सम्प्रदायाच्छक्तिरूपोऽस्रस्त्रिकोणो विग्रहो देहो यस्याः । अश्रिशब्दवदस्रशब्दोऽपि रुधिराश्रुणोरिव कोणेऽपि निरूढः । तेन सुप्रातसुश्वेत्यादिसूत्रे चतुरस्रपदस्येवास्रपदस्य निपातनाभावेऽप्यदोषः । रोधिनीनामनिर्वचनं **तन्त्रान्तरे**–

**ब्रह्मादिपरमेशानां परप्राप्तिनिरोधनात् ।**
**निरोधिनीति सा प्रोक्ता..............।।'**

इति ।। २९ ।।

**बिन्दुद्वयान्तरे दण्डः शेवरूपो मणिप्रभः ।**
**कलांशो द्विगुणांशश्च नादान्तो विद्युदुज्ज्वलः ।। ३० ।।**

दण्डवदूर्ध्वाधोवितता रेखा, तद्दक्षिणोत्तरपार्श्वयोः संलग्नौ द्वौ बिन्दू । स च दण्डः शेवरूपः । शेवो नाम गोधूमपिष्टविकारः केशाकारः पायसादिसाधनतया प्रसिद्धः । तद्वत्सूक्ष्मो मृदुश्चेत्यर्थः । वृषणद्वयमध्यवर्तिनी शिरा शेव इत्**यन्ये** । मणिप्रभः सम्प्रदायात् पद्मरागमणिकान्तिः । **'पद्मकिञ्जल्कसंकाशः सूर्यकोटिसमप्रभः'** इति तु **तन्त्रान्तरे** । कलांशो मात्रायाः षोडशांशः । अंशशब्द एव वेहत्यो लवपरः, तेन षोडशलवकाल इत्यर्थः । नाद इति विशेष्यस्याध्याहारः । कलांशपदस्यैवाऽऽवृत्त्या कलश्चासावंशश्चेति विग्रहेण विशेष्यलाभः । **'ध्वनौ तु मधुरास्फुटे कलः** इत्य**मर** ईति **केचित्** । नादान्तस्तु द्विगुणांशः कलाद्विगुणमात्रांशांशो द्वात्रिंशोऽष्टलवात्मककालोच्चार्य इति यावत् ।। ३० ।।

**हलाकारस्तु सव्यस्थबिन्दुयुक्तो विराजते ।**
**शक्तिर्वामस्थबिन्दूद्यच्छिराकारा तथा पुनः ।। ३१ ।।**

[बिन्दुयुक्तो] बिन्दुना युक्तश्च । सव्यं दक्षिणवामयोः । उत्तरार्धे वामपदेन व्यवहारदर्शिनेनेहत्यसव्यशब्दो दक्षिणपरः । उर्ध्वाधःप्रसृत ईषादण्डः स्वभालवामभागेऽऽधोमुखाग्रलाङ्गलशुण्डः स्वभालदक्षिणभाग ईषादण्डमध्यप्रदेशे बिन्दुरीदृशाकारो नादान्त इति तु **नाथमुखा**वगतोऽर्थः । बिन्दुद्वयमध्ये दक्षिणभागस्थबिन्दुसहित इति **प्राचां** वाक्यस्याऽऽशयश्चिन्त्यः । नादस्यान्तो लयो यत्र स नादान्तः, **'नाड्यां ब्रह्मबिले लीनस्त्वव्यक्तध्वनिलक्षणः'** इत्यादि **तन्त्रान्तरा**त् । एतदुत्तरम्– **'बिन्दुर्वृत्तात्मको देवि सर्गो बिन्दुद्वयात्मकः'** इत्यर्धं **क्वचित्**पुस्तकेषूपलभ्यते ।

तस्यायमर्थः– बिन्द्वादिनवकशरीरघटका यावन्तो बिन्दव एकैक उच्यन्ते ते सर्वे कामाख्यमुखहृद(द्)बिन्दुरूपा यावन्ति बिन्दुद्वया[नि] उच्यन्ते तानि सर्वाणि सितशोणविसर्गरूपाणीति वासना ज्ञेयेति । दक्षिणोत्तरयोर्बिन्दुद्वयम् । तत्र वामबिन्दोः शिरस्यूर्ध्वरेखा । ईदृशः शक्त्याकारः । वामस्थबिन्द्वित्यनेन दक्षिणबिन्द्वन्तरस्याऽऽक्षेपः । वामस्थबिन्दोः सकाशादुद्यन्त्या ऊर्ध्वं गच्छन्त्याः शिराया इवाऽऽकारो यस्या इति विग्रहः । इत आरभ्य रूपकालानुत्तरत्र वक्ष्यति ॥ ३१ ॥

**व्यापिका बिन्दुविलसत्त्रिकोणाकारतां गता ।**
**बिन्दुद्वयान्तरालस्थऋजुरेखामयी पुनः ॥ ३२ ॥**

शक्तित्रिकोणस्य स्वाभिमुखकोणे बिन्दुलेखनेन व्यापिकाया आकारो भवतीति **सम्प्रदायः** । ऊर्ध्वादधःप्रसृता रेखा तच्छिरोमूलभागयोः संलग्नौ बिन्दू, ईदृशी समनेत्युत्तरश्लोकस्थेनान्वयः । अन्तरालस्थऋजुरेखेत्यत्र 'ऋत्यकः' इति प्रकृतिवद्भावः ॥ ३२ ॥

**समना बिन्दुविलसद् ऋजुरेखा तथोन्मना ।**
**शक्त्यादीनां वपुः स्फूर्जद् द्वादशादित्यसन्निभम् ॥ ३३ ॥**

बिन्दोः शिरस्यूर्ध्वरेखा लेख्या । सोऽयमुन्मनाया आकारः । समनायाः शिरस्थितबिन्दोरपनये उन्मना भवतीति यावत् । अत एव समनातोऽतिसूक्ष्मत्वादुत्क्रान्तमनस्का । योगिनामपि मनसा सङ्कटेन गम्येति भावः । समनादयः शब्दाः पृषोदरादित्वादेव साधवः । शक्त्यादीनामुन्मनान्तानां चतसृणां द्वादशसूर्यसमुच्चितकान्तिमन्ति वपूंषि ॥ ३३ ॥

**चतुःषष्टिस्तदूर्ध्वं तु द्विगुणं द्विगुणं ततः ।**
**शक्त्यादीनां तु मात्रांशो मनोन्मन्यास्तथोन्मनी ॥ ३४ ॥**

नादान्तपर्यन्तं कालः पूर्वमुक्तः । तदूर्ध्वं नादान्तोर्ध्वं शक्त्यादीनां मध्ये प्रथमस्येत्यर्थः । चतुःषष्टिश्चतुःषष्टितमो मात्रांशः, चतुर्लवात्मकः शक्तेः काल इत्यर्थः । तत(तः) शर(क्त्य)नन्तराणां तु द्विगुणं द्विगुणमिति वीप्सया पूर्वपूर्वद्विगुणांशो मात्राकाल इत्यर्थः । ततश्च व्यापिकाया द्वौ लवौ, समनाया एको लवः । उन्मनायास्तु लवार्धात्मकः कालः प्रसक्तस्तमपवदति–मनोन्मन्या इति । मनोन्मनीति समनाया एव संज्ञान्तरम् । यथा समनायाः कालस्तथैवोन्मनीकाल इत्यर्थः । एकलवात्मक एव काल इति यावत् । समनातोऽस्या रूपकालकलामानमिति तत्तु समनात आकृत्या सूक्ष्मत्वाद् विद्यमानोऽपि कालो दुर्लक्ष्य इत्येवंपरम् । अत एव मूले– **'देशकालानवच्छिन्नं तदूर्ध्वं परमं महत्'** (६/३५) इत्यनेनैतदूर्ध्वमेव कालानवच्छेद उक्तः संगच्छते ।

**प्राञ्चस्तु**–द्विगुणं द्विगुणमिति न वीप्सा, किं तु शक्तेरूर्ध्वं व्यापिकायां द्विगुणं ततो व्यापिकानन्तरं समनायां द्विगुणमिति प्रत्येकमन्वितं पदद्वयम्, मनोन्मन्या इत्यस्य समनापर्यन्तानामित्यर्थः । तच्च शक्त्यादीनामित्यस्य विशेषणम् । ततश्चोन्मनाया इह कालविधिर्नास्त्येव । तथोन्मनी । यथेदानीमियमकथितविशेषणा तथैव निराकारा निरुच्चारा चेति यावदित्याहुः । तदिदं मनोन्मन्यास्तथोन्मनीति चरणस्य वैयर्थ्येन क्लिष्टलापनेन च कलुषितमुपरितनश्लोकस्वारस्यविरुद्धं चेत्युपेक्षितम् । किं च, उत्तरपटले विद्यायां पञ्चदशस्वरान् प्रतिपाद्य **'स्वरव्यञ्जनभेदेन सप्तत्रिंशत्प्रभेदिनी'** (७/३३) इत्युक्त्वा नादत्रयेण सह सप्तत्रिंशत्ता विवेचयिष्यते, तेन ज्ञापकेन नादस्य पञ्चदशस्वरबहिर्भूतस्य व्यञ्जनत्वे सिद्धे **'व्यञ्जनं त्वर्धमात्रिकम्'** इति वचना-दष्टाविंशत्यधिकशतलवात्मकताऽपि ज्ञापितैव । नादावयवस्योन्मनायाः कालाभावे त्वेकलवन्यूनतापत्त्या तद्विरोध इति समनोन्मनयोः समानः काल इत्येव व्याख्या युक्तेति मन्तव्यम् । किं च, उन्मन्यां नादलयः कालविषुवमिति वक्ष्यते, तस्याः कालाभावे तत्संज्ञास्वारस्यविरोधः, तस्य पदस्य कालव्याप्तिमदर्थकत्वात् ॥ ३४ ॥

**देशकालानवच्छिन्नं तदूर्ध्वं परमं महत् ।**
**निसर्गसुन्दरं तत्तु परानन्दविघूर्णितम् ॥ ३५ ॥**

तदूर्ध्वमुन्मनाया ऊर्ध्वदेशोपलक्षितं महाबिन्दुस्थानमिति यावत् । तद्देश-कालाभ्यामनवच्छिन्नं तत्कृतावच्छित्तिरहितम् । अत एव तदूर्ध्वमिति देशकथनं देशस्योपलक्षणपरतया व्याख्येयम् । निसर्गसुन्दरं स्वभावत एव चारु । परानन्देन शिवशक्तिसामरस्यात्मकेन विघूर्णितं व्याप्तम् ।

**प्राञ्चस्तु**–महाबिन्दोः स्थानस्वरूपादिकमिह तन्त्रे नोक्तमेव, तस्य विश्वोत्तीर्णत्वेन वाङ्मनसागोचरत्वात् । तेन तदूर्ध्वं पदं हादिविद्यास्थहकारादिमहाबिन्द्वन्ताक्षरस्थान-समूहोर्ध्वमित्यर्थकम् । त्रिविधभावनास्थलेभ्योऽप्यूर्ध्वस्थानस्यैव मुक्तिरिति व्याचक्षते । तत्सन्दर्भविरुद्धं विश्वोत्तीर्णादपि यत्परतस्तत्र वाङ्मनसयोः कथं प्रवृत्तिरिति विचार्यं च । अत्रेन्द्वादिमहाबिन्द्वन्तस्थाननिष्ठदेवतानां तत्तल्लोकानां तत्तत्कलानां च विस्तारः **प्राचां** टीकातोऽवसेयः ॥ ३५ ॥

अथेदानीं प्राथमिकविस्तृतवासनावसरेऽनुक्तत्वेनावशेषितां ब्रह्माण्डपिण्डाण्ड-योरैक्यभावनादार्ढ्यसिद्धिमदुत्तमाधिकारिकत्वध्वननाय सकलादिभावनात्रयोत्तरमेव वर्णयितुं सङ्गतां मध्यत्रिकोणवासनां विस्तरेणोपदिशति आत्मनः स्फुरणमित्यादिभि-र्विंशत्या श्लोकैः–

**आत्मनः स्फुरणं पश्येद्यदा सा परमा कला ।**
**अम्बिकारूपमापन्ना परा वाक् समुदीरिता ॥ ३६ ॥**

पूर्वं **'यदा सा परमा शक्तिः'** (६/९) इति श्लोके या वृत्तिरीक्षणात्मिका शान्तानाम्नी विश्वकारणत्वेन वर्णिता, तया हि शब्दार्थसृष्टिद्वयमुत्पाद्यते । तत्रार्थ-

सृष्टेर्ब्रह्मविष्णुरुद्राः कारणानि । त एव शक्तिं विना कार्याक्षमत्वाच्छक्तिविशिष्टतया विभाव्यमाना वामाज्येष्ठारौद्र्य इत्युच्यन्ते । तच्छक्तयस्तु भारतीपृथिवीरुद्राणीत्वेन प्रसिद्धा इच्छा ज्ञाना क्रिया इत्युच्यन्ते । शब्दसृष्टेः कारणानि पश्यन्तीमध्यमावैखर्यः । कारणानामपि कारणमीक्षणम् । ततश्चेक्षण इच्छादित्रयसमष्टित्ववद्वामादित्रय-समष्टित्वं पश्यन्त्यादित्रयसमष्टित्वं च वक्तव्यमेव, कारणत्वसमष्टित्वयोरनतिभेदात्, पत्रपुष्पफलशाखादिसूक्ष्मरूपसमष्टेरेव वटबीजत्वात् । ततश्चैकस्यामेवेक्षणवृत्ता-विच्छादित्रयजनकत्वं प्रवृत्तिनिमित्तीकृत्य यथा शान्तापदप्रवृत्तिस्तथा सैव वृत्तिर्वा-मादित्रयजनकत्वाद् अम्बिकापदवाच्यत्वमप्यापन्ना, पश्यन्त्यादित्रयजनकत्वं शक्यता-वच्छेदकीकृत्य परापदेनाप्युदीरिता । तादृशवृत्त्याश्रयभूता देव्यपि वृत्तिं प्रति परिणाम्युपादानत्वात् परिणामपरिणामिनोरभेदाच्छान्तादिपदैर्व्यवह्रियत इत्यर्थः । अत्र परमेतिपदं शान्तापरमिति **केचित्** ॥ ३६ ॥

**बीजभावस्थितं विश्वं स्फुटीकर्तुं यदोन्मुखी ।**
**वामा विश्वस्य वमनादङ्कुशाकारतां गता ॥ ३७ ॥**
**इच्छाशक्तिस्तदा सेयं पश्यन्ती वपुषा स्थिता ।**

बीजभावो बीजत्वं तद्धर्मावच्छिन्नतया स्थितं स्वगर्भान्तर्भूतं **'बीजावधानम्'** इति **शिवसूत्रे, 'स्फुरत्तात्मा पराशक्तिर्बीजं विश्वस्य कारणम्'** इति टीकाकारोक्तं रूपं विश्वं स्फुटीकर्तुं कार्यत्वावच्छिन्नतया स्थापयितुं बहिर्निःसारयितुं यदोन्मुख्युद्युक्ता विश्वं निःसारितवतीति यावत् । तदा सैव शक्तिर्विश्ववमनकर्तृत्वाद्वाऽङ्कुशवद्वक्ररूपत्वाद्वा वामेत्युच्यते । वमनक्रियादशायां हि तत्कर्तृकर्मकारकयोर्योगादङ्कुशाकारता भवति । ततश्च वामापदस्येष्टसृष्टिजनकत्वं तादृशसृष्टिव्याप्यवक्रत्वविशेषो वा शक्यता-वच्छेदक इत्यर्थः । वस्तुतस्त्वङ्कुशाकारत्वकथनं त्रिकोणस्य वामरेखोपलक्षकम्, ततश्च वामादिदेवीरूपतया वामरेख्या(खां) भावयेदिति भावः । एवं सृष्टिजनकत्वं वा जनकतासम्बन्धेन सृष्टिरेव वेति विनिगमनाविरहादुभयस्यापि शक्यतावच्छेदकत्वे सिद्धे सृष्टिं प्रवृत्तिनिमित्तीकृत्य वामापदस्य ब्रह्मापरपर्यायस्य प्रवृत्तिः । जनकत्वरूप-सामर्थ्यात्मिकां शक्तिं प्रवृत्तिनिमित्तीकृत्य तु पितामहशक्तिभारतीपर्यायेच्छापदस्य प्रवृत्तिः । शब्दसृष्टिजनकत्वात्तु पश्यन्तीपदस्यापीत्यर्थः ॥ ३७-३७$\frac{१}{२}$ ॥

**ज्ञानशक्तिस्तथा ज्येष्ठा मध्यमा वागुदीरिता ॥ ३८ ॥**
**ऋजुरेखामयी विश्वस्थितौ प्रथितविग्रहा ।**

स्थिताविति निमित्तसप्तमी, **'चर्मणि द्वीपिनं हन्ति'** इतिवत् । उत्पन्नस्य विश्वस्य स्थितिं प्रवृत्तिनिमित्तीकृत्य विष्णुपर्यायज्येष्ठापदस्य तच्छक्तिपृथिवीपर्यायज्ञानशक्ति-पदस्य शब्दस्थितिं निमित्तीकृत्य मध्यमापदस्य च पूर्ववत्प्रवृत्तिः । कार्यस्य

कारणाद्बहिःप्रसरणक्रिये इव हि चक्रे प्रसृतस्तापसरणावधि कञ्चित्कालमवस्थानं त्वृजु । अतो ज्येष्ठाज्ञानामध्यमास्त्रिकोणस्य ऋजुरेखामय्यो भावनीयाः । स्थितौ निमित्ते प्रथिता ज्ञानादिशब्दवाच्यतामापन्ना विग्रहा विभिन्नतत्तद्धर्मावच्छिन्न-शरीराणि यस्याः सेत्यर्थः ॥ ३८-३८$\frac{१}{२}$ ॥

**तत्संहृतिदशायां तु बैन्दवं रूपमास्थिता ॥ ३९ ॥**
**प्रत्यावृत्तिक्रमेणैव शृङ्गाटवपुरुज्ज्वला ।**
**क्रियाशक्तिस्तु रौद्रीयं वैखरी विश्वविग्रहा ॥ ४० ॥**

सैव शक्तिर्बिन्द्वात्मकरूपात् सृष्ट्यात्मना निर्गत्य स्थित्यात्मना कञ्चित्कालं स्थित्वा पुनर्बैन्दवं रूपमास्थातुमुद्युक्ता यदा परावर्तते तदा विश्वसंहारदशां निमित्तीकृत्य पूर्ववद्रौद्री क्रिया वैखरीति पदानि तस्यां प्रवर्तन्ते । तादृशपदवाच्यदेवीत्वेन सृष्टिरेखोत्पत्तिस्थानाभिमुख्येन परावृत्तदक्षिणरेखां भावयेत् । तेनैकैव देवी नानाधर्म-वैशिष्ट्येन भिन्ना सती रेखात्रयात्मकशृङ्गाटवपुषा त्रिकोणदेहेन श्रीचक्रे शोभत इत्यर्थः । यथा हि लिपिसङ्केतितरेखाभिः ककारादिवर्णानां तैश्च तदर्थानां स्मरणं तथा त्रिकोणरेखाभिः सृष्ट्यादिकृत्यानां तत्कर्तृदेवीनां च स्मरणं यथा भवति तथा दृढमभ्यस्य पूजयेदिति तु पर्यवसितोऽर्थः ॥ ३९-४० ॥

एवं त्रिकोणस्य वामपूर्वदक्षरेखास्तिस्रो बिन्दुरेक इत्येवं चतुर्णां क्रमेणेच्छाज्ञाना-क्रियाशान्ता वामाज्येष्ठारौद्र्यम्बिकाः पश्यन्तीमध्यमावैखरीपराश्चतस्रश्चतस्रो देवता इत्येवं वासनात्रयं तन्त्रेण सङ्कलितमुक्तम् । इदानीमनेनैव क्रमेण वासनान्तराणि पार्थक्येनाऽऽह–

**वासनाद्विश्वरूपस्य स्वरूपे बाह्यतोऽपि च ।**
**एताश्चतस्रः शक्त्यस्तु का पू जा ओ इति क्रमात् ॥ ४१ ॥**
**पीठाः कन्दे पदे रूपे रूपातीते क्रमात्स्थिताः ।**

यादृशी सृष्टिर्ब्रह्माण्डात्मिका तादृश्येव च स्वदेहरूपाऽपि, ब्रह्माण्डस्यापि विराट्संज्ञकजीवविशेषशरीरत्वात् । अतोऽस्मदादिशरीरस्य तच्छरीरस्य चैकैव प्रक्रिया । अल्पत्वमहत्त्वमात्रकृत एव तु भेदः । अत एवास्मच्छरीरस्यापि चतुर्दशलोकात्मकत्वं महाषोढान्तर्गते भुवनन्यासे प्रसिद्धम् । ततश्चैताभिश्चतसृभिरेव शक्तिभिर्विश्वस्य सम्पूर्णस्य सृष्ट्यादिकृत्यत्रयविषयत्वेन प्रकटनादेता एव बाह्यसृष्टौ स्वरूपसृष्टौ च वर्तन्ते । तत्र बाह्यसृष्टौ कामरूपं पूर्णगिरिर्जालन्ध्रमोड्यानमिति पीठा एतद्देवीरूपा लौहित्यनदादितटेषु विद्यमानाः **कालिकापुराणा**दिषु वर्णिताः प्रसिद्धा एव । शरीरे त्वाह---कन्द इति । कन्दः सुषुम्णामूलं तेन मूलाधारं लक्ष्यते । पदं

हंसस्तेन हृदयम् । रूपं बिन्दुस्तेन भ्रूमध्यम् । रूपातीतं निष्कलं तेन ब्रह्मरन्ध्रम् । तदुक्तं **स्वच्छन्दसंग्रहे**--

**'कन्दः कुण्डलिनीशक्तिः पदं हंसः प्रकीर्तितः ।**
**रूपं बिन्दुरिति ख्यातं रूपातीतं तु निष्कलम् ॥'**

इति । तत्तत्स्थानेषु कामरूपादयश्चत्वारः पीठा इत्यर्थः । का पू जा ओ इत्येकैकमक्षरमेकैकपीठनामैकदेशः । तस्य स्फुटत्वेन ज्ञानाय सन्ध्यभावः । शक्तय इत्यत्र मध्याकारलोपो वृत्तानु[गत]र(म)पि यच्छन्दोव्याकरणयोर्विरोधे छन्दो बलीय इति परिभाषायाः 'सोऽचि लोपे चेत्' इति सूत्रे **पाणिनि**ना, 'इयादिपूरणे' इति सूत्रे **पिङ्गले**न च ज्ञापितत्वादिति तु **छन्दःकौस्तुभे** वर्णितम**स्माभिः** । कर्तरि क्तिचि कृदिकारादिति ङीष्वा विधेयः ॥ ४१-४१$\frac{१}{२}$ ॥

एत एव पीठाः क्रमेण क्षितिपवनजलाग्निमण्डलरूपा इति ध्वनयन्नाह--

**चतुरस्रं तथा बिन्दुषट्कयुक्तं च वृत्तकम् ॥ ४२ ॥**
**अर्धचन्द्रं त्रिकोणं च रूपाण्येषां क्रमात्त्विति ।**
**पीतो धूम्रस्तथा श्वेतो रक्तो रूपं च कीर्तितम् ॥ ४३ ॥**

भूतत्त्वं चतुरस्रं पीतवर्णं कामरूपपीठात्मकम्, वायुतत्त्वं त्वभितः षड्बिन्दुलाञ्छितं वर्तुलं धूम्रवर्णं पूर्णगिरिपीठाभिन्नम्, जलतत्त्वमर्धचन्द्राकारं श्वेतं जालन्ध्रपीठात्मकम्, अग्नितत्त्वं त्रिकोणं रक्तमोड्यानपीठरूपमित्यर्थः ॥ ४२-४३ ॥

अथ तत्तत्पीठस्थितानि लिङ्गानि सविशेषणान्याह--

**स्वयम्भु बाणलिङ्गं च इतरं च परं पुनः ।**
**पीठेष्वेतानि लिङ्गानि संस्थितानि वरानने ॥ ४४ ॥**
**हेमबन्धूककुसुमशरच्चन्द्रनिभानि तु ।**
**स्वरावृतं त्रिकूटं च महालिङ्गं स्वयम्भुकम् ॥ ४५ ॥**
**कादितान्ताक्षरवृतं बाणलिङ्गं त्रिकोणकम् ।**
**कदम्बगोलकाकारं थादिसान्ताक्षरावृतम् ॥ ४६ ॥**

अत्र लिङ्गानीतिपदेन लीनमर्थं गमयतीति व्युत्पत्त्या मनोबुद्ध्यहङ्कारचित्तानि चित्स्फुरणाधारत्वादुच्यन्ते । त्रिकोणस्याग्रदक्षवामकोणेषु मध्ये चैतानि चत्वारि लिङ्गानि भावनीयानीति वृद्धाः । हेमवर्णं पीतं बन्धुजीवपुष्पवर्णं रक्तम् । स्वरावृतं षोडशस्वरयुक्तम् । त्रिकूटं शिखरत्रयवत् । बिन्दुत्रयात्मककूटवदित्यन्ये । स्पष्टमन्यत् ॥ ४४-४६ ॥

एवं लिङ्गत्रयस्वरूपमुक्त्वा परलिङ्गस्वरूपमाह--

**सूक्ष्मरूपं समस्तार्णवृतं परमलिङ्गकम् ।**
**बिन्दुरूपं परानन्दकन्दं नित्यपदोदितम् ॥ ४७ ॥**

सूक्ष्मेति । सूक्ष्मरूपमुक्तलिङ्गत्रयसमष्टिरूपम्, बिन्दुरूपं बैन्दवचक्रवासनात्मकम् । परानन्दकन्दं पराया मातृकायाः सारभूतम्, पदोदितं पदाद् मुमुक्षुचित्तादुदितमिति तु **प्राञ्चः** । वस्तुतस्तु रूपातीतस्थानीयस्यापि परलिङ्गस्य स्वयंभ्वादिसमष्टिरूपता-द्योतनाय तत्तल्लिङ्गसाधारणाधारेषु कन्दपदबिन्दुष्वप्यसाध्योदयोऽस्तीति कथयितुं बिन्दुरूपादिविशेषणत्रयमिति व्याख्येयम् ॥ ४७ ॥

**बीजत्रितययुक्तस्य सकलस्य मनोः पुनः ।**
**एतानि वाच्यरूपाणि कुलकौलमयानि तु ॥ ४८ ॥**
**जाग्रत्स्वप्नसुषुप्त्याख्यतुर्यरूपाण्यमूनि तु ।**

एतानि चत्वारि लिङ्गानि बीजत्रितयेन कूटत्रयेण युक्तस्य सकलस्य त्रयोदशाक्षरस्य तुर्यस्य मनोर्वाच्यरूपाणि वाच्यवाचकयोरभेदात्तदभिन्नानीति **प्राञ्चः** । वस्तुतः सकलशब्देन पञ्चदशाक्षर्येव वक्तुं युक्ता । पूर्वतन्त्रे प्रत्येकं बीज-साधनान्युक्त्वा सम्पूर्णमन्त्रसाधनकथनपरे ग्रन्थेऽस्या एव ग्रहणाच्च, तुर्यविद्याया अनुद्धारेणाप्रकृतत्वाच्च, बीजत्रितययुक्तस्येति विशेषणस्वारस्याच्च । तेन प्रत्येक-साधनानां प्रातिस्विकं तिस्रो वासनाः, पञ्चदशीसाधकस्य तु त्रितयसमष्टित्वेन चतुर्थी वासनेति ध्येयम् । कुलं सजातीयसमूहः । **'सजातीयैः कुलं यूथम्'** इति **अमरः** । साजात्यं चैकज्ञानविषयत्वेन । तेन मातृमानमेयानीत्यर्थः । कौलं तत्समष्टिः । तन्मयानि तदभिन्नानि । एवं जाग्रदाद्यवस्थारूपाणि । अवस्थालक्षणानि तु **शिव-सूत्रा**दिषु द्रष्टव्यानि ॥ ४८-४८$\frac{१}{२}$ ॥

एवं सम्पूर्णचक्रवासनामुक्त्वा तदधिष्ठिताया देव्या वासनामाह–

**अतीतं तु परं तेजः स्वसंविदुदयात्मकम् ॥ ४९ ॥**
**स्वेच्छाविश्वमयोल्लेखखचितं विश्वरूपकम् ।**
**चैतन्यमात्मनो रूपं निसर्गानन्दसुन्दरम् ॥ ५० ॥**

अतीतं तं बिन्दुमतिक्रम्य स्थितम् । परं तेजस्तेजसां प्रकाशकानामपि सूर्यादीनां मनोन्तानां प्रकाशकम्, **'ज्योतिषां ज्योतिः'** इति **श्रुतेः** । स्वसंवित्स्वेतराविषयकं ज्ञानम् । उदयात्मकमुदयैकस्वरूपं षड्भावविकाररहितम् । स्वेच्छयैवेक्षणवृत्तिमात्रेणैव सामग्र्य-

न्तरमनपेक्ष्यैवेति यावत् । विश्वमयोल्लेखो जगदात्मकं चित्रं तेन खचितम् । तदुक्तम् **अभियुक्तैः** –

**'निरुपादानसम्भारमभित्तावेव तन्वते ।**
**जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥'**

इति । विश्वरूपकं सर्वात्मकं चैतन्यमात्मनो रूपं **'चैतन्यमात्मा'** इति **शिवसूत्रे** प्रसिद्धं रूपं निसर्गानन्दः स्वाभाविकानन्दो न तु विषयसम्पर्कोदितः, तेन सुन्दरं रमणीयम् ॥ ४९-५० ॥

**मेयमातृप्रमामानप्रसरैः संकुचत्प्रभम् ।**
**शृङ्गाटरूपमापन्नमिच्छाज्ञानक्रियात्मकम् ॥ ५१ ॥**

मेयादिचतुष्टयात्मना परिणतत्वेन व्ययितत्वादीषत्संकुचिततेजस्कम् । तथा च **श्रुतिः– 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि'** इति । शृङ्गाटं त्रिकोणरेखात्रयं तद्देवतासमूहश्च । एतेनैव लब्धत्वादिच्छाज्ञानक्रियेत्यनेन तत्समष्टिरूपो बिन्दुरुच्यते । तेन यानि वामादिचतुष्टयानि पूर्वमुक्तानि तानि सर्वाण्यस्या एव रूपाणीत्युक्तं भवति ॥ ५१ ॥

**विश्वाकारप्रथाधारनिजरूपशिवाश्रयम् ।**
**कामेश्वराङ्कपर्यङ्कनिविष्टमतिसुन्दरम् ॥ ५२ ॥**

विश्वात्मना प्रथा परिणामस्तस्याऽऽधारः परिणाम्युपादानं निजं स्वीयमेव परिणामितावच्छेदकं रूपं तदात्मको यः शिवः स एवाऽऽश्रयो यस्य तत् । शिवविशिष्टशक्तेरेव जगत्कारणत्वाच्छिवस्य कारणतावच्छेदकत्वमिति भावः । स शिव एव कामकलान्तर्गतः कामाख्यो बिन्दुरिति द्योतनद्वारा शक्तेस्तदाश्रितत्वस्वरूप-निष्कर्षभानाय तदेव पुनः पदान्तरेणाऽऽह–कामेति । अङ्कस्य पर्यङ्कत्वोक्ति-रप्यानन्दशयनाधारत्वध्वननद्वारा कामाङ्कयन्त्रणविशेषं ध्वनयति । अत एवाति-सुन्दरमित्युक्तमिति रहस्यम् ॥ ५२ ॥

**इच्छाशक्तिमयं पाशमङ्कुशं ज्ञानरूपिणम् ।**
**क्रियाशक्तिमये बाणधनुषी दधदुज्ज्वलम् ॥ ५३ ॥**

इच्छाया एवाऽऽशातृष्णारागादिपर्यायत्वेन बन्धसाधनत्वात् पाशरूपता । तदुक्तम् **अभियुक्तैः** –

**'आशा नाम नृणां काचिदाश्चर्यमयशृङ्खला ।**
**यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ॥'**

इति । ज्ञानं विषयाच्चित्तस्य निवारकत्वादङ्कुशस्तन्निवारणं च विषयवैराग्यं विना न सम्भवति । तच्च द्वेष एव । **'विरक्तिर्विषयद्वेष'** इति वचनात् । तेन यत्पूर्वपटलान्ते–

**'पाशाङ्कुशौ तदीयौ तु रागद्वेषात्मकौ स्मृतौ ।**
**शब्दस्पर्शादयो बाणा मनस्तस्याभवद्धनुः ॥'** (५/४१-४२)

इत्युक्तं तदविरुद्धम्, बाणधनुषोः संयोजनक्रियायाः शब्दादिविषयमनोयोगरूप-क्रियायाश्चैकरूपत्वान्न पूर्वोत्तरोक्तवासनयोर्विरोधः ॥ ५३ ॥

**आश्रयाश्रयिभेदेन अष्टधा भिन्नहेतिमत् ।**
**अष्टारचक्रसंरूढं नवचक्रासनस्थितम् ॥ ५४ ॥**

आश्रयः कामेश्वरस्तस्य न पार्थक्येन पूजा तदायुधानां तु देव्यायुधैः सह सम्मे-लनेन पूजेति ध्वनितम्, कामेश्वरायुधवैशिष्ट्येनापि त्रिपरसुन्दर्या एव निर्देशात् । तस्या एव शृङ्गाररूपतोक्तेस्तद्रीत्याऽष्टारचक्रे संरूढत्वं बिन्दुचक्रातीतत्वेन तु रूपेण नवचक्रीरूप आसने स्थितत्वम् ॥ ५४ ॥

एवंप्रकारेण सम्पूर्णस्य चक्रस्य देव्याश्चोक्तां वासनामुपसंहरन्नावरणदेवतानां वासनामुपदिशति–

**एवंरूपं परं तेजः श्रीचक्रवपुषा स्थितम् ।**
**तदीयशक्तिनिकरस्फुरदूर्मिसमावृतम् ॥ ५५ ॥**

एवमुक्तप्रकारेण परं तेज एव चक्रशरीरकमभूत् । तदीयानां चक्रसम्बन्धिनीनां शक्तीनामणिमादीनां निकरात्मना स्फुरन्तीभिरूर्मिभिरत एव कामेश्वरीसरस्वत्य-भिन्नाभिः समावृत्तम्, भावयेदिति शेषः । अत्र **वासनासुभगोदया**दिग्रन्थेषु **तन्त्रराजा**दि**तन्त्रान्तरेषूपनिषत्सु** च बहुविधा वासना उपलभ्यन्ते, ताः सर्वा यद्यपि सर्ववेदान्तप्रत्ययाधिकरणन्यायेन ब्रह्मविद्याया भेदाभावादुपसंहर्तुं **प्राचां** टीकाकाराणां [व्याख्यानं तथाऽपि] ग्रन्थविस्तरैकफलकमित्युपेक्षितमस्**माभिः** ॥ ५५ ॥

अथेदानीं प्रत्यावरणं भेदेन पूजनीयानां दशमुद्राणां वासना उपदिदिक्षुर्मुद्रापदं निर्वक्ति–

**चिदात्मभित्तौ विश्वस्य प्रकाशामर्शने यदा ।**
**करोति स्वेच्छया पूर्णविचिकीर्षासमन्विता ॥ ५६ ॥**
**क्रियाशक्तिस्तु विश्वस्य मोदनाद् द्रावणात्तदा ।**

यदा तावच्चिच्छक्तिः स्वात्माभिन्नायां भित्तावधिकरणे स्वेच्छया पूर्वोक्तेक्षणानन्तरं विकारान्पूर्णानिच्छन्ती विश्वमयोल्लेखस्य प्रकाशामर्शने करोति । तथा च

**शक्तिसूत्रम्**– **'स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति'** इति । अत्र स्वेच्छयेतिपद-मुपादानादिनैरपेक्ष्यपरत्वेन **तद्भाष्ये** व्याख्यातम् । तच्चेक्षणमात्रेणेत्यत्रैव पर्यवसितम् । तदा सैव क्रियाशक्तिर्भूत्वा विश्वस्य मोदनद्रावणरूपधर्मद्वयविशिष्टा सती मुद्राख्या भवतीत्युत्तरार्धस्थितपदद्वयापकर्षेणान्वयः ।

अयं भावः– विश्वस्य हि षड्भावविकारा **यास्का**दिभिः परिगणिताः– अस्ति, जायते, वर्धते, विपरिणमतेऽपक्षीयते, नश्यतीति । तेषु प्रथमः सत्तारूपो भावविकारो विश्वस्य सार्वकालिकः, प्रलयकालेऽपि बीजभावेन विश्वस्य सत्त्वात् । ततश्चान्ये पञ्चैव विकाराश्चिकीर्षिताः । तेषु द्वितीयो विकारा(सा)त्मको मि(वि)कारः प्रकाश इत्युच्यते, अस्फुटस्फुटीकार इति तल्लक्षणात् । तृतीयो विकार एवाऽऽमर्शनम्, इदन्तया हृदयङ्गमीभाव इति **वृद्धोक्त**तल्लक्षणस्यावयवशः साकल्येनेदमित्थमित्याकारकज्ञानविषयतावच्छेदकधर्मे पर्यवसितायां कुलाभिवृद्धावेव सामञ्जस्यात् । तथा च त्रिपुरसुन्दर्याः स्वान्तःस्थितसृष्टिसत्तापर्यालोचनोत्तरं विश्वस्य द्वितीयादिविकारविषयिणीच्छोत्पद्यते । सेयं विचिकीर्षा । न च विकारेच्छयोर्भिन्न-कर्तृकत्वेन सन्प्रत्ययानापत्तिः, सन्प्रकृतेर्व्युपसृष्टकरोतेरन्तर्भावितण्यर्थत्वात् । 'विश्वा-त्मना स्वस्या एव परिणामः' इति सिद्धान्तानुसारेण समानकर्तृकत्वस्याप्युपपत्तेर्वा । ततो विश्वस्योत्पत्त्यभिवृद्धी क्रमेण करोति । ते एते एव प्रकाशामर्शने अनुमोदते ततो विश्वं द्रावयति च । अनुमोदनं नाम स्वेतरक्रियमाणक्रियानुकूल्यम्, द्रावणं नाम घनस्य संकुचितस्य प्रशिथिलावयवताप्रसारः । सोऽयमेकरसीभूतस्य विश्वस्य षट्त्रिंशद्धाकरणात्मकः । 'तदैकरस्यं द्रावणम्' इति **वृद्धोक्त**लक्षणस्याप्यत्रैव पर्यव-साययितुं युक्तत्वात् । इत्थं चेदृशमोदनद्रावणात्मकधर्मद्वयविशिष्टोक्तरूपक्रियाशक्त्य-भिन्ना त्रिपुरसुन्दर्येव मुद्रापदवाच्येति ॥ ५६-५६$\frac{१}{२}$ ॥

अथ मुद्रासु सर्वसंक्षोभिण्या एव प्रथमावरणदर्शनीयत्वेन प्राथम्येऽपि सर्वव्यापक-त्वाद्यभिप्रायेण त्रिखण्डामुद्राया एव तृतीयपटले पूर्वं वर्णितत्वेन पूर्वक्लृप्त-क्रमानुसारेणैव वासना उपदिदिक्षुस्त्रिखण्डाया वासनां प्रथममाह–

**मुद्राख्या सा यदा संविदम्बिका त्रिकलामयी ॥ ५७ ॥**
**त्रिखण्डारूपमापन्ना तदा सन्निधिकारिणी ।**
**सर्वस्य चक्रराजस्य व्यापिका परिकीर्तिता ॥ ५८ ॥**

तादृशक्रियाशक्त्यभिन्ना संविदम्बिका चिच्छक्तिरूपा माता यदा त्रिकलामयी कलात्रयप्रचुरा जाता, ईक्षणविशिष्टा जातेति यावत् । तदा त्रिखण्डारूपमापन्ना । मुद्रात्वसामान्यधर्म एव सामानाधिकरण्येनेक्षणस्यापि मेलनेन तादृशधर्मविशिष्टा देवी

त्रिखण्डेत्युच्यत इत्यर्थः । सन्निधिर्देवतातेजःसान्निध्यम्, सर्वावरणशक्तिमरीचिकाया महादेव्या आह्वाने विनियुक्तत्वादेव सर्वचक्रव्यापिका भवति । अत्रेक्षणस्य वामादित्रय-समष्टिरूपत्वात्ताः प्रकाशांशा दक्षिणाङ्गुलयः । इच्छादित्रयसमष्टिरूपत्वात्ता विमर्शांशा वामाङ्गुलयः । तासामेकत्र संयोजनादीक्षणस्य तादृशत्रितययुगलैक्यरूपता चेति वासना ध्वनितेत्याहुः । वस्तुतस्तु तन्त्रभेदेनाङ्गुलिविन्यासवैलक्षण्यस्य बहुलमुपलम्भात् सर्वानु-गमकदृष्टोपपत्तेरसम्भवात् क्वचित्सम्भवन्त्या अपि तस्या मूलकृताऽनुल्लिखि-तत्वेनाप्रयोजकत्वादङ्गुलिविन्यासमारादुपकारकं कुर्वन्मूलोक्तां वासनां संस्मरेदित्येवं तु तत्त्वम् । इतरन्मन्दजनविश्वासायैवेति ध्येयम् ॥ ५७-५८ ॥

सर्वसंक्षोभिणीमुद्रावासनामाह–

**योनिप्राचुर्यतः सैषा सर्वसंक्षोभिका पुनः ।**
**वामाशक्तिप्रधानेयं द्वारचक्रे स्थिता भवेत् ॥ ५९ ॥**

सा क्रियाशक्त्यभिन्नैषाऽम्बिकाशक्तिरेव यदा योनिप्राचुर्यतः प्रचुरपदार्थनिष्ठ-तत्तद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकधर्मबाहुल्येनावलोक्यते तदा सर्व-संक्षोभिका भवति । सर्वजनिकेति यावत् । अत एव वामाशक्तिप्रधाना वाऽवलोक्यते तदा सर्वसंक्षोभिका भवति, वामायाः सर्जनाभिमानित्वात् । एकैकस्मिन्नङ्गुष्ठे कनिष्ठिका-मध्यमानामाग्रयोजनेनैकैकस्मिन् हस्ते योनित्रयमिति षड्भिर्योनिभिः कारणताप्राचुर्यं स्मर्तव्यमिति भावः । मध्यमयोरनामयोः कनिष्ठयोश्च योगाद्योनित्रयमेवेति **प्राचाम्** उक्तिस्तु पूर्वचतुःशक्त्युक्तमुद्रोद्धारविरोधादनादरणीया ॥ ५९ ॥

सर्वविद्राविणीमुद्रावासनामाह–

**क्षुब्धविश्वस्थितिकरी ज्येष्ठाप्राचुर्यमास्थिता ।**
**स्थूलनादकलारूपा सर्वानुग्रहकारिणी ॥ ६० ॥**
**सर्वाशापूरकाख्ये तु सैषा स्फुरितविग्रहा ।**

क्षुब्धस्योत्पन्नस्य विश्वस्य स्थितिकर्त्री । अत एव स्थित्यभिमानिज्येष्ठाप्राचुर्यमा-स्थितवती । अङ्गुलिचतुष्टयस्य ऋजुत्वात्, त्रिकोणऋजुभूतायाः पूर्वरेखायाः स्थितिरूपत्वात् । शब्दस्य सूक्ष्मं रूपं नादः, स्थूलं रूपमक्षरम्, तेन स्थूलनादौ, अकाराद्याः स्वरास्ते कलासंख्याः षोडश । अकारादिषोडशाक्षररूपेति यावत् । सैषेति पदेन मुद्राशरीरघटकसामान्यधर्मवत्त्वमुच्यते । ईदृशविशेषसामान्यधर्मयोर्योगेन सर्वानुग्रहकारिणीत्युच्यते । अनुग्रहो नाम विद्रावणम् ॥ ६०-६०$\frac{१}{२}$ ॥

सर्वाकर्षिणीमुद्रावासनामाह–

**ज्येष्ठावामासमत्वेन सृष्टेः प्राधान्यमाश्रिता ॥ ६१ ॥**
**आकर्षिणी तु मुद्रेयं सर्वसंक्षोभिणी स्मृता ।**

संक्षोभद्रावणमुद्रापदशक्यतावच्छेदककोटिप्रविष्टयोर्धर्मयोरुभयोरपि सर्वाकर्षण-मुद्रापदशक्यतावच्छेदककोटौ प्रवेशः, परं तु न तयोः समप्राधान्यम् । नापि विशेषण-विशेष्यभावे विनिगमनाविरहः, अपि तु ज्येष्ठाविशिष्टवामावत्त्वमेव निवेश्यम् । तेन सृष्टेर्विशेष्यत्वेन निवेश्यत्वाद्वामाचिह्नस्याङ्गुलिचतुष्टयवक्रत्वस्य सर्वोपरि प्रदर्शनमुपपद्यते । सेयमाकर्षिणीति प्रसिद्धा मुद्रा सर्वसंक्षोभिणि सर्वसंक्षोभणाख्यचक्रे स्मृता स्थिता ॥ ६१-६१$\frac{१}{२}$ ॥

सर्वावेशकरीमुद्रावासनामाह–

**व्योमद्वयान्तरालस्थबिन्दुरूपा महेश्वरि ॥ ६२ ॥**
**शिवशक्त्यात्मसंश्लेषाद्दिव्यावेशकरी स्मृता ।**
**चतुर्दशारचक्रस्था संविदानन्दविग्रहा ॥ ६३ ॥**

**'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः'** इति **श्रुतौ** प्रसिद्धा बिन्दुरूपेण विद्यमाना परस्परगाढाश्लिष्टशिवशक्त्युभयात्मिका मुद्राऽत एवाऽऽनन्दविग्रहा संविद्दिव्यावेशकरीत्युच्यते । **प्राञ्चस्तु**–षट्चक्रान्तरालस्थव्योमपञ्चके द्वयोर्द्वयोर्मध्य एकैको बिन्दुरस्ति तद्रूपेत्यर्थ इत्याहुः ॥ ६२-६३ ॥

सर्वोन्मादनमुद्रावासनामाह–

**बिन्द्वन्तरालविलसत् सूक्ष्मरूपशिखामयी ।**
**ज्येष्ठाशक्तिप्रधाना तु सर्वोन्मादनकारिणी ॥ ६४ ॥**
**दशारचक्रमास्थाय संस्थिता वीरवन्दिते ।**

उक्तबिन्दोर्मध्ये विलसन्ती सूक्ष्मरूपा शिखा तस्य मध्ये वह्निशिखा **'नीवारशूकवत्तन्वी'** इति **श्रुतौ** प्रसिद्धा । तन्मयी ज्येष्ठाशक्तिप्रधाना । अत एवानामातर्जनीयुगाभ्यामृजुभ्यामुपलक्षिता देव्येव सर्वोन्मादनमुद्रा बहिर्दशारे स्थिता ॥ ६४-६४$\frac{१}{२}$ ॥

इयमेव वामाशक्तिप्रधाना चेदनामातर्जनीभिर्वक्राभिरुपलक्षिता महाङ्कुशेत्युच्यत इत्येवानयोर्भेद इत्यभिप्रेत्याऽऽह–

**वामाशक्तिप्रधाना तु महाङ्कुशमयी पुनः ॥ ६५ ॥**
**तद्वद्विश्वं वमन्ती सा द्वितीये तु दशारके ।**
**संस्थिता मोदनपरा मुद्रारूपत्वमाश्रिता ॥ ६६ ॥**
**बिन्द्वन्तरालविलसत् सूक्ष्मरूपशिखामयी ।**

अत्र मोदनपरेत्यवयुत्यानुवादो मुद्रापदप्रवृत्तिनिमित्तस्य सामान्यधर्मस्य विशेषधर्मैः सह सामानाधिकरण्येन वाच्यतावच्छेदककोटौ प्रवेश इत्यस्य स्मारणार्थः । सुगममन्यत् । अत्र बिन्द्वन्तरालेत्यर्धं **क्वचित्**पुस्तके न दृश्यते ।

**प्राञ्चस्तु**–मूलाधारब्रह्मरन्ध्रस्थपद्मकर्णिकयोर्मध्यगतौ स्वयम्भूलिङ्गपरलिङ्गरूपौ द्वौ बिन्दू । तदन्तर्विलसन्त्यावम्बिकाशान्तारूपे अमृतकुण्डलिन्यावेव शिखे तन्मयीत्यर्थ इत्याहुः ॥ ६५-६६$\frac{1}{2}$ ॥

खेचरीमुद्रावासनामाह–

**धर्माधर्मस्य संघट्टादुत्थिता वित्तिरूपिणी ॥ ६७ ॥**
**विकल्पोत्थक्रियालोपरूपदोषविघातिनी ।**
**विकल्परूपरोगाणां हारिणी खेचरी परा ॥ ६८ ॥**
**सर्वरोगहराख्ये तु चक्रे संविन्मयी स्थिता ।**

धर्माधर्मौ पुण्यपापादृष्टजनकक्रिये तयोः समाहारो धर्माधर्मं तस्य सङ्घट्ट एकज्ञानीयैकधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारिता । तादृशप्रकारिताकादयं धर्मो वाऽधर्मो वेति संशयादिति यावत् । उत्थिता तादृशसंशयोत्तरं जाता, वित्तिरूपिणी विशेषदर्शनात्मकप्रमारूपा धर्मत्वव्याप्यविहितत्ववानयमित्याकारिका, अयं धर्म एवेत्याकारकनिश्चयरूपा वा । सा च गुरुदयालक्ष्यतन्त्राध्ययनजन्या । विकल्पोऽसद्विषयकं ज्ञानम्, **'शब्दमात्रानुपाती वस्तुशून्यो विकल्पः'** इति **योगसूत्रात्** । पूर्वोक्तसंशयेऽधर्मकोटिरित्यर्थः । अधर्मत्वविशिष्टोपास्तेः खपुष्पत्वात् । तदुत्थस्तज्जन्यो यः क्रियालोपो विकल्पप्रयुक्ताश्रद्धयाऽनादरेणान्यथाकरणम् । तेन रूप्यन्ते जन्यन्ते ये दोषाः पापादृष्टान्यामुष्मिकदुःखप्रदानि तेषां विघातिनी विकल्पजन्यरोगाणामैहिकदुःखप्रदानामाधिव्याधीनां च हारिणी तादृशसंशयेऽधर्मकोट्यंशेन जन्यानि यानि पापानि ये च रोगास्तेषां सर्वेषां नाशं कुर्वती या विशेषदर्शनात्मिका प्रमा तदभिन्ना संविन्मयी निर्विषयज्ञानपराक्रियाशक्त्यभिन्ना त्रिपुरसुन्दर्येव खेचरीमुद्रा भूत्वा सर्वरोगहरे चक्रे स्थितेत्यर्थः ।

**प्राञ्चस्तु**–धर्मः शिवनिष्ठत्वाच्छक्तिः । अधर्मो निर्धर्मकत्वाच्छिवः । तत्सङ्घट्टः सामरस्यम्, विकल्पः संशयस्तदुत्थाः क्रिया नित्यनैमित्तिककाम्यरूपास्तासां लोपे यत्पापं तद्विघातिनीत्यर्थमाहुः । तेन बाहुद्वयपरिवर्तनरूपसंघट्टः शिवशक्तिसामरस्यस्योक्तसंशयस्य वा स्मारकः संस्तदीयाङ्गुलिसंयोगसचिव उक्तमर्थं साकल्येन यथा स्मारयति तथाऽभ्यस्य मुद्रां प्रदर्शयेदिति भावः ॥ ६७-६८$\frac{१}{२}$ ॥

बीजमुद्रावासनामाह–

**शिवशक्तिसमाश्लेषस्फुरद्व्योमान्तरे पुनः ॥ ६९ ॥**
**प्रकाशयन्ती विश्वं सा सूक्ष्मरूपस्थितं सदा ।**
**बीजरूपा महामुद्रा सर्वसिद्धिमये स्थिता ॥ ७० ॥**

वटबीजस्यान्तरेऽपि किञ्चिद् व्योमास्त्येव, तस्य विभुत्वात् । तस्मिन् सूक्ष्मतमेऽवकाशे वृक्षः सर्वोऽपि सूक्ष्मस्थस्तिष्ठतीति स्थितिः । तद्दृष्टान्तानुगुण्याभिप्रायेण जगद्बीजस्य परस्पराभिन्नाश्लेषशालिनः शिवशक्तियुगलस्यान्तः स्फुरद्व्योमान्तर इत्युक्तम् । वस्तुतो व्योम्नोऽपि सृष्ट्यन्तर्गतत्वेन बीजदशायां तदुत्पत्तेरभावेन शिवशक्त्योर्गर्भ इत्येव विवक्षितम् । विश्वस्य प्राथमिको यः सत्तात्मको भावविकारस्तदभिमानवैशिष्ट्येन देव्येव बीजमुद्रेत्युच्यत इत्यर्थः ॥ ६९-७० ॥

योनिमुद्रावासनामाह–

**सम्पूर्णस्य प्रकाशस्य लाभभूमिरियं पुनः ।**
**योनिमुद्रा कलारूपा सर्वानन्दमये स्थिता ॥ ७१ ॥**

कामकलास्वरूपवर्णनावसरे कलापदवाच्यत्वेन या प्रदर्शिता तद्रूपेयं योनिमुद्रा । अत एव सम्पूर्णस्य प्रकाशस्य परशिवस्य लाभभूमिः प्राप्तिकारणम् । अत एव च सर्वानन्दमयचक्रे स्थिता ॥ ७१ ॥

अस्या एव योनिदेवताया मुद्रारूपत्वे हेतुमाह–

**क्रियाचैतन्यरूपत्वादेवं चक्रमयं स्थितम् ।**
**इच्छारूपं परं तेजः सर्वदा भावयेद् बुधः ॥ ७२ ॥**

पूर्वोक्ता या क्रियाशक्तिर्मोदनद्रावणविशिष्टा तद्रूपं यच्चैतन्यं तत्त्वे सति कलारूपत्वस्यैव योनिमुद्रापदवाच्यत्वादित्यर्थः । मुद्रात्वसामान्यस्य सर्वमुद्राशरीरे निविष्टत्वादिति भावः ।

अत्रेदं बोध्यम्–वासना नाम सूक्ष्मं रूपान्तरं यथाऽङ्कुशस्य द्वेषो ज्ञानं वा । तच्चास्यैतादृशमेव रूपान्तरमित्यर्थे लौकिकप्रमाणानामप्रसरादलौकिकार्षवचनप्रमाणकमेवाऽऽस्थेयम् । तादृशप्रमाणद्वयोपलम्भे तु द्वयोरपि प्रामाण्याविशेषादेव द्वे अपि वासने एव । यत्तु वृद्धैस्तत्र तत्र स्थूलरूपवासनयोः साधारणो धर्मो हेतुत्वेन लिख्यते, यथाङ्कुशस्य ज्ञानात्मकत्वे मनोमयगजनिवारकत्वादिः, सोऽपि हेतूत्प्रेक्षामात्रं हेत्वधिकरणन्यायेन स्वार्थतात्पर्यहीन एव न तु वास्तविकः । एवं सति–

**'त्रिराचामति तद्गृह्णात्यस्ति भाति प्रियत्रयम् ।**
**यत्पुनः परिमार्ष्टि द्विर्नामरूपे जहाति तत् ॥'**

इत्यादिरीत्या **स्मृत्यु**क्तनिखिलाह्निककर्मसु **लीलाविश्वम्भरबोधसारा**दिग्रन्थेषु कविभिः स्वकपोलकल्पनया लिख्यमाना वासनाः स्वरूपोत्प्रेक्षामात्रत्वेनालङ्कारान्तरवच्चमत्काराधायिका अपि यथा नानुष्ठानोपयोगिन्यस्तथा प्रकृतेऽपि मूले तन्त्रान्तरे चादृष्टाः **प्राचीनै**र्लिख्यमाना अपि वासना भूयस्यो**ऽस्माभि**रुपेक्षिता इति न तत्र श्रद्धाजाड्येन भ्रमितव्यम् । इदानीं **'यदा सा परमा शक्तिः'** (६।९) इत्युपक्रान्तां चक्रवासनामुपसंहरति–एवमिति । परज्योतिषो देव्या इच्छयैव सर्वस्यास्य चक्रस्योत्पन्नत्वादिच्छाविशिष्टा देव्येव सर्वचक्ररूपेति सर्वदाऽऽसुप्तेरामृतेश्च बुधो भावयेदित्यर्थः ॥ ७२ ॥

पूर्वचतुःशत्यां सकलं बाह्यगतं मध्यगतं चेति त्रिविधं चक्रं पूर्वपूर्वाशक्तस्योत्तरोत्तरं पूजनीयत्वेन कथितम् । तदिदं सवासनं पूजयितुरपि तुल्यमिति ध्वननाय तत्त्रैविध्यं तत्प्रसङ्गान्नवधात्वं चोपदिशति–

**त्रिधा च नवधा चैव चक्रसङ्केतकः पुनः ।**

**'त्रिकोणे बैन्दवं श्लिष्टम्'** इति **ब्रह्माण्डपुराणीयो**क्तवचनरीत्या सकलचक्रं मन्वस्रादिचक्रे बाह्यमध्यगतपदवाच्येऽन्तर्भूतम् । बाह्यमध्यगतस्यापि शक्त्यनलात्मकयोनिनवकत्वाविशेषान्नवयोन्यात्मकचक्र एवान्तर्भावः ॥ ७२$\frac{1}{2}$ ॥

ईदृशार्थं मनसि निधायासन्देहाय संक्षेपविस्तराभ्यां त्रैविध्यं द्विवारं वर्णयति––

**वह्निनैकेन शक्तिभ्यां द्वाभ्यां चैकः परः पुनः ॥ ७३ ॥**
**तैश्च वह्नित्रयेणापि शक्तीनां त्रितयेन च ।**
**पद्मद्वयेन चान्यः स्याद् भूगृहत्रितयेन च ॥ ७४ ॥**
**पञ्चशक्तिचतुर्वह्निपद्मद्वयमहीत्रयम् ।**
**इति पूर्णं महाचक्रं तत्प्रकारः प्रदर्श्यते ॥ ७५ ॥**

**तत्राऽऽद्यं नवयोनि स्यात्तेन द्विदशसंयुतम् ।**
**मनुयोनि परं विद्यात् तृतीयं तदनन्तरम् ॥ ७६ ॥**
**अष्टद्व्यष्टदलोपेतं चतुरस्रत्रयान्वितम् ।**
**चक्रस्य त्रिप्रकारत्वं कथितं परमेश्वरि ॥ ७७ ॥**

वह्निरेको द्वे शक्ती चेत्येकः । परस्त्वेतैस्त्रिभिरन्यैः षड्भिश्चेति मिलित्वा नवभिर्भवति । अन्यस्त्वेतैर्नवभिः पद्मद्वयभूत्रयाभ्यां च मिलितः । अस्यैव विवरणं पञ्चशक्तीति । तेन नवयोनिना द्विदशाराभ्यां च संयुतं मनुयोनि द्वितीयम् । सुगममन्यत् । बिन्दुयोगस्त्वनुक्तत्वाविशेषाच्चक्रत्रयेऽप्यन्वेति ॥ ७३-७७ ॥

अस्मिंश्चक्रे प्रथमं बिन्दौ प्रधानदेवतां पूजयित्वाऽऽवरणदेवतासु पूजनीयासु द्वौ क्रमौ । तत्र नवयोन्यादिभूगृहान्तपूजने सृष्टिक्रमः, सृष्टेरनेनैव क्रमेण वर्णितत्वात् । तद्विपरीतस्तु संहारक्रमः । उभयविधाऽपि पूजा युक्तैवेति द्योतनाय क्रम-द्वैविध्यमुपपादयति—

**सृष्टिः स्यान्नवयोन्यादिपृथ्व्यन्तं संहृतिः पुनः ।**
**पृथ्व्यादिनवयोन्यन्तमिति शास्त्रस्य निश्चयः ॥ ७८ ॥**
**एतत्समष्टिरूपं तु त्रिपुराचक्रमुच्यते ।**
**यस्य विज्ञानमात्रेण त्रिपुराज्ञानवान् भवेत् ॥ ७९ ॥**

[ स्पष्टम् ] ॥ ७८-७९ ॥

इदानीं क्रमप्राप्तं नवविधत्वं तन्नामानि चोपदिशति—

**चक्रस्य नवधात्वं च कथयामि तव प्रिये ।**
**आदिमं भूत्रयेण स्याद् द्वितीयं षोडशच्छदम् ॥ ८० ॥**
**अन्यदष्टदलं प्रोक्तं मनुकोणमनन्तरम् ।**
**पञ्चमं दशकोणं स्यात् षष्ठं चापि दशारकम् ॥ ८१ ॥**
**सप्तमं वसुकोणं स्यान्मध्यत्र्यस्रमथाष्टमम् ।**
**नवमं त्र्यस्रमध्यं स्यात् तेषां नामान्यतः शृणु ॥ ८२ ॥**
**त्रैलोक्यमोहनं चक्रं सर्वाशापरिपूरकम् ।**
**सर्वक्षोभकरं देवि सर्वसौभाग्यदायकम् ॥ ८३ ॥**
**सर्वार्थसाधकं चक्रं सर्वरक्षाकरं तथा ।**
**सर्वरोगहरं गौरि सर्वसिद्धिमयं तथा ॥ ८४ ॥**

**सर्वानन्दमयं चापि नवमं शृणु सुन्दरि ।**
**अत्र पूज्या महादेवी महात्रिपुरसुन्दरी ॥ ८५ ॥**
**परिपूर्णं महाचक्रमजरामरकारकम् ।**

अत्र त्रैलोक्यमोहनादयः संज्ञा योगरूढास्तादृशार्थविशिष्टत्वेन भावनीयानीत्येतद्ध्वननार्थं वक्ष्यमाणन्यासोपयोगार्थं चोक्ताः । निगदव्याख्यातमेतत् ॥ ८०-८५$\frac{१}{२}$ ॥

चक्रसङ्केतमुपसंहरति–

**एवमेष महाचक्रसङ्केतः परमेश्वरि ॥ ८६ ॥**
**कथितस्त्रिपुरादेव्या जीवन्मुक्तिप्रवर्तकः ।**

**॥ इति श्रीनित्याषोडशिकार्णवस्य षष्ठः पटलः ॥**

स्वस्य त्रिपुरादेव्यभेदाभिप्रायेण स्वकथितोऽप्यर्थस्तयैव कथित इत्युक्तम् । त्रिपुरादेव्या इति षष्ठी वा । एतत्सङ्केतज्ञानफलं जीवन्मुक्तिरिति सर्वं शिवम् ॥ ८६-८६$\frac{१}{२}$ ॥

**इति श्रीभास्करोन्नीते नित्याषोडशिकाम्बुधेः ।**
**व्याख्याने सेतुबन्धाख्ये विश्रामः षष्ठ ईरितः ॥ ६ ॥**

●

# अथ सप्तमो विश्रामः

एवं सार्धषडशीत्या श्लोकैश्चक्रसङ्केतमुपदिश्य क्रमप्राप्तं मन्त्रसङ्केतमुपदिदिक्षुः शिष्यावधानाय प्रतिजानीते–

**श्रीभैरव उवाच**

**मन्त्रसङ्केतकं दिव्यमधुना कथयामि ते ।**
**यद्वेत्ता त्रिपुराकारो वीरचक्रेश्वरो भवेत् ॥ १ ॥**

सङ्केतकमित्यज्ञातार्थे कप्रत्ययः । अद्यावधि केनाप्यज्ञातं ते त्वदीयं मन्त्रसङ्केतं ते कथयामि । वीरा उपासकाः । ते च सकलादिभेदेन त्रिविधाः । तेषु शुद्धा उत्तमाः । अत एव ते वीरसमूहस्येश्वराः । तादृशो मन्त्रसङ्केतज्ञानेन भवति । अत एव च स त्रिपुराकारस्त्रिपुरासारूप्यमुक्तिमान् । उपलक्षणमेतत् सायुज्यादेरपि ॥ १ ॥

एक एव मन्त्रो नवचक्रेश्वरीरूपोपाधिभेदान्नवधा जातः । ते च मन्त्राः प्रथमपटल एवोद्धृतास्तान्नाममात्रेणोद्दिशति–

**करशुद्धिकरी त्वाद्या द्वितीया चाऽऽत्मरक्षिका ।**
**आत्मासनगता देवी तृतीया तदनन्तरम् ॥ २ ॥**
**चक्रासनगता पश्चात् सर्वमन्त्रासनस्थिता ।**
**साध्यसिद्धासना षष्ठी मायालक्ष्मीपरामयी ॥ ३ ॥**
**मूर्तिविद्या च सा देवि सप्तमी परिकीर्तिता ।**
**अष्टम्यावाहनी विद्या नवमी भैरवी परा ॥ ४ ॥**
**मूलविद्या तथाऽऽख्याता त्रैलोक्यवशकारिणी ।**

आसु सप्तमी मूर्तिविद्यानाम्नी तत्र नोद्धृता । एकस्या एवानुद्धारे बीजं तु तत्रैवाऽऽवाहनप्रकरणे वर्णितम**स्माभिः** । तामिहोद्धरति–मायेति । माया हृल्लेखा । लक्ष्मीः श्रीबीजम् । परा बालातृतीयबीजम् । एवमक्षरत्रयात्मिका मूर्तिविद्या । भैरवी भैरवस्य परशिवस्य पत्नी त्रिपुरसुन्दरीरूपेत्यर्थः ॥ २-४ ॥

एतासां विद्यानां न्यासयोर्विनियोगमाह–

**एवं नवप्रकारास्तु पूजाकाले प्रयत्नतः ॥ ५ ॥**
**एताः क्रमेण न्यस्तव्याः साधकेन कुलेश्वरि ।**
**पादाग्रजङ्घाजानूरुगुदलिङ्गाग्रकेषु च ॥ ६ ॥**

**आधारे विन्यसेन्मूर्तिं तस्यामावाहनीं न्यसेत् ।**
**मूलेन व्यापकन्यासः कर्तव्यः परमेश्वरि ॥ ७ ॥**

अत्र पूजाकाल इत्यनेन पूजामध्यस्थो जपकाल उच्यते । उत्तरपटले हि कालभेदेन चतुर्विधो न्यासो वक्ष्यते । तत्र जपकाले चतुर्थश्चतुर्दशावयवकः करशुद्ध्यादिको न्यासो विधास्यते । परान्यासोत्तरं चक्रेश्वरीन्यासौ कार्यौ, **'अन्ते तु बादरायणः'** इति न्यायात्, क्लृप्तक्रमेष्वक्लृप्तक्रमोऽभिनव आपतन्नन्ते निवेश्य इति तदर्थात् । अत एव चतुर्णामपि न्यासानां पूजाकाल एव विधिरिति पक्षान्तरेऽपि करशुद्ध्यादिन्यासान्त एव निवेशः । पूजाकालशब्दो यथाश्रुत एवास्तु न जपकालोपलक्षक इत्याग्रहे त्वणिमादिन्यासोत्तरमेवैतयोर्निवेश इति मन्तव्यम् । एवं पादाग्रयोर्जङ्घयोर्जानुनोरूर्वोर्गुदे लिङ्गाग्रे चेति क्रमेण षड्विद्या न्यस्य, मूलाधारे सप्तमीं विद्यां विन्यस्य, सप्तम्या उपर्यष्टमीं विद्यां विन्यस्य, नवम्या मूलविद्यया सर्वाङ्गे व्यापकन्यासः कर्तव्य इत्यर्थः ॥ ५-७ ॥

न्यासान्तरमाह–

**अकुलादिषु पूर्वोक्तस्थानेषु परिचिन्तयेत् ।**
**चक्रेश्वरीसमायुक्तं नवचक्रं पुरोदितम् ॥ ८ ॥**

अकुलं विषुराधारं स्वाधिष्ठानं मणिपूरमनाहतं विशुद्धिरिन्द्रयोनिराज्ञा चेति नवस्थानेष्वपि क्रमेण तत्तद्विद्यान्ते तत्तच्चक्रेश्वरीतत्तच्चक्रनामनी उल्लिख्य न्यसेत् । 'अं आं सौः त्रिपुरासहिताय त्रैलोक्यमोहनचक्राय नमः' इत्यादयो मन्त्रा ऊह्याः । बाह्याङ्गेषु तत्तन्मन्त्रान्तेऽनामिकाङ्गुष्ठाभ्यां स्पर्शरूपो न्यासः । आन्तराङ्गेषु तु स्पर्शासम्भवाच्चिन्तनरूप एवेत्याशयेन परिचिन्तयेदित्युक्तम् । उक्तं च **दक्षिणामूर्तिसंहितायाम्**–**'पुष्पैर्वाऽनामया वाऽपि मनसा वा न्यसेदणुम्'** इति ।

अत्र च देवताशरीरे न्यासदशायां पुष्पैः, स्वस्य बहिःशरीरे न्यासदशायामनामया, स्वस्यैवान्तःशरीरे न्यासदशायां मनसेति व्यवस्थितविकल्पार्थो वाशब्द इति सम्प्रदायः । अनामायामङ्गुष्ठयोगो वचनान्तरोपसंहारसिद्धः । नवावयवकं चक्रमिति मध्यमपदलोपी समासः । श्रीचक्रमित्यर्थः, तेनैकवचनोपपत्तिः । एकवचननिर्देशप्रयोजनं तु बिन्द्वर्धचन्द्रादिषु द्वितीयवारं नवचक्रेश्वरीमन्त्राणां न्यासो मा प्रसाङ्क्षीदिति । अन्यथा तेषामपि त्रैलोक्यमोहनादिचक्रविभावनस्थलत्वाविशेषादकुलादिष्वित्यादिपदग्राह्यत्वाविशेषाच्च पुनर्न्यासान्तरप्रसक्तेः । **प्राञ्चस्त्वाहुः**–नवचक्रमित्येकवचनमार्षमिति ॥ ८ ॥

तासां चक्रेश्वरीणां क्रमेण नामान्याह–

**आसां नामानि वक्ष्यामि यथानुक्रमयोगतः ।**
**तत्राऽऽद्या त्रिपुरा देवी द्वितीया त्रिपुरेश्वरी ॥ ९ ॥**
**तृतीया च तथा प्रोक्ता देवी त्रिपुरसुन्दरी ।**
**चतुर्थी च महादेवी देवि त्रिपुरवासिनी ॥ १० ॥**
**पञ्चमी त्रिपुराश्रीः स्यात्षष्ठी त्रिपुरमालिनी ।**
**सप्तमी त्रिपुरासिद्धिरष्टमी त्रिपुराम्बिका ॥ ११ ॥**
**नवमी तु महादेवी महात्रिपुरसुन्दरी ।**

तृतीयया सहैक्यभ्रमो मा प्रसञ्जीति नवम्यां महत्पदं विशेषणम् ॥ ९-११$\frac{१}{२}$ ॥

एतासां चक्रेश्वरीणां श्रीचक्रे क्रमेण पूजामुपदिशति–

**पूजयेच्च क्रमादेता नव चक्रे पुरोदिते ॥ १२ ॥**

नवेति भिन्नं पदम् । पुरोदिते पूर्वतन्त्रे पूजनीयतया कथिते श्रीचक्रे त्रैलोक्यमोहनादिचक्रक्रमादेता नव चक्रेश्वरीः पूजयेदित्यर्थः । पुरोदितपदेनाकुलादि-नवकं परामृश्यत इति **प्राञ्चः** । तन्न । अतिदेशेनैव प्राप्स्यतोऽर्थस्य पुनरुपदेश-वैयर्थ्यात्, प्रत्युतापूर्वताद्यनिष्टापत्तेश्च ॥ १२ ॥

**एवं नवप्रकाराऽऽद्या पूजाकाले तु पार्वति ।**
**एकाकारा ह्याद्यशक्तिरजरामरकारिणी ॥ १३ ॥**

आद्यस्य शिवस्य शक्तिरप्याद्या पूजाकाले नवप्रकाराऽपि वस्तुत एकाकारैव । एवं ज्ञाता सत्यजरामरत्वं दत्ते । अजरामरेति भावप्रधानौ निर्देशौ ॥ १३ ॥

**मन्त्रसङ्केतकस्तस्या नानाकारो व्यवस्थितः ।**
**नानामन्त्रक्रमेणैव पारम्पर्येण लभ्यते ॥ १४ ॥**

तस्या आदिशक्तेर्मन्त्रसङ्केतको नानाकारः । तदीयविद्यायाः साङ्केतिकार्थः षट्प्रकारः । परं तु तस्या मन्त्रोऽपि नैकः, येनैकस्यैव मन्त्रस्य षडर्थाः स्युः । किं तु नानाविधो मन्त्रो लोपामुद्राकामराजादिभेदात् । ततश्च केचिदर्थाः कादिविद्याया एव । केचित्तु हादिविद्याया एव । केचित्तूभयसाधारणाः । संहत्य षड्विधः सङ्केतः । तत्र कस्या विद्यायाः कोऽर्थ इति तु पारम्पर्यक्रमेणैव व्यवस्था लभ्यत इत्यर्थः ।

**प्राञ्च**स्तु–हादिविद्याया एव षडर्था इत्यभिमन्यमाना इहत्यं नानामन्त्रपदं चक्रेश्वरीमन्त्रपरत्वेन व्याचक्षते । तदयुक्तम्, चक्रेश्वरीमन्त्राणामुत्तरत्रार्थवर्णनाभावात्,

सम्प्रदायार्थादेर्हादिविद्यायामलग्नकतायाः प्रदर्शयिष्यमाणत्वाच्च, पूर्वतन्त्रे कादिविद्याया एवोद्धृतत्वेन हादिविद्याया एव षडर्थीत्यभिमानस्योपक्रमविरोधेन त्याज्यतया वैपरीत्याभिमानस्यैवाऽऽपत्तेश्च, पूर्वतन्त्रग्रन्थस्यापि हादिपरत्वेन लापने क्लिष्टतायास्तत्रैव प्रदर्शितत्वाच्च । तस्माद**स्मदु**क्तव्यवस्थैव निष्पक्षपातेति मन्तव्यम् ॥ १४ ॥

वक्ष्यमाणार्थनिकरस्य दुर्गमत्वात्सावधानीकरणाय पुनः प्रतिजानीते–

**षड्विधं तं तु देवेशि कथयामि तवानघे ।**

तं मन्त्रार्थम् ॥ १४$\frac{१}{२}$ ॥

अर्थं विभजते–

**भावार्थः सम्प्रदायार्थो निगर्भार्थश्च कौलिकः ॥ १५ ॥**
**तथा सर्वरहस्यार्थो महातत्त्वार्थ एव च ।**

[स्पष्टार्थः] ॥ १५-१५$\frac{१}{२}$ ॥

तत्र प्रथमोद्दिष्टं भावार्थं विशदयितुकामो भावार्थपदं निर्वक्ति–

**अक्षरार्थो हि भावार्थः केवलः परमेश्वरि ॥ १६ ॥**

अक्षराणां हि तावदर्थप्रतिपादकत्वं स्वभावः । ततश्च यः केवलस्तात्पर्यादिनाऽनवगतोऽक्षराणां वृत्त्यैव लभ्योऽक्षरार्थोऽक्षरस्वभावलभ्यत्वात् स भावार्थ इत्युच्यत इत्यर्थः ॥ १६ ॥

अथ तमेवार्थं प्रतिपादयति नवभिः श्लोकैः –

**योगिनीभिस्तथा वीरैर्वीरेन्द्रैः सर्वदा प्रिये ।**
**शिवशक्तिसमायोगाज्जनितो मन्त्रराजकः ॥ १७ ॥**

योगिन्यो विमर्शांशभूतेच्छाज्ञानक्रियात्मिकाः सरस्वतीपृथिवीरुद्राण्यस्तिस्रः, बहुवचनस्य कपिञ्जलन्यायेन त्रिसंख्यापरत्वात् । वीरा उपासका अशुद्धमिश्रशुद्धभेदेन त्रयः । वीरेन्द्राः प्रकाशांशभूतवामाज्येष्ठारौद्र्यभिन्ना ब्रह्मविष्णुरुद्रास्त्रयः । **'त्रितयभोक्ता वीरेशः'** इति **शिवसूत्रे,** 'जागरादिधामत्रयेऽप्यप्रच्युतस्वात्मानुसन्धानो वीरेशः' इति लक्षणकथनात् । **'उपचाराश्चलत्वेऽपि तन्मयत्वाप्रमत्तता'** इति**तन्त्रराजे**ऽप्ययमेवार्थ उक्तः । तेन तादृशवासनादार्ढ्यशीला वीरेन्द्राः । तादृशवासनाशैथिल्यात्तारतम्येन

त्रिविधा वीरा उच्यन्त इत्युक्तं भवति । शिवशक्त्योः समायोगः सामरस्यं चैकम्, एवं दश । एतैरयं मन्त्रराजो जनितः । एतद्वाचकाक्षरदशकघटित इत्यर्थः ।

अयं भावः–अस्यां हि विद्यायां पञ्चदशाक्षराणि । तेषु हृल्लेखाक्षरत्रयं देव्या वाचकत्वेन प्रसिद्धार्थकमेव, **'हींकारवाच्या हींकारवेद्या'** इति **नामत्रिशत्यां** कथनात् । तत्परत्वोपपादनं च **तन्त्रराजे**–

**'व्योम्ना प्रकाशमानत्वं ग्रसमानत्वमग्निना ।**
**तयोर्विमर्श ईकारो बिन्दुना तन्निफालनम् ॥'**

इति । द्वितीयतृतीयकूटयोरेकैकमक्षरं हकारसकाररूपं त्वग्रे मूल एव व्याख्यास्यते । अतोऽवशिष्टान्यक्षराणि दशैवेत्याशयेन दशभिरेव मन्त्रघटनमुक्तम् । एवं चैकैकस्मिन्कूटे यावन्त्यक्षराणि तेषां योगिन्यादयो यथायथमुक्ता येऽर्थास्तेषां हृल्लेखोपस्थितदेव्या सह सामानाधिकरण्यवशादभेद एकैककूटार्थः । सामानाधिकरण्यं चेह विरुद्धविभक्तिमत्त्वाभावरूपं दधिमध्वित्यादाविव । तत्र ककारत्रयं ब्रह्मादिपरम्, लकारत्रयं पृथिव्यादिपरम्, हकारसकारवीकारश्च वीरपराः, **एकाक्षरकोशा**दिना लक्षणया वा तत्तत्परताया विद्वद्भिः सूपपादत्वात् । एकारः सामरस्यपरः, शिवशक्तिवाचकयोरकारयोर्योगेन जनितत्वात् । अथवाऽस्यां विद्यायां सप्तत्रिंशदक्षराणीत्युत्तरत्र वक्ष्यते । तेषु च पुनरुक्तपरिहारेण गणनायां दशैव शिष्यन्ते– अकारो लकारः सकारो हकार ईकार एकारो रेफः ककारो नादो बिन्दुश्चेति । किं बहुना, सर्वविधासु श्रीविद्यास्वप्येतावन्त एव वर्णाः । तदुक्तं **ज्ञानार्णवे**–

**'भूमिश्चन्द्रः शिवो माया शक्तिः कृष्णाध्वमादनौ ।**
**अर्धचन्द्रश्च बिन्दुश्च नवार्णो मेरुरुच्यते ॥**
**महात्रिपुरसुन्दर्या मन्त्रा मेरुसमुद्भवाः ।'**

इति । एष्वकार एको व्यञ्जनैः सह पार्थक्याभावाभिप्रायेण न पृथग्गणितः । लकारादयस्तु भूम्यादिपदैः क्रमेण गणिता एव, अतो न दशसंख्याविरोधः । ततश्चैते दश वर्णा यथायथं योगिन्यादिवाचकत्वेन व्याख्येयाः । वर्णपुनरुक्तिश्च व्यक्तिबहुत्वाभिप्रायेणोपपाद्या । तेष्वेकारस्य चरमनिर्देशाद्विशेष्यबोधकत्वं स्वीकृत्य योगिन्याद्यभिन्नं शिवशक्तिसामरस्यात्मकं ब्रह्मेति वाक्यार्थः । अनयोश्च पक्षयोरुत्तरोऽष्टश्लोक्यात्मको ग्रन्थसन्दर्भः सर्वोऽपि **प्राचां** पक्ष इव विद्यायाः स्तुत्यर्थ एव । वस्तुतस्तु **'अक्षरार्थो हि भावार्थः'** (७।१६) इत्यादावुपक्रम्यान्ते **'भावार्थ इति मन्यते'** (७।२५) इत्युपसंहारान्मध्ये द्वितीयतृतीयकूटयोः परामर्शाच्च लिङ्गादयं ग्रन्थसन्दर्भः सर्वोऽपि प्रतिकूट-

मक्षरशोऽर्थप्रतिपादनपर एव, नात्र स्तुतिमात्रपरत्वावकाश इति स्पष्टं प्रतीयते । तथा चायं श्लोकः प्रथमकूटमात्रस्यार्थप्रतिपादनपरः । ततश्चैकैकः ककारादिवर्णो वीरेन्द्रादिपरः । ककारादित्रयं प्रत्येकं बहुवचनान्तमिति द्योतनाय योगिनी-भिरित्यादीनि बहुवचनान्तानि त्रीणि पदानि । एकारस्त्वेकवचनान्त एवेति द्योतनाय समायोगादित्येकवचनम् । हृल्लेखया विशेष्यलाभः । तेन योगिनीस्वरूपा वीरस्वरूपा वीरेन्द्रस्वरूपा शिवशक्तिसामरस्यस्वरूपा त्रिपुरसुन्दरीति प्रथमकूटार्थ इत्युक्तं भवति । काश्च एश्च यश्च लाश्चेति द्वन्द्वोत्तरं ह्रींकारेण कर्मधारयः । 'हल्ङ्यादिना सुलोपः', समासेऽपि सन्ध्यभाव आर्षः । ककारादीनां भिन्नपदत्वस्वीकारेऽप्येकारलकारयोः सुलोप आर्षः ॥ १७ ॥

एतदेवोपपादयंस्तृतीयकूटं व्याचष्टे--

**तन्मयीं परमानन्दनन्दितां स्पन्दरूपिणीम् ।**
**निसर्गसुन्दरीं देवीं ज्ञात्वा स्वैरमुपासते ॥ १८ ॥**

तन्मयीं योगिन्यादिचतुष्टयाभिन्नाम् । अधममध्यमवीराभेदाद् दुःखसम्पर्को मा प्रसाङ्क्षीदत आह– परमेति । परमत्वं दुःखासम्पृक्तत्वं तादृशानन्देन नन्दितां हृष्टां युक्तामभिन्नामिति यावत् । स्पन्दः षट्त्रिंशत्तत्त्वात्मकं विश्वम्, तद्रूपिणीं तदभिन्नाम् । असुन्दरेणापि पदार्थेनाभेदादसुन्दरत्वं स्यादत आह–निसर्गसुन्दरीं स्वभावमधुराम् । अयं तृतीयकूटलभ्योऽर्थः, उत्तरत्र **'तृतीये पिण्डके पुनः'** (७।२२) इत्युपक्रम्य **'कथिता विश्वरूपिणी'**(७।२४) इत्यन्तेनास्यार्थस्य विवरणालिङ्गात् । हृल्लेखया देवीमनूद्य सकलपदेन सर्वस्याभेदो विधीयते । सर्वं खल्विदं ब्रह्मेत्यर्थः । सकलपदे विभक्तिलोप आर्षः । समासाङ्गीकारे त्वेकप्रसरताभङ्गः । उद्देश्यविधेयभावा-नङ्गीकारेऽप्यदोषो वा । हृल्लेखालभ्यमर्थमाह–देवीमिति । ईदृशीं देवीं मन्त्रतो ज्ञात्वा जानन्तः शाब्दबोधविषयीकुर्वन्तः साधकाः स्वैराचारं यथा तथोपासते भावयन्ति । **'मुखं व्यादाय स्वपिति'** इतिवत् समानकाले क्त्वा ॥ १८ ॥

मध्यमकूटस्यार्थमाह–

**शिवशक्त्यात्मसङ्घट्टरूपे ब्रह्मणि शाश्वते ।**
**तत्प्रथाप्रसराश्लेषभुवि त्वैन्द्रोपलक्षिते ॥ १९ ॥**
**ज्ञातुर्ज्ञानमयाकारकरणान्मन्त्ररूपिणीम् ।**

शिवशक्त्यात्मको यः सङ्घट्टः सामरस्यं तद्रूपे ब्रह्मणि विषये ज्ञातुर्ज्ञान-मयाकारश्चिन्मयत्वं तत्करणाद्धेतोर्मन्त्ररूपिणीं मन्तारं त्रायत इत्येतदर्थकमन्त्ररूपाम्,

देवीमिति पूर्वेणान्वयः । एतेन **'चित्तं मन्त्रः'** इति **शिवसूत्रम्, 'चितिरेव चेतनपदावरूढा चैत्यसंकोचिनी चित्तम्'** इति **शक्तिसूत्रं** चोपपद्यते । ब्रह्मविषयकज्ञानं तु न सविकल्पकमिति ध्वननाय तत्प्रथेत्यादि । तस्य ब्रह्मणः प्रथा प्रसरो विस्तृतत्वं विश्वमिति यावत्, तदाश्लेषभुवि तत्सम्बन्धाधारेऽप्यैन्द्रेणेदृशैश्वर्येणोपलक्षिते न तु विशिष्ट इति तदर्थः । विश्वजनकत्वादिधर्मविशिष्टविषयकत्वस्योपलक्षितपदेन निरासाद्धर्मिमात्रविषयकत्वरूपाखण्डत्वं ज्ञानस्य सिध्यति । अखण्डत्वं च सविकल्पकप्रज्ञाविलक्षणविषयिताशालित्वम् । एवमुक्त्वा च मध्यकूटस्य छायाव्याख्या सूचिता । हकारः शिवः । सकारः शक्तिः ।

**'कत्रयं हृद्वयं चैव शैवो भागः प्रकीर्तितः ।**
**शक्त्यक्षराणि शेषाणि ह्रींकार उभयात्मकः ॥'**

इति **ब्रह्माण्डपुराणात्** । आत्मपदेन सामरस्यस्योभयाभेदात्मकत्वसूचनादनयोरक्षरयोः कर्मधारयो ध्वनितः । हं च तत्सं च हसं परस्परसमरसापन्नशिवशक्तिरूपम् । ब्रह्मणीति तु ककारस्यार्थः, **'कं ब्रह्म'** इति **श्रुतेः** । तुपदेन हंसस्य ककारेण सह कर्मधारय उक्तः । हसं च तत्कं च हसकं समरसशिवशक्त्यात्मकं ब्रह्म । तत्प्रथेत्यादिना हसकपदस्य लक्षणया धर्मिमात्रपरत्वं न तु शक्यतावच्छेदकविशिष्टपरत्वमुक्तम् । हसकं हन्तीति हसकहा तादृशब्रह्मविषयकज्ञानवान्, हन्तेर्गत्यर्थतया 'ये गत्यर्थास्ते ज्ञानार्था' इत्यनुशासनेन च तथोपपत्तेः । सोऽयं समासो ब्रह्मणीति विषयसप्तम्योक्तः । हन्तेर्ज्ञानार्थकत्वं ज्ञातुरिति पदेन ज्ञापितम् । हसकहनं लाति आदत्ते स्वाभिन्नं करोतीति हसकहला । तदिदं ज्ञानमयाकारकरणादित्यनेन ध्वनितम् । तस्य हृल्लेखया समासे पुंवद्भावे रूपसिद्धिः । सोऽयमवयवश उक्त एवार्थः संक्षिप्य मन्त्ररूपिणीमित्यनेनोक्तः । इत्थं च--

**'शिवशक्त्याभिधारूपा ब्रह्मविष्णुहरात्मिका ।**
**वाण्यपर्णारमारूपा त्रिविधोपासकात्मिका ॥**
**मिथःसमरसापन्नशिवशक्त्युभयात्मनः ।**
**ब्रह्मणो निर्विकल्पज्ञमाददाना निजात्मना ॥**
**सर्वतत्त्वात्मिका देवी महात्रिपुरसुन्दरी ।'**

इति भावार्थः ॥ १९-१९$\frac{१}{२}$ ॥

तदिदमाह–

**तेषां समष्टिरूपेण पराशक्तिस्तु मातृका ॥ २० ॥**

तेषामेकैककूटार्थत्वेन वर्णितानां विशेषणानां समष्टिरूपेणैकीकृत्य योजनेन पराशक्तिर्माता मन्त्रार्थो भवतीत्यर्थः ॥ २० ॥

इदानीं देव्यां मन्त्राभिन्नत्वविश्वाभिन्नत्वयोरुक्त्या मन्त्रविश्वयोः प्रसक्तं मृदभिन्नघटशरावयोरिवाभेदमेकोपादानोपादेयत्वेनोपपादयन् दर्शयितुमाह–

**मध्यबिन्दुविसर्गान्तः समास्थानमये परे ।**
**कुटिलारूपके तस्याः प्रतिरूपं वियत्कले ॥ २१ ॥**
**मध्यप्राणप्रथारूपस्पन्दव्योम्नि स्थिता पुनः ।**
**मध्यमे मन्त्रपिण्डे तु तृतीये पिण्डके पुनः ॥ २२ ॥**
**राहुकूटाद्वयस्फूर्जत्–**

कामकलायां ह्यादौ तुरीयबिन्दुस्तदधः कामाख्यो बिन्दुस्तदधो विसर्गाख्यं बिन्दुद्वयं तदधो हार्धकलेति स्थितिः । तत्र तुर्यविसर्गयोर्मध्ये यो बिन्दुः कामाख्यः स च विसर्गश्च तयोरन्तश्चैतन्यात्मना सम्यगास्थानं ययोस्तन्मये ये द्वे अक्षरे कामान्तर्गतोऽकारो विसर्गान्तर्गतो हकारश्च । परं तु ते द्वे अपि न वैखरीरूपे, अपि तु परे परामातृकारूपे, शून्याकारे इति यावत् । मातृकाद्यन्तगे इत्यर्थ इति **केचित्** । ते एते कुटिलारूपके वक्रारूपे वामारूपे सृष्टिजनके इति यावत् । अकुलकुलकुण्डलिनीरूपे इति **केचित्** । तस्या देव्याः प्रतिरूपं रूपान्तरे अर्थशब्दात्मके परब्रह्मणो द्वे रूपे । तत्रैते अक्षरे शिवशक्त्योः शब्दात्मकरूपे कुलकुण्डलिन्या रूपान्तरे इति **केचित्** । तत्कुटिलारूपके इत्यनेन पुनरुक्तम् । ईदृशबहुविशेषणैर्निर्दिष्टे अक्षरे नाम्नाऽपि निर्दिशति–वियत्कले इति । वियद् हकारः । कला प्रकाशोऽकारः, अकाराधिकारे **'प्रकाशः परमः शिवः'** इति **कोशात्** । वियच्छब्देनाकारः कला हार्धकला हकार इति **केचित्** । तच्चिन्त्यम्, ईदृशं परारूपमक्षरद्वयं मन्त्रेऽप्यस्तीति प्रदर्शयति– मध्यप्राणेति । मध्यमे मन्त्रपिण्डे द्वितीयकूटे यो मध्यो हकारत्रये मध्यो द्वितीयहकारः स एव च प्राणप्रथारूपः प्राणो विसर्गान्तर्गतः परारूपो हकारस्तस्य प्रथा प्रथनं स्थूलता वैखर्यात्मकता तद्रूपो यः स्पन्दव्योमा हकारः, स्पन्दत उत्पद्यत इति स्पन्दम्, स्पन्दं व्योम यस्मात् स स्पन्दव्योमा, **'हकाराद्व्योम सम्भूतम्'** (७/२९) इति वक्ष्यमाणत्वात् । प्रथारूपो यः स्पन्दस्तदात्मकं यद्व्योमेति वा । तत्र पुनः स्थिता हकारात्मिका परा मातृका । **केचित्** तु– मध्यम इति पदं वारद्वयं योजयन्तो मध्यमकूटे यो मध्यमहकारस्तत्रेति व्याचक्षाणा मध्यप्राणपदं विसर्गमध्यचैतन्यपरत्वेन व्याख्यन् । इदं च सम्प्रदायमनुरुध्य व्याख्यातम्, अन्यथा प्रथमोपस्थितन्यायेन प्रथमहकार एव स्थितेति व्याख्यातुं युक्तत्वात् । ननु द्वितीयकूटमध्यमहकारस्थोऽकारस्तृतीयकूटहल्लेखास्थहकारश्चेति

द्वयपरत्वेनैवायं सन्दर्भः स्वरसः, उपक्रम आदावकारस्य पश्चाद्धकारस्य निर्देशात्ता-दृशक्रमानुरोधायोपसंहारग्रन्थस्यापि वर्णयितुं युक्तत्वात्, व्योम्नीति सप्तम्याः पर इत्यर्थस्येष्टत्वात्, तथैव राहुकूटाद्वयेति सप्तम्याः सुकल्पत्वात्, अतः कथं सम्प्रदाय-लब्धत्वमर्थस्येति चेत्सत्यम् । उपक्रम उपस्थितस्याकारहकारयोः क्रमस्य प्रतिरूप-मित्येकवचनान्तविशेषणेन विच्छेदात्, 'वियत्कले' इत्यनेन हकारोत्तरमकारनिर्देशेन विपरीतक्रमस्य व्यवह्रियमाणत्वेन तैनैव क्रमेणोत्तरत्र व्यक्तिनिर्देशस्य निराबाधात् । अत एव 'सं ते प्राणो वायुना गच्छताम्' इत्येकवचनान्तक्रियापदस्य 'सं यजत्रैरङ्गानि' इति बहुवचनान्तान्वयायोग्यतयैव विच्छेदे 'सं यज्ञपतिराशिषा' इत्यनेनान्वेतुं योग्यस्यापि नानुषङ्गेऽपि तु पदान्तरमध्याहर्तव्यमिति सिद्धान्तितं भेदलक्षणे । वियत्कले इति पदमप्युपक्रान्तक्रमानुसारेण व्याचक्षाणानां **प्राचां** तु मते सम्प्रदाय-रक्षणाय सम्प्रदायान्तरं व्याख्यातांशेऽपि शरणीकरणीयमिति दिक् । सम्प्रदाय-सिद्धोऽर्थस्तु मध्यमतृतीयकूटयोः प्रतिनियतनिर्देशाज्ज्ञापितः ।

श्रूयमाणे षोढान्यासीये ग्रहन्यासे शषसहा राहुकूटमिति वक्ष्यते– **'वक्त्रे-शादिचतुर्वर्णैः सहितं राहुमेव च'**(८।२५) इति । तत्राद्यौ प्राथमिकद्वयाद्भिन्नौ सकारहकारौ तयोर्मध्येऽपि योग्यतया सकार एव, तृतीयकूटे हकारस्याकार-योगाभावात् । उभयत्रापि पुनःशब्दः श्रूयमाणो द्वितीयवारमित्यर्थको वैखरीभिन्न-परामातृकारूपतां द्रढयति । अक्षरमात्रे ध्वन्यंशवर्णांशौ वर्तेते एव, तार्किकमते सुवर्णे परस्परसंसृष्टपार्थिवतैजसांशवत् । अत एव तारत्वमित्यादिध्वनिधर्माणां वर्णेष्वनु-भवः । स वर्णे ध्वनिः सर्ववर्णजनको नाद एव, नाद एव हि प्रथमं परारूपो मूलाधारादुत्थितो मणिपूरानाहतयोरागत्य प्राणमनोभ्यां संयोगात् पश्यन्तीमध्यमात्मना परिणतः कण्ठे वैखरीरूपवर्णात्मकतामापद्यत इति सिद्धान्तात् । तस्मिंश्च नादे सर्ववर्णकारणीभूते सर्वे वर्णाः सूक्ष्मरूपेण वर्तन्त एव, बीजे फलपुष्पादिवत् । यथा बीजरूपे सम्पुट एकस्मिन्नपि पूर्वार्धपरार्धात्मना द्विधा भिन्ने विविधावयवकः सर्वोऽपि वृक्षोऽन्तरस्ति, तथाऽकारहकाररूपेण द्विधा भिन्ने नादब्रह्मणि सर्वोऽपि वर्णात्मको लौकिकवैदिकप्रपञ्चोऽस्ति । अत एवाऽकारहकारयोर्मध्ये एव सर्ववर्णपाठः, ळकारस्य लकारेणाभेदात्, क्षकारस्य ककारषकारयोगरूपत्वेनापार्थक्यात् । ब्रह्मणोऽकारहकारसमाहाररूपत्वादेव **श्रुति**ष्वहंरूपतैव तस्य प्रदर्श्यते–**'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदमहम्'** इति **बृहदारण्यके**, **'तत्राहमहम्'** इति **ऐतरेये**, **'कस्त्व-मित्यहमिति होवाच'** चेत्याद्यपि । **विरूपाक्षपञ्चाशिका**यामपि–

**'स्वपरावभासनक्षम आत्मा विश्वस्य यः प्रकाशोऽसौ ।**
**अहमिति स एव उक्तोऽहन्तास्थितिरीदृशी तस्य ॥'**

इति । ब्रह्मणोऽहंरूपत्वादेव हि तदुपासनाऽप्यहंग्रहादिरूपैवोपदिश्यते— **'अहमित्येव विभावयेद्भवानीम्'** इत्यपि । कारणस्याहंरूपत्वादेव हि सर्वस्मिन्नपि प्रपञ्चे तदनुगतिर्मृद इव घटशरावादिषु । अत एवास्मच्छब्दस्य सर्वनामता । **तापनीयश्रुति**रपि— **'एकमेवेदं सर्वं तस्मादहमिति सर्वाभिधानम्'** इति । अत एव चेदृशार्थस्यातिरहस्यत्वाभिप्रायेण **तन्त्रराजे**— **'आदिमान्त्यं तु वेदयेत्'** इति सङ्केतेनोक्तम् । आदिमोऽकारः, अन्त्यो हकारः, तयोः समाहारोऽहमिति तदर्थात् । **मालिनीशास्त्रसिद्धान्ततन्त्र**योरपि—

> **'आदिमान्त्यविहीनास्तु मन्त्राः स्युः शरदभ्रवत् ।**
> **गुरोर्लक्षणमेतावदादिमान्त्यं निवेदयेत् ॥'**

इति । **'मातृकाचक्रसम्बोधः'** इति **शिवसूत्रे वरदराजे**नाप्युक्तम्—

> **'अतोऽकारहकाराभ्यामहमित्यपृथक्तया ।**
> **प्रपञ्चं शिवशक्तिभ्यां क्रोडीकृत्य प्रकाशते ॥'**

इति । अन्योऽप्यस्मिन्नर्थे रहस्यनिष्कर्षो **वरिवस्यारहस्य**व्याख्यानेऽ**स्माभिः** प्रकटीकृतः । अनया च रीत्या सर्वस्याप्यकारहकारसामरस्यात्मकत्वेन मन्त्रस्यापि तथात्वान्मन्त्रे तादृशवर्णद्वयमस्तीत्यविवादम् । यथा हि वटवृक्षे जनकबीजसमानाकारं बीजानन्त्येऽपि स्फुटितजनकबीजांशद्वयमपि क्वचिदस्त्येव, परं तु तद्दुर्ज्ञानम्, तथा प्रकृतेऽपि ब्रह्मस्वरूपयोर्निखिलशब्दप्रपञ्चाभिन्नमातृकासरस्वत्यभिन्नश्रीविद्याजनकयोर्नादात्मकपरारूपयोरकारहकारयोः क्वाप्यवस्थितेरावश्यकतया तयोरन्यैर्दुर्ज्ञानत्वेन भक्तानुजिघृक्षया सर्वज्ञेन करुणाघनेन जगद्गुरुणैव बहुसङ्केतेन तौ प्रदर्शितौ ॥ २१-२२$\frac{१}{४}$ ॥

तत्प्रदर्शनस्य प्रकृतभावार्थवर्णनप्रकरणे साङ्गत्यमप्याह—

> **—चलत्तासंस्थितस्य तु ।**
> **धर्माधर्मस्य वाच्यस्य विषामृतमयस्य च ॥ २३ ॥**
> **वाचकाक्षरसंयुक्तेः कथिता विश्वरूपिणी ।**

चलतो भावश्चलत्ता नश्वरताऽनित्यतेति यावत् । धर्मिप्रधानोऽयं निर्देशः । असंस्थितोऽसमाप्तो नित्यः । नित्यानित्यस्येति पर्यवसितोऽर्थः । प्रपञ्चरूपेणानित्यस्य ब्रह्मरूपेण नित्यस्येति यावत् । अत एव— **'तत्प्रवृत्तावप्यनिरासः स्वसंवेत्तृभावात्'** इति **शिवसूत्रे कृष्णदासेन** उक्तम्—

> **'अवस्थायुगलं चात्र कार्यकर्तृत्वशब्दितम् ।**
> **कार्यता क्षयिणी तत्र कर्तृत्वं पुनरक्षयम् ॥**
> **कार्योन्मुखः प्रयत्नो यः केवलं सोऽत्र लुप्यते ।'**

इत्यादि। धर्मो ब्रह्मधर्मत्वाच्छक्तिः । अधर्मो निर्धर्मकः परशिवः । विषं संसारः । अमृतं मोक्षः । अनित्यसंसारात्मना परिणतशक्तेर्वाच्यायाया वाचकमक्षरं हकारः । नित्यमोक्षात्मकपरशिवस्य वाच्यस्य वाचकमक्षरमकारः । एतदुभयसंयोगान्मन्त्रः शिवशक्तिरूपः । विश्वमपि शिवशक्तिजन्यत्वात्तद्रूपमेव । एकोपादानोपादेयत्वान्मन्त्रविश्वयोरभेद इति तृतीयकूटोदितार्थस्योपपत्तिरुक्ता ॥ २३-२३$\frac{१}{२}$ ॥

एवं कूटत्रयस्यावान्तरवाक्यत्रयरूपस्य त्रिविधमर्थं सोपपत्तिकं निर्वर्ण्य त्रयाणामेकवाक्यतया महावाक्यरूपस्य मन्त्रस्यार्थं पूर्वमुक्तमुपसंहरन्नाह–

**तेषां समष्टिरूपेण पराशक्तिं तु मातृकाम् ॥ २४ ॥**
**कूटत्रयात्मिकां देवीं समष्टिव्यष्टिरूपिणीम् ।**
**आद्यां शक्तिं भावयन्तो भावार्थ इति मन्वते ॥ २५ ॥**

तेषामवान्तरवाक्यत्रयार्थानां समष्टिरूपेण परस्पराकाङ्क्षया पुनरपि वाक्यैकवाक्यताकल्पनेन पराशक्तिं मातृकां मातृकासरस्वत्यभिन्नामाद्यां शक्तिं भावयन्तो मन्त्रजन्यबोधविषयीकुर्वन्त उपासकधौरेयाः स्वभावनीयमर्थं मन्त्रस्य भावार्थ इति मन्वते । कूटत्रयात्मिकामिति तु मन्त्रदेव्योरभेदाभिप्रायेण । तत्राप्येकैककूटमात्रोपासकानामवान्तरवाक्यार्थ एकैक एव भावनीयस्त्रिकूटोपासकानां तु महावाक्यार्थो भावनीय इति द्योतयितुं समष्टिव्यष्टिरूपिणीमित्युक्तम् । तेनावान्तरवाक्यार्थेषु विशेष्यलाभाय हृल्लेखात्रयावश्यकतेत्यपि ध्वनितम् । एवं त्रिप्रकारो भावार्थो वर्णितः । सोऽयं कादिपक्ष एव स्वरसः, शिवशक्तिसमायोगपदस्यैकार एव स्वारस्यात् । हादिपक्षेऽपि योगिनीशिवशक्तिसमायोगपदान्यतरेण हकारसकारान्यतरदक्षरमुच्यत इति यथाकथञ्चिद्योजनीयम् । **प्राञ्चस्तु**– सर्वोऽप्ययं ग्रन्थो हादिविद्यापर एवेति मन्यमानाः प्रकारान्तरेण व्याचक्षते । तथा हि–हृल्लेखास्थैर्हकाररेफेकारैः सह प्रथमकूटे सप्ताक्षराणि । योगिन्यो भारत्याद्या वीरा ब्रह्माद्या इति त्रीणि मिथुनानि । हकारो ब्रह्मा सकारो [भारती ककारो] विष्णुर्लकारः पृथिवी हकारो रुद्रो रेफो रुद्राणीत्येवं मिथुनत्रयपराणि षडक्षराणि, समष्टिरूपं शान्ताम्बिकात्मकं मिथुनमींकारेणैकेनैव वाच्यम् । मूलस्थं वीरेन्द्रैरिति पदं बहुवचनान्तं केवलं पुंलिङ्गमपि समष्टिमिथुनस्यैव वाचकम् । द्वितीयकूटे मध्यमहकारस्तृतीयकूटारम्भे पठनीयोऽपि तृतीयस्य शक्तिकूटत्वेन शक्त्यक्षरारब्धत्वलिप्सया द्वितीयस्य स्थितिकूटत्वध्वननलिप्सया च द्वितीयकूट एवं पठितः । सोऽयमत्र पठितोऽपि तत्रत्य एवेति त्रीण्यपि कूटानि सप्तसप्ताक्षराणि समानरूपाण्येव सम्पद्यन्ते । तेन प्रथमकूटवदेवेतरकूटयोरप्यर्थः ।

इयांस्तु विशेषः–द्वितीयकूटस्य स्थितिरूपताध्वनननैव प्रथमचरमकूटयोः सृष्टिसंहृतिरूपताध्वननादेकैकस्मिन् कूटे पुनरपि सृष्ट्याद्यवान्तरभेदेन त्रैविध्यादाद्य-कूटस्थस्य मिथुनत्रयस्य क्रमेण सृष्टिसृष्टिः सृष्टिस्थितिः सृष्टिसंहृतिरित्येतत्त्रया-भिमानिता । द्वितीयकूटस्थस्य स्थितिसृष्टिः स्थितिस्थितिः स्थितिसंहृतिरित्येतत्त्रया-भिमानित्वम् । तृतीयकूटस्थस्य तु संहारसृष्टिः संहारस्थितिः संहारसंहार इत्येतत्त्रयाभिमानित्वम् । अतो न पुनरुक्तिः। वाग्भवकामराजशक्तिकूटानां क्रमेण पूर्वाम्नाय-दक्षिणाम्नाय-पश्चिमाम्नायरूपत्वादीदृशमिथुननवकस्य नादनवकरूपत्वाच्च न पौनरुक्त्यम् । ततश्चैतैर्विद्याक्षराभिधेयमिथुनचतुष्टयैः शिवशक्तिसम्पर्कं मिथुनी-कृत्यायं मन्त्रराजको हादिविद्यारूपो जनितो भावित इति मूले प्रथमश्लोकार्थः । अथोत्तराम्नायात्मकतुरीयकूटस्यार्थमाह–तन्मयीमिति । भारत्यादिब्रह्मादिचतुर्मिथुन-वाचकबीजत्रयसमष्टिरूपवाच्यामित्यर्थः । मन्त्रशब्दं निर्वक्ति–शिवशक्त्यात्मेति । मननत्राणकर्तृत्वात्तुरीयकूटे मन्त्रत्वमुपपद्यत इति भावः । ननु स तुरीयमन्त्रः किंलक्षण इत्यत आह– तेषामिति । त्रीणि कूटानि पश्यन्तीमध्यमावैखरीरूपाणि । इयं तु परामातृकारूपेत्यर्थः । ननु तुरीयकूटवाच्या शक्तिरकारहकारोभयरूपा तौ च मन्त्रे क्व वसत इत्यत आह–मध्यबिन्द्विति । मन्त्रेऽनयोर्विद्यमानत्वादेव तुरीयविद्याया विश्वमयत्वमित्याह–चलत्तेति । तुरीयाया विश्वात्मकत्वादेव तां परामातृकात्वेन व्यष्टिकूटत्रयं पश्यन्त्यादिरूपत्वेन भावयन्तो योगिनो भावार्थं मन्वत इति । तदिदं व्याख्यानं स्वरूपाख्यानमेवास्य प्रत्याख्यानं प्रकीर्तितमिति न्यायोदाहरणाख्यानम् । एतदनुसारिणावन्यावपि द्वौ पक्षौ **वरिवस्यारहस्येऽस्माभिः** प्रपञ्चितौ । एवं षट्सु पक्षेषु य एव विदुषामुपासकानां हृदयङ्गमः स एव परशिवाशयो भावार्थ इति दिक् ॥ २४-२५ ॥

अथ क्रमप्राप्तं सम्प्रदायार्थं निरूपयति सार्धद्वाविंशत्या श्लोकैः –

**सम्प्रदायो महाबोधरूपो गुरुमुखे स्थितः ।**
**विश्वाकारप्रथायास्तु महत्त्वं च यदाश्रयम् ॥ २६ ॥**
**शिवशक्त्याद्यया मूलविद्यया परमेश्वरि ।**
**जगत्कृत्स्नं यथा व्याप्तं शृणुष्वावहिता प्रिये ॥ २७ ॥**
**पञ्चभूतमयं विश्वं तन्मयी सा सनातनी ।**
**तन्मयी मूलविद्या च तथा च कथयामि ते ॥ २८ ॥**

पूर्वं हि देव्यां मन्त्रमयत्वविश्वमयत्वे एव प्राधान्येनोक्ते, मन्त्रत्वविश्वत्वयोः परस्पराभावव्याप्यत्वे देव्यां तदुभयसामानाधिकरण्यं न सङ्गच्छेतेत्यतस्तदुपपादनार्थ-त्वेन शिवशक्तिवाचकाक्षरजन्यत्वेन मन्त्रविश्वयोरभेदः साधितो न प्राधान्येन । इदानीं

त्वेकोदुम्बरबीजोपादेयानामपि फलपत्रकृमिकाष्ठादीनामत्यन्तभेददर्शनादुक्तोपपत्तिमदृढां मन्वानेन भगवता मन्त्रस्य विश्वात्मना परिणतत्वादुपादानोपादेयभावेनैव मन्त्रविश्वयोरभेदः प्राधान्येन विवक्षितः । अथवा पूर्वं देव्या मन्त्रेणाभेदो मननत्राणद्वारा देवीमन्त्रयोरभेद एवेह प्राधान्येन विवक्षितः । विश्वं च षट्त्रिंशत्तत्त्वमयम् । ततश्च पञ्चभूतमयमित्यत्र भूतपदं तत्त्वान्तराणामुपलक्षणं षट्त्रिंशतोऽपि पञ्चधा विभागस्य वक्ष्यमाणत्वात्तदभिप्रायकं वा । विश्वं सा सनातनी देवी मूलविद्या चेति त्रयमपि षट्त्रिंशत्तत्त्वमयमिति स्थितिः । तत्र विश्वस्मिन् प्रसिद्धं देव्यामपि विश्वपरिणामित्वात्तन्मयत्वमसन्दिग्धमेव । मूलविद्यायास्तु जगत इव शिवशक्तिवाचककारहकारजन्यत्वाविरोधेऽपि कृमिकाष्ठयोरिवात्यन्तं भेदस्यैवावश्यम्भावात्तया कृत्स्नजगदाकारतया कथं परिणतम्, येन तदभेदः स्यात् । ईदृश्या दुर्धरत्वेन सन्दिग्धाया मन्त्रस्य विश्वाकारप्रथाया महत्त्वं सर्वोत्तमत्वमसन्दिग्धत्वं यदाश्रयं येन महता निश्चयात्मकेन बोधेन भाव्यं तस्य महाबोधस्य विषयः सम्प्रदायार्थपदेनोच्यमानः समीचीनो निर्दिष्टः प्रकृष्टः सर्वातिशायी दायो गुरुपरमगुर्वादिवंशपरम्परायातोऽथाधनमिव स्थितोऽतो गुरुमुख एव स्थितो गुरुदययैव लभ्यो यथा यादृशस्तथा ते कथयामि परमेश्वरि प्रिये त्वमवहिता शृणुष्वेति योजना । महतो देशकालानवच्छिन्नस्य प्रकाशस्य बोध इति **प्राचां** महाबोधपदव्याख्यानं तु **'आन्महतः'** इति सूत्रविरोधादनादेयम् । शिवशक्त्याद्ययेति हेतुगर्भं विशेषणम् ॥ २६-२८ ॥

हादिविद्यायां प्रथमोपस्थितवर्णमारभ्यैव प्रतिज्ञातमर्थमाह–

**हकाराद् व्योम सम्भूतं ककारात्तु प्रभञ्जनः ।**
**रेफादग्निः सकाराच्च जलतत्त्वस्य सम्भवः ॥ २९ ॥**
**लकारात् पृथिवी जाता तस्माद्विश्वमयी च सा ।**

हकाराद्यात्मना परिणताया विमर्शशक्तेः सकाशादाकाशादि उत्पन्नम् । न च शब्दादर्थोत्पत्तिवर्णनमिदमपूर्वमिति विस्मयितव्यम् । **'शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्'** इति **वैयासिकसूत्रे**ऽपि शब्दादर्थप्रभवः **श्रुतिस्मृति**भ्यां साधित इत्युक्तेः । तदुपपादनं च तद्**भाष्ये** द्रष्टव्यम् । ककारात्त्विति । कामकलाक्षरादीकारादित्यर्थः । कामकलेतिपदसम्बन्धिप्रथमाक्षरवाचकस्य ककारपदस्य कामकलापदवाच्य ईकारे निरूढलक्षणा, **'तस्याभिव्यञ्जकाः पञ्च मकाराः'** इति सूत्र ईदृशलक्षणयैव मकारपदेन मुद्राकारणशुद्ध्यादेर्ग्रहणदर्शनात्, **'कामपूर्णजकाराख्या(व्यः)'** (१।१२) इति तन्त्रारम्भस्तवे जकारेण जालन्धरपीठस्य ग्रहणाच्च, कामकलाक्षरस्य रहस्यतरत्वे कण्ठरवेण तदुच्चारणस्यानुचितत्वेन पारोक्ष्येण साङ्केतिकनिर्देशस्यैव तत्र युक्तत्वाच्च ।

**प्राञ्च**स्तु–मन्त्रगतैस्त्रिभिः ककारैर्वायुरुत्पन्न इति यथाश्रुतमेव व्याचक्षते । तदसत्, **'महामायात्रयेणापि'**(७।३८) इत्युत्तरग्रन्थविरोधात् । तत्र हीकाराणां चतुर्णामेव

स्पर्शचतुष्टयबोधकतोक्तेः, तत्तद्भूतजनकवर्णानामेव तत्तद्गुणलक्षकत्वस्य **'भवेद् गुणवतां बीजं गुणानामपि वाचकम्'**(२।३७) इत्यनेन स्पष्टं वक्ष्यमाणत्वाच्च, ककार-चतुष्टयस्य विद्यायामभावेन स्पर्शचतुष्टयलक्षकत्वासम्भवाच्च, क्रोधीशत्रितये-नास्येत्यनेन ककारत्रयस्य त्रिविधोपासकबोधकताया एवं वक्ष्यमाणत्वाच्च, ककारस्य वायुबीजत्वाभावाच्च । न च यकारस्यैव वायुबीजत्वेन कामकलापरत्वेन भवद्व्या-ख्यानेऽपि तदभावस्तुल्य इति वाच्यम्, वीहिसदृशनीवारवदीकारे यकारसादृश्यात् । अत एवैकस्थानोत्पन्नत्वं परस्परादेशस्थानिकत्वं च सादृश्येन श्रवणानुभवश्च सङ्गच्छते । किं बहुना, यवनान्या लिपिसङ्केतैक्यमपि प्रसिद्धम् । तत्परस्पर-सदृशत्वमूलकमेव । लौकिकानुभवनिर्णये तस्यापि प्रमाणत्वात् । कथमन्यथा पिकनेमाधिकरणे म्लेच्छप्रसिद्धिमूलक एव सिद्धान्तः सङ्गच्छताम् । यद्यपि सर्वेऽप्येते हेतव उकारे जलबीजवकारसादृश्ये तुल्यास्तथापि विद्यायां वकारस्येवोकार-स्याप्यभावात् सुसदृशालाभे मन्दसदृशानां पूतकानामिव दन्त्यत्वेन वकारसदृशस्य सकारस्य जलतत्त्वजनकत्वोक्तिर्न्याय्यैव । अत एवास्मिन् पक्षे प्रसक्ते 'भवेद् गुणवतां बीजम्' इति नियमविरोधे मूलकृतैवाऽऽशङ्का परिहरिष्यते । ईदृशं हकारादिभ्यो वैलक्षण्यं द्योतयितुं ककारात्त्विति तुशब्दस्तदर्थक एव, सकाराच्चेति चकारोऽपि । तस्मात् पञ्चभूतजनकत्वात् सा विद्या विश्वमयी विश्वाभिन्ना भवति ॥ २९-२९$\frac{१}{२}$ ॥

नन्वेवं सति विद्यायां हकारादिकं व्यञ्जकमेकैकमेवालं किं तेषां बाहुल्येनेत्यत आह—

**गुणाः पञ्चदशाऽऽख्याता भूतानां तन्मयी शिवा ॥ ३० ॥**

अपञ्चीकृतेषु पञ्चसु भूतेष्वेकैकं भूतमर्धद्वयात्मकं कृत्वा तयोरेकमर्धं पुनश्चतुर्धा विभज्य तान् भागान् स्वस्वेतरभूतचतुष्टये सम्मेल्यैकैक एवासाधारणोऽपि शब्द-स्पर्शादिरितरेष्वप्युपलभ्यते । तत्राप्यात्मन आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवीति क्रमेणैव भूतानामुत्पत्तेर्जनकनिष्ठगुणा-नामेव जन्यपरम्परायामनुवृत्तिर्न जन्यनिष्ठगुणानां जनकपरम्परायाम्, **'कारणगुणाः कार्यगुणानारभन्ते'** इत्येव न्यायात् । इत्थं चाऽऽकाशगुणस्य शब्दस्याऽऽकाशादि-क्षित्यन्तमनुवृत्तेः पाञ्चविध्यम्, वायुगुणस्य स्पर्शस्य चतुर्ष्वेवानुवृत्तेश्चातुर्विध्यम् । एवं रूपस्य त्रैविध्यम्, रसस्य द्वैविध्यम्, गन्धस्यैकविध्यं चेति संहत्य भूतानां गुणाः पञ्चदश भवन्ति । तेषु गुहादिषु यः शब्दानुकारी प्रतिशब्दः श्रूयते स आकाश-शब्दः । वाय्वादिशब्दाः स्पर्शादयश्च प्रसिद्धा एव । एवंप्रकारेण भूतानां गुणाः पञ्चदशसंख्याका यस्मात्प्रसिद्धास्तस्माच्छिवा, विद्याऽपि तन्मयी पञ्चदशसंख्याक-

हकाराद्यक्षरमयीत्यर्थः । उक्तक्रमेणैव हकाराः पञ्च, ईकाराश्चत्वारः, रेफास्त्रयः, सकारौ द्वौ, लकार एकश्च विद्यायां वर्तन्त इति भावः । नन्वेवं सति लकार-द्वयमधिकं किमिति पठ्यत इति चेत्, **'भुवनत्रयसम्बन्धात् त्रिधात्वं तु महेश्वरि'** (७।४२) इति तद्ग्रन्थे मूलकारैरेवास्याः शङ्कायाः समाधास्यमानत्वात् । यद्यपि प्रथमद्वितीयकूटयोर्दुःस्पृष्टसंज्ञो [1]लकार एव, मोहार्णपदेन क्वचित् **तन्त्रे** तयोरुद्धार-दर्शनात् । अत एव **ब्रह्मसूत्री**ये देवीपरे भाष्ये 'ईड स्तुतौ' इतिधातुतो निष्पन्न-मीलपदमित्युक्तम् । ततश्च तृतीयकूट एक एव लकार इति नोक्तशङ्कोदयस्तथाऽपि ल(ड)कारलकारयोरैक्याभिप्रायेण प्रकृततन्त्रे कूटत्रयेऽपीन्द्रबीजपदेनैव हृल्लेखापूर्वाक्ष-रोद्धारदर्शनादाशङ्काप्रसक्तौ प्रकारान्तरेण समाधास्यत इति द्रष्टव्यम् ॥ ३० ॥

ननु तथाऽप्युक्तरीत्या सप्तदशवर्णानामावश्यकत्वेऽप्यधिकाक्षराणामकारककारादीनां वैयर्थ्यमित्यत आह--

**यस्य यस्य पदार्थस्य या या शक्तिरुदीरिता ।**
**सा तु सर्वेश्वरी देवी स च सर्वो महेश्वरः ॥ ३१ ॥**

नहि बीजप्रयोजनाभ्यां विना किमपि वस्तु समस्ति, **'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते'** इति न्यायात् । किमुत सर्वत्र ईश्वर इति तदर्थः । ततश्च वस्तुमात्रे स्वस्वप्रयोजनजनकत्वसामर्थ्यरूपा शक्तिरस्त्येव । सा विमर्शस्तदाधारः प्रकाश इत्यर्थः । उक्तं च **लैङ्गे**--**'स्त्रीलिङ्गमखिलं गौरी पुंलिङ्गं नीललोहितः'** इति ।

अयं भावः-- नहि पञ्चदशगुणात्मकमेव विश्वम् । तस्य षट्त्रिंशत्तत्त्वात्मक-त्वेनातोऽधिकानामपि पदार्थानां सत्त्वात् । ते च सर्वेऽपि शिवशक्त्यात्मक-त्रिपुरसुन्दर्या व्याप्ता एव । विद्यायाश्च तद्व्यापकत्वे विद्यादेव्योरभेदः कथं सिध्येत्, शिवशक्त्योरिव सर्वविश्वव्याप्त्यभावात् । अतोऽखिलविश्वात्मना प्रथन-बोधनार्थमकारककाराद्यक्षराण्यावश्यकानीति ।

**प्राञ्च**स्तु--ननु पञ्चदशाक्षर्यां हकरसलेति पञ्चैवाक्षराण्यलम्, अन्यानि दश किमर्थानीत्यत आह--गुणा इति । तन्मयी पञ्चदशसंख्याकसव्यञ्जनस्वरमयी । पञ्चदशाक्षराणि पञ्चदशगुणत्वेन भावनीयानीत्यर्थः । ननु विद्यायाः पञ्चदशात्म-कत्ववासना वक्तुमशक्याऽसम्भवादित्यत आह--यस्य यस्येति । समस्तस्य विश्वस्यैव शिवशक्तिभ्यां व्याप्यत्वेन शिवशक्त्यात्मकविश्वस्य विश्वैकदेशव्याप्तौ कथमसम्भ-वितता कैमुतिकन्यायेनैव तत्सिद्धेरिति भाव इति व्याचक्षते । तदसत्, उत्तरत्र

---

1. अयं लकारः पाणिनीयशिक्षानुरोधेन ऌकारान्तर्गतो ज्ञेय इत्यभिप्रायेण लकारस्य दुःस्पृष्टत्वं ज्ञेयम् ।

हकारादिव्यञ्जनामेव भूतगुणात्मकत्ववासनाया विव्रियमाणत्वेन तद्विरोधात्, स्वर-सहितव्यञ्जनानां व्योमादिजनकत्वस्य पूर्वमनुक्तत्वाच्च । हकारादित्यत्र श्रूयमाणोऽका-रस्तु न कारप्रत्ययप्रकृतिः, **'अकारो व्यवेतो व्यञ्जनानाम्'** इति **तैत्तिरीयप्रातिशाख्य**सूत्रेण प्रकृतिप्रत्यययोर्मध्य उच्चारणीयमात्रत्वेन विधानात्, हयवरडादिसूत्रेष्वकारपाठस्य वर्णात्कार इत्यत्राकारविशिष्टस्यैव ग्रहणमित्येतज्ज्ञापनार्थत्वात् । अत एव रादिफ इत्येवोक्तं न त्वेफ इति । यद्यपि--

**'रकारादीनि नामानि रामात्त्रस्तस्य रावण ।**
**रत्नानि चैव रामाच्च सन्त्रासं जनयन्ति मे ॥'**

इत्यत्र यथाऽकारविशिष्टरेफात्मकवर्णसमुदाय एव कारप्रत्ययप्रकृतिः, समुदायात्त-त्प्राप्तिस्तु वषट्कार इतिज्ञापकात्, एकस्य रेफस्यैव प्रकृतित्वे रादिफ इत्यपवाद-विरोधेन कारप्रत्ययानापत्तेः । तद्वदिह हकारादित्यादावकारविशिष्टहकार एव प्रकृतिरित्युच्यते, तथाऽपि विद्यायामकारविशिष्टरेफाभावाद् 'रेफादग्निः' इति मूलेऽकारवैशिष्ट्येनानुवादानापत्तिः । अथवा तावन्मात्रेऽकारस्य न प्रकृतिकोटौ निवेशः । तर्हि तत्प्रायपाठात्तद्वद्धकारादावपि तथैवास्त्विति दिक् ॥ ३१ ॥

ननु तथापि विद्यायां पञ्चदशाक्षराणीति **तन्त्रेषु पुराणेषु** च श्रूयमाणो घण्टाघोषो विरुध्यते, अतो नाधिकाक्षरसद्भावो युक्तः, येन निखिलविश्वव्याप्तिस्तद्-द्वारोपपाद्येत, तत्सद्भावे वा पञ्चदशाक्षरीसमाख्याविरोधः । सेयमुभयतः पाशा रज्जुरित्याशङ्क्य व्यवस्थाभेदादुभयमपि युज्यत इति समाधत्ते–

**व्याप्ता पञ्चदशार्णैः सा विद्याभूतगुणात्मिका ।**
**पञ्चभिश्च तथा षड्भिश्चतुर्भिरपि चाक्षरैः ॥ ३२ ॥**
**स्वरव्यञ्जनभेदेन सप्तत्रिंशत्प्रभेदिनी ।**
**सप्तत्रिंशत्प्रभेदेन षट्त्रिंशत्तत्त्वरूपिणी ॥ ३३ ॥**
**तत्त्वातीतस्वभावा च विद्यैषा भाव्यते सदा ।**

उत्तरत्र स्वरव्यञ्जनभेदेनेत्युक्त्येह स्वरव्यञ्जनैक्येनेत्येतदाक्षिप्तम् । ऐक्यं चाङ्गविशिष्टस्याङ्गिन एकत्वाभिप्रायेण । ततश्च द्वितीयतृतीयौ केवलस्वरौ निरङ्गका-वेव । लकारीयाकारा ईकाराश्चोभय एकैकाङ्गविशिष्टाः षट्, संयोगादिमाक्षरस्यानु-स्वारस्य च **याजुषप्रातिशाख्ये** पूर्वाङ्गत्वविधानात् । इतरे सप्त स्वराः स्वपूर्वाङ्ग-विशिष्टाः । हल्लेखाद्याक्षरस्य **बह्वृचादिप्रातिशाख्य**रीत्योत्तराङ्गत्वमपि सम्भवती-त्यन्यदेतत् । नादत्रयस्य तु प्रातिशाख्यादौ पार्थक्येनाङ्गत्वावर्णनेऽपि बिन्दुसन्नि-योगशिष्टत्वाद् बिन्दुवदङ्गत्वमेव । एवं द्वाविंशतेर्व्यञ्जनानां स्वराङ्गत्वेन तेषां च पञ्चदशत्वादुक्तसमाख्योपपत्तिः, **'एष वै सप्तदशः प्रजापतिः'** इत्येतदुपपादनपरायामा-

श्रावयेति चतुरक्षरमित्यादि**श्रुतौ 'चतुरश्छयतावाद्यक्षरलोपश्च'** इति **स्मृता**वन्यत्राप्यनयैव रीत्याऽक्षरगणनस्य प्रसिद्धत्वात् । विद्या च भूतानि च गुणाश्चेति द्वन्द्वः । विद्येति तत्त्वान्तराणामुपलक्षणम् । तेन षट्त्रिंशत्तत्त्वात्मिका सा मूलविद्येत्यर्थः । चिच्छायाभूता विद्यात्मतामापन्ना ये गुणाः सत्त्वादयस्त्रयस्तदात्मिकेति वा । आत्मविद्याशिवतत्त्वरूपेति तु फलितम् । भूतगुणवाचकव्यञ्जनघटिता विद्येत्येव वा तदर्थः । तेन नात्र पञ्चदशस्वराणां पञ्चदशगुणात्मकत्वं कीर्तितमिति **प्राचीनै**रिव मन्तव्यम्, हकारादि-व्यञ्जनानामेव गुणात्मकताया उत्तरत्र कथनात् । अत एव सप्तत्रिंशदक्षराणां क्रमेण षट्त्रिंशत्तत्त्वानि तत्त्वातीतमेकमित्येवंरूपतोत्तरश्लोके कथ्यत इति **प्राचां** व्याख्याऽपि न साधीयसी, तस्य ग्रन्थस्य तदुत्तरत्र विविच्यमानानां सप्तत्रिंशदक्षरार्थानां संक्षेपेणोद्देश्यमात्रार्थत्वात् । नहि **'सम्प्रदायो महाबोधरूपः'** (७/२६) इत्युपक्रमेण **'सम्प्रदायार्थ ईरितः'** (७/४८) इत्युपसंहारेण च सम्प्रदायाभिधैकार्थमात्रबोधकत्वेन मध्यग्रन्थस्य सर्वस्यैकवाक्यतासिद्धौ सम्प्रदायार्थातिरिक्तभवदुक्तवासनयोर्मध्येऽव-सरोऽस्ति, वाक्यभेदापत्तेः । अत एव वैश्वानरेष्टिवाक्ये 'पुत्रे जाते' इत्युपक्रमादि 'अस्मिन् जाते' इत्युपसंहाराच्चैकवाक्यतासिद्धावष्टाकपालादिवाक्यानां मध्ये पठितानामपि द्वादशकपालफलोपपादकत्वेन तच्छेषत्वमेव, न पार्थक्येन हविरन्तर-विधायकत्वमिति स्वीकृतं प्रमाणलक्षणे । एवमनयोर्वासनयोर्वक्ष्यमाणार्थस्य संक्षिप्यो-पक्रममात्रार्थत्वेन तच्छेषतोपपत्तौ न स्वातन्त्र्यकल्पनमुपपत्तिमदिति मन्तव्यम् । पञ्चदशाक्षराणि न्यूनाधिकसंख्याव्यवच्छेदाय कूटभेदेन विभजते—पञ्चभिश्चेति । स्वरेति । स्वयं राजन्ते स्वरास्तैर्व्यङ्ग्यानि व्यञ्जनानि । **'तेषु स्वराः स्वतन्त्रत्वात्तैर्व्यङ्ग्यं व्यञ्जनं भवेत्'** इति **तन्त्रराजोक्तेः** । एवं निर्वचनबलेनैव व्यञ्जनानामापत-दक्षरसंख्यापरिपूरणसामर्थ्यमपवदति—भेदेनेति । सर्वेषां भिन्नपदत्वकल्पनयेत्यर्थः । न चैवं सति ककारत्रये जश्त्वापत्तिः, एकाक्षरपदे व्यपदेशिवद्भावेनाऽऽपततः पदान्तत्वस्य 'सुप्तितौ टकितौ' इत्यादिज्ञापकैरनित्यत्वेन तदभावात् । सप्तत्रिंशत्संख्याः प्रभेदा अवयवा अस्यां सन्तीति तथा । सप्तत्रिंशत्प्रभेदशब्दादौ मत्वर्थीय इनिर्द्वितीयेऽर्शआद्यच् । तेन प्रभेदेनेत्यत्र न बहुवचनापत्तिः । इयं विद्या सप्तत्रिंशदवयववता समूहेन षट्त्रिंशत्तत्त्वानि निरूपयति बोधयति । तथा तत्त्वातीतः स्वीयोऽभिप्रायो वेद्योऽर्थो यस्यास्तादृशी चेति योगिभिः कालत्रयेऽपि भाव्यते चिन्त्यत इत्यर्थः । सदेत्यत्र मयेत्यपि क्वचित्पाठः । एकादशस्वर एकः, चन्द्रबीजे द्वे, रेफभूबीज-क्रोधीशबिन्दुनादास्त्रयस्त्रयः, कामकलाश्चतस्रः, व्योमबीजानि पञ्च, श्रीकण्ठा दशेत्येवं सप्तत्रिंशताऽक्षरैस्तत्त्वानि तदतीतं च प्रतिपाद्यते । सोऽयं सम्प्रदायार्थसंक्षेप इत्यर्थः । हादिविद्यायां त्वत्रत्यैका कामकला, एकादशस्वर एक इति द्वयमूनम्, चन्द्रबीजमेकम्, व्योमबीजमेकम्, द्वौ श्रीकण्ठौ चेति चत्वार्यधिकानि, तेनैकोनचत्वारिं-

शत् सम्पद्यन्ते । तेषु द्वितीयकूटमध्यमहकारस्य तृतीयकूटप्रथमाकारस्य च भावार्थप्रकरणे कारणत्ववर्णनात्तदुभयपरित्यागेन सप्तत्रिंशत्ता वर्णनीया । यत्तूक्तं **कामकलाविलासे**–

**'अजूव्यञ्जनबिन्दुत्रयसमष्टिभेदैर्विभाविताकारा ।**
**षट्त्रिंशत्तत्त्वात्मा तत्त्वातीता च केवला विद्या ॥'**

इति, तत्कतमतन्त्रस्थगणनमिति न जानीमः । ये च **प्राञ्चस्**तदनुसारेण प्रकृततन्त्रमेव योजयन्ति, ते प्रष्टव्याः–नादत्रयत्यागे समष्टिग्रहणेऽत्र किं मूलमिति ? ननु **'त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः'** इत्यादिना **पाणिनिशिक्षायां** वर्णगणनावसरे नादस्य गणनाभावात्तस्य ध्वनिमात्ररूपत्वेन वर्णत्वाभावात् स्वरत्वव्यञ्जनत्वयोश्च वर्णत्वव्याप्यतया तदभावे तयोरभावावश्यम्भावान्मूले च स्वरव्यञ्जनभेदेनैव सप्त-त्रिंशत्तोक्तेर्न नादानां तेषु गणना युज्यते, ततश्च सप्तत्रिंशत्प्रभेदिताया एव सिद्धेः । सप्तत्रिंशत्तान्यथानुपपत्त्या तत्त्वातीतप्रतिपादकत्वोक्त्या च समष्टिलाभः, तस्य तुरीयतत्त्वात्मकत्वात्,

**'मायान्तमात्मतत्त्वं विद्यातत्त्वं सदाशिवान्तं स्यात् ।**
**शक्तिशिवौ शिवतत्त्वं तुरीयतत्त्वं समष्टिरेतेषाम् ॥'**

इति **अभियुक्त**वचनात् । न च समष्टितत्त्वस्य शोध्यत्वेन नित्यपरिशुद्धस्य तत्त्वातीतस्य कथं तदात्मकतेति वाच्यम्, महाकारणदेहरूपस्य तुरीयस्य स्थूलसूक्ष्मकारणदेहरूपाणि षट्त्रिंशत्तत्त्वान्यतीतस्याप्यानन्दमयकोशरूपत्वेन तस्य 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम् । ज्योतिरहं विरजा विपाप्मा भूयासम्' इति मन्त्रे शोध्येष्वेव परिगणनात् । अत एव न तस्य ब्रह्मरूपतेत्याशयेन तथात्वं मन्यमानानामुपवर्षादीनां मतं निरस्यान्यथैवाऽऽनन्दमया-धिकरणं वर्णितम् **आचार्यभगवत्पादै**रिति चेत्, मैवम् । **'अनुस्वारो व्यञ्जनं वा स्वरो वा'** इति **शौनकसूत्रभाष्ये** बिन्दोरुभयानात्मकत्वोक्त्या बिन्दुत्रयस्यापि स्वरव्यञ्जन-बहिर्भूतत्वेन प्रकृते तदगणनापत्तेः । न च **याजुषप्रातिशाख्ये 'शेषो व्यञ्जनानि'** इति सूत्रेण स्वरभिन्नवर्णत्वस्यैव व्यञ्जनलक्षणतोक्त्या बिन्दोरपि व्यञ्जनस्याऽऽवश्यकत्वं **शौनकसूत्र**स्थवाशब्दस्य नञर्थकत्वेन व्याख्यानमेवानुचितमिति वाच्यम्, स्वरभिन्नत्वस्य नादे विकल्पितत्वेन व्यञ्जनत्वसिद्धेः । न च नादस्य ध्वन्यात्मकत्वेन वर्णत्वाभाव इति वाच्यम्, घटे मृत्त्वस्येव वर्णेष्वपि ध्वनित्वस्येष्टत्वेन तस्य वर्णत्वाभावाव्याप्यत्वात् । न च तस्य वर्णत्वे शिक्षादौ कथं न वर्णेषु परिगणनमिति वाच्यम्, तदपरिगणितस्यापि दीर्घलृकारस्या**स्मन्मते** वर्णताया इष्टत्वेन तैरपरिगणनस्याप्रयोजकत्वात् । ननु दीर्घलृकारस्य पार्थक्येनैकपञ्चाशन्मातृकासु पाठाद्वर्णत्वम् । तथा सति केवल-बिन्दोरुपध्मानीयादेश्च वर्णत्वानापत्तेः । न च नादस्य वर्णत्वे व्यञ्जनेष्वेव गणनापत्त्या 'व्यञ्जनं स्वराङ्गम्' इति सूत्रेण स्वरयोगापत्तिः, अनुस्वारे स्वरत्वस्यापि

सत्त्वेनेष्टापत्तेः, नवार्णमेरुमन्त्रे ककारीयाकारोत्तरमपि पाठदर्शनाच्च, नादस्य **प्राचां** पक्ष एकलवन्यूनार्धमात्राकालत्वेन व्यञ्जनत्वाभावाच्च । तस्मात्तत्तच्छास्त्रप्रवर्तकाचार्यैः स्वशास्त्रमात्रोपयुक्तकतिपयवर्णगणनेऽपि नान्यत्र प्रसिद्धेषु वर्णेषु वर्णत्वपरिसंख्येत्येव तु तत्त्वम् । अथ **'बीजबिन्दुध्वनीनां च त्रिकूटेषु ग्रहात्मिका'**(७।६४) इति प्रकृततन्त्र एव तस्य ध्वनित्वेन व्यवहारो दृश्यत इति चेत्, **'हल्लेखात्रयसम्भूतैस्तिथि-संख्यैस्तथाऽक्ष[रैः'**(७/६५) इत्यादावक्षरत्वव्यवहा]रोऽप्यस्तीति किं तेन, ध्वनित्वस्य सर्वानुस्यूतत्वाच्च । किं च, नादस्य केवलध्वनिरूपत्वे **तन्त्रे**ष्वर्थवर्णनं तदवयवानामष्टानां विभज्य कालवर्णनं च न स्यात् । न च रथघोषवत् पदार्थस्मारकत्वोपपत्तिः । माहेन्द्रस्तोत्रोपाकरणेन सह तस्यैककालत्वविधानेन तत्रैव तस्य स्मारकत्वेऽपि रथघोषान्तरे तदभावात्, प्रकृते च नादस्यार्थविशेषे शक्तिविधानेन सर्वत्र तथात्वेन वैषम्यात् । किं च, **शौनकादि**सूत्रोक्तस्य बिन्दोर्व्यञ्जन-त्वाभावस्य **कामकलाविलास**कृताऽपि व्यञ्जनेभ्यो बिन्दुत्रयं पृथग्गणयताऽनुमतत्वेन मूलस्थव्यञ्जनपदेन बिन्दूनामनुपस्थितावप्युत्तरत्र विवरणदशायां **'बिन्दुभिस्त्रिभिरुच्यन्ते रुद्रेश्वरसदाशिवाः'** इत्यर्थवर्णनदर्शनादेव लिङ्गादत्रत्यव्यञ्जनपदेन बिन्दवोऽपि विवक्षिता इत्यकामेनापि भवता व्याख्येयम् । तदिदं नादत्रयेऽपि तुल्यम्, **'शान्तिः शक्तिश्च शम्भुश्च नादत्रितयबोधना'** (७/४६) इत्युत्तरत्रार्थवर्णनस्य व्यञ्जनान्तर-वदर्धमात्राकालस्य चाविशेषात् । तस्मान्न कथञ्चन नादत्रयत्यागे बीजमाकलयामः । ततश्च तेनैव कादिविद्यायाः सप्तत्रिंशदवयवत्वे सिद्धे तदन्यथानुपपत्तेरभावात् समष्टिग्रहणमप्यसमञ्जसमेव, तत्त्वातीतवाचकस्याप्यक्षरस्य लाभात् । वस्तुतस्त-त्त्वातीतपदस्याऽऽनन्दमयकोषपरत्वे मानाभावात्तस्य देहत्रयातीतत्वेऽपि तुरीय-तत्त्वरूपतया तत्त्वातीतत्वासम्भवाच्च । परब्रह्मपरताया एव वक्तव्यतया न समष्टिसंग्रहावश्यकता, प्रत्युत हादिविद्यायां चत्वारिंशत्प्रभेदापादकं च । समष्टेः स्वरव्यञ्जनोभयाभिन्नत्वेन **'स्वरव्यञ्जनभेदेन सप्तत्रिंशत्प्रभेदिनी'** (७/३३) इति मूलविरोधश्च । तस्माद्धादिविद्यायां प्रकृततन्त्रानुरोधेन नादत्रयसमष्टिहानो-पादानाभ्यां सप्तत्रिंशत्प्रभेदितावर्णनं गीर्वाणगुरूणामपि दुःशकमिति मन्तव्यम् । एतेन कादिविद्यायां हादिविद्यावत्सप्तत्रिंशत्ता कथं स्यादिति चिन्तया संतपन्ती कादिविद्याया एव प्रत्युत शून्यतेति भ्राम्यन्ती तत्परिजिहीर्षया सप्तत्रिंशत्त्वमुपपादयन्ती द्वितीयस्य सन्ध्यक्षरत्वेन तृतीयस्य दीर्घत्वेन द्विद्विवर्णात्मकत्वेन गणनं **सम्प्रदाय**सिद्धमिति शिष्येभ्य उपदिशन्ती तत्तद्गुरुपरम्परा **चिद्वल्ल्या**दिग्रन्थपरम्परा च **अमृता-नन्दनाथी**यभ्रमव्यापारमूलकत्वाद् 'अन्धेनैव नीयमाना यथाऽन्धाः' इति न्यायानुका-रित्वादेव निरस्ता वेदितव्या, अवशिष्टकामकलात्रयस्यापि दीर्घत्वाविशेषेणाक्षरा-धिक्यापादकत्वाच्च । तस्मात्कार्याक्षराणि सप्तत्रिंशदित्येव तत्समर्थनं युक्तम् । वाक्यार्थवर्णनं तु कारणवर्णयोर्मेलनेनैव, पदद्वयं परित्यज्य वाक्यार्थवर्णनस्या-नुचितत्वादित्यलं पल्लवितेन ॥ ३२-३३$\frac{१}{२}$ ॥

एतावता प्रबन्धेन विद्याया भूतगुणादितत्त्वातीतान्तपदार्थजातस्वरूपत्वं सम्मुग्धाकारेणोक्तं तदेवेदानीं तत्तल्लक्षणकथनपूर्वकं विशदीकृत्योपदिशति–

**पृथिव्यादिषु भूतेषु व्यापकं चोत्तरोत्तरम् ॥ ३४ ॥**
**भूतं त्वधस्तनं व्याप्यं तद्गुणा व्यापकाश्रयाः ।**
**व्याप्येष्ववस्थिता देवि ! स्थूलसूक्ष्मविभेदतः ॥ ३५ ॥**

पृथिव्यादीत्यादिपदेनाप्तेजोवाय्वाकाशपरिग्रहः । एतेषूत्तरोत्तरं व्यापकं जनकं प्रयोजकं च । मृत्तिकायाः स्वजन्ये घटे व्याप्तिदर्शनाद्व्यापकपदेनोपादानकारणमुच्यते । तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपं व्यापकत्वमप्यक्षतमेव । परं तु तद्वत्त्वमभेदसम्बन्धेन । अभावस्तु परिणामित्वसम्बन्धावच्छिन्नप्रतियोगिताक इति विशेषः । अधस्तनं पूर्वपूर्वव्याप्यं जन्यप्रयोज्यम्, प्रयोज्यं च परिणाम्यभाववदवृत्तित्वरूपं च । अभाववृत्तित्वे पूर्वोक्तसम्बन्धाभ्यामवच्छिन्नमेव । तत्तस्मात्कारणाद्व्यापकाश्रया जनकप्रयोजकसमवेता गुणा व्याप्येषु जन्यप्रयोज्येष्वप्यवस्थिता भवन्ति । ते च कारणे स्थिता गुणाः स्थूला इत्युच्यन्ते । त एव कार्येषु स्थिताः सूक्ष्मा इत्युच्यन्त इत्यर्थः ॥ ३४-३५ ॥

तावता प्रकृते किमायातमित्याशङ्क्य षट्त्रिंशत्तत्त्ववाचकान्यक्षराणि प्रदर्शयति–

**तस्माद्व्योमगुणः शब्दो वाय्वादीन् व्याप्य संस्थितः ।**
**व्योमबीजैस्तु विद्यास्थैर्लक्षयेच्छब्दपञ्चकम् ॥ ३६ ॥**
**तेषां कारणरूपेण स्थितं ध्वनिमयं परम् ।**
**भवेद्र् गुणवतां बीजं गुणानामपि वाचकम् ॥ ३७ ॥**
**कार्यकारणभावेन तयोरैक्यविवक्षया ।**

यस्माद्व्यापकगुणा व्याप्येषु तिष्ठन्ति तस्माद्व्योम्नो व्यापकस्य गुणः शब्दो वाय्वादीन् वायुतेजोजलपृथिवीर्व्याप्य तिष्ठतीति पञ्चविधः शब्दो भवति । अतो विद्यास्थैः पञ्चभिर्व्योमबीजैर्हकारैः शब्दपञ्चकं लक्षयेत् । उपासक इति शेषः । शक्यादशक्योपस्थितिर्लक्षणेति **प्राचां** पक्ष उपस्थित्याश्रयः साधक एव कर्ता, शक्यसम्बन्धरूपलक्षणाया वृत्तिरूपत्वात् । पदनिष्ठत्वपक्षेऽपि विवक्षातः कारकविभक्तयो भवन्तीति सिद्धान्तात् पदस्य करणत्वविवक्षायामुपासकस्य प्रयोजककर्तृत्वम् । ननु मध्यमहकारस्य विमर्शवाचकत्वं भावार्थप्रकरणे कथितम् । तस्यापि शब्दलक्षकत्वे युगपद्वृत्तिद्वयविरोध इत्यत आह–तेषामिति । तेषां पञ्चानां हकाराणां मध्ये कारणरूपेण श्रीचक्रात्मकजगत्कारणकामकलाशरीरघटकत्वेन वा स्थितं विसर्गरूपं हकाराक्षरं तत्तु ध्वनिमयं नादैकमयम् । अत एव परं सूक्ष्मादपि सूक्ष्मं वासनामयशरीरमिति यावत् । स्थूलतमस्य वैखरीरूपहकारस्यैव शब्दलक्षकत्वं

परारूपस्य हकारस्य विमर्शशक्तिवाचकत्वमिति पदव्यक्तिभेदेनार्थद्वयबोधकत्वस्योक्तेर्न वृत्तिद्वयविरोध इति भावः । हादिविद्यापक्षे त्वेतदर्धं षष्ठहकारप्रयोजनवर्णनपरत्वेन योजयन्ति परं षष्ठं हकाराक्षरं पञ्चानां हकाराणां कारणभूतो यो नादस्तद्बोधकमिति । षट्त्रिंशतस्तत्त्वानामपि यत्कारणं तत्त्वातीतं नादब्रह्म तत्परः कामराजमध्यमहकार इत्यपि तदर्थः सुवचः, भावार्थप्रकरणे कथितेनार्थेन सह संवादसम्भवात् । तस्यार्थस्य तद्वाक्यार्थेऽनन्वितत्वेनैव तदुपयोगस्याऽऽवश्यकत्वाच्च । नन्वाकाशवाचकस्य हकारस्य वाय्वादिशब्दे लक्षणा कथं शक्यसम्बन्धाभावादित्यत आह– भवेदिति । यद्गुणवद्वाचकं यदक्षरं तत्तत्समवेतगुणलक्षकमिति सामान्यनियमानुसारेण व्योमवाचकहकारस्य शब्दे लक्षणासिद्धौ तस्यैव शब्दस्य तत्त्वान्तरसम्बन्धेऽपि पूर्वक्लृप्ता लक्षणा न विहन्यते । नहि यष्टिशब्देन लक्षितानां यष्टिधराणां देशान्तरगमने लक्षणायाः काचन हानिः । न च तेषां देशान्तरगमनेऽपि यष्टिसम्बन्धानपायाल्लक्षणा युक्तेति वाच्यम्, शब्दस्य वाय्वादिनिष्ठत्वेऽपि कार्ये कारणानुवृत्तेरावश्यकतया वाय्वादिचतुष्टयेऽप्याकाशानुवृत्तेः सत्त्वेन व्योमसम्बन्धानपायस्य प्रकृतेऽपि तुल्यत्वादिति भावः । अत एव **'प्रधानं तेजसो रूपं तद्बीजेन हि जन्यते'**(७।४०) इति [तेजोऽक्षरार्थनि]रूपणे वक्ष्यति । स्वबोध्याभिन्नत्वस्य वाचक इव लक्षकेऽपि सद्भावप्रदर्शनाय गौण्या लक्षकं निर्दिशति–वाचकमिति । वाच्यवाचकयोरिव लक्ष्यलक्षकयोरप्यभेद इति भावः । यद्वा गुणवतां वाचकं बीजं गुणानामपि वाचकं भवतीत्यन्वयः । तेन हकारस्य शब्दवत्येव शक्तत्वाच्छक्यतावच्छेदके शब्देऽपि शक्तेरनपायाच्छब्दस्यापि हकारो वाचक इत्यर्थः । तेन लक्षयेदित्युपक्रमस्थमपि पदमुपासककर्तृकत्वाज्जानीयादित्यर्थकम् । कार्येति । वाय्वाकाशयोः कार्यकारणभावेनाऽऽकाशस्य वाय्वादावनुवृत्तिविवक्षया तदीयशब्दे लक्षणा युज्यते । यद्वा, **'आकाशं शब्दतन्मात्राज्जातं शब्दगुणं विधिः'** इति **स्वच्छन्दसंग्रहो**क्तरीत्या 'आकाशाच्छब्दः' इति नैयायिकरीत्या वा शब्दाकाशयोः कार्यकारणभावेन तयोरभेदविवक्षया हकारस्याऽऽकाश इव शब्देऽपि शक्तिर्लक्षणा वा युज्यत इत्यर्थः । वस्तुतस्तु गुणवतां वाचकं सदेव बीजं गुणानां वाचकमपि भवतीत्यर्थः । विशिष्टवाचकमिति यावत्, मन्त्रे भूतवाचकेनाक्षरान्तराणामनिर्देशात् । शब्दादीनां तन्मात्रपदपरित्यागेन गुणपदेनैव निर्देशात् सत्त्वरजस्तमःस्वपि वक्ष्यमाणेष्वयमेव न्याय इति ध्वनितं तेषां गुणत्वाविशेषात् । ननु व्योमादिबोधकहकारादिजन्ये बोधे शब्दादिः किं विशेष्यः प्रकारो वा । नाऽऽद्यः, सकृदुच्चरितन्यायाविरोधाय हकारादेरावृत्त्यापत्तेः, अनेकार्थपदादनेकविशेष्य[प्र]कारोपस्थित्योरावृत्तिमन्तरेणायोगात् । नान्त्यः, वाच्यतावच्छेदकत्वेन पर्यवसितैर्गुणैः सह वाचकस्याभेदायोगेन विवक्षितार्थासिद्धेः । नहि शब्दवर्णाक्षरादिपदानां वाच्याभेदेऽपि शब्दादिजात्याऽभेदः समस्तीत्यत आह– कार्येति । वाच्यवाच्यतावच्छेदकयोः कार्यकारणभावाभावे विवक्षितासिद्धावपि प्रकृते

वाच्यतावच्छेदकस्य वाच्यजन्यत्वेन प्रकारतया तस्य बोधस्वीकारेऽपि वाचकाभेदोऽनावृत्तिश्चाक्षराणां युज्यत इति भावः ॥ ३६-३७$\frac{१}{२}$ ॥

एवं व्योमाक्षराणि निर्दिश्य क्रमप्राप्तत्वाद्वाय्वक्षराणि व्याचष्टे–

**महामायात्रयेणापि कारणेन च बिन्दुना ॥ ३८ ॥**
**वाय्वग्निजलभूमीनां स्पर्शानां च चतुष्टयम् ।**
**उत्पन्नं भावयेद् देवि ! स्थूलसूक्ष्मविभेदतः ॥ ३९ ॥**

महामायात्रयं हृल्लेखाघटकमीकारत्रयं कारणबिन्दुः कामकला । **'ईस्त्रिमूर्तिर्महामाया'** इत्यधिकृत्य **'शिवोत्तमः शिवा तुष्टिश्चतुर्थी बिन्दुमालिनी'** इति **कोशात्** । श्रीचक्रस्थबिन्दुव्यावर्तनाय कारणेनेति । कामकलात्मकबिन्दोश्चक्रबिन्दुं प्रति कारणतायाः पूर्वमुक्तत्वात् । तेन चक्रबिन्द्वभिन्नस्य कौलिकार्थे वक्ष्यमाणस्याक्षरस्य व्युदासः । निर्बिन्दुक ईकारश्चतुर्थ इति यावत् । स्थूलो वायुगत एकः, सूक्ष्मा अग्न्यादिगतास्त्रय इत्येवं स्पर्शचतुष्टयमीकारचतुष्टयेन जातं विभावयेदित्यर्थः । हादिपक्षे तु तृतीयकूटस्थप्रथमाक्षरस्थोऽकारः कारणबिन्दुपदेनोपादेयः । तस्य सर्वकारणस्य स्पर्शकारणतायाः कैमुतिकन्यायसिद्धत्वध्वननाय कारणेति विशेषणम् । बिन्दुः शून्यमकारः ।अत एवाकाराधिकारे **'कामेशीवासिनी वियत्'** इति वियत्पदं **कोशे** बिन्दुपदेनाकारनिर्देशोऽकारान्तरव्यावर्तनाय ।सर्वकारणरूपाकारस्यैव शून्याकारत्वात् ।

**प्राञ्चस्तु**– कामकलाशरीरघटकेन कामाख्येन बिन्दुनेति व्याचक्षते । तन्न, महामायात्रयातिरिक्तरूपस्य तस्य हादिविद्यायामदर्शनात् । त्रयघटकस्य तु सकृद्गणितस्य पुनर्गणनायोगात् । अनापत्त्या पुनर्गणने विनिगमनाविरहात् त्रयाणामपि गणनापत्तिः । इष्टापत्तौ सप्तत्रिंशदाधिक्यम् । द्वयोस्त्यागेन तत्समाधाने तु **अस्मदु**क्तरीत्यां कः प्रद्वेषः । [यद्यपि] प्रद्वेषो द्वयोस्त्यागस्य तुल्यत्वात्तथाऽपि भवन्मते समष्टिग्रहणेन नादत्रयस्य दुस्त्यजत्वेन च संख्याविरोधतादवस्थ्याच्च, एकाक्षरावयवानां पार्थक्येन वाक्यार्थान्वयितायाः सकलदर्शनकाराणामसम्मतत्वाच्चेति न किञ्चिदेतत् ॥ ३८-३९ ॥

अथ तेजोऽक्षराणि व्याचष्टे–

**रूपाणां त्रितयं तद्वत् त्रिभी रेफैर्विभावितम् ।**
**प्रधानं तेजसो रूपं तद्बीजेन हि जन्यते ॥ ४० ॥**

त्रितयं तेजोजलक्षितिगतम् । ननु जलक्षितिगतयो रूपयोस्तेजोबीजेन कथं लक्षणेत्यत आह– प्रधानमिति । व्याख्यातमेतत् ॥ ४० ॥

अथ जलक्षराणि व्याचष्टे–

**विद्यास्थैश्चन्द्रबीजैस्तु स्थूलः सूक्ष्मो रसः स्मृतः ।**
**सम्बन्धो विदितो लोके रसस्याप्यमृतस्य च ॥ ४१ ॥**

[चन्द्रबीजैः सकारैः । **'सो हंसः ]सहजा विष्णुर्भृग्वीशश्चन्द्रसंज्ञकः'** इति **कोशात्** । [स्थूलो व्यापको जलगतः । सूक्ष्मो व्याप्यो भूगतः । विद्यास्थैश्चन्द्रबीजैरिति बहुवचनाभ्यामपि द्वित्वसंख्यैव कथ्यते ।] वाच्यस्य रसस्य स्थूलः सूक्ष्म इति प्रत्येकैकत्वेन द्वित्वस्यैव कथनात्, तृतीयरसस्याभावाच्च, 'अक्षीणि मे दर्शनीयानि', 'पादा मे सुकुमाराः' इत्यादिप्रयोगवशेन द्वित्वेऽपि बहुवचनस्य साधुताया **महाभाष्ये** वर्णनात् । **'कुक्षीशवायुकोणेषु'**(८/६५) इति चक्रन्यासप्रकरणस्थस्य कोणद्वयपरतां **'वीरेन्द्रैः'** (७/१७) इति भावार्थप्रकरणस्थपदस्य च शान्ताम्बिकोभयमात्रपरतां वर्णयतां **प्राचा**मप्यस्यार्थस्य सम्मतत्वाच्च, प्रकृतेऽपि तन्मत उत्तरार्धस्यैव तृतीयसकारव्याख्यारूपतयाऽत्रत्यबहुवचनस्य द्वित्वसंख्याबोधकत्वावश्यंभावाच्च । एतेनात्र बहुवचनवशात् सम्प्रदायार्थग्रन्थः सर्वोऽपि हादिविद्यापर एवेति मन्यमानानां तत्पक्षपातिनां तोष आपातरमणीयत्वान्निरस्तः । पदमप्यधिकाभावस्मारकान्नातिरिच्यत इत्याशयेनाऽऽह–स्मृत इति । द्वाभ्यां साभ्यां द्वौ रसौ स्मरेदित्यर्थः । ननु चन्द्रसूर्याग्नीनां तेजस्त्वाविशेषेणाग्निबीजस्य रेफस्येव चन्द्रबीजस्य सकारस्यापि रूपलक्षकत्वमेव युक्तं न रसलक्षकत्वं शक्यसम्बन्धाभावादित्यत आह–सम्बन्ध इति । रसामृतयोः सम्बन्धः प्रसिद्ध एवेत्यर्थः । अमृतपदं सुधापरं जलपरं च । अयं भावः– न तावच्चन्द्रमण्डलं तेजोरूपम्, अपि तु जलरूपम् । जलमण्डले सौरकिरणानां सन्निकर्षविप्रकर्षतारतम्येनांशतः सम्बन्धे सति तत्र प्रतिफलनेन ततः परावृत्तास्त एव सौरकिरणा उपाधिवशादनुष्णतामापन्ना दर्पणान्तःप्रतिफलितसौरकिरणा इव भुवि प्रसरन्तश्चन्द्रिकापदवाच्या भवन्ति । तदिदं **ज्योतिःशास्त्र**वेदिनां स्पष्टम् । तन्मण्डलजलं तु अमृतरूपं केवलं वेत्यन्यदेतत् । ततश्च वकारो यथा जलसामान्यस्य वाचकं बीजं तथा सकारबीजं जलविशेषस्य वाचकमित्येव विशेषः । न त्वेतावता वकारसकारयोस्तत्समवेतरसलक्षणानां कश्चित्सन्देहो 'नद्यां घोषो गङ्गायां घोषः' इतिवाक्यस्थपदयोरिव तीरलक्षणायामिति । यद्यपि यकारालाभे तत्सुसदृशमायाया इव वकारालाभे तत्सुसदृशस्याप्यलाभे मन्दसदृशसकारस्य ग्रहणमिति षाष्ठन्यायेनाप्येतत्सुसमर्थं तथाऽपि मन्दसदृशग्रहणस्यागतिकगतित्वेन ततोऽपि मुख्यमेव समाधानं मूलकारैरुक्तमिति द्रष्टव्यम् । हादिविद्यापक्षे तु द्वयोरन्यतरो रसः सकारद्वयेन लक्षणीयः, लक्षके बहुत्वस्य लक्ष्ययोर्द्वित्वस्य चोक्तिबलेन तथैव सिद्धेः । एकस्य जीवस्य बोधनाय दशानामकाराणां वक्ष्यमाणानां दृष्टत्वाच्च ।

**प्राञ्चस्तु**– तृतीयसकारः किमर्थमित्यत आह– सम्बन्ध इति। अमृतस्य समुद्रादुत्पत्तेः प्रसिद्धत्वेन तस्यापि जलरूपत्वात् तद्गतरसलक्षकस्तृतीयः सकार इत्यर्थ इति व्याचक्षते। तत्र रसपदस्य समुद्रे लक्षणेत्यादिः क्लेशः सोढव्यः॥ ४१ ॥

अथ भूम्यक्षराणि व्याचष्टे–

**वसुन्धरागुणो गन्धस्तल्लिपिर्गन्धवाचिका।**
**भुवनत्रयसम्बन्धात् त्रिधात्वं तु महेश्वरि॥ ४२ ॥**

तस्या वसुन्धराया गन्धवत्या लिपिर्वाचकं बीजं लकारः। **'लः शक्रः पूतना पृथ्वीः'** इति **कोशात्**। सा गन्धवाचिका, शक्यतावच्छेदकेऽपि शक्तेः सत्त्वात्। गन्धस्य शक्यतावच्छेदकत्वध्वननायैव गन्धे न गुणत्वानुवादः। तस्य च गन्धस्य स्थूलसूक्ष्मभेदाभावेनैकलकारेणैव चारितार्थ्येऽपि भुवनत्रयस्य गन्धत्रयाभिप्रायेण लकारत्रयमित्यर्थः। भुवनत्रयं तूर्ध्वमध्याधोभेदात्। वस्तुतस्तु **'पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात्पुरुषः'** इति **श्रुत्या**नुगुण्याय पृथिव्योषध्यन्नरूपं भुवनत्रयं विवक्षितम्। अत एवोत्तरत्र पुरुषवर्णने सन्दर्भशुद्धिर्भवति। अथवा पञ्चाग्निविद्यायां श्वेतकेतुप्रवाहणसंवादे **'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति'** इति **श्रुतौ** गार्हपत्यादौ हूयमानस्य दुग्धादिहविषो द्युपर्जन्यपृथ्वीपुरुषयोषित्कुण्डेषु परिणामविशेषविधानात्तेषु प्रथमत्वेन पृथिव्या एवेह वसुन्धरापदेन निर्देशादवशिष्टयोर्द्वयोर्द्वयोरुत्तरयोर्निर्देशाय पुनरपि द्वौ लकारौ। **श्रुतौ** हविष आप इत्यनेन निर्देशेऽप्यन्नरूपमेव तद्भवतीति ध्वननाय भुवनत्रयेत्युक्तम्, जलत्रयेति तदर्थः। एकैव क्षितिरोषध्यन्नरेतोरूपा भूत्वा पुरुषो भवति। तदिदं कथनात् पञ्चभूतजन्यानां ज्ञानेन्द्रियाणां कर्मेन्द्रियाणामपि हकारादय एव वाचका इति ध्वनितम्॥ ४२ ॥

अथ ककारान् व्याचष्टे–

**अशुद्धशुद्धमिश्राणां प्रमातृणां परं वपुः।**
**क्रोधीशत्रितयेनास्य विद्यास्थेन प्रकाश्यते॥ ४३ ॥**

शैवदीक्षादीक्षिता अपि मालिन्यतारतम्येन त्रिविधाः प्रमातारोऽप्युपासकाः सन्ति। तेषां च दीक्षारूपं जन्मान्तरं प्राप्तानां यत्परं वपुरुत्कृष्टशरीरं तत्ककारत्रयेणोच्यते। क्रोधीशः ककारः। **'कः क्रोधीशो महाकाली कामदेवः प्रकाशकः'** इति **कोशात्**।

अत्रेदं बोध्यम्– अणुः कर्म माया चेति त्रयः पाशाः। तत्राणुर्नामाज्ञानं तच्च द्विविधं चैतन्यस्वरूप आत्मनि आत्मत्वेन ज्ञानाभावः, देहादावनात्मन्यात्मज्ञानं चेति भेदात्। इदं द्विविधमपि सम्भूयाऽऽणवं मलमुच्यते। अपरिच्छिन्नस्याऽऽत्मनः परिच्छेदकत्वात्। आत्मनोऽणुत्वहेतुत्वाद् **'अणुर्मालिन्यतो मलम्'** इति **सौरसंहितोक्तेः**।

विहितनिषिद्धक्रियाजन्यशरीरदानक्षममदृष्टं कर्म, तदपि पुण्यपापभेदेन द्विविधमपि सम्भूय कार्मणं मलमुच्यते । एकस्यैवाऽऽत्मनो नानात्वं माया । सा चानेकविधाऽपि सम्भूय मायीयं मलमुच्यते । एतेषु त्रिषूत्तरोत्तरं पूर्वपूर्वव्याप्यम् । तदिदं **'ज्ञानं बन्धः', 'योनिवर्गः कला शरीरम्'** इति **शैवसूत्रयोर्भाष्ये प्रत्यभिज्ञाया**मपि स्पष्टम् । एतेषु त्रिभिरपि पाशैर्बद्धः पशुरशुद्धः । अणुकर्मभ्यामेव बद्धो मिश्रः । अणुमात्रेण बद्धः शुद्धः । एतेषामेव च क्रमेण **'सकलः प्रलयाकलो विज्ञानकेवलः'** इति **तन्त्रान्तरे** संज्ञाः । एताः संज्ञाः परित्यज्याशुद्धादिपदैर्व्यवहारस्तु तत्तल्लक्षणध्वननार्थः । तत्र शुद्धत्वं यद्यपि मलसामान्यभावस्तथाऽपि तस्य ब्रह्मातिरिक्तेष्वसम्भवात् किञ्चिन्मलवत्त्वे सतीतरमलाभाव एव जीवेषु शुद्धत्वं वाच्यम्, तच्च किञ्चिदेकं मलं त्वाणवम् । कार्मणमायीययोः पूर्वपूर्वव्याप्यत्वेनैकैकस्यावस्थानायोगात् । एवमशुद्धत्वं विनिगमनाविरहात् सर्वमलवत्त्वम्, मिश्रत्वं शुद्धाशुद्धलक्षणयोः साङ्कर्यं शुद्धलक्षणस्याऽऽणवस्याशुद्धलक्षणस्य कार्मणस्य च योग इति यावत् । मायीयस्य पूर्वद्वयव्याप्यत्वेन तद्योगेनाशुद्धत्वस्यैवाऽऽपत्तेः । अत एवाशुद्धमिश्रशुद्धानामिति युक्तोऽपि क्रमो नाऽऽदृतः, शुद्धताज्ञानोत्तरमेव तद्योगेन मिश्रज्ञानात् । एतेनानभ्यर्हितस्यानल्पाच्तरस्याशुद्धपदस्य कथं पूर्वनिपात इति शङ्का निरस्ता, अजाद्यदन्तमित्यस्य परेणाल्पाच्तरेण बाधात् । एतेष्वाद्यौ मलपाकापाकाभ्यां प्रत्येकं द्विविधौ । अन्त्यस्तु कलुषसमाप्त्यसमाप्तिभ्यां द्विविधः । तेष्वशुद्धाः पक्वमलत्रयाः क्रोधभट्टारकादयोऽष्टादशोत्तरशतमुपासकाः सन्ति । अन्यानप्याचार्यरूपेण शिवं एवानुगृह्णाति । अपक्वमलत्रयांस्तु भोगेन मलपाकाय नानायोनिषु विनियुङ्क्ते । सोऽपि चानुग्रह एव ।

**'मलादीनामपाके तु सामान्यानुग्रहो भवेत् ।**
**नानायोनिषु पाकाय नियुङ्क्तेऽनुजिघृक्षया ॥'**

इति वचनात् । मिश्राः पक्वमलद्वयास्तु लोकपालादय आधिकारिकाः पुरुषाः । अपक्वमलद्वया मिश्रास्तु कर्मवशादुत्तमयोनिष्वेव जायमानाः पुरुषाः । शुद्धाः समाप्तकलुषास्तु विद्येश्वरा नवनाथादयः । असमाप्तकलुषाः शुद्धास्तु सप्तकोटिमहामन्त्राः । न च तेषां जडत्वमिति शङ्क्यम्, शब्दशरीरस्य जडत्वेऽपि शरीरिणामस्माकमिव चेतनत्वोपपत्तेः । अत एवापक्वाणवमलवज्जीवत्वाभिप्रायेण मन्त्राणामणुसंज्ञा । उक्तं च **मृगेन्द्रसंहितायां** विद्येश्वरजन्मनिरूपणावसरे—

**'अथानादिमलापेतः सर्वकृत्सर्वदृक्शिवः ।**
**पूर्वं व्यत्यासितस्याणोः पाशजालमपोहति ॥'**

इति । आधिकारिकजन्म निरस्य मन्त्रजन्मप्रापितस्येति व्यत्यासितपदस्यार्थः । इतोऽप्यन्यो विस्तरः **शैवशास्त्रे** द्रष्टव्यः । ईदृशा द्विद्विरूपास्त्रयः प्रमातारः ककारत्रयबोध्या इत्यर्थः ॥ ४३ ॥

अथ ये तावदपक्वमलत्रया अशुद्धा जीवास्तेऽपि द्विविधाः — वीरकर्मठास्तद्भिन्नाश्च । तेषु प्रथमे ककारेणोक्ताः, तेषु दीक्षितानामेव ग्रहणात्, पृथिवीनिरूपणोत्तरं श्रौतक्रमेण सर्वजीवोपस्थितावपि तेष्वभ्यर्हितानामेव प्रथमं निरूपणीयत्वाच्च । अनभ्यर्हिताश्चरमे त्वनन्ताः । अत एव तान् बहुभिरकारैर्निर्दिशति—

**श्रीकण्ठदशकं तद्वदव्यक्तस्य हि वाचकम् ।**

श्रीकण्ठोऽकारः, **'अः श्रीकण्ठः सुरेशश्च ललाटश्चैकमातृकः'** इति **कोशात्** । ते च दशैव विद्यायां वर्तन्तेऽत आह—दशकमिति । यद्यपि तृतीयकूटस्थप्रथमाकारः प्रकाशवाचकत्वेन भावार्थप्रकरणे निर्णीत इति तत्परित्यागे नवकमित्येव वक्तव्यम्, तथाऽपि तत्रोक्तोऽर्थः परारूपस्यैवाकारस्य न तु वैखरीरूपस्येति तदन्तर्भावेन दशकमित्युक्तम् । इमे च शङ्कासमाधाने हकारार्थनिरूपणावसरे युगपद्वृत्तिद्वयविरोधपरिहाराय तत्रैव मूलकारैः प्रदर्शिते इति नात्र पुनरुट्टङ्किते । तद्वत्तथा, किञ्चेत्यर्थः । परमशिववदित्यर्थ इति **केचित्** । अकारो यथा शिवस्य वाचकस्तथा जीवस्यापीति । एते दशाप्यव्यक्तस्य वीरकर्मठेतरसकलजीवानां वाचकाः, 'परिहृत्य विशेषविषयं सामान्यविषयः प्रसज्जति' इति न्यायेन जीवसामान्यवाचकस्याव्यक्तपदस्य विशेषे पर्यवसानात् । इदं च **प्राचां** मतमनुसृत्योक्तम् । वस्तुतस्तु—क्षित्यादिशिवान्तषट्त्रिंशत्तत्त्वानि तल्लक्षणानि तदक्षराणि च वर्णयितुं प्रवृत्तेन भगवता पञ्चभूतमात्रांशे श्रुत्युक्तसृष्टिक्रममनुसृत्य तानि निर्वर्ण्य तदभेदादेव तज्जन्यगुणास्तज्जन्यान्येव ज्ञानकर्मेन्द्रियाणि च कार्यकारणैक्योक्त्या सम्मुग्धाकारेण वर्णितान्येव, तेषां सर्वेषां पाञ्चभौतिकविकारमात्ररूपत्वेन ततोऽधिकस्य वर्णनीयांशस्याभावात् । हकारादिजन्यत्वबोध्यत्वे उक्ते एव । एवं क्षित्यादिपञ्चकं गन्धादिपञ्चकमुपस्थादिपञ्चकं प्राणादिपञ्चकं चेति विंशतौ तत्त्वेषु निरूपितेषु क्रमप्राप्तमपि मनोबुद्ध्यहङ्कारप्रकृतिचतुष्टयमुल्लङ्घ्य पञ्चविंशस्यापि पुरुषस्य पृथिव्यनन्तरं **श्रुतौ** कथनमनुसृत्य तस्यैकविंशस्थाने निरूपणेऽपि पुरुषनिरूपणोत्तरं तच्चतुष्टयत्यागे मानाभावात्तन्निरूपणपरमेव श्रीकण्ठपदम् । अत एव पूर्वत्राशुद्धपदेन मलत्रयबद्धत्वाविशेषात् सकला अपि सकला उक्ता एव, न वीरकर्मठा एव, मानाभावाच्च । ततश्च जीवनिरूपणे समाप्ते पुनरिह तन्निरूपणोक्तिरयुक्तैव । किं च, अव्यक्तपदं प्रकृतावेव, न जीव इति । यथा चोक्तं **पञ्चशिखाचार्यैः**—**'अनादिमध्यं महतः परं ध्रुवं प्रधानमव्यक्तमुशन्ति सूरयः'** इति । **सांख्यसप्तत्या**मपि—

**'सूक्ष्ममलिङ्गमचेतनमनादिनिधनं तथा प्रसवधर्मि ।**
**निरवयवमेकमेव हि साधारणमेतदव्यक्तम् ॥'**

इति । अत एवैकवचनमपि । जीवपक्षे ह्यव्यक्तानां हि वाचकमित्येव ब्रूयात् । सा च प्रकृतिर्गुणत्रयसमष्टिस्तन्तुरूपा, **'सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात्'** इति **सांख्यप्रवचनसूत्रे**

तथा निर्णयात्, तदिदं लक्षणं बोधयितुं तद्वदित्युक्तम्, गुणत्रयवदित्यर्थः, भवत्पक्षे तस्यानतिप्रयोजनकत्वापत्तेः । गुणवच्च तदव्यक्तञ्चेति समासः । एवमुक्तिश्च **'भवेद् गुणवतां बीजम्'** (७/३७) इत्युक्तन्यायस्मारणार्था । ततश्च गुणवत्प्रधानस्य वाचका अकारा गुणानां वाचका अपि भवन्तीत्यर्थः । अहङ्कारबुद्धिमनोरूपतत्त्वत्रयस्यापि वाचका इति यावत्, तेषां क्रमेण रजःसत्त्वतमोरूपैकैकगुणात्मकतायाः सिद्धान्तसिद्धत्वात् । सर्वनाम्नां पूर्वोपस्थितवाचकत्वेन पूर्वानुपात्तगुणवाचकत्वं तच्छब्दस्य कथमिति चेत्; परशिवो वा पूर्वं क्वोपात्तः । **'स [च] सर्वो महेश्वरः'** (७/३१) इत्यत्रेति चेत्; ततोऽपि सन्निकृष्टे **'भवेद् गुणवतां बीजम्'** (७/३७) इत्यत्र गुणा अप्युपात्ता एव । श्रीकण्ठपदेनैव शिवस्याप्युपादानमिति चेत्, अस्माकमपि तुल्यम् । श्रीर्विषं, कं जलं गङ्गायाः, ठश्चन्द्रमण्डलम् । **'बृहद्ध्वनौ च ठः प्रोक्तस्तथा चन्द्रस्य मण्डले'** इति **अनेकार्थध्वनिमञ्जरी** । एतत्त्रयं व्युत्क्रमेण सत्त्वरजस्तमसामुपलक्षणम् । तथा च **शिवस्तुता**वुक्तम**स्माभिः**–

**'इन्दुज्ज्वलनक्ष्वेडं सितशोणश्यामलं क्रमाद्दधता ।**
**सत्त्वरजस्तमसां किमु तरतमभावस्त्वया च दिष्टो नः ॥'**

इति । प्रकृतेऽपि गङ्गायाः पार्वत्या सह मात्सर्यादिदर्शनाद् राजसत्वम् । नन्वेतत्त्रयमकारवाचकश्रीकण्ठपदात्पदार्थमर्यादया नोपस्थितमिति चेत्; तुल्यं भवतोऽपि ।

**'नालीकासनमीश्वरः शिखरिणां तत्कर्षणोत्थायिनो**
**गन्धर्वाः पुरतस्तदध्वचरितौ चक्रे तदुद्धारकः ।**
**पत्री तत्प्रभुवैरिणां परिवृढो जीवा च यस्याभवत्**
**तस्यान्तेवसतां रिपुक्षयविधौ देवाय तस्मै नमः ॥'**

इत्यत्र पूर्वं पदाद्वाक्यार्थान्वयित्वेनानुपस्थितस्यापि यथाकथञ्चिदुपस्थितिमात्रेणोत्तरोत्तरवाक्यगतसर्वनामभिः परामर्शदर्शनाच्च । नालीकासनं शरासनं कमलासनश्च । गन्धर्वा अश्वा देवविशेषाश्च । चक्रे रथचक्रे सुदर्शनं च । पत्री बाणः पक्षी च । जीवा मौर्वी बृहस्पतिश्च । एतेषु प्रथमेऽर्थाः पूर्ववाक्यार्थान्वयिनः । चरमे तूत्तरवाक्यस्थसर्वनामभिः परामृश्यन्त इति स्थितिः । तस्माद्दशभिरकारैर्मनोबुद्ध्यहङ्कारविशिष्टा प्रकृतिर्बोध्यत इत्यर्थः ॥ ४३$\frac{1}{2}$ ॥

**'तदव्यक्तमाह हि'** इत्यधिकरणे परब्रह्मणोऽप्यव्यक्तपदेन निर्देशस्य साधितत्वादिह प्रकृत्यर्थमुपात्तेनाप्यव्यक्तपदेन तत्त्वातीतस्य परमशिवस्योपस्थितेरिहैव तद्बोधकं पदमेकारं व्याचष्टे–

**प्राणभूतः स्थितो देवि तद्वदेकादशः परः ॥ ४४ ॥**
**एकः सन्नेव पुरुषो बहुधा जायते हि सः ।**

एकादश एकारः, एकाराधिकारे—**'सन्धिरेकादशो भद्रा पद्मनाभः कुलाचलः'** इति **कोशात्**, मातृकाक्रमे तस्यैकादशत्वाच्च, **'यदेकादशमाधारं बीजं कोणत्रयात्मकम्'** (१/६) इति प्रयोगाच्च । स प्रकृतेस्तत्त्वानां तत्त्वातीतस्य वा प्राणभूतः, प्राणो यथा शरीरान्तःस्थितः सन् शरीरं चेष्टयति तादृशः सन्नयं स्थित इत्यर्थः । शक्तेरेव सर्वजनकत्वेऽपि शिवस्य निष्क्रियस्यापि सन्निधिमात्रेण कारणत्वमिति सिद्धान्तात् परं ब्रह्मैवेह तत्त्वातीतं प्राणपदेनोच्यते । अत एव प्राणाधिकरणे प्राणपदस्य परब्रह्मपरता निर्णीता । अत एव चेतराक्षराणामिवैकारेण प्राणो जन्यत इति वा, एकारस्तद्वाचक इति वा नोक्तम्, नित्यस्य निर्धर्मकस्य तदुभयायोगात् । शब्दार्थयोरभेदाभिप्रायेण वर्ण एव प्राणभूत इत्येतावदेवोक्तम् । अथवा पञ्चविंशतेस्तत्त्वानां पूर्वं निरूपणाद-वशिष्टेष्वेकादशः शिव एव । तस्यापि तत्त्वान्तर्गतत्वेन तदतीतत्वद्योतनाय पर इति विशेषणम् । अनया रीत्यैकादशपदमेवाऽऽवृत्तं सच्छब्दमर्थं च बोधयति । तद्वदिति पदं तु पूर्ववत् किञ्चेत्यर्थकम् । अनन्तशक्तिमदित्यर्थकं नपुंसकं तद्ब्रह्मपरं वा । एतस्यैव लक्षणमाह—एक इति । सन्पुरुषः । **'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्'**, **'पुरुषो वै रुद्रः'** इत्यादि**श्रुति**षु प्रसिद्धेः । परशिव एक एव सन्ननन्तशक्तिमत्त्वाद् बहुप्रकारो यस्माद्भवति तस्मात्तस्य प्राणरूपताशक्तेरित्यर्थः । हादिविद्यायां तु यद्यपि द्वादश श्रीकण्ठास्तथाऽपि तेष्वेको वायुगतस्पर्शपर इति पूर्वमुक्तः । अत एकादशैवावशिष्टाः, तेषु दशाव्यक्तादिपरा एकादशोऽकारस्तत्त्वातीतपर इति व्याख्येयम् ।

**प्राञ्चस्तु**— द्वादशानां मध्ये दश जीववाचकाः । एकादशो जीवाधारस्य प्राणवायोर्वाचकः । परो द्वादशस्तु पुरुषः परमशिववाचकः । ननु त्रिभिरकारैरेव विवक्षितसिद्धौ नवानां किं प्रयोजनमित्यत आह—एक इति । **'इन्द्रो मायाभिः पुरुरूप ईयते'**, **'एक एव हि भूतात्मा भूते भूते व्यवस्थितः'** इत्यादि**श्रुति**सिद्धमर्थं द्योतयितुं तद्बाहुल्यमिति भाव इत्याहुः । इदं च तत्त्वान्तः पञ्चविंशत्वेन गणितः, **'पुरुषो वै रुद्रः'** इति **श्रुति**प्रसिद्धो जीव इति पक्षमाश्रित्योक्तम् । यदा तु विराट्पुरुष एव स गणितः, जीवस्त्वहङ्कारादिरूप एव ।

**'इन्द्रियाण्यान्तराण्यत्र विषयेभ्यो हि देहिनाम् ।**
**आन्तरं मन एतेभ्यो बुद्धिस्तस्मादिहाऽऽन्तरा ॥**
**बुद्धेरप्यान्तरो जीवो गतोऽहन्तामिति स्थितिः ।**
**अस्मात्परं सदा ज्ञेयमव्यक्तं कारणं हि यत् ॥'**

इति **आत्मपुराण**वचनादित्यालोच्यते, तदा तु प्रमातृत्वस्य वस्तुतोऽन्तःकरण-निष्ठत्वात्तस्य च मनोबुद्ध्यहङ्कारभेदेन त्रिधा तत्त्वेषु गणितत्वात्त एवाशुद्धादयः प्रमातारः । अत एवाशुद्धशुद्धमिश्राणामिति क्रमोऽप्युपपद्यते, तेषां तमःसत्त्वरजो-

रूपत्वात् । यद्यपि प्रमातृपदेन जीवा एवोच्यन्ते, तथाऽपि तेषां ब्रह्माभेदात् प्रमातृत्वं परं निष्कृष्टं वपुः शरीरं मन आदिरूपमेवेति त एवाकारत्रयवाच्याः । ततः क्रमप्राप्तमव्यक्तं निरूप्य तदुत्तरमेकादशेनाक्षरेण विराट्पुरुष एवोच्यते । स च जीवसमष्टिरूपत्वात् प्राणभूत एव । एकः सन्नेवेत्यपि तत्रैव सामञ्जस्येनोपपद्यते । एवं सति तत्त्वानां प्रसिद्धः क्रमो न लोपितो भवति । तत्त्वातीतं तु सर्वान्ते शान्तिपदेन वक्ष्यते ॥ ४४-४४$\frac{१}{२}$ ॥

इदानीमवशिष्टानामेकादशतत्त्वानां वाचकानि बिन्द्वक्षराणि नादाक्षराणि च व्याचष्टे–

**रुद्रेश्वरसदेशाख्या देवता मितविग्रहाः ॥ ४५ ॥**
**बिन्दुत्रयेण कथिता–**

नियतिः कालो रागो विद्या कला माया शुद्धविद्येश्वरः सदाशिवः शक्तिः शिवश्चेत्येकादश । [तत्र जगदहन्तया पश्यन्] सदाशिवः । तदेव जगदिदन्तया पश्यन्नीश्वरः । अहन्तेदन्तयोरभेदबुद्धिः शुद्धविद्या । तयोरेव भेदबुद्धिर्माया । ततश्च याः परब्रह्मणि विद्यमानाः सर्वकर्तृत्व-सर्वज्ञत्व-नित्यतृप्तत्व-नित्यत्व-स्वतन्त्रत्वाख्याः पञ्च शक्तयो निरवग्रहदेवताः स्थितास्ता एव सावग्रहाः सत्यः सङ्कुचिताः क्रमेण कलादिसंज्ञापञ्चकं भजन्ते । तादृशसङ्कुचच्छक्त्याधारः पुरुष एवैकारेणोक्तः । तदिदं **सौभाग्यसुधोदये** प्रतिपादितम् **अमृतानन्दैः** । अत्र यथा सर्वतत्त्वातीतं ब्रह्म देशकालादिभिरनवच्छिन्नं तथैव शिवशक्ती अप्यनवच्छिन्ने एव । अहन्तेदन्ताबुद्ध्योश्च सूक्ष्मतमरीत्या भेदकलितत्वादनवच्छिन्नताततः किञ्चिदूनत्वं परिच्छिन्नताततः किञ्चिदाधिक्यं चेति सदाशिवेश्वरशुद्धविद्या अनुष्णाशीतस्पर्शवन्मध्यविधाः । मायादयस्तु देवताभेदैकघटितत्वात् परिच्छिन्ना एवेति स्थितिः । किञ्चैतेषु षट्त्रिंशत्तत्त्वेषु क्षित्यादिश्रोत्रान्तम्, ततः प्रकृत्यन्तम्, ततो मायान्तम्, ततः सदाशिवान्तम्, ततः शिवान्तमेवं क्रमेण पृथिव्यादितत्त्वपञ्चकता । तदिदं पञ्चभूतमयं विश्वमित्यनेनैवोक्तम् । तथा क्षित्यादिमायान्तं सद्रूपं प्रकटं चिदानन्दांशावावृतौ । तादृशत्वादेवैषामात्मतत्त्वरूपता । शुद्धविद्यादित्रये सच्चिदंशावनावृतौ, आनन्दांशस्त्वावृतः । तादृशत्वादेव तेषां विद्यातत्त्वरूपता । शक्तिशिवयोस्तु न कोऽप्यंश आवृतोऽतः शिवतत्त्वरूपता । अत्र सर्वत्र मूलभूतानि वचनानि **प्राचां** टीकासु द्रष्टव्यानि । एवं स्थिते प्रकृते रुद्रशब्दस्तेजोवचनः, **'रुद्रो वा एष यदग्निः'** इति **श्रुतेः** । तेन तेजस्तत्त्वपदवाच्यानां पुरुषादिमायान्तानां सप्तानामुपस्थितिः । तेषु पुरुषस्य वर्णितत्वेन रुद्रशब्देन षडेव देवता गृह्यन्ते । ईश्वरः प्रसिद्धः । सदेशः सदाशिवः ।

एतासां लक्षणमाह–मितेति । परिच्छिन्नस्वरूपा इत्यर्थः । एते त्रयो बिन्दुत्रयेण प्रतिपाद्यन्ते । शुद्धविद्या त्वीश्वरसदाशिवौ प्रत्येव गुणभूतत्वाद् **'भवेद् गुणवतां बीजम्'**

(७/३७) इत्युक्तन्यायेन साऽपि बिन्दुनैव प्रतिपाद्यते । यत्तु **प्राञ्चो**ऽपि रुद्रपदं तेजस्तत्त्वसप्तकपरत्वेनैव व्याचक्षते, तदयुक्तम्; प्रसिद्धार्थपरित्यागापत्तेः । भवन्मते हि पञ्चदशगुणपरत्ववासनासप्तत्रिंशत्तत्त्ववासनाद्वयाद्भिन्नैवैषा वासना; अस्यां सर्वतत्त्वानां निरवशेषगणनस्यानावश्यकत्वात्, क्षित्यादिपञ्चकस्येन्द्रियदशकस्य च वाच्यत्वेन भवद्भिरवर्णितत्वात्, तत्त्वान्तर्गतानां कतिपयानां त्यागस्येव तत्त्वानन्तर्गतानामपि संग्रहे बाधकाभावात्, शान्तेस्तत्त्वानन्तर्गताया भवद्भिरिह वर्णनाच्च । न च तत्त्वातीतपरं तत् । तस्याप्यनावश्यकत्वात् । द्वादशस्य श्रीकण्ठस्य तदर्थत्वेन सप्तत्रिंशत्पदार्थबोधकत्वविधेरुपक्रमस्थस्य तात्पर्यग्राहकत्वानुरोधेनेदृशः क्लिष्टोऽप्यर्थो न दोषावह इति ज्ञेयम् ॥ ४५-४५$\frac{१}{४}$ ॥

नादान् व्याचष्टे—

**—अमितामितविग्रहाः ।**
**शान्तिः शक्तिश्च शम्भुश्च नादत्रितयबोधनाः ॥ ४६ ॥**

अमितामितेति । वीप्सयौत्पत्तिकानवच्छिन्नत्वमुच्यते । तेनेषदवच्छिन्नयोरीश्वरसदाशिवयोर्निरासः । तत्र शक्तिशिवौ शक्तिशम्भुपदाभ्यामुक्तौ । शान्तिपदेन तत्त्वातीतं ब्रह्मैव, **'ब्रह्म शान्तिः'** इति **श्रुतेः'**, 'तया ह शान्त्या सर्वशान्त्या मह्यं द्वि[पदे] चतुष्पदे च शान्तिं करोमि' इति मन्त्रैः शान्तेः सर्वशान्तिरूपत्वविशेषणेन तत्त्वातीतस्वरूपतायाः स्पष्टीकरणाच्च । न च 'ब्रह्म शान्तिः' इत्यत्र ब्रह्मशब्दो वेदपर इति मन्तव्यम्; ब्राह्मणः शान्तिरित्येतत्समभिव्याहारेण तस्य [ब्रह्म]परत्वनिश्चयात् । **'ब्रह्माऽऽयुष्मत्तद्-ब्राह्मणैरायुस्मत्'** इति **श्रुतौ**, **'मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च'** इति **स्मृतौ** च ब्राह्मणपदसमभिव्याहारस्य तादृशनिर्णायकताया **दीक्षिता**दिभिरुक्तत्वात् । 'पृथिवी शान्तिः' इत्यादयस्तु ब्रह्मणः सर्वात्मत्वपराः सत्यो न विरुध्यन्ते । ब्रह्मविद्याद्यन्तयोः 'शान्तिः शान्तिः शान्तिः' इति मन्त्रपाठोऽपि शान्तिपदस्य ब्रह्मपरत्व एव लिङ्गम्, जगदाद्यन्तयोर्ब्रह्मण एवावशेषात् । यद्यप्येवं सति 'शक्तिः शम्भुश्च शान्तिश्च' इत्येव वक्तुमुचितम्, उपक्रान्तक्रमानुगुण्यात्; तथाऽपि तत्त्वातीतज्ञानस्य तन्निष्ठत्वेनेक्षणात्मकशक्तिज्ञाने कारणत्वात्तादृशशक्त्युपलक्षितत्वेन शिवज्ञाने शक्तिज्ञानस्यापि कारणत्वादीदृशलक्षणध्वननाय शक्तिशिवयोः पूर्वं शान्तिर्निवेशिता भगवतेति । **प्राञ्च**स्तु—नादोऽखिलं जगत्,

**'अधःशक्त्या विनिर्भिद्य ऊर्ध्वशक्त्यवसानकम् ।**
**नाड्या ब्रह्मबिले लीनस्त्वव्यक्तध्वनिलक्षणः ॥'**

इति वचनादित्याहुः । परं तु तादृशस्य लीननादस्य शान्तिरिति संज्ञायां किं प्रमाणं तैरुपन्यस्तमिति विचार्यम् ॥ ४६ ॥

अथास्य मन्त्रस्य सर्वमन्त्रोत्तमत्वमुक्तं सम्प्रदायार्थलब्धं वर्णयन्नुपसंहरति–

**वागुरामूलवलये सूत्राद्याः कवलीकृताः ।**
**तथा मन्त्राः समस्ताश्च विद्यायामत्र संस्थिताः ॥ ४७ ॥**
**गुरुक्रमेण सम्प्राप्तः सम्प्रदायार्थ ईरितः ।**

वागुरा मत्स्यबन्धनजालम्, तस्य मूलस्थान एको वलयस्तत्र प्रोतानि सूत्राणि तेषामन्तेष्वयोघुटिकाः । तेषां सर्वेषां वलय एव यथाऽऽधारस्तथा सर्वेषां मन्त्राणामियं श्रीविद्यैवाऽऽधारः, तेषामन्तःकलुषशुद्धप्रमातृरूपत्वेन बुद्धितत्त्वेऽन्तर्भावस्य पूर्वं वर्णितत्वात् । **प्राञ्च**स्तु–सर्वमन्त्रमयत्ववासनैषा चतुर्थी स्वतन्त्रैवोपदिश्यत इत्याहुः । अनया रीत्या यः सम्प्रदायार्थः स मया गुरुक्रमेणैव प्राप्तस्त्वयाऽपि गुरुपारम्पर्यक्रमेणैव योग्येभ्य उपदेष्टव्य इत्यर्थः । आदौ निर्गुणाद् ब्रह्मणो ध्वनिरूपोन्मनात्मना सूक्ष्मरूपा वागुत्पन्ना । सा [ताम्] स्वच्छन्दभैरवो निर्गुणब्रह्मशिष्यो बुद्ध्वा संक्षेपरूपेण तन्त्राणि प्रणीयानाश्रितेश्वरायोक्तवान् । स तानि विस्तृत्य शान्त्यतीतादेव्यै कथयामास । सा सदाशिवायाकथयत् । स पञ्चाम्नायादिभेदेनासंख्यमप्रमेयं बहुविस्तरमपारमचीकरत् । तत ईश्वरो विद्येश्वरः श्रीकण्ठादयो रुद्रा इत्यादिक्रमेणातीव प्रथितमभूदित्येषा गुरुपरम्परा **वृद्धै**रुक्ता । अत्र सर्वत्र मूलभूतानि वचनानि **प्राचां** टीकासु द्रष्टव्यानि । अत्र तत्त्वातीतविशेष्यकः सकलतत्त्वप्रकारकोऽभेदसंसर्गको बोधः सप्तत्रिंशतः पदानां सामानाधिकरण्यलब्धः, परं तु तत्तद्वर्णजन्यत्वस्याप्यस्मिन् प्रकरणे कथनात्तस्यापि शाब्दबोधे विषयत्वमावश्यकम्, तदभावे विद्याविश्वयोरभेदभानासम्भवात् ।

**'ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।**
**तथैव सर्वशब्दानामेते [पृथगवस्थिते ॥'**

इत्युक्त्या व्यो]म तद्गुणः शब्दस्तदीयमिन्द्रियं चेत्येतावानर्थो हकारस्य । यत्र चाक्षरजन्यताया बाधस्तत्र तदक्षराभेदमात्रं तदर्थविशेषणम् । ततश्च यथायोग्यं तत्तदक्षरजन्यत्वेन तत्तदक्षरभिन्नत्वेन च तत्तद्वाच्यलक्ष्यार्थानुद्दिश्य तेषु नादाभिन्नतत्त्वातीताभेदविधिरूपोऽर्थः शाब्दः । एवं विश्वजनकत्वाद्देवीविद्ययोरभेदबोधो मानसः पाश्चात्य इति द्रष्टव्यम् ॥ ४७-४७$\frac{१}{२}$ ॥

एवं सम्प्रदायार्थं निरूप्य क्रमप्राप्तं निगर्भार्थमुपदिशति–

**निगर्भार्थो महादेवि शिवगुर्वात्मगोचरः ॥ ४८ ॥**

नितरां गर्भ इव निगर्भो रहस्यतम इत्यर्थः । शिवगुर्वात्मानो यस्मिन्नभेदेन गोचरा विषयास्तादृशबोधविषयोऽर्थो निगर्भार्थ इति यावत् ॥ ४८ ॥

एवं तत्स्वरूपमुक्त्वा तदुपदेशं प्रतिजानीते–

**तत्प्रकारं च देवेशि दिङ्मात्रेण वदामि ते ।**
**शिवगुर्वात्मनामैक्यानुसन्धानात्तदात्मकम् ॥ ४९ ॥**

शिवो गुरुः स्वयञ्चेति त्रयाणामैक्यस्य परस्परप्रतियोगिकाभेदस्यानुसन्धानात्त-दात्मकाहार्याद् दृढाभ्यस्ताद् मन्त्रज्ञानजन्यशाब्दबोधात्तदात्मकमैक्यात्मकं तत्प्रकारं शिवादिविशेष्यकबोधविशेषणं संक्षेपेण ते वदामीत्यर्थः ॥ ४९ ॥

तदेवाऽऽह–

**निष्कलत्वं शिवे बुद्ध्वा तद्रूपत्वं गुरोरपि ।**
**तन्निरीक्षणसामर्थ्यादात्मनश्च शिवात्मताम् ॥ ५० ॥**
**भावयेद्भक्तिनम्रः सन् शङ्कोन्मेषाकलङ्कितः ।**

शिवे परमशिवे निष्कलत्वं निर्गुणतां बुद्ध्वा प्रथमोपस्थितवाग्भवकूटजन्य-बोधविषयीकृत्य स्वगुरोरपि तद्रूपत्वं निष्कलत्वं क्रमप्राप्तद्वितीयकूटप्रतिपादितं निष्कलाभेदानुसन्धानदार्ढ्यलब्धं बुद्ध्वा तत्कृपाकरम्बितकटाक्षनिरीक्षणसामर्थ्यैक-लब्धमात्मनोऽपि निष्कलशिवात्मकत्वं तृतीयकूटप्रतिपादितं भावयेत् । हादि-विद्यायां हि हस-शब्दो ह्रस्वपरः । रेफवकारयोर्लोपश्छान्दसः । ह्रस्वाः स्थूलरूपोज्झिताः संस्कारात्मनैव स्थिताः कला गुणादयो यस्मिन् स हसकलः । स चासौ हृल्लेखावाच्यः परशिवश्चेति कर्मधारयः । भावार्थप्रकरणोक्तरीत्या द्वितीयकूटस्थप्राथमिकाक्षरत्रयं निष्कलब्रह्मपरमेव । तद्धलत्याकर्षयति अभेदेनानु-सन्धत्ते सोऽयं हसकहलो गुरुः । सोऽपि हृल्लेखावाच्य एव, **'मनुष्यचर्मणा नद्धः शिव एव गुरुर्मतः'** इत्युक्तेः । तृतीयकूटे सकलपदमुपासकविशेषपरं सत् स्वात्मपरम्, सोऽपि हृल्लेखार्थो निष्कल इति योजना । ननु सकलस्यैव कथं निष्कलत्व-मित्याशङ्कायामाह–भक्तिनम्र इति । कलानामौपाधिकत्वेन तदभावस्य नैसर्गिकत्वेन स्फटिकलौहित्यतदभावयोरिवाविरोध इति रीत्या शङ्काकलङ्कापगमो गुरुदेवताभक्तिमतो भवतीति भावः ।

**'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥'**

इति **श्रुतेः** ॥ ५०-५०½ ॥

कौलिकार्थमुपदिशति सार्धैः सप्तदशभिः –

**कौलिकं कथयिष्यामि चक्रदेवतयोरपि ॥ ५१ ॥**
**विद्यागुर्वात्मनामैक्यं तत्प्रकारः प्रदर्श्यते ।**

श्रीचक्रं श्रीमाता श्रीविद्या श्रीगुरुरात्मा चेति पञ्चानामैक्यं कौलिकार्थ इत्युच्यते । कुलं सजातीयसमूहः । **'सजातीयैः कुलं यूथम्'** इति **अमरः** । साजात्यं चैकधर्मावच्छिन्नत्वं गणेशादिषडात्मकत्वं च । शास्त्रारम्भे मङ्गलाचरणश्लोके यद्देवीनिष्ठत्वेन कथितं स एव पञ्चस्वनुगत एको धर्मः । तद्वन्ति कुलानि तत्सम्बन्धिनं कौलिकमर्थं मन्त्रप्रतिपाद्यं पञ्चानामभेदं कथयिष्यामि । तेषां पञ्चानां यः प्रकार एकधर्मावच्छिन्नत्वरूपं विशेषणं स प्रकर्षेण दर्श्यत उपपाद्यत इत्यर्थः ॥ ५१-५१$\frac{१}{२}$ ॥

**लकारैश्चतुरस्राणि वृत्तत्रितयसंयुतम् ॥ ५२ ॥**
**सरोरुहद्वयं शाक्तैरग्नीषोमात्मकं प्रिये ।**

त्रिभिर्लकारैस्त्रीणि चतुरस्राणि जातानि वाच्यानि वा । उभयथाऽपि तेषां परस्परमभेदः, कार्यकारणयोर्वाच्यवाचकयोश्चैक्यात्, चतुरस्रं भूमण्डलं प्रति जनकता वाचकता वा भूबीजे लकारे युक्तत्वात् । अत एव पद्मद्वयलाञ्छितं वृत्तं जलमण्डलं प्रति जनकता वाचकता वा जलविशेषात्मकचन्द्रमण्डलबीजानां त्रयाणां सकाराणां युक्तेत्याशयेनाऽऽह–वृत्तेति । षोडशदलं पद्मं सोमात्मकम् । अष्टदलं त्वग्न्यात्मकम् । वृत्तत्रयमेकमेवेति त्रीणि त्रिभिः शाक्तैः सकारैर्जातानि वाच्यानि वा । जलमण्डलस्य **तन्त्रान्तरे**ऽर्धचन्द्राकारत्वोक्तावपि **स्वच्छन्दतन्त्रे** पूर्वचन्द्राकारतोक्तेः–**'जलबिम्बं सुवृत्तं च ज्ञेयं वै पद्मलाञ्छितम्'** इति । सकाराधिकारे **'जगद्बीजं शक्तिनामा हंसो वेगवती भृगुः'** इति **नन्दनः** ॥ ५२-५२$\frac{१}{२}$ ॥

**हृल्लेखात्रयसम्भूतैरक्षरैर्नवसंख्यकैः ॥ ५३ ॥**
**बिन्दुत्रययुतैर्जातं नवयोन्यात्मकं प्रिये ।**
**मण्डलत्रययुक्तं तु चक्रं शक्त्यनलात्मकम् ॥ ५४ ॥**

हृल्लेखासु यानि त्रयाणि व्योमाग्निकामकलाक्षराणि त्रीणि तदुत्तराणि सम्भूतानि समुदायात्मकानि यानि तैर्नवसंख्यकैर्बिन्द्वाद्युन्मन्यन्तैरक्षरैः । त्रयोत्तराणि सम्भूतानीति मध्यमपदलोपी समासः । कामकलाया अवयवशो विभज्य गणनमित्याह–बिन्दुत्रयेति । ततश्च प्रतिहृल्लेखं हकारो रेफः कामाख्यबिन्दुर्विसर्गाख्यबिन्दुद्वयमनुस्वारोऽर्धचन्द्रो रोधिनी नादो नादान्तः शक्तिर्व्यापिका समनोन्मनेति चतुर्दशभिः सम्भूय द्विचत्वारिंशताऽक्षरैः शक्त्यनलात्मकं पञ्च शक्तयश्चत्वारो वह्नय इत्येवं योन्यात्मकं चक्रं द्विचत्वारिंशत्त्रिकोणात्मकं जातम् । तदिदं मण्डलत्रययुक्तं सूर्यसोमानलात्मकम्, **पूर्वचतुःशत्याम्**–**'तृतीयं तु हुताशनः'** (१/४७) इति चरणेनास्यार्थस्य ज्ञापितत्वात्,

नवयोन्यात्मकचक्रस्यैव सर्वचक्रस्वरूपताया अपि तत्रैवोपपादितत्वेनैतावन्मात्र एव मण्डलत्रययोगोक्तेरुपपत्तेश्च । अथवा बिन्दुत्रयेति नादत्रयस्याप्युपलक्षणम् । तद्युतै-रिति तु बिन्दुनादविशिष्टस्तुर्यस्वर एक एव गणनीय इति द्योतयितुम् । ततश्च हकारत्रयरेफत्रयेंकारत्रयैर्नवभिर्नवयोनिचक्रं जातमित्यर्थः । ननु प्रथमव्याख्यापक्षे त्रिकोणानां त्रिचत्वारिंशत्संख्याकत्वेनात्र कथमेकस्य त्यागः ? न च तस्य पार्थक्येन बिन्दुना सह वासनाऽग्रे कथयिष्यत इति वाच्यम्; तथा सत्यष्टयोन्यात्मकत्वो-क्तिर्विरुध्येतेति चेन्न, चक्रोद्धारावसरे प्रथमशक्तेर्द्वितीयशक्त्यभेदेन विधानेन प्रथमशक्तीशानाग्नेयकोणयोर्वसुकोणघटकत्वेन तदीयप्रतीचःकोणमात्रस्य पृथक्करणेऽ-प्यवशिष्टस्य नवयोन्यात्मकत्वानपायात् ॥ ५३-५४ ॥

एवं भूगृहं पद्मद्वयं नवयोनिचक्रं चोक्त्वा क्रमप्राप्तयोर्मध्यत्रिकोणबिन्द्वो-र्वासनामाह–

**व्योमबीजत्रयेणैव प्रमातृत्रितयान्वितम् ।**
**इच्छाज्ञानक्रियारूपमादनत्रयसंयुतम् ॥ ५५ ॥**
**सदाशिवासनं देवि महाबिन्दुमयं परम् ।**
**इत्थं मन्त्रमयं चक्रं देवतायाः परं वपुः ॥ ५६ ॥**

इच्छाज्ञानक्रियापदेन मध्यत्रिकोणमुच्यते, तस्य तद्वासनाकत्वस्य पूर्वमुक्तत्वात् । तद्रूपं यन्मादनत्रयं ककारत्रयं तेन संयुतम् । अत एव प्रमातृत्रितयेन सम्प्रदा-यार्थप्रकरणोक्तसकलादिसाधकत्रयेणान्वितम् । सदाशिव एवाऽऽसनं यस्यैतादृशं महाबिन्दुमयं चक्रं व्योमबीजानां हकाराणां त्रयेण जातं वाच्यं वेत्यर्थः । ककारत्रयेण कोणत्रयं हकारत्रयेण बिन्दुरिति यावत् । देवताशरीरान्तरभूतमिदं चक्रं विश्वमनेन प्रकारेण मन्त्रमयं मन्त्राभिन्नमिति ।

**प्राञ्चस्तु**–हल्लेखास्थाक्षरनवकेन त्रिकोणवसुकोणोभयरूपं नवयोनिचक्रमुत्पन्नम् । तदुपरितनं यच्चक्रं शक्तित्रयानलत्रयात्मकं दशारद्वयचतुर्दशाररूपं तदिदं हकार-त्रयेणोत्पन्नम् । बिन्दुस्तु ककारत्रयेणोत्पन्नः । मण्डलत्रयपदं शक्त्यनलत्रयपरमेव । एवंरीत्या परं वपुरित्यन्तेन ग्रन्थेन चक्रमन्त्रदेवीनामभेद उक्त इति व्याचक्षते । तच्चिन्त्यम्, मण्डलपदस्यैकैकशक्त्यनलमिथुनवाचकत्वे मानाभावात्, पद्मद्वयकथ-नोत्तरमुल्लुत्य वसुकोणानुधावने बीजाभावाच्च । न च दशारादिभ्यः पूर्वं नवयोनिचक्रस्योत्पत्तेः पूर्वं तत्कथनमिति समाधातुं शक्यम्, बिन्द्वादिभूगृहान्तरूपस्य लेखने क्लृप्तस्य सृष्टिक्रमस्येहाननुसृतत्वात्, पूजायां क्लृप्तस्य संहारक्रमस्यै-वेहाऽऽदृतत्वेन तद्विरोधाच्च ।

इदं त्विहावधेयम्– चक्रं देवता विद्या गुरुः साधकश्चेति पञ्चानां मध्य एकैकस्य स्वस्वेतरचतुश्चतुःप्रतियोगिकाभेदाश्चत्वार इति सम्भूय विंशतिरभेदाः । तेषु य एव चक्रप्रतियोगिको देवतानुयोगिकोऽभेदः, स एव देवताप्रतियोगिकश्चक्रानुयोगिकश्च भवतीत्यनया रीत्या पुनरुक्तानां दशानामपनये दशैवाभेदा अवशिष्यन्ते । अथ चक्रस्य देवतादिभिश्चतुर्भिः सहाभेदाश्चत्वारो देवताया विद्यादिभिस्त्रिभिः सह त्रयो विद्याया गुरुशिष्याभ्यां सह द्वौ गुरोः शिष्येण सहैक इति । एते दशाप्यभेदा गणेशादिषडात्मकत्वस्य चक्रादिपञ्चक उपपादने वर्णिता भवन्ति । तादृशैकधर्मावच्छिन्नत्वेनैव साजात्यादस्य कौलिकार्थत्वमपि । ईदृशैकार्थप्रतिपादकत्वादेवास्य ग्रन्थस्यैकवाक्यताऽपि । सा च **'कौलिकं कथयिष्यामि'**(७/५१) इत्युपक्रमात् **'इत्येवं कौलिकार्थस्तु कथितो वीरवन्दिते'** (७/६८) इत्युपसंहाराच्चाऽऽवश्यकी, द्वादशकपालवाक्यतुल्यन्यायात् । ततश्च विद्याचक्रयोरभिन्नोपादानोपादेयत्वाभेदः, देवीचक्रयोस्त्वेकात्माधिष्ठितत्वाद्योगिनिर्मितकायव्यूहस्येवाभेदः, देवीविद्यागुरुसाधकानां तु गणेशादिषडात्मकत्वस्य वक्ष्यमाणत्वादभेद इति वर्णने तु प्रमेयवैलक्षण्याद्वाक्यभेदः, चक्रगुर्वोश्चक्रसाधकयोश्चेत्यभेदद्वयस्याकथनान्न्यूनता चाऽऽपद्यते । न च तदुभयं युक्तम् । तस्माच्चक्रे गणेशादिषडात्मकत्वकथनपर एव पूर्वो ग्रन्थसन्दर्भः । उत्तरस्तु देव्यादीनां चतुर्णां तत्कथनपरः स्पष्ट एव । एवं सति पञ्चानामप्येकधर्मावच्छिन्नत्वादेकैकस्य चतुर्भिश्चतुर्भिः सदाभेद उक्तो भवतीति न न्यूनत्वम्, न च वाक्यभेदः । मन्त्राक्षरैश्चक्रावयवानामुत्पत्तिकथनं तु जन्यजनकयोरभेदद्वारा वाच्यवाचकभावे पर्यवसानात्पञ्चानामभेदस्य मन्त्रप्रतिपाद्यत्वस्फोरणाय, तद्विना कौलिकस्य मन्त्रार्थत्वानुपपत्तेः ।

तत्प्रकारश्चेत्थम्– लकारत्रयं सकारत्रयं चेत्येतैः षड्भिः पदैर्डाकिन्यादियोगिन्य ऐकैकश्येन प्रतिपाद्यन्ते । डाकिन्येका राकिण्येकेत्यादिरीत्या पार्थक्येन तु प्रातिपदिकाभ्यामपेक्षाबुद्ध्यात्मकेषु षट्सु बोधेषु जातेषु एकसमुदायघटकत्वरूपः परस्परसंसर्गो वाक्यार्थमर्यादया बुध्यते । ततः षड्योगिन्य इत्याकारको बोधः । ततश्च योगिनीषट्कात्मकत्वस्य चक्रादिपञ्चकेऽपि सत्त्वात्तत्पञ्चकं परस्पराभिन्नमिति बोधः । अयं च पदषट्कघटितवाक्यस्य लक्षणया जातत्वाच्छाब्दो मानस एव वेत्यन्यदेतत् । गणेशादिषट्कं च गणेशा ग्रहा नक्षत्राणि योगिन्यो राशयः पीठाश्चेति । तेषु गणेशपीठयोरेकसंख्याकत्वादन्यतरोक्त्यैवेतरच्चरितार्थमित्याशयेन पञ्चात्मकतैवेह वर्ण्यते । तत्र च यद्यपि गणेशादिरूपक एव षोढान्यासे क्रमः क्लृप्त इति तेनैव क्रमेण देवतादीनामिव चक्रस्यापि वक्तुं युक्तम्, तथाऽपि क्लृप्तक्रमपरित्यागे बीजस्य वक्ष्यमाणतया क्रमान्तर आश्रयणीये चक्रपूजानुगुण्याय तत्र क्लृप्तेन संहारक्रमेणैव पञ्चात्मकत्वमुपपादयितुमादौ चक्रस्य योगिन्यात्मकत्वमुपदिशति– लकारैरिति । योगिन्यात्मकत्वं हि डाकिन्यादिषडात्मकत्वं

वशिन्याद्यष्टात्मकत्वं चेति द्विविधं वक्ष्यते । प्रकृते च वृत्तत्रयस्यैक्येन गणनया चतुरस्राणि त्रीणि द्वे सरोरुहे चेति षड् विभज्य गणनयाऽष्टाविति चक्रं तदवच्छेदेन योगिन्यात्मकमिति भावः । ग्रहात्मकत्वमाह–हल्लेखेति । राश्यात्मकत्वमाह–बिन्द्विति । बिन्दुनादयोरीकारैः सह गणनया तु नवयोनिचक्रं नवग्रहात्मकम् । बिन्दुनादयो-रैक्येनेकाराद्भेदेन गणनया नवयोनिचक्राद् बहिःस्थितवृत्तत्रयस्य बिन्दुनादत्रयजन्य-त्वाद् द्वादशभिरक्षरैर्द्वादशावयवानां चक्रसम्बन्धिनां जन्यत्वाभिप्रायेण द्वादश-राशिरूपत्वम्, तदिदमाह–मण्डलत्रयेति । वृत्तत्रयेत्यर्थः । **तन्त्रराजे** वृत्तषट्कपक्ष उक्त इति तु पूर्वमेवा**स्माभिः** प्रदर्शितम् । पूर्वोक्तावयवानां मेलनेन चक्रस्य नक्षत्रात्म-कत्वमाह–व्योमेति । अत्र बिन्दुनादयोः पार्थक्येन गणना । ततश्च लकारसकार-हकारककारबिन्दुनादास्त्रयस्त्रय इत्यष्टादश हल्लेखास्थाक्षरनवकं चेति सप्तविंशत्याऽ-क्षरैर्जन्याश्चक्रावयवाश्चतुरस्रत्रयं सरोरुहद्वयं वृत्तषट्कं नवयोनिचक्रं मध्यत्रिकोणस्य कोणत्रयं रेखात्रयं बिन्दुरेक इति सप्तविंशतिरिति नक्षत्ररूपतेत्यर्थः । प्रमातृत्रितय-स्येच्छाज्ञानक्रियारूपस्य च पृथगुपादानमहिम्ना मध्यत्रिकोणस्य रेखाणां कोणानां च पार्थक्येन गणनम् । वक्ष्यमाणश्लेषस्फोरणाय चक्रस्य देवीस्वरूपतामाह–देवताया इति ॥ ५५-५६ ॥

चक्रस्य गणेशात्मकत्वमाह–

**एकादशाधिकशतदेवतात्मतया पुनः ।**
**गणेशत्वं महादेव्याः–**

अणिमाद्या दश, ब्राह्म्याद्या अष्टौ देवताः, मुद्रा दशेति भृगृहेऽष्टाविंशतिः । षोडशदलाद्यष्टारान्तेषु षट्सु चक्रेषु प्रत्यक्षरमेकैका देवता । सम्भूय षट्षष्टिः । तत आयुधदेवता अष्टौ, त्रिकोणे तिस्रः, बिन्दौ षडङ्गयुवतयः षडिति सप्तदश मिलिता एकादशाधिकशतं देवता भवन्ति । एतासां पूजास्थानरूपावयवानां विभज्य गणनया चक्रराजस्य गणेशात्मत्वं पीठात्मत्वं च । गणेशानां पीठानां च प्रातिस्विकमेक-पञ्चाशद्रूपत्वेऽपि सम्मुग्धाकारेण बहुसंख्याबोधकगणपदस्वारस्येन पूर्वनिर्दिष्टाधिक-संख्या त्प्रा(व्या)पकसंख्यान्तरमात्रपरतयाऽपरिमिताधिकरणन्यायेनाऽऽपततीत्याशयेन सप्तविंशत्यधिकसंख्यापरत्वमात्रेण गणेशात्मकत्वमुक्तम् । महादेवीशब्दश्चक्रपरः, एतद्ध्वननायैव देवतायाः परं वपुरित्यनुपदमुक्तत्वात् । यत्तु **प्राञ्चः**–**'राशित्वं चान्त्यवर्जितैः'**(७/६६) इत्युत्तरग्रन्थे विद्यायां राशित्वं योज्यम्, चकाराच्चक्रेऽपि गणेशादित्वं योज्यमिति व्याख्याय स्वेच्छयैव तद्योजनाप्रकारमुपपादयन्ति, अकथादि-मयमध्यत्रिकोणरेखाभिर्गणेशत्वम्, नवभिश्चक्रैर्ग्रहरूपत्वम्, वृत्तत्रयमन्वस्रबहिर्दशारै-र्नक्षत्रत्वम्, अष्टकोणैर्ब्राह्म्यादियोगिनीत्वम्, पञ्चशक्तिचतुर्वह्निपद्मद्वयभूगृहे राशित्व-मिति । तदिदं मूलानारूढत्वाद्विनिगमनाविरहपराहतत्वादनादृतम् । एवं चक्रराजे

गणेशाद्यात्मकत्वमुक्त्वा क्रमप्राप्तदेवतायां तदात्मकत्वमनेनैव ग्रन्थेन श्लेषेणाऽऽह– एकादशेति । एता देवता हि त्रिपुरसुन्दरीमयूखरूपाः । अतो महादेव्याः श्रीमातुर्गणेशत्वम् । ईदृशश्लेषेण ग्रन्थलाघवलिप्सयैव हि चक्रराजे गणेशादिक्रमः परित्यक्तः ॥ ५६$\frac{१}{२}$-५६$\frac{३}{४}$ ॥

अथ देव्याः क्रमप्राप्तं ग्रहात्मत्वमाह–

**–ससोमरविपावकैः ॥ ५७ ॥**
**इच्छाज्ञानक्रियाभिश्च गुणत्रययुतैः पुनः ।**
**ग्रहरूपा तु सा देवी–**

**सङ्केतपद्धतौ**–

**'इच्छा शिरःप्रदेशश्च(स्था) ज्ञाना च तदधोगता ।**
**क्रिया पदगता ह्यस्याः शान्ता हार्धार्धमध्यगा ॥'**

इत्युक्तत्वादिच्छादिपदैस्तत्तदवयवा गृह्यन्ते । गुणत्रयं सत्त्वरजस्तमांसि तत्सहितैः । सोमादिसहितैर्नेत्रैश्च सम्भूय ग्रहरूपेत्यर्थः ॥ ५७-५७$\frac{३}{४}$ ॥

देव्या नक्षत्रात्मकत्वमाह–

**–ज्ञानकर्मेन्द्रियैरपि ॥ ५८ ॥**

**तदर्थैरेव देवेशि करणैरान्तरैः पुनः ।**
**प्रकृत्या च गुणेनापि पुंस्त्वबन्धेन चाऽऽत्मना ॥ ५९ ॥**
**नक्षत्रविग्रहा जाता–**

शिवादिक्षित्यन्तेषु षट्त्रिंशत्तत्त्वेषु नियतेः पराणि पञ्चविंशतिः । तेषु पुंस्त्वबन्धो नाम पुरुषतत्त्वम्, प्रकृतिर्गुणत्रयसाम्यम् । तद्द्विविधम्-व्यक्तमव्यक्तं चेति । तत्राव्यक्तं प्रकृतिपदेनैवोच्यते । व्यक्तं तु गुणपदेन, **स्वच्छन्दतन्त्रे** तथा निर्णयात् । तद्वचनानि तु **प्राचां** टीकासु द्रष्टव्यानि । तेन प्रकृतितत्त्वं विभज्य द्विधा गणनीयम् । आन्तरकरणानि अहङ्कारबुद्धिमनांसि त्रीणि, चित्तस्य पार्थक्येन तेष्वगणनात् । ज्ञानकर्मेन्द्रियाणि दश प्रसिद्धानि, तदर्थास्तद्विषयाः शब्दादयो वचनादयश्च । एतेषु वचनं तेजः । गमनं भूः । आदानं वारि । विसर्गो वायुः । आकाश आनन्दः । एवं षड्विंशतिः । सप्तविंश आत्मेत्येवं नक्षत्रशरीरा जातेत्यर्थः । **प्राञ्च**स्तु चित्तेन सहान्तरकरणानि चतुर्धा गणयन्त आत्मपदं पुंस्त्वबन्धस्य विशेषणत्वेन व्याचक्षते ॥ ५८-५९$\frac{१}{४}$ ॥

देव्या योगिनीरूपतामाह–

**–योगिनीनामथोच्यते ।**
**त्वगादिधातुनाथाभिर्डाकिन्यादिभिरप्यसौ ॥ ६० ॥**
**वर्गाष्टकनिविष्टाभिर्योगिनीभिश्च संयुता ।**
**योगिनीरूपमास्थाय राजते विश्वविग्रहा ॥ ६१ ॥**

अथशब्दो विकल्पपरः, अव्ययानामनेकार्थत्वात् । अथवेत्यर्थः,

**'तस्यां हतायां दुष्टायां सिंहे च विनिपातिते ।**
**शीघ्रमागम्यतां बद्ध्वा गृहीत्वा तामथाम्बिकाम् ॥'**

इति **सप्तशती**काश्लोके तथा व्याख्यानदर्शनात्, **'जोन्लावथाम्बुधेर्विश्लोकः'** इति **वृत्तरत्नाकरे**ऽपि प्रयोगाच्च । त्वगसृङ्मांसमेदोस्थिमज्जनाथा डाकिनी-राकिणी-लाकिनी-काकिनी-साकिनी-हाकिन्यः षट् । एतदात्मकत्वाद्वा देवी योगिनीमयी । वर्गाष्टकमकचटतपयशरूपं तन्निविष्टा वशिन्यादयोऽष्टौ तदात्मकतया वा योगिनी-रूपेति विभावयेदित्यर्थः । अत एव– **'गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम्'** (१/१) इति श्लोके योगिनीपदस्य वशिन्यादिपरत्वेन **काश्मीराणां मनोरमाकार**स्य च व्याख्यानमुपपद्यते । ये तु शुक्राधिपत्या याकिन्या सह सप्त योगिन्यः, ता एव वर्गाष्टकनिविष्टाः, मूलाधारादिसहस्रारान्तसप्तचक्रेषु तासामेव प्रतिदलमेकैकाक्षर-साहित्येनावस्थानदर्शनादिति व्याचक्षते, तेषामुत्तरत्र विद्यायां योगिनीरूपत्ववर्णनावसरे पूर्वं चक्रे तदुक्त्यवसरेऽपि सप्तात्मकताया अकथनात्तद्विरोधः, याकिन्या डाकिन्यादि-षट्समष्टिरूपत्वेन पृथग्वर्णनायोगश्च, डाकिन्यादीनां यथायथं मातृकायोगेऽपि वर्गात्मकताभावाद्वर्गाष्टकपदस्वारस्यविरोधश्च, उक्त**काश्मीरा**दिप्राचीनव्याख्याविरोध-श्च, अपिशब्दचशब्दाभ्यां परस्परविलक्षणयोः स्वरसतः समुच्चयबोधनेन तद्भङ्गश्च । न चैवं भवदुक्तो विकल्पो विरुध्येतेति वाच्यम्; देव्या अर्थमयशब्दमयशरीरद्वयसमुच्चय-शीलत्वेनाप्यन्यतरविभागमात्रेणैवोपास्त्युपकारस्य कल्पयितुं शक्यत्वात् ॥ ६०-६१ ॥

देव्यां राशिस्वरूपत्वमाह-

**प्राणापानौ समानश्चोदानव्यानौ तथा पुनः ।**
**नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ॥ ६२ ॥**
**जीवात्मा परमात्मा चेत्येते राशिस्वरूपिणी ।**

प्राणादिपञ्चकं नागादिपञ्चकं च शरीराधिष्ठिता वायुविशेषा **वैद्यकतन्त्रे** प्रसिद्धाः । जीवात्मा पशुः सकलादिरूपत्वेनोक्तः । परमात्मा तु निखिलान्तर्यामित्वेन **अन्तर्यामिब्राह्मणे** प्रतिपादितः । एवं द्वादशात्मकत्वाद्राशिमयी ॥ ६२-६२$\frac{१}{२}$ ॥

अथ क्रमप्राप्तायां विद्यायां गणेशादिरूपतामाह–

**अकथादित्रिपङ्क्त्यात्मा तार्तीयादिक्रमेण च ॥ ६३ ॥**
**गणेशोऽभून्महाविद्या परावागादिवाङ्मयी ।**

अकारादयः ककारादयस्थकारादयश्च षोडश षोडश वर्णा हकारळकारक्षकाराणामुपलक्षणम् । तेन तृतीयकूटमकारादिस्वररूपं हकाररूपं च । द्वितीयकूटं तु ककारादिरूपं ळकाररूपं च । प्रथमकूटं तु थकारादिरूपं क्षकारादिरूपं च । एवमेकपञ्चाशत्संख्याकत्वाद्विद्याया गणेशत्वम् । पङ्क्तिशब्दो दशसंख्यायां प्रसिद्धोऽपि प्रकृते षोडशपरः, पकार एकस्तकारः षडिति परिभाषाया अपि प्रसिद्धत्वात् । तयोरङ्कयोः क्रमेणैव लेखे षोडश भवन्ति । पङ्क्तिशब्दो गणपर इति तु **प्राञ्चः** । त्रिपङ्क्त्यात्मेत्यत्र मन इति ङीब्निषेधः । वैकल्पिको डाप् । परावागादीत्यादिना पश्यन्तीमध्यमावैखर्यो गृह्यन्ते । ईदृशवाक्चतुष्टयमयत्वादपि गणेशत्वमिति त्वपरिमिताधिकरणविरोधादयुक्तम् । अतः स्वरूपकथनमात्रपरमिदम् । तद्रूपत्वं च त्रिकोणवासनायामुक्तमेव ॥ ६३-६३$\frac{१}{२}$ ॥

विद्याया ग्रहरूपत्वमाह--

**बीजबिन्दुध्वनीनां च त्रिकूटेषु ग्रहात्मिका ॥ ६४ ॥**

बीजमीकारान्तमेकं बिन्दुरेको ध्वनिरेक इति त्रयाणां कूटमेकम् । एवं त्रिषु कूटेषु नवत्वमापन्ना विद्या ग्रहात्मिका भवति । ध्वनीनामिति सम्बन्धसामान्ये षष्ठी । तृतीयार्थे छान्दसीत्युक्तिरेव तु छान्दसी ॥ ६४ ॥

विद्यायां नक्षत्ररूपतामाह--

**हृल्लेखात्रयसम्भूतैस्तिथिसंख्यैस्तथाऽक्षरैः ।**
**अन्यैर्द्वादशभिर्वर्णैरेषा नक्षत्ररूपिणी ॥ ६५ ॥**

हकाररेफेकारबिन्दुनादाः प्रतिहृल्लेखं पञ्चेति तिथिसंख्यैः पञ्चदशसंख्यैः । अन्यैः सव्यञ्जनरूपैर्वर्णैर्द्वादशभिर्मिलित्वा सप्तविंशत्या नक्षत्ररूपैषा विद्या ॥६५ ॥

योगिनीरूपतां राशिरूपतां चाऽऽह---

**विद्यान्तर्भूतशक्त्याद्यैः शाक्तैः षड्भिस्तथाक्षरैः ।**
**योगिनीत्वं च विद्याया राशित्वं चान्त्यवर्जितैः ॥ ६६ ॥**

विद्यान्तर्भूता शक्तिर्हृल्लेखान्त्य ईकारः । तस्मादाद्यं रेफान्तं कूटमेकम् । शाक्त ईकार एक इति प्रतिकूटं द्वौ द्वाविति षड्भिरक्षरैर्योगिनीत्वम् । अथवा

शक्तेर्हृल्लेखाया आद्या लकारास्त्रयः शाक्ताः सकारास्त्रय इति षट् । प्रथमपक्षे सम्पूर्णाया विद्याया योगिनीत्वमस्मिन्पक्षे त्वेकदेशस्येति विशेषसत्त्वेऽपि चक्रराज-सम्बन्धियोगिनीनां पूर्वोक्तानां लकारसकारत्रयाभ्यामेवोत्पत्तेः कथनेन कार्य-कारणैक्यस्य सम्भवतस्त्यागायोगादेषैव व्याख्या युक्ता । तेन हृल्लेखात्रयं लकारत्रयं चेति षट्कं **प्राचो**क्तमुपेक्ष्यम्, शाक्तपदस्य सकारपरत्वेन पूर्वं भवद्भिरेव व्याख्यातत्वेनेह तस्य हृल्लेखापरत्वेन व्याख्यायाः प्रत्यभिज्ञाविरोधेनायोगाच्च । अन्त्यानि लज्जाबीजानि त्रीणि तैर्वर्जितैः पूर्वाक्षरे मेलनेन गणितैरक्षरैर्द्वादशभी राशित्वम् । हृल्लेखानां पार्थक्येनैव हि पञ्चदशीत्वम् । ततश्च पार्थक्य-विशिष्टहृल्लेखानामभाव एवेह वर्जनपदार्थः । स च विशेषणाभावप्रयुक्त एव । विशेष्याभावप्रयुक्त एवेति तु **प्राञ्चः** । तत्पक्षे विद्यैकदेशस्यैव राशित्वं न पूर्णाया इति ध्येयम् ॥ ६६ ॥

एवं चक्रदेवताविद्यानामेकधर्मावच्छिन्नत्वेनाभेदमुपसंहरन् गुरुशिष्ययोर्देव्युक्त-प्रकारमतिदिश्य कौलिकार्थमुपसंहरति--

**एवं विश्वप्रथाकारा चक्ररूपा महेश्वरी ।**
**देव्या देहो यथा प्रोक्तो गुरुदेहस्तथैव च ॥ ६७ ॥**
**तत्प्रसादाच्च शिष्योऽपि तद्रूपः संप्रकाशते ।**
**इत्येवं कौलिकार्थस्तु कथितो वीरवन्दिते ॥ ६८ ॥**

विश्वप्रथाकारा विद्या चक्ररूपा व्यक्तिर्महेश्वरी देवता चेत्येतत्त्रयमेवमुक्तरीत्या पञ्चा-त्मकत्वादभिन्नम् । इदमर्धं क्वचित्पुस्तके न दृश्यते । स्पष्टमन्यत् ॥ ६७-६८ ॥

क्रमप्राप्तं सर्वरहस्यार्थमाह चतुर्भिः ---

**तथा सर्वरहस्यार्थं कथयामि तवानघे ।**
**मूलाधारे तडिद्रूपे वाग्भवाकारतां गते ॥ ६९ ॥**
**अष्टात्रिंशत्कलायुक्तपञ्चाशद्वर्णविग्रहा ।**
**विद्या कुण्डलिनीरूपा मण्डलत्रयभेदिनी ॥ ७० ॥**
**तडित्कोटिनिभप्रख्या बिसतन्तुनिभाकृतिः ।**
**व्योमेन्दुमण्डलासक्ता सुधास्रोतःस्वरूपिणी ॥ ७१ ॥**
**सदा व्याप्तं जगत्कृत्स्नं सदानन्दस्वरूपिणी ।**
**एषा स्वात्मेति बुद्धिस्तु रहस्यार्थो महेश्वरि ॥ ७२ ॥**

मूलाधारपद्मे विद्युन्निभे वाग्भव एकारस्तस्याऽऽकारस्त्रिकोणाकृतिर्यस्य सः । तस्य भावस्तत्ता । तां गते प्राप्ते, त्रिकोण इति यावत् । **'एकारो वाग्भवः**

**शक्तिर्झिण्टीशोष्ठौ त्रिकोणकः'** इति **कोशः** । एवं द्रविडप्राणायामन्यायेन निर्देशस्तु तस्य वाग्भवकूटस्थैकारवाच्यत्वद्योतनार्थः । तत्र स्थिता कुण्डलिनीरूपा तदभिन्ना विद्या श्रीविद्यैव । सा च मन्त्रे चतुर्थस्वरेण निर्दिष्टा । ईकाराधिकारे–**'वैष्णवी बैन्दवी जिह्वा'** इति **कोशात्** जिह्वपदस्य कुण्डलिनीपरत्वात् । अथवा ईकारस्त्रिकोणपरः, एकारः कुण्डलिनीपरः । वाग्भवाकारतागता ई इति च्छेदः । एकाराधिकारे– **'योषिदाधारशक्तिश्च ज्योत्स्ना कुण्डलिनी भगः'** इति **कोशः** । वाग्भिः परापश्यन्त्यादिभिर्भवतीति वाग्भवं त्रिकोणम्, **'आत्मनः स्फुरणं पश्येत्'** (६/३६) इत्यत्र तथोक्तेरिति तु **प्राञ्चः** । कुण्डलिनीं विशिनष्टि--अष्टेति । वह्नेर्दश कला यकारादिदशवर्णवत्यः । सूर्यस्य द्वादश कलाः ककारादिचतुर्विंशतिवर्णवत्यः । सोमस्य षोडश कलाः षोडशस्वरवत्यः । एवमष्टात्रिंशत्कलाः । [तद्युक्ताः] पञ्चाशद्वर्णा विग्रहो यस्याः सा । सोऽयमर्थो हृल्लेखयोक्तः । हकारस्य **एकाक्षरनिघण्टु**रीत्या चन्द्रमात्रे शक्तस्यापि लक्षणया चन्द्रसूर्योभयबोधकत्वम्, व्योमचरत्वरूपशक्यसम्बन्धात् । लकार एव वा लोचनवाचकोऽपि सूर्यपरः । रेफोऽग्निपरः । ईकारेण तेषां कला लक्ष्यन्ते, **'कला तुरीया भेरुण्डा'** इति **कोशात्** । लकारस्त्रित्वसंख्याया हकारोऽष्टत्वसंख्याया बोधकः । तयोः क्रमेण विन्यासेऽष्टात्रिंशद्भवन्तीत्यपि वा सुवचम् । एवं स्थिते परिशेषप्रमाणेन ककारो मूलाधारवाचकोऽवसेयः । लोपामुद्राविद्यापक्षे प्रकारेण सूर्याग्नी सकारेण चन्द्र उच्यते । तेषां कला यस्यां सा हृल्लेखा कुण्डलिनीत्यर्थः । द्वितीयकूटं व्याचष्टे-– मण्डलेत्यादिना । मूलाधारे वह्निमण्डलमनाहते सूर्यमण्डलमाज्ञाचक्रे चन्द्रमण्डलं चेति त्रयं निर्भिद्य व्योम्नि चिद्गगने द्वादशान्तोर्ध्वभागे यदिन्दुमण्डलं तस्मिन्नासक्ता । तदासङ्गेन जातं यत्सुधास्रोतोऽमृतलहरी तत्स्वरूपा । हः सूर्यः सश्चन्द्रः कोऽग्निस्तान् हन्ति भिनत्तीति हसकह[घ्नी] । सा च सा लहरी चेति तथा, दुर्वासोविद्यायां हकाररेफयोर्विभज्यापि पाठात् । तडित्कोटीति तु स्वरूपकथनमात्रम् । इहापेक्षितानुशासनानां कतिपये भासमाना विरोधा **वरिवस्यारहस्य**व्याख्यानेऽ**स्माभिः** परिहृताः । तथा–

> **'धातोर्बह्वर्थत्वाद् बहुलग्रहणात् पृषोदरादित्वात् ।**
> **आकृतिगणपाठेन स्वेच्छानुगुणादुणादिकल्पनतः ॥**
> **छन्दसि सर्वविधीनां वैकल्पिकतावशादमुष्य मनोः ।**
> **सिद्धैः कथितेऽर्थेऽस्मिन् वैयाकरणानुशासनानुमतिः ॥**

इति । तृतीयकूटं व्याचष्टे– सदेति । ययेति शेषः । यया सदा सद्रूपेण कृत्स्नं जगद्व्याप्तं सैषा कुण्डलिनी स्वात्मा स्वाभिन्नेति बुद्धिः शाब्दबोधविषयो रहस्यार्थ इत्युच्यते । **'व्योम्ना प्रकाशमानत्वम्'** इत्यादि **स्वतन्त्रतन्त्रो**क्तरीत्या तृतीयहृल्लेखया

जगद्व्याप्तिरुक्ता । सकलपदेन चोपासक उच्यते । सामानाधिकरण्येन चाभेदो बोध्यत इत्यर्थः ॥ ६९-७२ ॥

क्रमप्राप्तं महातत्त्वार्थमुपदिशति–

**महातत्त्वार्थ इति यत्तच्च देवि वदामि ते ।**
**निष्कले परमे सूक्ष्मे निर्लक्ष्ये भाववर्तिते ॥ ७३ ॥**
**व्योमातीते परे तत्त्वे प्रकाशानन्दविग्रहे ।**
**विश्वोत्तीर्णे विश्वमये तत्त्वे स्वात्मनियोजनम् ॥ ७४ ॥**

निष्कले निरवयवेऽखण्ड इति यावत् । परमे महतो महीयसि । सूक्ष्मेऽणोरणीयसि । निर्लक्ष्य इन्द्रियागोचरे । भाववर्तिते भावनैकगोचरे । व्योमातीत आकाशस्यापि जनके । परे तत्त्वे पारमार्थिकसद्रूपे । प्रकाशानन्दविग्रहे चिदानन्दस्वरूपे । विश्वोत्तीर्णे षट्त्रिंशत्तत्त्वातीते । विश्वमये तत्त्वे षट्त्रिंशत्तत्त्वाभिन्ने । स्वस्य जीवात्मन आत्मनो मनसश्च नियोजनं जीवशिवयोरभेदेन मनसा विभावनम् । **'भूयः स्यात्प्रोक्तमिलनम्'** इति **शिवसूत्रो**क्तरीत्या जीवशिवयोरैक्यसिद्धिरिति यावत् । ईदृशार्थस्याखण्डत्वेन तज्ज्ञानस्यापि निर्विकल्पकीयविलक्षणविषयताशालित्वेन तज्जनकस्य मन्त्रस्यापि 'तत्त्वमसि' आदिवन्महावाक्यत्वेऽपि तस्मात्पदपदार्थविभागेन जायमानस्य ज्ञानस्य सखण्डत्वावश्यंभावेऽप्युपक्रमादिप्रमाणषट्कनिर्णीततात्पर्यानुसारेण सर्वपदलक्षणया पाश्चात्याखण्डार्थबोधकल्पनमपेक्ष्य परशिवोक्त्या तात्पर्यग्रहेण तादृशेऽखण्डेऽर्थेऽखण्डस्य मन्त्रस्यैव शक्तिरिति कल्पयितुं युक्तत्वादस्य मन्त्रार्थत्वमुपपद्यते । इदं च भावार्थस्याक्षरार्थत्वकथनेनेतरेषामर्थानामक्षरारूढत्वानावश्यकत्वं परशिवेनैव ध्वनितम्। न चैवं सति सम्प्रदायार्थादीनामक्षरारूढताकलनप्रयासो व्यर्थ इति शङ्क्यम्, तेषामर्थानामखण्डत्वाभावेन तदावश्यकत्वात् । यद्यपि बहुपदार्थविशिष्टः सखण्डोऽप्यर्थो व्याप्त्युपाध्यादिपदैः प्रकृतिप्रत्ययादिविभागमन्तरेणैव प्रतिपाद्यमानो दृष्टस्तेन न्यायेन निगर्भार्थादावखण्डस्य मन्त्रस्य शक्तिरिति सुवचम् । शक्तिग्रहश्च परशिववचनादेव, ईश्वरेच्छाया एव शक्तित्वस्य तार्किकाणामङ्गीकारात् । तेन कामराजलोपामुद्राविद्ययोः किं बहुना मनुचन्द्रादिभेदाभिन्नानामेकैकं पञ्चाशतोऽपि मन्त्राणामेकार्थत्वं तत्तदुपासकानामङ्गलोपाभावश्च संगच्छते, तथाऽपि सम्भवत्यक्षरार्थत्वेऽखण्डशक्तिकल्पनस्यान्याय्यत्वात्तथोक्तम् । न चैवं भावार्थस्यैवाक्षरार्थत्वमिति मूलोक्तिर्विरुध्येतेति वाच्यम्, **'अक्षरार्थो हि भावार्थः केवलः परमेश्वरि'**(७।१६ ) इत्यत्र केवलपदेन भावार्थस्तु केवलमक्षराणां वृत्त्यैव लभ्यः, अन्ये तु शब्दार्थापत्त्यर्थार्थापत्तिभ्यां व्यञ्जनया मानसा अप्यर्था यथायथं सम्भवन्तीति ध्वननात् । कथमन्यथा मूल एव संप्रसरे(रो) नानामन्त्रक्रमेणैवेति वदद्भिर्मूलकारैरेव सूचितः ।

एतेन यः **प्राचीना**नां लोपामुद्राविद्यापरा एवैते षडर्था इत्याग्रहेण तत्तत्प्रकरणे तस्या एव पुनः पुनरुल्लेखः स केवलं पक्षपातमात्रमूलक एवेति न विश्रम्भणीयः । मूलविरोधस्यापि तत्र तत्र प्रदर्शितत्वाच्च ॥ ७३-७४ ॥

इदानीं परशिवस्य विश्वाभिन्नत्वं समर्थयते—

**तदा प्रकाशमानत्वं तमसां तेजसामपि ।**
**अविनाभावरूपत्वं तस्माद्विश्वस्य सर्वतः ॥ ७५ ॥**
**प्रकाशते महातत्त्वं दिव्यक्रीडारसोज्ज्वले ।**

तमसां जडस्वभावानां घटादीनां तेजसां जडप्रकाशानां वृत्तिरूपज्ञानानां च प्रकाशमानत्वं तत्तत्स्वभावावच्छिन्नचैतन्यनिष्ठावरणभङ्गः । स च तदैव यदा ब्रह्मणः प्रकाश इति शेषः । घटमहं जानामीति ज्ञाने हि घटो जीवात्मा च वृत्तिरूपज्ञाने विषयः । सा वृत्तिस्तु ब्रह्मैकभास्या, ब्रह्म तु स्वप्रकाशमिति स्थितिः, **'तमेव भान्तमनुभाति सर्वम्'** इति **श्रुतेः** । अत एव **'जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्'** इत्याचार्य**भगवत्पादाः** । **तार्किकै**स्त्वयं घट इत्येव घटज्ञानाकारः । **निरुक्तं** तु ज्ञानज्ञानमनुव्यवसायात्मकं भिन्नमेवेति स्वीक्रियते । **औपनिषदै**स्तु अनुव्यवसायेऽपि व्यवसायविषयविषयकत्वस्याऽऽवश्यकत्वे किमन्तर्गतानुभवविरुद्धव्यवसायेनेति मन्वानैस्तदीयमनुव्यवसायमेव व्यवसायस्थानीयं स्वीकृत्य ज्ञानभासनं तु ब्रह्मणैवेति नानुव्यवसायान्तरापेक्षाऽनवस्थाकलुषितेत्यास्थीयते । उक्तं च **तन्त्रराजे**—

**'यज्ज्ञानमिदमो ज्ञानं यज्ज्ञानमहमस्तथा ।**
**द्वयोरपि च यज्ज्ञानं तज्ज्ञानं विद्धि मे वपुः ॥'**

इति । एवं सति प्रतिज्ञानं ब्रह्म प्रकाशत एव । ततश्च यदा यदा ब्रह्मप्रकाशस्तदा तदैव विश्वप्रकाश इति नियमाद् ब्रह्म विश्वाभिन्नमित्यर्थः । न चैतावता ब्रह्मविश्वज्ञानयोः कालिकव्याप्तिरेव सिध्येन्न विषययोरभेद इति वाच्यम्, ब्रह्म घटाभिन्नं घटज्ञानविषयत्वादित्यनुमानेन तस्यापि सिद्धेरित्यन्यत्र विस्तरः । अविनाभावोऽपृथक्त्वमभेद इति यावत् । सर्वतो ब्रह्मणा सह, सशयोरभेदाच्छर्वत इति वा । शिवेन सह विश्वस्याभेदरूपं महातत्त्वं दिव्यक्रीडारसोज्ज्वले साधकेऽपि प्रकाशत इत्यर्थः, दिव्या सर्वोत्तमा या क्रीडोपास्तिस्तस्या रसेनोज्ज्वले निर्मलचित्त इति तदर्थात् । **प्राञ्च**स्तु स्वयंप्रकाशे किं प्रमाणान्तरगवेषणेनेत्याह—प्रकाशत इति । दिव्यक्रीडेत्यादि देवीसम्बुद्धिरित्याहुः ॥ ७५-७५½ ॥

**निरस्तसर्वसंकल्पविकल्पस्थितिपूर्वकः ॥ ७६ ॥**
**रहस्यार्थो महागुप्तः सद्यः प्रत्ययकारकः ।**
**महाज्ञानार्णवे दृष्टः शङ्का तत्र न पार्वति ॥ ७७ ॥**

**विद्यापीठनिबन्धेषु संस्थितो दिव्यसिद्धिदः ।**

संकल्पः कर्म मानसम् । विपरीतनिश्चय इति यावत् । विकल्पः संशयोऽसद्विषयकः शाब्दो वा तेषां स्थितिं सर्वां निरस्य पश्चात् सद्यश्चमत्कारमाधत्ते । एतादृशोऽयं रहस्यार्थोऽत एवाद्य यावद् गुप्तः । **महाज्ञानार्णवे तन्त्रे**, विद्यापीठेषु काशी-काश्मीरादिषु, निबन्धेषु **ब्रह्मसूत्रा**दिग्रन्थेषु च दृष्टोऽस्त्यतः सकलार्यसम्मतत्वादिह शङ्का न कार्येत्यर्थः । **प्राञ्च**स्तु- महाज्ञानार्णवः समाधिः, विद्यापीठानि वाग्भवादिकूटानि, तन्निबन्धा बिन्द्वर्धचन्द्राद्युन्मनान्ताः । उन्मन्याः परतः समाधिदशायां मयैवायमर्थो दृष्टोऽस्त्यतस्त्वया विश्वसनीय इत्यर्थ इत्याहुः ॥ ७६-७७$\frac{१}{२}$ ॥

**कौलाचारपरैर्देवि पादुकाभावनापरैः ॥ ७८ ॥**
**योगिनीमेलनोद्युक्तैः प्राप्तदिव्याभिषेचनैः ।**
**शङ्काकलङ्कनिर्मुक्तैः सदा मुदितमानसैः ॥ ७९ ॥**
**पारम्पर्येण विज्ञातरहस्यार्थविशारदैः ।**
**लभ्यते नान्यथा देवि त्वां शपे कुलसुन्दरि ॥ ८० ॥**

कौलाचाराः पादुकाचाराश्चेति द्विविधा आचाराः **कुलार्णवा**दिषु प्रसिद्धाः **सौभाग्यरत्नाकरकारैः** संगृह्य लिखिताः । भावनाश्चक्रमन्त्रपूजावासनाः । एतत्त्रितयपरैः । योगिनीनां मेलनम्, षोडशादिद्वात्रिंशदब्दान्ता सुवासिनी योगिनीत्युच्यते । तासां तिसृभ्योऽन्यूनानामेकस्य चोर्ध्वाम्नायवेत्तुरेकीकरणेन श्रीचक्रपूजनम्, चक्रलक्षणस्य **कुलार्णवे** तादृशस्यैव कथनात् । यथा–

**'यत्रैवाऽऽम्नायतत्त्वज्ञः कुलाचार्यः कुलेश्वरि ।**
**कौलिकास्त्रिचतुःपञ्च शक्तयश्च तथा प्रिये ॥**
**पृथग्वा पूजिता देवि मिथुनाकारतोऽपि वा ।**
**गन्धपुष्पाक्षताद्यैस्तु देवेशि समलङ्कृताः ॥**
**भक्ष्यभोज्यादिपिशितपदार्थैः षड्रसान्वितैः ।**
**प्रौढान्तोल्लाससहिता मुदिता निवसन्ति च ॥**
**तच्छ्रीचक्रमिति प्रोक्तं वृन्दं वाऽपि तदुच्यते ।'**

इति दशमोल्लासे । दीक्षाभिषेकः पूर्णाभिषेकश्चेति द्विविधौ दिव्याभिषेकौ प्राप्तौ यैः । अर्चनसाधनेषु हव्येषु पशुशास्त्रीयसंस्कारेणाधर्मत्वशङ्का, एतत्फले जीवब्रह्माभेदे द्वैतशास्त्रीयसंस्कारेणासम्भावितत्वशङ्कैव कलङ्कः, तस्मान्निर्मुक्तैः । 'अपेतापोढमुक्तपतितापत्रस्तैरल्पशः' इति समासः । न चापेत्युपसर्गातिरिक्तस्योपसर्गस्य योगे न

समास इति वाच्यम्, अपेतापोढापत्रस्तेति वारत्रयं तत्पाठेन तेष्वेव तदतिरिक्तयोगे समासाभावकल्पनात् । सूत्रे चाल्पश इत्युक्त्या शङ्काया अल्पत्वं समासबलाल्लभ्यम्, तेनाल्पीयस्याऽपि शङ्कया विहीनैरित्यर्थः । सदा सर्वकालं मुदितं सांसारिकचिन्ता-विनिर्मुक्तं मानसं येषां तैः, नित्यानुसन्धानपरैरिति यावत्, नित्यसन्तोषस्य मोक्षद्वारदौवारिकताया **योगवासिष्ठे** वर्णनात् । परमशिवादिस्वगुरुपर्यन्तपारम्पर्येणैव विज्ञातो रहस्यार्थो यैस्तेष्वपि विशारदैः प्रवीणैः। ईदृशविशेषणविशिष्टैरेव साधकैरय-मर्थो लभ्यते । अन्यथाऽत्रत्यस्यैकस्यापि विशेषणस्याभावे न लभ्यते । अस्मिन्नर्थे तवैव शपथ इत्यर्थः ॥ ७८-८० ॥

अत्र पारम्पर्येणेत्युक्तविशेषणस्याभावे न केवलं फलाभावः प्रत्युतानर्थपरम्परै-वेति कथनेन तस्येतरविशेषणेभ्योऽत्यन्तमावश्यकत्वं ध्वनयति--

**पारम्पर्यविहीना ये ज्ञानमात्रेण गर्विताः ।**
**तेषां समयलोपेन विकुर्वन्ति मरीचयः ॥ ८१ ॥**

विकुर्वन्ति विकारमाचरन्ति रोगादिकं भयं परलोकनाशं च कुर्वन्तीत्यर्थः ॥ ८१ ॥

**यस्तु दिव्यरसास्वादमोदमानविमर्शनः ।**
**देवतातिथिनक्षत्रे वारेऽपि च विवस्वतः ॥ ८२ ॥**
**मरीचीन्प्रीणयत्येव तः म (नं) घू दि र्णि रा द म ।**
**सर्वदा स विशेषेण लभते पूर्णबोधनम् ॥ ८३ ॥**

दिव्यरसः शिवशक्तिसामरस्यं तदास्वादेन तदनुसन्धानेन मोदमानं विमर्शनं मनोवृत्तिर्यस्य स तथा । देवतातिथयश्चतुर्दश्यादयः । नक्षत्रं पुष्यनक्षत्रजन्मनक्षत्रादि । विवस्वतः सूर्यस्य वारः । एतेषु दिवसेषु मरीचीनणिमादिदेवताः प्रीणयत्येव नियमेन चक्रपूजां कुरुत इत्यर्थः । इत उत्तरश्चरणो व्याकुलाक्षरः । कारणानन्दपूर्ण इति तदर्थः । तद्वाचनक्रमो यथा--

**'देवतारथगोमूक इति यो वेत्ति न क्रमम् ।**
**स व्याकुलाक्षरे मूको देवतारथगोऽपि सन् ॥'**

इति । एवं विशेषतः सार्वकालिकानुसन्धानशीलः पूर्णस्याखण्डस्य बोधनं लभते ॥ ८२-८३ ॥

**एवंभावस्तु देवशि देशिकेन्द्रप्रसादतः ।**
**महाज्ञानमयो देवि सद्यः सम्प्राप्यते नरैः ॥ ८४ ॥**

एवंप्रकारो महाज्ञानमयो भावश्चित्तवृत्तिप्रवाहोऽपि श्रीगुरुचरणप्रसादैकलभ्यो न शास्त्रज्ञानमात्रेण ॥ ८४ ॥

मन्त्रसङ्केतमुपसंहरति–

**एवमेतत्परं ज्ञानं विद्यार्णागमगोचरम् ।**
**देवि गुह्यं प्रियेणैव व्याख्यातं दुर्गषड्विधम् ॥ ८५ ॥**
**सद्यो यस्य प्रबोधेन वीरचक्रेश्वरो भवेत् ।**

**॥ इति श्रीनित्याषोडशिकार्णवस्य सप्तमः पटलः ॥**

दुर्गा दुरवगाहाः षट्संख्याका विधाः प्रकारा यस्मिंस्तत् । विद्यायाः श्रीविद्याया अर्णाः पञ्चदशाक्षराणि सप्तत्रिंशदक्षराणि च त एवा**ऽऽगमा** अपौरुषेयत्वे सति हितार्थबोधकत्वाद् **वेदा**स्तद्गोचरस्तद्विषयः । **'त्रयी न श्रुतिगोचरा'** इतिवत् पुंलिङ्गाभावः । ईदृशं गुह्यं गुहायामिव स्थितं परमुत्कृष्टं ज्ञायतेऽनेनेति ज्ञानम्, विषयस्य स्वानुभवं प्रति कारणत्वात् । प्रियेणैव त्वत्कृतशुश्रूषादिजन्यप्रेम्णैव व्याख्यातम् । यस्यार्थस्य प्रकृष्टबोधेन सद्य एव वीराणामुपासकानां चक्रस्य समूहस्येश्वरः **'त्रितयभोक्ता वीरेशः'** इति **शिवसूत्र**प्रतिपादितलक्षणको भवतीति सर्वं शिवम् ॥ ८५-८५$\frac{१}{२}$ ॥

**इति श्रीभास्करोन्नीते नित्याषोडशिकाम्बुधेः ।**
**व्याख्याने सेतुबन्धाख्ये विश्रामः सप्तमोऽभवत् ॥ ७ ॥**

# अथाष्टमो विश्रामः

एवं सार्धैः पञ्चाशीत्या श्लोकैर्मन्त्रसङ्केतमुपदिश्य क्रमप्राप्तं पूजासङ्केतमुपदेष्टुं शिष्यावधानाय प्रतिजानीते–

**श्रीभैरव उवाच**

**पूजासङ्केतमधुना कथयामि तवानघे ।**
**यस्य प्रबोधमात्रेण जीवन्मुक्तः प्रमोदते ॥ १ ॥**

सङ्केतज्ञानमात्रेण जीवन्मुक्तश्चेत्तादृशविभावनपूर्वकं चक्रपूजनेन तथात्वं कैमुतिकन्यायेनैव सिध्यतीति भावः ॥ १ ॥

पूजां विभजते--

**तव नित्योदिता पूजा त्रिभिर्भेदैर्व्यवस्थिता ।**
**परा चाप्यपरा गौरि तृतीया च परापरा ॥ २ ॥**

पूर्व**चतुःशत्यां** या नित्या पूजा तव कथिता सा त्रिविधा, न तु काम्या नैमित्तिकी वेत्यर्थः ॥ २ ॥

ताः क्रमेण लक्षयति--

**प्रथमाऽद्वैतभावस्था सर्वप्रचरगोचरा ।**
**द्वितीया चक्रपूजा च सदा निष्पाद्यते मया ॥ ३ ॥**
**एवं ज्ञानमये देवि तृतीया स्वप्रथामयी ।**
**उत्तमा सा परा ज्ञेया विधानं शृणु साम्प्रतम् ॥ ४ ॥**

द्वैतभानसामान्याभावे परा । अद्वैतभानसामान्याभावे त्वपरा । द्वैतविलयाभ्यासदशायां परापरेति पूजात्रयलक्षणानि । न विद्यते द्वैतं यस्मिन्नेतादृशो भावोऽन्तःकरणवृत्तिविशेषस्तत्र तिष्ठति विषयीभवति । प्रकर्षेण चरन्ति विषयाभिमुखीभवन्तीति प्रचराणीन्द्रियाणि । तेषां गोचरो विषयः । सर्वेन्द्रियजन्येषु ज्ञानेषु ये विषयास्तेषु सच्चिदानन्दांशस्यानुगतस्य भानम्, न त्वनुगतयोर्नामरूपयोः । तदिदम्– **'ऋतम्भरा तत्र प्रज्ञा'** इति **योगसूत्र**प्रसिद्धं ज्ञानम् । सा प्रथमा पूजा परानाम्नी ।

**'यत्र यत्र मनो याति बाह्ये वाऽऽभ्यन्तरे प्रिये ।**
**तत्र तत्राक्षमार्गेण चैतन्यं व्यज्यते प्रभोः ॥'**

इत्यभियुक्तिषु प्रसिद्धा । या पूर्वतन्त्रे भूगृहादिबिन्द्वन्तपूजा वर्णिता, या मया प्रत्यहं क्रियते सा द्वितीया । सेयं परपूजाधिकारिणाऽपि कार्येति द्योतनायेत्थमुक्तम् । ज्ञानमये चिदेकस्वभावे ब्रह्मणि स्वस्याऽऽत्मनः प्रथाऽभेदेन प्रस्फुरणम्, उभयाभेदाभ्यास इति यावत् । सा तृतीया–

**'प्रकाशैकघने धाम्नि विकल्पान् प्रसवादिकान् ।**
**निक्षिपाम्यर्चनद्वारा वह्नाविव घृताहुतीः ॥'**

इत्यादिनाऽ**भियुक्तै**रुक्ता । एतासु परैवोत्तमा ज्ञेया । परापरा तु मध्यमा । अपरा त्वधमेत्यर्थादुक्तं भवति । एतासां विधानमितिकर्तव्यतां च सम्प्रति क्रमेण शृण्वित्यर्थः ॥ ३-४ ॥

तत्र प्रथमोपस्थितां परां पूजामाह त्रिभिः ---

**महापद्मवनान्तस्थे वाग्भवे गुरुपादुकाम् ।**
**आप्यायितजगद्रूपां परमामृतवर्षिणीम् ॥ ५ ॥**
**सञ्चिन्त्य परमाद्वैतभावनामदघूर्णितः ।**
**दहरान्तरसंसर्पन्नादालोकनतत्परः ॥ ६ ॥**
**विकल्परूपसंजल्पविमुखोऽन्तर्मुखः सदा ।**
**चित्कलोल्लासदलितसङ्कोचस्त्वतिसुन्दरः ॥ ७ ॥**

व्यापिकासमनयोर्मध्यभागे सहस्रदलकमलमेव बहुदलावृतत्वान्महापद्मवनम् । तदन्तस्थं तत्कर्णिकामध्यभागस्थं वाग्भवमेकारस्त्रिकोणमिति यावत् । तत्र गुरुपादुकां गुरुपादुकामन्त्रप्रतिपाद्यां परशिवाभिन्नां स्वनाथात्मिकामकुलामृतकुण्डलिनीम् । आप्यायितजगद्रूपां शिशिरनिजरश्मिप्रसरेणाऽऽप्यायितचराचरां परमामृतवर्षिणीं निरन्तरनिबिडचिद्रसासारवर्षिणीं सञ्चिन्त्य स्वाभिन्नां विभाव्य तादृश्याः परमाद्वैतभावनाया मदेनाऽऽनन्देन घूर्णितः समो भूयात् । सोऽयं गुरुपूजोत्तरं तत्प्रसादस्वीकाररूपः । तदुक्तम् **अभियुक्तैः –**

**'स्वप्रकाशशिवमूर्तिरेकिका तद्विमर्शतनुरेकिका तयोः ।**
**सामरस्यवपुरिष्यते परा पादुका परशिवात्मनो गुरोः ॥**
**स्वप्रकाशवपुषा गुरुः शिवो यः प्रसीदति पदार्थमस्तके ।**
**तत्प्रसादमिह तत्त्वशोधनं प्राप्य मोदमुपयाति भावुकः ॥'**

इति । प्रसादं स्वीकृत्याऽऽन्तरं जपं कुर्यादित्याह–दहरेति । दहरं हृदयाकाशं तस्यान्तरे मध्ये संसर्पतो नादस्य सर्वमन्त्रप्रकृतिभूतस्यानाहतध्वनेरालोकने श्रवणा-

नुसन्धाने तत्पर आसक्तः । अत एव विकल्परूपो बहुकोटिको द्वैतकवलितो यः सञ्जल्पो वाचिकमानसान्यतरोच्चारणरूपो जपस्तत्र विमुखस्तस्मात्परावृत्तः । सदाऽन्तर्मुखोऽबहिःप्रसृतमनस्कः । उक्तं च पञ्चमे पटले–

**'संयतेन्द्रियसञ्चारं प्रोच्चरेन्नादमान्तरम् ।**
**एष एव जपः प्रोक्तो न तु बाह्यजपो जपः ॥'** (५/३९)

इति । चित्कलाया अद्य यावत् सङ्कुचितत्वेन भाताया उल्लासेन सर्वतः प्रसृमरत्वरूपापरिच्छिन्नत्वविभावनेन दलितः सङ्कोचः परिच्छिद्य भानं यस्य सः । अत एवातिसुन्दरः परपूजाजन्यसुन्दरीभावात्मकफलानुभविता सन्नित्यर्थः ॥ ५-७ ॥

**'नादेवो देवमर्चयेत्', 'शिवो भूत्वा शिवं यजेत्'** इत्यादिवचनैः परस्याः पूजाया अपरपूजापरापरपूजे प्रत्यङ्गत्वं मन्यमानः परपूजामनुपसंहरन्नेवापरां पूजां परां च पूजां तन्त्रेणाऽऽह –

**इन्द्रियप्रीणनैर्द्रव्यैर्विहितस्वात्मपूजनः ।**
**न्यासान्निर्वर्तयेद्देहे षोढान्यासपुरःसरम् ॥ ८ ॥**

इन्द्रियाणां प्रीतिजनकानि गन्धादीनि द्रव्याणि तैरात्मरूपाया देवतायाः पूजनं विदध्यात् । तदुक्तम् **आम्नायरहस्ये**–

**'इन्द्रियद्वारसंग्राह्यैर्गन्धाद्यैरात्मदेवता ।**
**स्वभावेन समाराध्या ज्ञातुः सोऽयं महामखः ॥'**

इति । ईदृशात्मपूजोत्तरं न्यासान् देवतासंघस्य स्वशरीरेऽवस्थापनरूपांश्चतुश्चत्वारिंशत्संख्यान्निर्वर्तयेदारभेत । आत्मपूजान्यासजालयोः पाठतः प्राप्तस्य पौर्वापर्यस्य वक्ष्यमाणकतिपयपदार्थानां श्रौतक्रमानुरोधेनोत्तरकालमात्र एव पर्यवसानं न पुनरव्यवहितोत्तरत्वे । इदं च **प्राचामनुरोधेन** व्याख्यातम् । वस्तुतस्तु **'सर्वप्रचरगोचरा'**-(८/३) इत्युपक्रमस्यैव 'इन्द्रियप्रीणनैः' इत्युपसंहारपूर्वकपरपूजाङ्गत्वविधानम्, तेन गन्धादिभिः पूजनमिति परपूजाशरीरमेव न त्वात्मपूजा । तस्या न्यासजालोत्तरभाविपात्रासादनोत्तरकालिकत्वात् । ततश्च शिरस्थितगुरोर्दहरस्थनादविद्यायाः सर्वावसायिचित्कलारूपदेव्यात्मनश्चाद्वैतभानसमकालं सकलेन्द्रियैर्विषयान् भुञ्जानस्तज्जन्यानन्दधारामात्रविषयकनिर्विकल्पकज्ञानैकसारतयेतरनिखिलविषयप्रमोषेण कञ्चित्कालमवस्थानं परा पूजेत्येतावदर्थपरोऽयं ग्रन्थसन्दर्भो योज्यः । तेनेदृशपरपूजनाव्यवधानेनैव न्यासाः कर्तव्या इति ध्येयम् ॥ ८ ॥

षोढान्यासं लक्षयति–

**गणेशैः प्रथमो न्यासो द्वितीयस्तु ग्रहैर्मतः ।**
**नक्षत्रैस्तु तृतीयः स्याद्योगिनीभिश्चतुर्थकः ॥ ९ ॥**
**राशिभिः पञ्चमो ज्ञेयः षष्ठः पीठैर्निगद्यते ।**
**षोढान्यासस्त्वयं प्रोक्तः सर्वत्रैवापराजितः ॥ १० ॥**

गणेश(शादि)नामघटित[न्यासावान्त]रापूर्वाणि(णां) षट्कम् । तज्जन्यं परमापूर्वम् । तादृशपरमापूर्वजनकत्वं शक्यतावच्छेदकीकृत्य प्रवृत्तः षोढान्यासस्तत्प्रख्यन्यायेन कर्मनामधेयम् ॥ ९-१० ॥

षोढान्यासस्य महिमानमाविष्करोति–

**एवं यो न्यस्तगात्रस्तु स पूज्यः सर्वयोगिभिः ।**
**नास्त्यस्य पूज्यो लोकेषु पितृमातृमुखो जनः ॥ ११ ॥**
**स एव पूज्यः सर्वेषां स स्वयं परमेश्वरः ।**
**षोढान्यासविहीनं यं प्रणमेदेष पार्वति ॥ १२ ॥**
**सोऽचिरान्मृत्युमाप्नोति नरकं च प्रपद्यते ।**

यं प्रणमेदित्यस्य क्रोधेन प्रणमेदित्यर्थ इति **सौभाग्यरत्नाकरे** स्थितम् । युक्तं चैतत्–

**'खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ।**
**सरित्समुद्रांश्च हरेः शरीरं यत्किं च भूतं प्रणमेदनन्यः ॥'**

इति **विष्णुभागवतोक्त**रीत्या देव्यनन्यस्य सर्वत्र देवीभावनाया आवश्यकत्वेन सर्वस्यापि नमस्कार्यत्वात्, प्रत्युतानमस्कार्यत्वावच्छेदिकायाः स्वापेक्षयाऽपकृष्टताया भेदव्याप्यायाः पुनः पुनर्विभावनेनाद्वैतोपास्तिविरोधापत्तेः, विजातीयप्रत्ययतिरस्काराभावात् । न च स्वापेक्षयोत्कृष्टताया नमस्कार्यतावच्छेदिकाया अपि भेदव्याप्यत्वेन स दोषस्तुल्य एवेति वाच्यम्, मिथस्तुल्यानामपि **'अन्योन्यगुरवो विप्राः'** इत्यादिवचनैः परस्परं विधानेनान्यापकृष्टताया एव [वा] नमस्कार्यतावच्छेदकत्वात् । न च स्वनमस्कारनिरासाय स्वभिन्नत्वस्यापि तत्र विशेषणीयत्वेन तद्दोषतादवस्थ्यं शङ्क्यम्, स्वस्मिन्नपि ब्रह्मभावनया **'तस्मै मह्यं नमो नमः'** इत्याद्य**भियुक्त**वचनाच्च स्वनमनस्येष्टत्वात्, अनन्य इति पदेन **भागवते**ऽप्यस्यार्थस्य ज्ञापितत्वात् । तस्मादीदृशोपासककर्तृकसक्रोधप्रणाममात्रेणापि द्वेष्टुरनिष्टं भवति, किमुत शापाभिचारादिनेत्यर्थः । तेन सर्वपूज्यत्वसमर्थनेऽस्य तात्पर्यम् । एवमेव शक्तिन्यासकर्तृनमनीयास्फोटनावेदकवाक्येऽप्युन्नेयम् । सुगममन्यत् ॥ ११-१२$\frac{१}{२}$ ॥

**षोढान्यासप्रकारं च कथयामि तवानघे ॥ १३ ॥**
**विघ्नेशो विघ्नराजश्च विनायकशिवोत्तमौ ।**
**विघ्नकृद्विघ्नहर्ता च विघ्नराट् गणनायकः ॥ १४ ॥**
**एकदन्तो द्विदन्तश्च गजवक्त्रो निरञ्जनः ।**
**कपर्दभृद्दीर्घमुखः शङ्कुकर्णो वृषध्वजः ॥ १५ ॥**
**गणनाथो गजेन्द्रश्च शूर्पकर्णस्त्रिलोचनः ।**
**लम्बोदरो महानादश्चतुर्मूर्तिः सदाशिवः ॥ १६ ॥**
**आमोदो दुर्मदश्चैव सुमुखश्च प्रमोदनः ।**
**एकपादो द्विजिह्वश्च शूरो वीरश्च षण्मुखः ॥ १७ ॥**
**वरदो वामदेवश्च वक्रतुण्डो द्वितुण्डकः ।**
**सेनानीर्ग्रामणीर्मत्तो विमत्तो मत्तवाहनः ॥ १८ ॥**
**जटी मुण्डी तथा खड्गी वरेण्यो वृषकेतनः ।**
**भक्ष्यप्रियो गणेशश्च मेघनादो गणेश्वरः ॥ १९ ॥**

अत्र विघ्नेशादीन्येकपञ्चाशन्नामानि । एतेषु तन्त्रभेदेन क्वचित् क्वचिन्नामभेदा नामैकदेशभेदाश्च दृश्यन्ते । यथा त्रिलोचनस्थानेऽग्निनेत्र इति, दीर्घमुखस्थाने दीर्घवक्त्र इति, कपर्दभृत्स्थाने कपर्दवानित्यादि ॥ १३-१९ ॥

एतेषां ध्यानमाह--

**तरुणारुणसङ्काशान् गजवक्त्रांस्त्रिलोचनान् ।**
**पाशाङ्कुशवराभीतिकरान् शक्तिसमन्वितान् ॥ २० ॥**
**एतांस्तु विन्यसेद्देवि मातृकास्थानवत्प्रिये ।**

तरुणारुणो मध्याह्नादित्यः । वामोर्ध्वकरमारभ्य वामाधःकरपर्यन्तमायुधानि । शक्तिसमन्वितान् पुष्ट्यादिभिः श्र्यादिभिर्वा तन्त्रभेदेन षड्विधलक्षणतयोक्ताभिः शक्तिभिः सहितान् । तत्साहित्यं च न ध्यानमात्रेण, अपि तु तन्नाम्नां मन्त्रेऽपि योगः । तत्र **केचित्** 'विघ्नेश्वराय श्रियै नमः' इत्यादिव्यस्तप्रयोगं लिखन्ति । परे तु 'विघ्नेश्वरश्रीभ्यां नमः' इति द्वन्द्वसमासमाहुः । **नव्या**स्तु--भवानीशङ्कराभ्यां लक्ष्मी-नारायणाभ्यामित्येवं शक्तिनाम्नः प्राथम्येनैव बहुशः प्रयोगदर्शनाच्छ्रीविघ्नेश्वराभ्या-मित्येव प्रयोगो युक्त इत्याहुः ।

इदं त्वत्र वक्तव्यम्– अस्तु शक्तिनाम्नः प्राथम्यम्, **'विघ्नेश्वरः श्रिया युक्तो विघ्न-राजस्तथा ह्रिया'** इत्यादि**ज्ञानार्णव**वाक्ये गणेशतच्छक्त्योः पाठक्रमस्याविवक्षितत्वात्, **'शान्त्या युक्तः शिवोत्तमः'** इत्यस्य विपरीतक्रमस्यापि दर्शनात्, परं तु 'सहयुक्तेऽ-प्रधाने' इति सूत्रानुसारेण शक्तिवाचकपदोत्तरतृतीयाभिस्तासामप्राधान्यावगमाच्छान्त्या

युक्त इत्यादावपि विशेषणविशेष्यभावेन गणेशस्यैव प्राधान्यावगमात्, **'गणेशैः प्रथमो न्यासः'** (८।८) इति प्रकृततन्त्रेऽपि गणेशानामेव तृतीयया निरपेक्षकरणत्वोक्तेः, उभयोः समप्राधान्ये च विघ्नेश्वरादिपदोत्तरमिव श्र्यादिपदोत्तरमपि प्रथमाविभक्तेरेव युक्ततया तृतीयाविभक्तीनां युक्तसहितादिपदानां चाविवक्षितार्थकत्वकल्पनापत्त्या द्वयोः समप्राधान्यावेदकद्वन्द्वसमासो मानाभावपराहतः । युग्मस्य तन्त्रेण न्यासविधाने तु परस्परसाहित्यबोधकद्वन्द्वो योग्यः स्यात् । युग्मस्यापि क्रमेण न्यासे तु परस्परसाहित्यविशेषणेन भिन्न एव प्रयोगः । अत एव **रुद्रयामले** महागणपति-तर्पणप्रकरणे--**'सिद्ध्यामोदादियुग्मानि तर्पयेत्कामतस्ततः'** इति विधाय मन्त्रोद्धारः सहितपदयुक्त एव कृतः –

**'प्रणवं पूर्वमुच्चार्य ततो लक्ष्मीं समुच्चरेत् ।**
**ततो गणेशबीजं च सिद्ध्या च सहितं ततः ॥**
**आमोदं तर्पयामीति चतुर्वारं तथैव तु ।**
**आमोदसहितां सिद्धिं तर्पयामि क्रमाच्चतुः ॥'**

इत्यादि । प्रकृते तु युग्मस्य तन्त्रेण क्रमेण वा देवतात्वाभावाच्छ्रीसहितस्यैव गणेशस्य देवतात्वाच्छ्रीसहितविघ्नेशाय नम इत्यादिरेव प्रयोगो युक्त इति ध्येयम् । मातृका-स्थानवत्, यथासंख्यमेकैकमातृकाक्षरवत्तत्स्थानवच्चेति न्यासक्रियाविशेषणम् । तेन मतुबयं न वतिः । ततश्च–'अं श्रीयुक्ताय विघ्नेशाय नमः' इत्युक्त्वा शिरसि न्यसेदित्यादिः प्रयोग ऊह्यः ॥ २०-२०$\frac{१}{२}$ ॥

ग्रहाणां न्यासमाह–

**स्वरैस्तु सहितं सूर्यं हृदयाधः प्रविन्यसेत् ॥ २१ ॥**
**बिन्दुस्थाने सुधासूतिं यादिवर्णचतुष्टयैः ।**
**भूपुत्रं लोचनद्वन्द्वे कवर्गाधिपतिं प्रिये ॥ २२ ॥**
**हृदयोपरि विन्यसेच्चवर्गाधिपतिं बुधम् ।**
**बृहस्पतिं कण्ठदेशे टवर्गाधिपतिं प्रिये ॥ २३ ॥**
**हृदये विन्यसेच्छुक्रं तवर्गाधिपतिं पुनः ।**
**नाभौ शनैश्चरं चैव पवर्गेशं सुरेश्वरि ॥ २४ ॥**
**वक्त्रे शादिचतुर्वर्णैः सहितं राहुमेव च ।**
**क्षकारसहितं केतुं पायौ देवेशि विन्यसेत् ॥ २५ ॥**

स्वरैरकाराद्यैः षोडशभिः । हृदयाधो हृज्जठरसन्धौ । हृदय एवेति **तन्त्रान्तरे** । बिन्दुस्थाने । **ज्ञानार्णवा**नुगुण्याय भ्रूमध्य इति तदर्थः । ललाटमध्य इति **केचित्** ।

तत्र, **'तत्राऽऽधारं च हृद्बिन्दुस्थानं च परिकीर्तितम्'** इति **स्वच्छन्दतन्त्रो**क्तवचने बिन्दुस्थानपदस्य भ्रूमध्यपरत्वेन तैरेव व्याख्याततत्वात् । सुधासूतिं चन्द्रम् । यादिवर्णचतुष्टयैः यरलवैः सहितम् । संख्याया अवयवे तयप् । अवयवाभिप्रायेणैव बहुवचनम् । भूपुत्रं मङ्गलम् । कवर्गाधिपतिमिति तु कवर्गसाहित्यध्वननाय । एवमग्रे । हृदयोपरि कण्ठकूपाधः । हृदयाधो बुध इति तु **तन्त्रान्तरे** । शादिचतुर्वर्णैः शषसहैः । क्षकारसहितमिति, पायौ गुदे, **तन्त्रान्तरे** तु ळकारक्षकाराभ्यां योग उक्तः । यदि पुनस्तन्त्रान्तरानुगुण्याय प्रकृततन्त्रस्थः क्षकारो ळकारस्याप्युपलक्षणपरत्वेन व्याख्यायते तदा नक्षत्रन्यासे **'क्षकारेण ततो बिन्दुविसर्गाभ्यां च रेवती'** इति **ज्ञानार्णव**वचनेऽपि तुल्यन्यायेन तन्त्रान्तरानुगुण्याय क्षकारस्य ळकारोपलक्षणपरत्वावश्यकतया 'ळं क्षं अं अः रेवत्यै नमः' इति **पद्धतिकारा**णां लेखो निर्मूल इति **सुन्दरीमहोदयो**क्तिरनादर्तव्या । अत्र अं आं सूर्याय नमः, हृदयाध इत्यादिरीत्या प्रयोगविधिरूहनीयः ॥ २१-२५ ॥

**ज्ञानार्णवे** सूर्यादीनां रूपाणि ध्येयत्वेनोक्तानि । तत्र सूर्यमङ्गलौ रक्तौ, चन्द्रशुक्रौ श्वेतौ, बुधः श्यामः, गुरुः पीतः, शनिः कृष्णः, राहुकेतू धूम्रवर्णाविति । एवं वामोरुन्यस्तवामकरा वरप्रदक्षिणकरा इति च । **तन्त्रान्तरे** तु रेणुकाऽमृता धात्री शङ्खिनी शाङ्करी ज्ञाना शक्तिः कृष्णा धूम्रा चेति शक्तिभिर्वराभयकराभिः साहित्यमुक्तम् । **ज्ञानार्णवे**ऽपि क्वचिद् दृश्यते । तद्यथा–

> **रक्तं श्वेतं तथा रक्तं श्यामं पीतं च पाण्डुरम् ।**
> **कृष्णं धूम्रं धूम्रधूम्रं भावयेद्रविपूर्वकान् ॥ २६ ॥**
> **कामरूपधरान् देवि दिव्याम्बरविभूषणान् ।**
> **वामोरुन्यस्तहस्तांश्च दक्षहस्तवरप्रदान् ॥ २७ ॥**

धूम्रधूम्रमतिशयेन धूम्रमित्यर्थः । स्पष्टमन्यत् ॥ २६-२७ ॥

नक्षत्रन्यासमाह–

> **ललाटे दक्षनेत्रे च वामे कर्णद्वये पुनः ।**
> **पुटयोर्नासिकायाश्च कण्ठे स्कन्धद्वये पुनः ॥ २८ ॥**
> **पश्चात्कूर्परयुग्मे च मणिबन्धद्वये तथा ।**
> **हस्तयोर्नाभिदेशे च कटिबन्धे ततः परम् ॥ २९ ॥**
> **ऊरुयुग्मे तथा जान्वोर्जङ्घयोश्च पदद्वये ।**

नेत्रयोरित्यनुक्त्वा दक्षनेत्रे वाम इति विभज्योक्तिः क्रमनियमार्था । तेन कर्णद्वयादिपदद्वयान्तेषु प्रथमं दक्ष पश्चाद्वाम इति ज्ञेयम् । पश्चादिति पृष्ठ इत्यर्थः । कटिबन्ध इति यथैकस्य हस्तस्यैक एव मणिबन्धः, न तस्य दक्षवामभेदेनद्वैविध्यम्,

तथा कटिबन्धोऽप्येक एवेत्याशयेनैकवचनम् । **प्राञ्चस्त्वेकत्वमविवक्षितं कटिबन्धद्वय** इत्येवार्थः । अन्यथा सप्तविंशतिसंख्यानुपपत्तिरित्यर्थः । तच्चिन्त्यम्, प्रत्युत कटिद्वैविध्येऽष्टाविंशतिसंख्यापत्तेः । न च पश्चात् कूर्परयुग्म इत्यत्र कूर्परपश्चाद्भागयोरित्यर्थस्य तदभिप्रेतत्वस्वीकारेण न संख्याविरोध इति वाच्यम्, हस्तमध्यस्थपुरोभागः सन्धिपदवाच्यः, पश्चाद्भाग एव हि कूर्परपदवाच्य इति प्रसिद्ध्या पश्चात्पदस्य व्यावर्त्त्याभावात् । अत एव बहिर्मातृकान्यासे दोःसन्धिष्वित्येव व्यवहारः । वक्ष्यमाणषोडशारचक्रन्यासे च कूर्परमित्येव व्यवहारो न तत्र विशेषणान्तरापेक्षा । तन्त्रान्तराविरोधायेदृश्येव क्लिष्टा व्याख्याऽऽश्रयणीयेति चेत्, अस्तु ॥ २८-२९$\frac{१}{२}$ ॥

अथात्राक्षराणां विभज्य योजनामाह–

**युग्ममेकं त्रयं वेदा एकमेकं द्वयं ततः ॥ ३० ॥**
**एकं युग्मं युग्ममेकं युग्मं युग्मं युगं क्रमात् ।**
**एकं युग्मं त्रयं चैकं त्रयमेकैकमेककम् ॥ ३१ ॥**
**युग्ममेकं युगं त्रीणि युग्मं बिन्दुविसर्गयुक् ।**
**नक्षत्राणां क्रमाद्वर्णनिर्णयः कथितः प्रिये ॥ ३२ ॥**

मातृकाक्रमात्स्वरान्ते विद्यमानावपि बिन्दुविसर्गौ तत उन्मूल्य क्षकारान्ते संयोज्य तेषां प्राथमिकं युग्मम् अं आं इत्यश्विन्या आदौ पठनीयम्, तत एकम् इं भरण्याः, त्रयम् ईं उं ऊं कृत्तिकाया इत्यादि योजनीयम् । युग्मबिन्दुविसर्गैर्ळं क्षं अं अः इति चतुर्भिर्युक्ता रेवतीत्यर्थः । एकादशस्वेकैकाक्षरस्य योगः । दशसु द्वयोर्द्वयोरक्षरयोः । चतुर्षु त्रयाणां त्रयाणामक्षराणाम्, नक्षत्रद्वये चतुश्चतुर्णामिति विवेकः । **ज्ञानार्णवे** तु भरणीकृत्तिकयोर्द्वे द्वे अक्षरे उक्ते इति विशेषः । रेवत्यां क्षकारोक्तिर्ळकारोपलक्षणमिति तूक्तमेव । इदं च सार्धं श्लोकद्वयं क्वचित्पुस्तकेषु न दृश्यते ॥ ३०-३२ ॥

अथ नक्षत्राणां ध्यानमाह–

**ज्वलत्कालानलप्रख्या वरदाभयपाणयः ।**
**नतिपाण्योऽश्विनीपूर्वाः सर्वाभरणभूषिताः ॥ ३३ ॥**
**एतास्तु विन्यसेद्देवि स्थानेष्वेषु सुरार्चिते ।**

वराभयनतिपाण्य इत्यनेन चतुर्भुजतोक्ता । 'कृदिकारादक्तिनः' इति ङीष् । अं आं अश्विन्यै नम इत्यादिः प्रयोगः ॥ ३३-३३$\frac{१}{२}$ ॥

अथ योगिनीन्यासमाह—

**विशुद्धौ हृदये नाभौ स्वाधिष्ठाने च मूलके ॥ ३४ ॥**
**आज्ञायां धातुनाथाश्च न्यस्तव्या डादिदेवताः ।**
**अमृतादियुताः सम्यग् ध्यातव्याश्च सुरेश्वरि ॥ ३५ ॥**

विशुद्धौ कण्ठे । मूलं च कं च तयोः समाहारो मूलकम् । प्राण्यङ्गत्वादेकवद्भावः । मूलाधारे ब्रह्मरन्ध्रे चेत्यर्थः । आज्ञायां भ्रूमध्ये । धातूनां त्वगसृङ्मांसमेदोस्थिमज्जशुक्राणां नाथाः स्वामिन्यः । डादिदेवता डाकिनी-राकिणी-लाकिनी-काकिनी-साकिनी-हाकिनी-याकिन्यः सप्त । अमृतादीत्यादिपदेनाऽऽकर्षिण्यादिपरिग्रहः । ताभिर्युता न्यस्तव्याः । प्रधानदेवतां डाकिन्यादिकां मध्ये कर्णिकं विन्यस्य तद्दलेष्वमृतादीर्न्यसेदित्यर्थः । ध्यातव्याः । **तन्त्रान्तरो**क्तरीत्येति शेषः । यद्यपि प्रकृततन्त्रे **'रुद्रयामलतन्त्रे तु कर्म प्रोक्तम्'** (४।६१) इति पूर्वत्र कथनादस्मिन्नर्थेऽपि तत्रत्यैव रीतिरनुसर्तुं युक्ता, तथाऽपि काम्यचक्रार्चनकाम्यहोमादिषु बहुषु **ज्ञानार्णव**संवादस्यैव दर्शनात् **महाज्ञानार्णवे** दृष्टः **'शङ्का तत्र न पार्वति'** इत्यादौ तत्सम्मतेरपि निर्देशात्तदुक्तरीत्यैव योगिनीर्विन्यस्य तत्रानुक्ता अप्यमृतादिका विशिष्येह कथितत्वाद्विन्यसेदिति भावः । तत्र डाकिनीमन्त्रोद्धारो यथा **ज्ञानार्णवे—**

**'डांडींबीजद्वयं चोक्त्वा डमला वरयाः प्रिये ।**
**वामकर्णेन्दुनादाढ्या डाकिन्यै नम इत्यपि ॥**
**ह्रीं श्रीं स्वरान्ते वक्तव्यं मान्ते रक्षपदद्वयम् ।**
**त्वगात्मने कण्ठदेशे विशुद्धौ विन्यसेत्प्रिये ॥'**

इति । अस्यार्थः---डमलवरया इति कूटम् । वामकर्णः षष्ठः स्वरः । इन्दुरनुस्वारः । स्वरान्ते षोडश स्वरानुच्चार्य, मा इत्यस्मच्छब्दद्वितीयैकवचनम् । तदन्ते रक्षेतिपदं द्विरुच्चरेत् । त्वगात्मने इति चतुर्थीबलान्नम इतिपदं सर्वन्याससाधारणमाक्षिप्यते । तथा च 'डांडींडमलवरयूं डाकिन्यै नमो ह्रीं श्रीं अं आं मां रक्ष रक्ष त्वगात्मने नमः' इति मन्त्रः सिध्यति । अनेन मन्त्रेण कण्ठस्थषोडशदलकर्णिकायां डाकिनीं विन्यस्य तद्दलेष्वन्तर्मातृकान्यासवदमृतादिषोडशदेवता एकैकस्वरयुता न्यसेत् । तस्या ध्यानं यथा **सहस्रनामसु—**

**'विशुद्धिचक्रनिलया रक्तवर्णा त्रिलोचना ।**
**खट्वाङ्गादिप्रहरणा वदनैकसमन्विता ॥**
**पायसान्नप्रिया त्वक्स्था पशुलोकभयङ्करी ।**
**अमृतादिमहाशक्तिसंवृता डाकिनीश्वरी ॥'**

अमृता, आकर्षिणी, इन्द्राणी, ईशानी, उमा, ऊर्ध्वकेशी, ऋद्धिदा, ऋकारा, लृकारा, लॄकारा, एकपदा, ऐश्वर्यात्मिका, ओंकारी, औषधी; अम्बिका, अक्षरा एता अमृताद्याः । **केचित्** तु स्वरान्तं यथापूर्वं पठित्वा 'त्वगात्मानं मां रक्ष नमः' इति मन्त्रं पठन्तस्तत्र प्रमाणं स्वगुरुसङ्केत एवेत्याहुः । अत्रैव मन्त्र आदिमडकारत्रये डाकिनीडकारे चेति रेफचतुष्टयं स्वरस्थाने ककारादिठकारान्ता वर्णाः, त्वक्पदस्थानेऽसृक्पदं चेद्राकिणीमन्त्रः । लकारचतुष्टयं डादिफान्ता मांसपदं चेल्लाकिन्याः । कचतुष्कं बादिलान्ता मेदःपदं चेत्काकिन्याः । सचतुष्कं वशषसा अस्थिपदं चेत्साकिन्याः । एता अनाहत-मणिपूर-स्वाधिष्ठान-मूलाधारेषु न्यस्तव्याः । हचतुष्टयं हक्षौ मज्जपदं चेद्धाकिन्याः । इयं च भ्रूमध्ये । यकारचतुष्कं पञ्चाशद्वर्णाः शुक्रपदं चेद्याकिन्याः । एषा ब्रह्मरन्ध्रे न्यस्तव्या । आसां धातुनाथानां तत्र तत्रैवावस्थानात् । अत एव मूले मूलक इति क्रमो न विवक्षितः । कालरात्र्यादिदेवताः **स्वच्छन्दा**दितन्त्रोक्ताः **प्राचां** टीकातो ग्राह्याः । राकिण्यादीनां ध्यानानि **सहस्रनामसु** विद्यमानानि **तद्भाष्येऽस्माभि**र्विवृतानि । यत्तु **नव्याः**— मज्जदेवता हाकिनी ब्रह्मरन्ध्रे न्यस्तव्या, न भ्रूमध्ये । शुक्रदेवताया याकिन्या न्यासे प्रमाणमेव नास्ति । अत एव **सुभगार्चारत्ना**दिषु तदनुक्तिरित्याहुः । तच्चिन्त्यम्, प्रकृततन्त्र आज्ञायामितिपदस्य निर्विषयत्वापत्तेः । यत्तु **ज्ञानार्णवे** वचनम्—

> **'हक्षवर्णस्थितां तद्वद्धाकिनीं विन्यसेत्क्रमात् ।**
> **ब्रह्मरन्ध्रे महेशानि न्यासोऽयं योगिनीयुतः ॥'**

इति । तत्र हाकिनीमन्त्रकल्पनाया इव स्थानकल्पनाया अपि तद्वदितिपदेनैव लाभात्, तथा डाकिन्यादिपञ्चकस्य स्वस्वमन्त्रघटकाक्षराधारचक्रेषु न्यासस्तद्वदेव हाकिनी-मन्त्रघटकहकारक्षकाराधारद्विदलचक्रे न्यास इति तदर्थात् । **तन्त्रान्तरे** स्मृतस्याऽऽज्ञा-यामित्येतत्पदस्यानुरोधेन तथैव कल्पनाया युक्तत्वात् । न च ब्रह्मरन्ध्रपदस्यैव तन्त्रान्तरवशादाज्ञाचक्रपरत्वेन व्याख्याऽस्त्विति वाच्यम्, सामान्यस्यैव विशेषेणोप-संहाराद्विशेषस्य विशेषान्तरपरत्वे विनिगमनाविरहेण वैपरीत्यस्याप्यापत्तेः । ततश्च ब्रह्मरन्ध्र इति पदस्यानन्वयापत्त्या तदाकाङ्क्षया तद्वत्क्रमाद्विन्यसेदितिपदत्रयानुवृत्त्या याकिनीं पूर्वोक्तवर्णानां समस्तानां क्रमेण युक्तां तद्वदेव मन्त्रसहितां ब्रह्मरन्ध्रे विन्यसेदित्यर्थो वर्णनीयः । अत्र च सर्वतो **'विशुद्धिचक्रनिलया'** इत्यादीनि **'याकिन्य-म्बास्वरूपिणी'** इत्यन्तानि ललितानामान्येव तात्पर्यग्राहकाणि । नन्वेतेषु नामसु सप्तानां योगिनीनां साक्षरस्थानावरणानां कथनमात्रेण न्यासविधेरभावात्कथं तदनुरोधेन न्यासविधेरन्यथानयनमिति चेत्, तुल्योऽयं पर्यनुयोगस्तवापि । वक्ष्यमाणैक-पञ्चाशत्पीठन्यासे **'प्राणेश्वरी प्राणदात्री पञ्चाशत्पीठरूपिणी'** इति ललितानामसु पाठबलादेकस्य पीठस्य लोपितत्वात् । 'शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदय-

मुपांशुयाजः पादावग्नीषोमीयः' इत्य[त्र] विधिवाक्यस्य प्रधानत्रयपाठमात्रेणोपांशुयाजस्य प्राधान्यनिर्णयदर्शनेन स्वस्वाधिष्ठितचक्रन्यसनीयडाकिन्यादिप्रायपाठबलादेव हाकिन्या भ्रूमध्ये न्यासो याकिन्या ब्रह्मरन्ध्र इति निर्णेतुं युक्तत्वाच्च । **'यत्प्राये पठितं यच्च तत्तादृगवगम्यते'** इति न्यायात् ।

अत एव प्रकृततन्त्रे मूलक इत्यत्र ककारो ब्रह्मरन्ध्रपरत्वेन व्याख्येयो न **प्राचीनै**रिव स्वार्थकप्रत्ययाभिप्रायेण । न चेयं व्याख्या क्लिष्टेति मन्तव्यम्, उत्तरत्र राशिन्यासे बाहुमूलक इतिपद ईदृश्या एव व्याख्यायाः सर्वसम्मतत्वेन क्लृप्ततया नाथ-(बाध)काभावात्, महाषोढान्यासान्तर्गतभुवनन्यासे डाकिन्यादीनां सप्तानां न्यासस्य क्लृप्ततया प्रकृते डादिदेवता इत्यादिपदेन सर्वासां तासामुपस्थित्यनुसारेणाऽऽपाततः क्लेशस्य सोढव्यत्वाच्च । न चैवं सति कौलिकार्थप्रकरणे **'त्वगादिधातु-नाथाभिर्डाकिन्यादिभिरप्यसौ'**(७/६०) इत्यत्रापि सप्तानामेव ग्रहणापत्तिरिति वाच्यम्, **'शाक्तैः षड्भिरथाक्षरैः'** (७/६६) इत्यादिज्ञापकेन तत्र तथात्वेऽपि प्रकृते **तन्त्रान्तरो-**क्तसप्तयोगिनीन्यासानुरोधेनैवमेव व्याख्यातुं युक्तत्वात् । एतेन बहूनां **पद्धतिकारा**णा-मेकवाक्यता सम्पद्यत इति तद्विरोधात् **सुभगार्चारत्नो**क्तिरेव नाऽऽदर्तव्येति दिक् ॥ ३४-३५ ॥

अथ राशिन्यासमाह–

**पादे लिङ्गे च कुक्षौ च हृदये बाहुमूलके ।**
**दक्षिणं पादमारभ्य वामपादावसानकम् ॥ ३६ ॥**
**मेषादिराशयो वर्णैर्न्यस्तव्याः सह पार्वति ।**

बाहुमूलं कं च तयोः समाहारस्तस्मिन् कक्षे मूर्ध्नि चेत्यर्थः । इमान्येव पादादिमूर्धान्तानि षट्स्थानानि वैपरीत्येनापि योज्यानीत्याह–दक्षिणमिति । मेषादी-त्यादिपदेन वृषभादिपरिग्रहः । वर्णैरिति रूपविशेषैरुपलक्षिता इत्यर्थः । रक्तश्वेतहरि-त्पाण्डुचित्रकृष्णपिशङ्गपिङ्गलबभ्रुकिर्मीरकृष्णधूम्रनिभान् क्रमेण ध्यात्वेति यावत् । अक्षरैः सहिता इत्यर्थ इति **केचित्** ॥ ३६ ॥

अथ तत्र योजनीयानि मातृकाक्षराणि क्रमेणाऽऽह––

**चतुष्कं त्रितयं त्रीणि द्वितयं द्वितयं द्वयम् ॥ ३७ ॥**
**पञ्चकं पञ्चकं पञ्च पञ्चकं पञ्चकं ततः ।**
**चत्वारि मेरुर्मीने स्युः कन्यायां पञ्च शादयः ॥ ३८ ॥**

कर्क-सिंहयोर्द्वे द्वे अक्षरे । वृषभ-मिथुनयोस्त्रीणि त्रीण्यक्षराणि । मेषे चत्वारि । अन्येषु सप्तसु तु राशिषु पञ्च पञ्च । तेष्वेव कन्यायां तु द्वयमधिकं बिन्दुविसर्गौ

शादयश्चेत्यर्थः । मेरुः क्षकारः, क्षकाराधिकारे **'वर्णान्तो मेरुरेव च'** इति **कोशात्** । **ज्ञानार्णवे** तु– वृषभे द्वे अक्षरे, मिथुने चत्वारि, कन्यायां ळकारो नास्तीति विशेषः । 'अं आं इं ईं मेषाय नमः' इत्यादिः प्रयोगः । अयं सार्धश्लोको नक्षत्रीयं सार्धश्लोकद्वयं च शास्त्रारम्भश्लोकव्याख्यावसर एव व्याख्यातमस्माभिः ॥ ३७–३८ ॥

अथाष्टभिः श्लोकैः पीठन्यासमाह––

**पीठांस्तु विन्यसेद्देवि मातृकास्थानके प्रिये ।**
**तेषां नामानि कथ्यन्ते शृणुष्वावहिता प्रिये ॥ ३९ ॥**
**कामरूपं वाराणसी नेपालं पौण्ड्रवर्धनः ।**
**पुरस्थिरं कान्यकुब्जं पूर्णशैलं तथाऽर्बुदम् ॥ ४० ॥**
**आम्रातकेश्वरैकाम्रं त्रिस्रोतः कामकोटकम् ।**
**कैलासं भृगुनगरं केदारं चन्द्रपुष्करम् ॥ ४१ ॥**
**श्रीपीठमोङ्कारपीठं जालन्ध्रं मालवं तथा ।**
**कुलान्तकं देविकोटं गोकर्णं मारुतेश्वरम् ॥ ४२ ॥**
**अट्टहासं च विरजं राजगेहं महापथम् ।**
**कोलापुरमेलापुरं कालेशश्च जयन्तिका ॥ ४३ ॥**
**उज्जयिन्यपि चित्रा च क्षीरकं हस्तिनापुरम् ।**
**उड्डीशश्च प्रयागाख्यः षष्ठी मायापुरी तथा ॥ ४४ ॥**
**जलेशो मलयः शैलो मेरुर्गिरिवरस्तथा ।**
**महेन्द्रो वामनश्चैव हिरण्यपुरमेव च ॥ ४५ ॥**
**महालक्ष्मीपुरोड्यानं छायाछत्रमतः परम् ।**
**एते पीठाः समुद्दिष्टा मातृकारूपकाः स्थिताः ॥ ४६ ॥**

मातृकास्थानक इत्युपक्रमेण मातृकारूपका इत्युपसंहारेण च पीठानामेकपञ्चाशत्संख्यता सूचिता, बहिर्मातृकान्यासस्थानानां तावत्संख्यत्वात् । अत एव स्पष्टतरमुक्तं **ब्रह्माण्डपुराणे**– **'ततः पञ्चाशदेकं च पीठानां विन्यसेत्क्रमात्'** इत्यारभ्य **'लिपिक्रमसमायुक्ताल्लिँपिस्थानेषु विन्यसेत्'** इत्यन्तम् । तत्प्रकारश्चेत्थम्–आम्रातकेश्वरैकाम्रमित्यत्र समाहारद्वन्द्वस्वीकारात् पीठद्वयम् । एवं महालक्ष्मीपुरोड्यानमित्यत्रापि । 'मलयः शैलो मेरुर्गिरिवरः' इत्यत्र शैलगिरिवरशब्दौ न मलयमेरुविशेषणम्, अपि तु पार्थक्येन पीठद्वयप्रतिपादकौ । तत्र निरुपपदशैलनामकः पीठो दक्षिणापथे श्रीशैल इति प्रसिद्धः । गिरिवरनामकस्तु प्रतीच्यां सौराष्ट्रदेशे गिरिनाथ इति प्रसिद्धः । यत्तु **ज्ञानार्णवे 'पञ्चाशत्पीठसञ्चयान्'** इत्युपक्रमे **'पञ्चाशत्पीठविन्यासं मातृकायाः स्थले**

**न्यसेत्'** इत्युपसंहारे च वचनं तत्र पञ्चाशच्छब्दोऽप्येकपञ्चाशत्परः, सामीप्यसम्बन्धेन लक्षणासम्भवात् । बहिर्मातृकान्यासध्यानश्लोके **'पञ्चाशद्वर्णरूपाढ्याम्'** इति **ज्ञानार्णवीये** **'पञ्चाशल्लिपिभिर्विभक्तमुखदोः'** इत्यादौ **'पञ्चाशद्वर्णभेदैर्विहितवदनदोः'** इत्यादौ च तथा लक्षणाया दृष्टत्वात् । अत एव **'नित्यानन्दवपुर्निरन्तरगलत्पञ्चाशदर्णैः क्रमात्'** इति **शारदातिलक**प्रथमश्लोके पञ्चाशत्पदमेकपञ्चाशत्परं संख्याया नैकत्स्यादिति टीकाकृतो व्याचक्षते । ततश्च **'मलयश्च महापीठः श्रीशैलो मेरुको गिरिः'** इति**ज्ञानार्णव**वचनेऽपि मेरुपर्वत इत्यनुक्तिस्वारस्याद् गिरिपदस्यैव प्रयोगानुगुण्याय कप्रत्ययप्रयोगाच्च गिरिरिति भिन्नमेव व्याख्येयम् । **सुभगार्चारत्नादि-पद्धतिषु** तथैव । 'लं मेरुगिरिपीठाय' इति प्रयोगं वदन्तो नव्याः साहसे प्रवृत्ता वा भ्रान्ता वेदितव्याः । **केचित्** तु–**'कालेश्वरं महापीठं प्रणवं च जयन्तिका'** इति **ज्ञानार्णवं** पठन्तः प्रणवाख्यपीठेन सहैकपञ्चाशत्त्वमाहुः । अन्ये तु प्रणवपदं परित्यज्य महापीठपदमेव द्विरुच्चारयन्ति । एतेन पञ्चाशदेव पीठा इति निश्चित्य [क्षकारस्य] ळकारस्यैव वा परित्याग इति परतनं(स्परं) विवदमाना अपि परास्ता वेदितव्याः । ये तु नव्या **ज्ञानार्णवे** **'मातृकायाः स्थले न्यसेत्'** इत्येवोक्तेर्ग्रहन्यासकामरतिन्यासयोः **'मातृकार्णैर्न्यसेद्देवि'** इतिवद्वर्णसाहित्यस्याकथनाद्वर्णयोगोऽपि यावद्वचनदर्शनं लुप्यत इति पक्षान्तरमाहुस्ते **'लिपिक्रमसमायुक्तान्'** इति **ब्रह्माण्डपुराणीयं** वचनं स्वयं विलिख्यापि कथं व्यस्मार्षुरित्याश्चर्यमिति दिक् । 'अं कामरूपाय नमः' इत्यादिः प्रयोगः । कामरूपपीठायेति पीठपदशिरस्कान्येव नामानि बहव ऐक्यकण्ठ्येन लिखन्ति, तेऽश्विनीनक्षत्राय मेषराशय इत्यादि कुतो नोल्लिखन्तीति वैषम्ये बीजं प्रष्टव्याः ॥ ३९-४६ ॥

षोढान्यासोपसंहारपूर्वकं चक्रन्यासं विधत्ते–

**एवं षोढां पुरा कृत्वा श्रीचक्रन्यासमाचरेत् ।**

षोढाशब्दस्तत्प्रख्यन्यायेन कर्मनामधेयमित्युक्तम् । अत एव षट्प्रकारार्थकत्वा-भावेनाव्ययसंज्ञाविरहेण षोढामिति द्वितीयैकवचनस्य लोपाभावः । आर्षो वा सः । पाठेनैव पौर्वापर्यस्य सिद्धावपि कृत्वेति त्वाश्रुतिस्तु पूजाकाले विहितयोश्चक्रेश्वरी-न्यासयोरव्यवधायकत्वलाभार्था, अन्यथाऽणिमादिन्यासस्यापि पूजाकाल एव विधास्यमानतया पौवापर्ये विनिगमनाविरहेण पाक्षिकस्य चक्रेश्वरीन्यासद्वया-नन्तर्यस्याप्यापत्तेः । चक्रन्यासशब्दोऽपि वक्ष्यमाणावान्तरन्यासनवकसमूहवाचकः । स च यद्यपि अणिमादिन्याससमूलदेव्यादिन्यासभेदेन संहृतिसृष्टिरूपो द्विप्रकारो वक्ष्यते तथाऽपि पूजाक्रमानुगुण्याच्चक्रन्यासं शृण्विति प्रतिज्ञायाणिमादेरेव कथनादि(दा)द्य एक एव चक्रन्यासः । अन्यस्त्वस्यैवाऽऽवृत्तिरवान्तरन्यासनवकस्य व्युत्क्रमरूप-

गुणविशिष्टा । न चैवं सति गुणादुभयोः कर्मणोर्भेदापत्तिः, चक्रन्यासविधावुभयोरपि कर्मणोरनाम्नानेनान्यतरस्याप्युत्पत्तिशिष्टत्वाभावात् । नापि संज्ञया भेदः, मूलदेव्यादि काणिमादिकपदयोर्दार्भायणपदवद्यौगिकत्वात् । नापि **'एवं चतुर्विधो न्यासः कर्तव्यो वीरवन्दिते'**(८/९५) इति वक्ष्यमाणवचनोपात्तसंख्यया भेदः, तस्या उत्पद्यमान-कर्मसामानाधिकरण्याभावेनैकादशप्रयाजानित्यादाविव भेदकत्वाभावात् । शब्दान्त-राभ्यासप्रकरणान्तराणि त्वनाशङ्क्यान्येव । अत एव **'मूलदेव्यादिकं न्यासमणिमान्तं पुनर्न्यसेत्'**(८/७५) इति द्वितीयवारन्यासारम्भे पुनःशब्द उपपद्यते, तस्य स्वरसत आवृत्तिबोधकत्वात् । एवं **तन्त्रान्तरे** विधीयमानः स्थितिचक्रन्यासोऽपि न कर्मान्तरम् । अत एव **'षोढाचक्रे न्यस्यान्यस्य वा'** इति **कल्पसूत्रे** द्विवचनमुपपद्यते, कर्मान्तरत्वे बहुवचनापत्तेः । तस्मादेक एव चक्रन्यासो द्विरावर्तत इत्याशयेन प्रकृत-विधावेकवचनमुपात्तम् ॥ ४६$\frac{1}{2}$ ॥

**महात्रिपुरसुन्दर्याश्चक्रन्यासं शृणु प्रिये ॥ ४७ ॥**
**यन्न कस्यचिदाख्यातं तनुशुद्धिकरं परम् ।**

अन्यस्याकथितमपि प्रियत्वात्तुभ्यं कथयामीति ध्वनयितुं प्रिय इति सम्बुद्धिः परिकराङ्कुरालङ्कारार्था ॥ ४७-४७$\frac{1}{2}$ ॥

तत्र त्रैलोक्यमोहनचक्रन्यासस्य त्रीनवयवान् क्रमेणाऽऽह—

**चतुरस्राद्यरेखायै नम इत्यादितो न्यसेत् ॥ ४८ ॥**
**दक्षांसपृष्ठपाण्यग्रस्फिक्कपादाङ्गुलीष्वथ ।**
**वामाङ्घ्र्यङ्गुलिषु स्फिक्के पाण्यग्रे चांसपृष्ठके ॥ ४९ ॥**
**सचूलीमूलपृष्ठेषु व्यापकत्वेन सुन्दरि ।**

अंसस्य भुजमूलस्य पृष्ठं पश्चाद्भाग एकं स्थानम् । पाणेरग्राण्यङ्गुल्यः । स्फिक्कमूरुसन्धिः । एतेषां समाहारद्वन्द्वस्तत्सहिताः पादाङ्गुल्य इति मध्यमपदलोपी समासः, ततो दक्षपदेन कर्मधारयः । तेनेमानि चत्वारि दक्षिणस्थानानि । एतान्येव व्युत्क्रमेण चत्वारि वामस्थानान्याह—वामेति । वामपदस्य समस्तस्याप्यन्येष्वार्थि-कोऽन्वयः । चूलीमूलं शिखोत्पत्तिस्थानम् । पृष्ठं शरीरपश्चाद्भागः । शीर्षस्यैव पुरोभागपश्चाद्भागावित्यर्थ इति **केचित्** । ताभ्यां सहितेषु पूर्वस्थानेषु व्यापकं यथा भवति तथाऽञ्जलिना न्यसेदित्यन्वयः । एवं वक्ष्यमाणाश्चक्रन्यासयोर्व्यापकन्यासाः सर्वेऽपि तत्स्थानव्याप्तिमन्त एव कर्तव्याः ॥ ४८-४९$\frac{1}{2}$ ॥

**अत्रैव स्थानदशकेष्वणिमाद्या दश न्यसेत् ॥ ५० ॥**
**सिद्धीस्तदन्तश्च तनुव्यापकत्वेन सुन्दरि ।**
**चतुरस्रमध्यरेखायै नम इत्यपि वल्लभे ॥ ५१ ॥**
**विन्यस्य तस्याः स्थानेषु ब्रह्माण्याद्यास्तथाऽष्टसु ।**
**पादाङ्गुष्ठद्वये पार्श्वे दक्षे मूर्धन्यपार्श्वके ॥ ५२ ॥**
**वामदक्षिणजान्वोश्च बहिरंसद्वये तथा ।**

दशकेष्विति स्वार्थे कः । अणिमाद्या इत्याद्यपदेन लघिमादिनवकस्य पूर्वचतुः**शत्या**मुक्तस्य परिग्रहः । तदन्तः, दक्षांसपृष्ठादिभ्य ईषत्पूर्वभागेषु मध्यरेखामन्त्रेण व्यापकन्यासं विधाय तस्या मध्यरेखाया अष्टसु स्थानेषु ब्राह्म्याद्या अष्टौ न्यस्तव्याः । तत्र पादाङ्गुष्ठद्वयं मिलित्वैकं स्थानम् । अंसद्वय इति तु द्वे स्थाने सम्प्रदायात्, दिक्चतुष्ट्यविदिक्चतुष्टययोरानुगुण्याच्च, **'पादाङ्गुष्ठद्वये चैव दक्षपार्श्वे च मस्तके'** इत्यारभ्य **'दक्षजानुनि दक्षांसे वामांसे च न्यसेत्क्रमात्'** इत्यन्तात् **तन्त्रान्तरा**च्च । अन्यपार्श्वके वामपार्श्वे । जान्वोरित्यार्षं पुंलिङ्गम् । बहिरिति तु काकाक्षि- न्यायेनोभयत्राप्यवेतव्यम् । न्यस्तव्या इत्युत्तरश्लोकस्थस्यापकर्षः । चतुरस्रमध्य- रेखाया इत्यत्रैकस्याक्षरस्याऽऽधिक्येऽपि न छन्दोभङ्ग इति **वृत्तचन्द्रोदये** प्रतिपादित- म**स्माभिः** ॥ ५०-५२$\frac{१}{२}$ ॥

**न्यस्तव्याश्चतुरस्रान्त्यरेखायै नम इत्यपि ॥ ५३ ॥**
**विन्यसेद् व्यापकत्वेन पूर्वोक्तान्तश्च विग्रहे ।**
**तस्याः स्थानेषु दशसु मुद्राणां दशकं न्यसेत् ॥ ५४ ॥**
**ब्रह्माण्याद्यष्टस्थानान्तस्तासामष्टौ न्यसेदथ ।**
**शिष्टे द्वे द्वादशान्ते च पादाङ्गुष्ठे च विन्यसेत् ॥ ५५ ॥**

विग्रहे देहे । पूर्वोक्तानां पादाङ्गुष्ठद्वयादीनामन्तरवच्छेदेनान्त्यरेखाया मन्त्रेण व्यापकं विन्यसेत् । अथ तस्या रेखाया दशसु स्थानेषु दशमुद्रा न्यसेत् । अष्टसूक्तस्थानेषु दशानां न्यासः कथमित्याशङ्क्य समाधत्ते–ब्रह्माण्यादीति । अष्टसु स्थानेष्वष्टौ न्यसेत् । अवशिष्टद्वयं द्वादशान्ते पादाङ्गुष्ठद्वये च न्यसेदिति वाक्य- चतुष्टये न्यसेदिति क्रियापदचतुष्टयस्यान्वयः । न्यस्तव्या इति क्रिया तु पूर्वत्रापक्रष्ट- व्येत्युक्तम् । **प्राञ्चस्तु**–मध्यरेखान्यासविधिस्थं ब्रह्माण्याद्या इतिपदं द्वितीयान्तमिति श्राम्यन्तस्तत्रत्येन विन्यस्येति पदेनैवान्वयं प्रापय्यात्रत्यं न्यस्तव्या इति पदं न्यास- योग्यार्थकत्वेन न्यासार्हदेवता व्यापकत्वेन विन्यसेदिति व्याचक्षते । तन्न, मान्त्रवर्णिक्या रेखाया एव रेखान्यासे देवतात्वेन बहुवचनविरोधापत्तेः । अङ्गुलविस्तृतस्य ललाटस्योर्ध्वप्रदेशो द्वादशान्तपदेनोच्यते, तत्र द्वादशकलात्मकसूर्यबिम्बस्य सत्त्वात्,

**'षोडशान्तमिति ख्यातं सहस्रारेन्दुमण्डलम् ।**
**तदधःस्थानके सूर्यबिम्बं द्वादशशक्तिकम् ॥**
**द्वादशान्तं स्मृतं बिन्दोरूर्ध्वं सार्धाङ्गुलात्मकम् ।'**

इत्युक्तेः । पादाङ्गुष्ठपदं विनिगमनाविरहात् पूर्वोपस्थितत्वाच्च अङ्गुष्ठद्वय-परम् ॥ ५३-५५ ॥

एवं त्रैलोक्यमोहनचक्रन्यासमुक्त्वा सर्वाशापरिपूरकचक्रन्यासमाह—

**तदन्तः षोडशदलपद्माय नम इत्यपि ।**
**विन्यस्य तद्दले कामाकर्षिण्याद्याश्च विन्यसेत् ॥ ५६ ॥**
**दलानि दक्षिणश्रोत्रपृष्ठमंसं च कूर्परम् ।**
**करपृष्ठं चोरुजानुगुल्फपादतलं तथा ॥ ५७ ॥**
**वामपादतलाद्येवमेतदप्यष्टकं मतम् ।**

तस्याश्चतुरस्रान्त्यरेखाया अन्तर्मध्ये । तद्दले षोडशदलेषु । जातावेकवचनम् । कामाकर्षिण्याद्या अनङ्गकुसुमाद्या वक्ष्यमाणा अपि देवताः प्रथमपटलोक्ताः । दक्षिणपदं श्रोत्रस्य पृष्ठमारभ्य पादतलान्तेष्वष्टस्वन्वेति । वामपादतलादीत्यादिना वामगुल्फादिवामश्रोत्रपृष्ठान्तानां व्युत्क्रमेण परिग्रहः ॥ ५६-५७$\frac{१}{२}$ ॥

सर्वसंक्षोभणचक्रन्यासमाह--

**तदन्तरे चाष्टदलपद्माय नम इत्यपि ॥ ५८ ॥**
**विन्यस्य तद्दलेष्वेषु दक्षशङ्खे च जत्रुणि ।**
**ऊर्वन्तर्गुल्फगुल्फोरुजत्रुशङ्खे च वामतः ॥ ५९ ॥**
**अनङ्गकुसुमाद्यास्तु शक्तीरष्टौ प्रविन्यसेत् ।**

शङ्खो ललाटास्थि । जत्रु बाहुमूलसन्धिः । गुल्फः पादग्रन्थिः । सुगममन्यत् ॥ ५८-५९$\frac{१}{२}$ ॥

सर्वसौभाग्यदायकचक्रन्यासमाह--

**तदन्तश्चतुर्दशारचक्राय नम इत्यपि ॥ ६० ॥**
**विन्यस्य तस्य कोणेषु न्यसेच्छक्तीश्चतुर्दश ।**
**सर्वसंक्षोभिकाद्यासु तस्य कोणानि वच्म्यहम् ॥ ६१ ॥**
**ललाटे दक्षभागे च दक्षगण्डांसमध्यतः ।**
**पार्श्वान्तरूरुजङ्घान्तर्वामजङ्घादि पार्वति ॥ ६२ ॥**

**वामोर्वन्तर्वामपार्श्वे वामांसे वामगण्डके ।**
**ललाटवामभागे च तथा वै पृष्ठ इत्यपि ॥ ६३ ॥**

ललाटं भालमध्यभागः । इदं च भिन्नं स्थानम्, असमस्तत्वेन निर्देशात् । ततो दक्षभागस्तस्यैव प्रकृतत्वात् । इदं च द्वितीयं स्थानम् । ततो दक्ष–गण्डांसपार्श्वोरुजङ्घापञ्चकस्य मध्यभागाः पञ्चेति सप्त स्थानानि । इमान्येव वामानि । व्युत्क्रमेण पञ्चेति द्वादश । ललाटवामभाग इत्येकं त्रयोदशं स्थानम्, समस्तत्वेन निर्देशात् । पृष्ठं शिरःपृष्ठं निम्नादूर्ध्वं चतुर्दशम् । इदं च **निजानन्दनाथ-**कृत**क्रमोत्तमपद्धति**लिखिततन्त्रान्तरीयवचनानुगुणं व्याख्यातम् । परे तु आसु प्रथमां दक्षशीर्षे चरमां वामशीर्षे न्यसेदिति वदन्ति । अन्ये तु आसु सप्तम्यष्टम्यौ दक्षवामयोर्न्यसेदिति मन्यन्ते । **केचित्** तु ललाटदक्षभाग इति सामानाधिकरण्येनैक-मेव स्थानं मन्यमानाः पृष्ठपदेन वामदक्षिणकुम्भस्थलद्वयं ग्राह्यमित्याहुस्तद-युक्तम् ॥ ६०-६३ ॥

सर्वार्थसाधकचक्रन्यासमाह–

**ततो दशारचक्राय नम इत्यपि पार्वति ।**
**तस्य कोणानि दक्षाक्षिनासामूलान्यनेत्रके ॥ ६४ ॥**
**कुक्षीशवायुकोणेषु जानुद्वयगुदेषु च ।**
**कुक्षिनैर्ऋतवह्न्याख्यकोणयोश्च न्यसेत्पुनः ॥ ६५ ॥**
**सर्वसिद्धिप्रदाद्यानां शक्तीनां दशकं प्रिये ।**

ततो मन्वस्रान्तरवच्छेदेन । कोणानि वच्म्यहमित्यनुवर्तते । भावनीयानीति शेष इति **केचित्** । दक्षनेत्रं नासामूलमिति द्वे स्थाने । अन्यनेत्रकं वामनेत्रम् । कुक्षीशकोणे वामबाहुमूले । वामनेत्राव्यवधानेन तत्सन्निहितस्यैवोपस्थितत्वात् । कुक्षिवायुकोणे वामोरुमूले । 'अक्षीणि मे दर्शनीयानि' इति बहुवचनं च छान्दसम्, प्राण्यङ्गत्वा-देकवद्भावप्रसक्तेः । अत्र वामजानु ततो गुदं ततो दक्षजान्विति क्रमः, पाठक्रमा-दर्थक्रमस्य बलवत्त्वात् । प्रमाणबलाबलात् प्रमेयबलाबलस्य ज्यायस्त्वाद्वा । कुक्षिनैर्ऋत-कोणं दक्षिणोरुमूलम् । कुक्ष्यग्निकोणं दक्षिणबाहुमूलम् । अत्रत्य विदिग्विभागवशादेव दिग्विभागोऽपि वक्ष्यमाणायुधन्यासादावुन्नेयः ॥ ६४-६५$\frac{1}{2}$ ॥

सर्वरक्षाकरचक्रन्यासमाह-

**तदन्तश्च दशारादिचक्राय नम इत्यपि ॥ ६६ ॥**
**विन्यस्य तस्य कोणेषु सर्वज्ञाद्या दश न्यसेत् ।**
**दक्षनासा सृक्किणी च स्तनं वृषणमेव च ॥ ६७ ॥**

**सीवनी वाममुष्कं च स्तनसृक्किणिनासिकम् ।**
**नासाग्रं चैव विज्ञेयं कोणानां दशकं तथा ॥ ६८ ॥**

तदन्तः बहिर्दशारमध्ये । दशारपदमादौ यस्य तद्दशारादि । ईदृशं चक्रायेतिपदम् । दशारचक्राय नम इति पूर्वमन्त्रेणैवेति यावत्, उभयोरपि दशारपदमात्रवाच्यत्वात् । बहिरन्तःपदनिवेशेन व्यवहारस्त्वसाङ्कर्यसौकर्याय वृद्धैः कल्पित इति न तयोः पदयोर्मन्त्रावयवत्वम् । **'मध्यं त्र्यस्रं तथाऽष्टारं द्वे दशारे चतुर्दश'**(१/४३) इत्यादेरेव पूर्वतन्त्रे, **'पञ्चमं तु दशारं स्यात् षष्ठं चापि दशारकम्'**(६/८१) इत्यादेरेवोत्तरतन्त्रेऽन्यत्रापि व्यवहारात् । मन्त्रस्यैकत्वेऽपि तेन मन्त्रार्थस्मरणदशायां परं तस्य तस्य व्यवस्थया स्मरणं भविष्यति । तेन पद्धतिषु बहिरन्तःपदयोर्मन्त्रशरीरघटकत्वेन लेखस्तन्त्रान्तरसंवाद एव विश्रम्भणीयः । एतेन तदितिपदमेवाव्ययत्वात्तन्मध्यार्थकम् । अन्तश्च दशारेत्यादि चेति व्याख्याया अन्तर्दशारेत्यादिरेव मन्त्र इहान्तःपदोक्तिरेव पूर्वत्र बहिष्पदनिवेशे ज्ञापिकेति क्लेशेनैतत्तन्त्रारूढता सुकराऽपि संवाद एवाऽऽदर्तव्या । **प्राञ्चस्तु**–पूर्वं दशारचक्रायेति विलिख्येहान्तर्दशारचक्रायेति मन्त्रं लिखन्ति । सृक्किणी ओष्ठप्रान्तः । स्तनवृषणमुष्कशब्दाः पुंलिङ्गा अपि गुणत्रयसाम्यविवक्षायां नपुंसकाः । बन्धुनि बहुव्रीहाविवितिवत् । द्वितीयसृक्किणिशब्दे ह्रस्वस्तु ङ्यापोः संज्ञाछन्दसोर्बहुलमिति **बाहुलकः** । यथावृत्तानुरोधेन बलवता छन्दोलक्षणेन व्याकरणस्य बाधो वेति **वृत्तचन्द्रोदये** स्पष्टम् । सीवनी अण्डद्वयमध्यवर्तिनी शिरा ॥ ६६-६८ ॥

सर्वरोगहरचक्रन्यासमाह–

**तदन्तश्चाष्टकोणादिचक्राय नम इत्यपि ।**
**विन्यस्य तस्य कोणेषु वशिन्याद्यष्टकं न्यसेत् ॥ ६९ ॥**
**चिबुकं कण्ठहृदयनाभीनां चैव दक्षिणम् ।**
**ज्ञेयं पार्श्वचतुष्कं च मणिपूरादि वामकम् ॥ ७० ॥**
**चतुष्टयं च पार्श्वानामेतत्कोणाष्टकं पुनः ।**

तस्यान्तर्दशारस्यान्तर्मध्यभागे । अष्टकोणपदमादौ यस्य तादृशं चक्रायपदम् । नमःपदेन युक्तेन तेन मन्त्रेण व्यापकं विन्यसेत् । **प्राञ्चस्तु**– अष्टकोणचक्रस्याऽऽदित्वं त्रिकोणादितरचक्रेभ्यः प्रथममुत्पन्नत्वादित्यादिपदं व्याचक्षाणास्तस्य मन्त्रावयवत्वं मेनिरे । तदसत्, अन्तर्दशारेऽप्यादिपदस्य मन्त्रावयवत्वापत्तेः, तस्यापि सजातीययोर्मध्ये पूर्वमुत्पन्नत्वात् , मूल आम्नातत्वाच्च । किं च षोडशदलप्रभृतिचक्रप्रायपाठविरोधस्तन्त्रान्तरविसंवादश्च गत्यन्तरसम्भवे किमित्यङ्गीकार्य इति न

किञ्चिदेतत् । कण्ठहृदयनाभीनामित्यत्र प्राण्यङ्गत्वेऽप्येकवद्भावाभावश्छान्दसः । मणिपूरादि नाभ्यादि । शेषं सुगमम् ॥ ६९-७०$\frac{1}{2}$ ॥

आयुधन्यासादिकमाह–

**हृदयस्थत्रिकोणस्य चतुर्दिक्षु बहिर्न्यसेत् ॥ ७१ ॥**
**शरचापौ पाशसृणी त्रिकोणाय नमस्तथा ।**
**विन्यस्य तस्य कोणेषु अग्रदक्षोत्तरेषु च ॥ ७२ ॥**
**कामेश्वर्यादिदेवीश्च मध्ये देवीं च विन्यसेत् ।**

हृदयस्य मध्ये यन्निम्नं त्रिकोणाकारमधोग्रं तिष्ठति तस्य बहिर्भागे चतुर्दिक्षु बहिर्दशारचक्रन्यासकथनावसरे ज्ञापितभागासु शिवशक्तिभेदेन पञ्च पञ्च शरान् द्वौ द्वौ चापौ पाशावङ्कुशौ चेति न्यसेत् । दिशां क्रमस्तु पूर्वतन्त्र एवोक्तः– **'पश्चिमोत्तरपूर्वाशादक्षिणाशाक्रमेण तु'**(१/१९४) इति । हृदयस्याग्नीशासुरवायुकोणेष्विति तु **क्रमोत्तम[पद्धति]कारः**, तत्र मूलं चिन्त्यम् । शरपाशशब्दयोरविभक्तिको निर्देशश्छान्दसः । प्रत्येकं जात्येकत्वविवक्षया वा द्विवचनान्तद्वन्द्वौ । उत्तरन्यासे **'बाणान्नेत्रे भ्रुवोश्चापौ'**(८/७७) इत्यत्र चापादिद्वयकथनाल्लिङ्गात् । सर्वासिद्धिप्रदचक्रन्यासमाह–कोणेष्विति । त्रिकोणचक्रायेत्येव तु **पद्धतिकाराणां** लेखः । सर्वानन्दमयचक्रन्यासमाह–मध्य इति । बिन्दावित्यर्थः । देवीं त्रिपुरसुन्दरीम् । देवताबाहुल्यस्थल एव व्यापकन्यासकथनादिह देवतैक्यात्तदभावः । **साम्प्रदायिकास्तु** 'बिन्दुचक्राय नमः' इति मन्त्रेण व्यापकन्यासं कुर्वन्ति । अत्र ज्ञापकं च वक्ष्यते । अत्राणिमादिन्यासेषु मन्त्रकल्पना पूर्वतन्त्रे पूजाप्रकरणे यादृश्युक्ता तादृश्यामेव सप्ताक्षरीस्थाने नमःपदप्रयोगो द्वितारयोगाभावश्चेति विशेषस्तत्रैव वर्णितो-**ऽस्माभिः** ॥ ७१-७२$\frac{1}{2}$॥

चक्रन्यासमुपसंहरति–

**एवं मयोदितो देवि न्यासो गुह्यतमक्रमः ॥ ७३ ॥**
**एतद्गुप्ततरं कार्यं त्वया वै वीरवन्दिते ॥**
**समयस्थाय दातव्यं नाऽशिष्याय कदाचन ॥ ७४ ॥**
**गुप्ताद्गुप्ततरं चैतत्तवाऽद्य प्रकटीकृतम् ।**

गुह्यतमः क्रमः प्रकारो यस्य सः । गुप्ततरं कार्यविशेषेण सर्वेभ्यो नोपदेष्टव्यम् । सामयिकाः शिष्याशिष्यभेदेन द्विविधाः । असामयिका अपि तथा । एतेषां चतुर्णां मध्ये सामयिकाः शिष्या एवाधिकारिणो नेतरे त्रय इत्याह–समयस्थायेति । समयः कौलिकसङ्केतो **रुद्रयामले** दशभिः पटलैरन्यत्र च प्रतिपादितः । तत्र तिष्ठति तं [न]

भिनत्तीत्यर्थः । अत्र विध्यंशेन द्वयोर्निषेधांशेन चैकस्येति त्रयाणां निरासः । तवेति । सामयिकत्वाच्छिष्यत्वाच्चेति भावः ॥ ७३-७४$\frac{१}{२}$ ॥

एवं संहारक्रमेण चक्रन्यासमुपदिश्य तमेव सृष्टिक्रमेणाऽऽवर्तयेदित्याह—

**मूलदेव्यादिकं न्यासमणिमान्तं पुनर्न्यसेत् ॥ ७५ ॥**

न्यासं चक्रन्यासनामधेयं कर्म पुनर्न्यसेत् । न्यासपदस्य तत्प्रख्यन्यायेन नामधेयत्वात् प्रयाजान् यजतीति **कौषतकिब्राह्मण**स्थवाक्यवन्न्यासं न्यसेदिति न पुनरुक्तम् । अत एव **'ये भजन्ति तु मां भक्त्या'** इति **गीता**वाक्येऽपि भक्तिपदं कर्मनामधेयमिति **जैमिनि**राचार्यो मन्यत इत्युक्तं नाम्नेति जैमिनिः सम्भवादिति **शाण्डिल्यसूत्रे** । मूलदेव्यादिकमणिमान्तमिति तु क्रियाया नाम्नो वा विशेषणे । अत्र मूलदेव्यणिमाशब्दौ सर्वानन्दमयचक्रन्यासत्रैलोक्यमोहनचक्रन्यासपरौ, अवदानादिप्रदानान्तस्येवैकैकावान्तरचक्रन्यासस्यैकैकपदार्थत्वात् । तेन नवानां चक्रन्यासानामेव व्युत्क्रमो न त्वेकैकन्यासान्तर्गतदेवतान्यासानामपि मूलदेव्यणिमापदयोः स्वारस्यादित्यापाततो [न] भ्रमितव्यम्, **'कामेश्वर्यादिकं(का) न्यसेत्'** (८/७६), **'सर्वसिद्ध्यादिकं कण्ठः'** (८/८०) इत्यादेर्वक्ष्यमाणनिर्देशाज्ज्ञापकात् । क्रमस्य पदार्थाश्रितत्वेन पदार्थावयवेष्वप्रवृत्तेश्च । अत एव 'मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन' इत्यधिकरण एकैकमुष्ट्यनुसमयो निरस्तः । न चैवं सति त्रैलोक्यमोहनचक्रन्यासावयवानां रेखान्यासानां त्रयाणां वैपरीत्यानापत्तिः , तन्निर्वाहायावयवशो व्युत्क्रम इत्युक्तौ तु देवतानामपि व्युत्क्रमापत्तिः । कामेश्वर्यादिकमित्यादिज्ञापकेभ्यस्तत्र तत्र तदप्रसक्तावपि **'न्यसेद्वाग्देवताष्टकम्'**(८/७८) इत्यादिविधिविहितेषु तदापत्तेर्दुर्वारत्वात् । सामान्यापेक्षज्ञापकत्वकल्पनेनैतदुद्धारे तु रेखान्यासानां वैपरीत्यं न स्यात् । सेयमुभयतः पाशा रज्जुरिति वाच्यम्, न्यायतस्तथैव प्रसक्तस्य **'मूलाधारे न्यसेन्मुद्रादशकम्'** (८/८३) इत्यादिवचनैरपवादात्, 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इतिवाक्यस्येव तेषु वचनेषु मुद्रादशकादिपदानां क्रमविधायकत्वेनैव सार्थक्यस्य वक्तव्यत्वात् ।

ननु मूलाधारदक्षजङ्घावामजङ्घासु मुद्रामातृसिद्धयो न्यस्तव्यत्वेन तेषु वचनेषु कीर्त्यन्ते । तेषु मुद्रासिद्धिपदाभावे तयोरधिकरणवैपरीत्यस्य पदार्थव्युत्क्रमविधितः प्रसक्तिः । अतो 'मुद्रा मूलाधार एव' इत्यादिरीत्याऽधिकरणनियमार्थास्ते विधयः सार्थका एव । न चाधिकरणनियमविधिभिर्व्युत्क्रमविधेरपवादःसम्भवति, उभयोर्भिन्नविषयत्वात्, विरोधाभावाच्च । स्वाधिष्ठाने सर्वाशापरिपूरकचक्रन्यासोत्तरं वामंजङ्घादिमूलाधारान्तेषु सिद्धिमातृमुद्राणां न्यस्तुं शक्यत्वात् । न च स्वाधिष्ठानोत्तरं मूलाधारस्यैवोपस्थितिरर्थक्रमानुसाराद्भविष्यतीति वाच्यम्, स्वाधिष्ठानमूलाधारयोर्जन्यजनकभावेनार्थक्रमायोगात् । तस्य क्रमस्य श्रौतक्रमाद् दुर्बलत्वाच्च । अत एव नियमविधीनां

पाठतोऽपि क्रमो निरस्तः । तस्य ततोऽपि दुर्बलत्वादिति चेत्, मैवम् । अर्थक्रमपाठक्रमयोरविरोधेनापि श्रौतक्रमस्योपपत्तेः । त्रैलोक्यमोहनचक्रन्यासे नवमस्थानीयत्वस्य श्रौतक्रमरूपत्वेन तदवयवानां व्युत्क्रमेऽपि तदहानेः । वस्तुतो रेखान्यासानां त्रयाणां भिन्नभिन्नपदार्थत्वमङ्गीकृत्याणिमापदस्य प्रथमरेखान्यासपरत्वस्वीकारे तु न कोऽपि दोषलेषः । अत्र ज्ञापकमेकैकचक्रस्य व्यापकन्यासवदेकैकरेखायाः पार्थक्येन व्यापकन्यासस्य कथनम् । अत एव **पद्मपुराणीये पाण्डुरङ्गमाहात्म्ये** क्षेत्रस्य श्रीचक्राकारतां प्रतिपाद्य बिन्दौ विठ्ठलस्य स्थितिमुक्त्वा तेन सहैकादशाऽऽवरणानि कथितानि । तेनैकादशपदार्थघटितस्य चक्रन्यासस्य व्युत्क्रमविधानेन पदार्थानामेव क्रमवैपरीत्यं न तदवयवदेवतान्यासानाम् । आचारानुरोधेनोक्तज्ञापकाना सामान्यापेक्षत्वस्वीकारात् । तेन नोभयतः पाशा रज्जुरिति दिक् ॥ ७५ ॥

**त्रिकोणस्थे महाबिन्दौ महात्रिपुरसुन्दरीम् ।**
**शिरस्त्रिकोणे पूर्वादि कामेश्वर्यादिका न्यसेत् ॥ ७६ ॥**

शिरसि बाल्ये दृश्यमानं निम्नं त्रिकोणमिह गृह्यते । तन्मध्यस्थे महाबिन्दौ मूलेन देवीं विन्यस्य तत्त्रिकोणे पूर्वदक्षोत्तरकोणेषु कामेश्वरीवज्रेश्वरीभगमालिनीर्न्यसेदित्यर्थः । अत्र मूलदेव्यादिकमित्यनेनैव बिन्दौ न्यासो ध्वनित इति वदतां **प्राचा**मेतच्छ्लोकस्य पूर्वार्धं स्वपुस्तके नास्तीत्यभिप्रेतम् ॥ ७६ ॥

**बाणान्नेत्रे भ्रुवोश्चापौ कर्णे पाशद्वयं पुनः ।**
**सृणिद्वयं तु नासाग्रे दक्षिणाद्यं तु विन्यसेत् ॥ ७७ ॥**

नेत्रकर्णयोरिव नासाग्रस्यापि दक्षवामपार्श्वभेदेन द्वैविध्यमुन्नेयम्, दक्षिणाद्यमिति ज्ञापकात् । इह दक्षिणे कामेश्वरस्य वामे कामेश्वर्या आयुधानि पृथक्पृथग्विन्यसेत्, न तु प्रथमचक्रन्यास इव मिलितानि, सम्प्रतिपन्नदेवताकत्वेऽपि देशभेदेन तन्त्राभावादिति विशेषः ॥ ७७ ॥

**मुण्डमालाक्रमेणैव न्यसेद्वाग्देवताष्टकम् ।**
**बैन्दवादीनि चक्राणि न्यस्तव्यानि वरानने ॥ ७८ ॥**

मुण्डे दीयमाना रुद्राक्षादिमाला यान् यान् शिरःप्रदेशान् स्पृशति तेषु स्थानेषु पूर्वादिदिगष्टके वशिन्याद्यष्टकं न्यसेत् । पूर्वादिदक्षिणाद्यपदयोरनुवृत्त्या प्रादक्षिण्येनेति लभ्यते । इदानीं पूर्वचक्रन्यासस्य चरमावयवबिन्दुचक्रमुत्तरचक्रन्यासस्य नव चक्राणीत्येतेषु सर्वेषु व्यापकन्यासान् प्रसङ्गादत्रैवाऽऽह– बैन्दवादीनीति । अत्र चक्रपदं बिन्द्वादिषोडशदलपद्मान्तचक्राणां भूगृहचक्रावयवरेखाणां च सृष्टिन्यायेन लक्षणया

बोधकम् । तेन 'बिन्दुचक्राय नमः' इत्यारभ्य 'चतुरस्रप्रथमरेखायै नमः' इत्यन्तै-रेकादशमन्त्रैस्तत्तच्चक्रीयदेवतान्यासारम्भे व्यापकन्यासान् कुर्यादित्यर्थः । अन्यथा द्वितीयचक्रन्यासे देवतान्यासमात्रकथनाद् व्यापकन्यासपरिसंख्या प्रसज्येत । इदमेव च प्रथमचक्रन्यासे बिन्दुचक्रन्यासस्य विधायकं ज्ञापकं वा । यत्तु ( ये तु ) **प्राञ्चः**– वशिन्याद्यावरणन्यासः किमिति नोक्त इत्यत आह–बैन्दवादीनीति । बिन्द्वादिनव-चक्राणि न्यस्तव्यान्येव स्थूलत्वात् । अर्धचन्द्राद्युन्मन्यन्तानि तु भावनीयानि । अतः स्थूलन्यासप्रसङ्गे स्थूलानामेव न्यासो विद्यत इति भाव इति व्याचक्षते । तेषां यद्येवमाशयः– अत्रत्यचक्रपदस्य चक्रस्थदेवतापरत्वाद् देवतान्यासस्य च विशिष्य विशिष्यैव कथनेन सामान्येन पुनरयं विधिर्व्यर्थः । अतस्तस्य द्वयं प्रयोजनम्– अनुक्तवाग्देवतान्यासप्राप्तिर्विभावनपरिसंख्या चेति । तर्हीदमयुक्तम् । चक्रपदस्य तत्रत्यदेवतापरत्वाभावात् । एवं प्रयोजनमपि न युज्यते, अप्रसक्तस्य विभावनस्य परिसंख्यायोगात्, वाग्देवतान्यासस्य कण्ठरवेणोक्तत्वाच्च । अथ तत्पुस्तके मुण्ड-मालेत्यर्धं न स्यात् । अत एव तद्व्याख्याऽपि तत्र न दृश्यत इत्युच्यते, तर्हि तदीयो-त्तरग्रन्थविरोधः । एतदुत्तरग्रन्थे सर्वज्ञादिदेवीनामकथनात् कथं ता एव ग्राह्या इति निर्णय इत्याशङ्क्य पूर्वं वशिन्यादीनामुत्तरत्र सर्वसिद्धिप्रदादीनां च विशिष्य कथनेन तयोर्मध्ये पारिशेष्यात् सर्वज्ञाद्या एव गृह्यन्त इति परिहृतत्वात् ॥ ७८ ॥

सर्वज्ञादिन्यासमाह–

**नेत्रमूले त्वपाङ्गे च कर्णपूर्वोत्तरे पुनः ।**
**चूडादिके च निम्नार्धे शेषार्धे कर्णपृष्ठके ॥ ७९ ॥**
**कर्णपूर्वे त्वपाङ्गे च तस्य मूले च विन्यसेत् ।**

दक्षिणाद्यमित्यनुवर्तनीयम् । तेन दक्षिणं नेत्रमूलं नासानेत्रसन्धिः । अपाङ्गो नेत्रान्तः । कर्णस्य पूर्वभाग उत्तरभागश्चेति द्वे स्थाने । चूडा शीर्षस्थाः केशाः । तस्या आदिभूतं निम्नमपरगले विद्यमानम् । तत एव केशानामारम्भात्तस्य चूडा-दित्वम् । पूर्वगलादिनिम्ननिरासाय चूडादिक इति विशेषणम् । तादृशनिम्नस्य दक्षिणार्धमुत्तरार्धं चेति द्वे स्थाने । तदिदमाह– शेषार्ध इति । ततः कर्णपृष्ठपूर्वभागौ द्वितीयनेत्रस्य मूलापाङ्गौ चेति दशसु सर्वज्ञाद्या विन्यसेदित्यर्थः । **प्राञ्चस्**तु शिरःकेशादिभागस्य ललाटरूपतां मत्वा व्याचक्षते–चतुर्थीं देवतां कर्णपृष्ठे विन्यसेत् पञ्चमीं ललाटे न्यसेदिति **सम्प्रदायः** । षष्ठीं पश्चान्निम्ने । तदिदं नेत्रमूलमारभ्य वृत्ताकारन्यासस्य प्रथममर्धम् । एवमवशिष्टार्धेऽपि न्यसेदित्याह–शेषार्ध इति ।

शेषार्धेऽपि नेत्रमूलमारभ्य न्यासो मा प्रसाङ्क्षीदत आह–कर्णपृष्ठक इत्यादीति । तदिदं स्वकीयभ्रमापह्नवार्थं शिष्यदन्धनमात्रमित्युपेक्ष्यम् ॥ ७९-७९$\frac{1}{2}$ ॥

**सर्वसिद्ध्यादिकं कण्ठे प्रादक्षिण्येन विन्यसेत् ॥ ८० ॥**
**हृदये मनुकोणस्थाः शक्तयोऽपि च पूर्ववत् ।**

अप्रादक्षिण्येनेति न पदच्छेदः । [अन्यथा वामा]वर्तेनेत्येव ब्रूयात् । ततश्च पूर्ववदिति पदस्यापि प्रादक्षिण्येनेत्येवार्थः, पूर्वोक्तनिखिलचक्रसारूप्यात्, मनुकोणस्थाश्चतुर्दशारस्थाः । शक्तय इति द्वितीयार्थे प्रथमा, सुपां सुपो भवन्तीति विधानात् । न्यस्तव्या इति शेषो वा ॥ ८०-८०$\frac{1}{2}$ ॥

**नाभौ त्वष्टदलं तत्र वंशे वामे च पार्श्वके ॥ ८१ ॥**
**उदरे सव्यपार्श्वे च न्यसेदादिचतुष्टयम् ।**
**वंशवामान्तरालादि न्यसेदन्यच्चतुष्टयम् ॥ ८२ ॥**

नाभावन्तरष्टदलं पद्मं विचिन्त्य तत्र पृष्ठवंशो वामपार्श्वमुदरं दक्षपार्श्वं चेति पश्चिमादिदिक्चतुष्टये यद्दलचतुष्टयं तत्र क्रमेणानङ्गकुसुमादिचतुष्टयं न्यसेत् । वंशवामपार्श्वयोरन्तरालं वायव्यकोणमारभ्य नैर्ऋत्यकोणपर्यन्तं विदिग्दलचतुष्टयेऽनङ्गरेखादिचतुष्टयं विन्यसेत् । **'सव्यं दक्षिणवामयोः'** इति **कोशाद्** दक्षपरोऽयं शब्दः । वामपरत्वे त्वसव्येति छेदः ॥ ८१-८२ ॥

**स्वाधिष्ठाने न्यसेत् स्वस्य पूर्वाद्दक्षावसानकम् ।**

स्वाधिष्ठाने षोडशदलं विचिन्त्य तद्दलेषु पूर्वदलमारभ्य कामाकर्षिण्यादिनित्या न्यसेत् । एतावत्पर्यन्तं प्राप्तं प्रादक्षिण्यमपवदति– दक्षावसानकमिति । इहैवाप्रादक्षिण्येन न्यस्तव्या इत्यर्थः । **प्राञ्चस्तु**–प्रतिदिशं चतस्रश्चतस्रः शक्तयो न्यस्तव्या इत्याहुः । तन्न, सर्वेषु न्यासेषु तत्तच्चक्रचिन्तनस्याऽऽवश्यकत्वेन चिन्तितेषु दलेष्वेव यथासंख्यन्यायेन पूजनस्येव न्यासस्यापि युक्तत्वात्, तत्तच्चिन्तनस्य नाभौ त्वष्टदलमित्यनेनैकदेशकीर्तनेन ज्ञापितत्वात् ॥ ८२$\frac{1}{2}$ ॥

**मूलाधारे न्यसेन्मुद्रादशकं साधकोत्तमः ॥ ८३ ॥**
**पुरः सव्ये च वंशे च वामे चैवान्तरालके ।**
**ऊर्ध्वाधो दश मुद्राश्च ऊर्ध्वाधोवर्जितं पुनः ॥ ८४ ॥**
**ब्रह्माण्याद्यष्टकं दक्षजङ्घायां ताश्च पूर्ववत् ।**
**वामजङ्घां समारभ्य वामादिक्रमतोऽपि च ॥ ८५ ॥**
**सिद्ध्यष्टकं न्यसेत्तेषु द्वयं पादतले न्यसेत् ।**

पुरः पूर्वस्यां दिशि, सव्ये दक्षिणस्याम्, वंशे प्रतीच्याम्, वाम उदीच्याम् । अन्तरालक आग्नेयादीशानान्तविदिक्चतुष्टये, अष्टदले प्रथमदिगन्तरालादेवाऽऽरम्भदर्शनात् । तेनेशादिवायव्यन्तक्रमशङ्का निरस्ता, एकत्र निर्णीत इति न्यायात् । ऊर्ध्वाधः मूलाधारस्य(स्थ)कर्णिकात्व(कोर्ध्वाधः)प्रदेशयोः । एवं दशस्थानेषु मुद्रादशकं न्यसेत् । मध्यरेखान्यासमाह–ऊर्ध्वाधोवर्जितमिति । पूर्ववत्प्रागादिदिक्ष्वाग्नेयादिविदिक्षु च प्रादक्षिण्येन चतस्रश्चतस्र इत्यष्टौ देवता न्यसेत् । नवमदशमदेवतयोरभावादेव प्राप्तं वर्जनमूर्ध्वाधोवर्जितपदेनानूदितम् । **प्राञ्चस्तु**– ऊर्ध्वाधोवर्जितं पुनरिति पादस्तृतीयरेखावाक्य एवान्वितः । पुरः सव्ये चेत्यत्रापि पुनरित्येव पाठो न तावद्रेफ इति भ्राम्यन्तो व्याचक्षते । ननु मूलाधारे मुद्रादशकध्यानेन न्यस्तव्यं किमित्याशङ्कायामाह–पुनरिति । पुनःशब्दान्नाभौ त्वष्टदलमित्यत्रोक्तानि स्थानानि पुनरिहापि ग्राह्याण्युच्यन्ते । वंशे पृष्ठवंशे । सव्ये वामपार्श्वे । चकारादुदरदक्षपार्श्वयोर्ग्रहणम् । वंशसव्यपदयोर्व्युत्क्रमेणान्वयः । वामेऽन्तराले वायव्यकोणे । चकारादीशानाग्निनिर्ऋतिकोणपरिग्रहः । प्रतीच्याद्युदगन्तदिक्चतुष्टये वायव्यादिनिर्ऋत्यन्तविदिक्चतुष्टयधर्मातिदेश एव तात्पर्यग्राहकः । ननूर्ध्वाध इति किमान्तरं स्थानद्वयं नेत्याह–ऊर्ध्वाधोवर्जितमिति । इन्द्रेशानयोर्मध्य ऊर्ध्वस्थानम्, वरुणनिर्ऋत्योर्मध्येऽधःस्थानमित्यर्थ इति । तदिदमतीव प्रामादिकम्, स्वरूपाख्यानमेवास्य प्रत्याख्यानं प्रकीर्तितमिति दिक् । प्रथमरेखान्यासमाह–वामजङ्घामिति । वामजङ्घायाः पूर्वभागमारभ्य दक्षजङ्घायां यद्यदवयवेषु येन क्रमेण देवताष्टकन्यासस्तद्वदेव वामजङ्घायामपि न्यासे सत्यर्थात्तद्वैपरीत्यमेव फलतीत्याशयेनाऽऽह– वामादिक्रमत इति । [प्राग्]उत्तरपश्चिमदक्षिणदिक्षु ईशानाद्याग्नेयान्तविदिक्षु चेति क्रमेणेत्यर्थः । पादतले पादतलद्वये । अद्याप्युपस्थितत्वाद्वामादिक्रमत इत्युक्तत्वादादौ वामं ततो दक्षमिति क्रमः ।

**प्राञ्चस्तु**– दक्षजङ्घायां पूर्ववदित्यनेन पश्चिमादिदिक्षु वायव्याद्यन्तरालेषु चेति व्याख्याय वामजङ्घामित्यत्रापि पूर्ववदिति पदानुवृत्तिमभिप्रेत्य पश्चिमभागमारभ्येति व्याख्याय वामादिक्रमत इति पदं वामान्तरालादिक्रमार्थकं स्वीकृत्य शिष्टद्वयमेकस्मिन्नेव पादतले न्यसेदिति व्याचख्युः । तत्सर्वं प्रामादिकमेवेति स्पष्टम् ॥ ८३-८५$\frac{१}{२}$ ॥

चक्रन्यासोपसंहारपूर्वकं तदीयवासना विधत्ते–

**कारणात्प्रसृतं न्यासं दीपाद्दीपमिवोदितम् ॥ ८६ ॥**
**एवं विन्यस्य देवेशि स्वात्माभेदेन चिन्तयेत् ।**

कारणं सर्वजगत्कारणं शिवशक्तिसामरस्यापन्नं ब्रह्म, तस्मात् प्रसृतमिदं चक्रन्यासनामकं कर्म । अत एव प्रसारपरमार्थन्यायेन तद्रूपमेवेति दृष्टान्तेन द्रढयति–दीपादिति । तदेवमुक्तरीत्या स्वदेहे विन्यस्य स्वस्य(श्च ) आत्मा च तयोरभेदेन

कारणन्यासौ यथाक्रमं चिन्तयेत् । स्वशब्दो जीवात्मपरः । आत्मशब्दो देहपरः । **'स्वो ज्ञातावात्मनि'** इति **अमरः** । **'आत्मा देहे धृतौ जीवे'** इति **विश्वः** । त्रिपुरसुन्दर्यभिन्नमात्मानं तदावरणदेवतासमूहाभिन्नं स्वदेहं च विभावयेदिति भावः ॥ ८६-८६$\frac{1}{2}$ ॥

**ततश्च करशुद्ध्यादिन्यासं कुर्यात् समाहितः ॥ ८७ ॥**

सृष्टिचक्रन्यासोत्तरं करशुद्धिन्यासश्चतुरासनन्यासो रक्षाषडङ्गन्यासो वाग्देवतान्यास इति पूर्वतन्त्रोक्तं न्यासचतुष्टयं कुर्यात् ॥ ८७ ॥

अथ नवयोनिन्यासमाह–

**श्रोत्रयोश्चिबुके चैव शङ्खास्येषु दृशोर्नसि ।**
**अंसद्वये च हृदये न्यसेत् कूर्परकुक्षिषु ॥ ८८ ॥**
**जान्वन्धुपादगुह्येषु पार्श्वहृत्तु स्तनद्वये ।**
**सकण्ठे नवयोन्याख्यं न्यसेद् बीजत्रयात्मकम् ॥ ८९ ॥**

इदं च श्लोकद्वयं **प्राचां** टीकास्वधृतमपि पुस्तकेषूपलभ्यमानत्वाद् व्याख्यायते । अत्र सप्तविंशतावयवेषु त्रिभिस्त्रिभिरवयवैरेकैका योनिस्तासां कोणत्रयेषु पुनः पुनर्बीजत्रयं न्यसेदित्यर्थः । अत्र बीजत्रयपदं बालाबीजत्रयपरमिति **सौभाग्यरत्नाकरकारः** । **'पञ्चदशीकूटत्रयपरम्'** इति तु **सुभगार्चारत्नकारः** । यत्तु **'बालया त्रिपुरेशान्या नवयोन्यङ्कितं न्यसेत्'** इति **ज्ञानार्णवे** वचनं तत्र बालातोऽतिदेशप्राप्तं यद्बालया नवयोन्यङ्कितं न्यसेदित्यनूद्य[ते], तत्त्रिपुरेशान्येत्यनेन पञ्चदश्याः करणत्वविधानपरम् । **नव्या**स्तु–त्रिपुरेशान्या इति षष्ठ्यन्तं तेन यत्पञ्चदशीसम्बन्धिनवयोनिन्यासं कुर्यात्तद् बालयेति वचनव्यक्त्या बालाया एव करणत्वविधिः । अत एवोत्तरत्रान्तर्नवयोनिन्यासे पुनर्बालां समुच्चार्येत्यत्र पुनःशब्द उपपद्यत इत्याहुः । तन्न, तथात्वे प्रकृतित एव तल्लाभे पुनर्विधिवैयर्थ्यापत्तेः । न च प्रकृतितः प्राप्तेऽपि न्यासे तत्करणे बीजानां कूटत्रयेण बाधे प्राप्ते प्रतिप्रसवत्वेन तत्सार्थक्यमिति वाच्यम्, कूटत्रयस्य करणत्वेन विधेरदर्शनेन कूटैर्बीजबाधायोगात् । पुनःपदं तु नवयोनिन्यासावृत्तिबोधकं सत्सार्थकं भविष्यति । अस्तु वा तस्मिंस्तन्त्रे बालयैव न्यासविधिः । प्रकृते तु कूटैरेवेत्यपि ज्ञेयम् । अत्र त्रिकोणन्यासे पूर्वत्राग्रदक्षवामकोणानां क्रमदर्शनात् स एवेह ग्राह्यः । अन्तर्नवयोनिन्यासे **पद्धतिकारैः** स्वाग्रादिप्रादक्षिण्येनेति लेखनात् स एव वा । श्रोत्रयोश्चिबुक इति पाठक्रमानुसारेणाऽऽदौ श्रोत्रयोस्ततश्चिबुक इति वा । तत्रापि श्रोत्रनेत्रादौ दक्षिणाद्यत्वस्य तत्र तत्रोक्तत्वात्तथैवेहापि । आचारानुगुण्यात्त्वादौ वामश्रोत्रे न्यासो युक्तः । वामादिक्रमत इति पदस्य सन्निहितत्वेनानुवृत्तिसम्भवात् । अयं च नवयोनिन्यासो द्विविधो बहिरन्तर्भेदात् । बाह्यस्तु साम्प्रतमुक्तः । आन्तरस्तु

मूलाधारादिब्रह्मरन्ध्रान्तेषु नवसु स्थानेषु चतुरस्रावृत्ता:(ता:) स्वाभिमुखाग्रा नव योनीर्विचिन्त्य तासु कार्य इति बहवः । तत्र प्रमाणं मृग्यम् । यत्तु **ज्ञानार्णवे** वचनम्–

**'पुनर्बालां समुच्चार्य चतुरस्रं च चिन्तयेत् ।**
**गोलकं न्यासयोगेन श्रीचक्रं परिचिन्तयेत् ॥**
**षट्चक्रेषु ललाटे च सीमन्ते च शिरोबिले ।**
**नव स्थानानि सङ्कल्प्य न्यसेद्देवि ततः परम् ॥**
**श्रीविद्यां ब्रह्मरन्ध्रे तु पृष्ठतो गुरवः क्रमात् ।**
**तिथिनित्यास्ततो देवि मातृकास्वरसंयुताः ॥**
**मातृकावन्न्यसेद् देवि वक्त्रे सौभाग्यदायिनीः ।'**

इत्यारभ्य तिथिनित्यामण्डलं कथयित्वा **'प्रकटाद्या न्यसेत् पश्चादाधारादिषु मन्त्रवित्'** इत्यन्तम् । तस्यायमर्थः–बहिर्नवयोनिन्यासानन्तरं पुनर्बालामुच्चार्य चतुरस्रादिगोलकान्तं श्रीचक्रं मूलाधारादिब्रह्मरन्ध्रान्तेषु नवसु स्थानेषु न्यासोपायत्वेन विचिन्त्य तेषु न्यसेत् । अर्थाच्छ्रीचक्रदेवता इत्यर्थः । चतुरस्रशब्दो भूगृहपरः । गोलकशब्दो बिन्दुपरः । न्यसेदित्यनेनाऽऽक्षिप्ता देवता एकादशाधिकशतसंख्या एव सिद्ध्येरन्नत आह–श्रीविद्यामिति । बिन्दौ देवीं तत्पृष्ठ ओघत्रयं तदनन्तरे त्रिकोणे तिथिनित्याश्च न्यसेदिति विशेष इत्यर्थः । एवं सृष्टिचक्रन्यासं सम्पूर्णं विधाय वक्त्रे नित्यामण्डलन्यासं कुर्यात् । तत आधारादिषु नवसु प्रकटादियोगिनीन्यासं कुर्यादिति । **केचित्** तु बालया चतुरस्रवृत्तयोश्चिन्तनं ततो नित्यामण्डलन्यासस्ततः प्रकटादियोगिनीस्त्रैलोक्यमोहनचक्रविशिष्टा न्यसेदित्यर्थ इत्याहुः । तन्न, श्रीचक्रं चिन्तयेदित्यस्य दूरस्थेन प्रकटादिवाक्येन सहान्वयस्यायुक्तत्वात् । श्रीविद्यां ब्रह्मरन्ध्र इति वाक्यस्यालग्नकत्वापत्तेश्च । **नव्या**स्तु–श्रीचक्रपूजाप्रकरणे, मूलदेवीपूजोत्तरं तिथिनित्यापूजनात् प्राग्गुरुमण्डलपूजनस्याकथनेन तादृशक्रमविरुद्धो न्यासोऽत्र न युक्तः । किं च, नित्यामण्डलस्य त्रिकोण एव न्यसनीयत्वेन मुखे स्वरस्थानेषु तन्न्यासकथनमसमञ्जसं नवयोनिन्यासोत्तरं चतुरस्रवृत्तचिन्तनं च व्यर्थम् । तस्मान्नात्र सृष्टिचक्रन्यासस्य चर्चाऽपि । 'श्रीविद्यां ब्रह्मरन्ध्रे तु' इत्यर्धं तु तन्त्रान्तरीयं केनचिद् भ्रान्तेन प्रक्षिप्तम् । अत एव **तन्त्रसारे** तदर्धं न दृश्यते । अप्रक्षिप्तत्वे वा स्वातन्त्र्येण श्रीविद्यान्यासगुरुन्यासयोः प्रतिपादकत्वेन व्याख्येयम् । तस्माच्चतुरस्रावृत्ता:(ता:) स्वाभिमुखाग्रा नव योनीराधारादिषु विचिन्त्य स्वाग्रादिप्रादक्षिण्येनान्तर्नवयोनिन्यासविधानार्थ एवैष सन्दर्भः । गोलकं न्यासयोगेनेत्यस्यार्थस्तु चिन्त्यो गुरुमुखादवगन्तव्यो वेति व्याचक्षते । तदतीव साहसम्, पूजाक्रमन्यासक्रमयोर्विरोधस्याप्रयोजकत्वात् , यथावचनमनुष्ठातुं युक्तत्वात् । अत एव नित्यानां मुखे न्यासोऽपि

युज्यते । अथापि 'तिथिनित्यास्ततः' इत्यनेन त्रिकोणे न्यासविधिः । 'मातृकावन्यसेत्' इति तु श्रीचक्रन्यासान्ते विधीयमानो न्यासो भिन्न एवेति व्याख्याततत्वादप्यदोषः । वचनेन विधीयमानस्य चतुरस्रवृत्तचिन्तनस्य वैयर्थ्योक्तिस्त्वतीव चमत्कृता । त्वत्पक्षे श्रीविद्यागुरुन्यासयोर्वैयर्थ्योक्तौ वा किमुत्तरम् । प्रक्षिप्तत्वोक्तिस्तु साहसमेव, ग्रन्थान्तरे तददर्शनस्याप्रयोजकत्वात् । चक्रन्यासचर्चाया अप्यभावे 'श्रीचक्रं परिचिन्तयेत्' इतिवाक्यस्य भवत्पक्षे का गतिः ? नवयोनिचिन्तनादिवाचकपदगन्धाभावेऽपि तदङ्गीकारः श्रीचक्रादिपदकदम्बसत्त्वेऽपि न तच्चर्चेत्युक्तिस्तु पक्षपातो व्यामोहो वा । गोलकपदस्यार्थो नाथमुखाद्वेद्य इत्युक्तिस्तु शिष्यदन्धनमात्रम् । तस्मात् **पद्धतिकारै**र्विलिख्यमानेऽन्तर्नवयोनिन्यासे **तन्त्रान्तरे** मूलमन्वेष्यमिति दिक् ॥ ८८-८९ ॥

श्रीविद्यान्यासमाह—

**मूर्ध्नि गुह्ये च हृदये नेत्रत्रितय एव च ।**
**श्रोत्रयोर्युगले देवि मुखे च भुजयोः पुनः ॥ ९० ॥**
**पृष्ठे जानुनि नाभौ च विद्यान्यासं समाचरेत् ।**

गुह्ये मूलाधारे । जानुनीति जातावेकवचनम् । तेन पञ्चदश स्थानानि, तेषु यथाक्रमं पञ्चदशाक्षराणि न्यसेत् । **प्राञ्च**स्तु—एकैकस्य कूटस्यैव न्यासं वदन्तो विद्यायाः पञ्चवारमावृत्तिं मेनिरे । तत्र मानं त एव जानते । प्रत्युत **'मूलविद्यापञ्चदशार्णान् मूर्ध्नि मूले'** इत्यादि**कल्पसूत्र**विरोधः स्पष्टः ॥ $९०\text{-}९०\frac{१}{२}$ ॥

**करशुद्धिं पुनश्चैव आसनानि षडङ्गकम् ॥ ९१ ॥**
**श्रीकण्ठादींश्च वाग्देवीराधारे हृदये पुनः ।**
**शिखायां बैन्दवस्थाने अग्निचक्रादिका न्यसेत् ॥ ९२ ॥**

विद्यान्यासोत्तरं पुनरपि करशुद्धिचतुरासनरक्षाषडङ्गन्यासान् विधाय श्रीकण्ठादिन्यासं कृत्वा पुनर्वाग्देवता विन्यसेत् । मूलाधारादिस्थानचतुष्टयेऽग्निचक्रादिमन्त्रचतुष्टयेन कामेश्वर्यादिदेवताचतुष्टयं न्यसेदित्यर्थः । **प्राञ्च**स्तु—करशुद्ध्यादीनां नामान्याहेत्यमुं ग्रन्थमवतारयन्तो न्यासचतुष्टयस्यानावृत्तिं मेनिरे । तत्पुनःशब्दविरुद्धं **'ततश्च करशुद्ध्यादिन्यासं कुर्यात्समाहितः'** (८/८७) इत्यस्य वैयर्थ्यापादकञ्च, विध्योरभ्यासेऽप्यर्थस्य सकृदनुष्ठाने पाठेन क्रमनिर्णयानापत्तिश्च । श्रीकण्ठादिन्यासो यथा **मन्त्रमहोदधौ** एकविंशे तरङ्गे **'मुनिः स्याद्दक्षिणामूर्तिः'** इत्यादिभिरूनविंशत्या श्लोकैः कथितस्तत्रैव द्रष्टव्यः । अग्निचक्रादिन्यासस्तु **वरिवस्याप्रकाशेऽस्माभि**र्लिखितः ॥ ९१-९२ ॥

**तत्त्वत्रयं समस्तं च विद्याबीजत्रयान्वितम् ।**
**पादादिनाभिपर्यन्तमागलं शिरसस्तथा ॥ ९३ ॥**
**व्यापकं चेति विन्यस्य स्वात्मीकृत्य परं पुनः ।**
**सन्तर्पयेत् पुनर्देवीं सौम्याग्नेयामृतद्रवैः ॥ ९४ ॥**

आत्मतत्त्वं विद्यातत्त्वं शिवतत्त्वमिति तत्त्वत्रयं तत्समष्टिस्तुरीयतत्त्वं समस्तम् । एतेषां स्वरूपाणि पूर्वमेव वर्णितानि । विद्या पञ्चदशी च बीजत्रयं चेति द्वन्द्वः । एतच्चतुष्टयेनान्वितं तत्त्वचतुष्टयं कुर्यात् । तत्र तत्त्वत्रये बीजत्रययोगः । पञ्चदश्यास्तुरीयतत्त्वे योग इति **तन्त्रान्तर**सिद्धः क्रमः । तथा च–'आत्मतत्त्वाय नमः' इत्यादयो मन्त्रा भवन्ति । **प्राञ्च**स्तु–विद्याया बीजत्रयमिति तत्पुरुषमङ्गीकुर्वन्तस्तुरीयतत्त्वे तु तुरीयविद्यां त्रयोदशाक्षरीं योजयन्ति । तदयथाक्षरम् । न्यासस्थानानि मन्त्रक्रमेणाऽऽह–पादादीति । आगलं नाभ्यादिकण्ठान्तम् । आशिरसः कण्ठादिशिरोन्तम् । तथेत्यस्मात् परत्राऽऽङः प्रश्लेषः । व्यापकं सर्वाङ्ग इत्यर्थः । परं ब्रह्म पुनः स्वात्मीकृत्य स्वाभेदेन विभाव्य । परान्यासमाह–सन्तर्पयेदिति । सोमस्येदं सौम्यं ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । अग्नेरिदमाग्नेयं सर्वत्राग्निकलिभ्यां ढग् वक्तव्यः । चन्द्राग्न्योरमृतद्रवैः स्वात्माभिन्नां देवीं सन्तर्पयेत् । ब्रह्मरन्ध्रस्थचन्द्रमण्डलेऽमृतकुण्डलिनी लिङ्गरूपा, मूलाधाराग्निकुण्डलिनी योनिरूपा, तयोरधश्चोर्ध्वं च प्रसृतयोः सामरस्यान्निर्गलद्भिः क्रमात् सौम्याग्नेयपदवाच्यामृतधारासारैरानन्दमनुभवेदिति भावः ॥ ९३-९४ ॥

न्यासकाण्डमुपसंहरति–

**एवं चतुर्विधो न्यासः कर्तव्यो वीरवन्दिते ।**
**षोढान्यासोऽणिमाद्यश्च मूलदेव्यादिकः प्रिये ॥ ९५ ॥**
**करशुद्ध्यादिकश्चैव साधकेन सुसिद्धये ।**

षोढान्यासः षडवयवकः । अणिमादिकमूलदेव्यादिकौ प्रत्येकमेकादशावयवकौ । करशुद्ध्यादिकः षोडशावयवकः । तत्र करशुद्धिश्चतुरासनं षडङ्गकं वाग्देवतेति चतुष्कं द्विः । नवयोनिर्विद्यान्यासः श्रीकण्ठादिरग्निचक्रादिस्तत्त्वन्यासः परान्यासश्चेति षट् । सप्तमपटलारम्भे कथितौ चक्रेश्वरीन्यासौ द्वाविति भेदात् । अनयोरणिमादिन्यासोत्तरानुष्ठानपक्षे चतुर्दशावयवक एव । एवं चतुश्चत्वारिंशता न्यासैर्घटितास्चत्वारो गणन्यासा इत्यर्थः ॥ ९५-९५$\frac{1}{2}$ ॥

एतेषां चतुर्णां न्यासगणानां कालभेदेन व्यवस्थामाह–

**प्रातःकालेऽथवा पूजाकाले वा होमकर्मणि ॥ १६ ॥**
**जपकालेऽथवा तेषां विनियोगः पृथक् पृथक् ।**
**पूजाकाले समस्तं वा कुर्यात् साधकपुङ्गवः ॥ १७ ॥**

प्रातःकाले सन्ध्यादिमातृकान्यासान्तकर्मोत्तरकाले, पूजाकाले पात्रासादनात्पूर्वम् । होमकर्मणि नैवेद्यकालीनहोमारम्भे । जपकाले कुलदीपनिवेदनोत्तरम् । व्यवस्थया कर्तुमशक्तौ त्वाह–पूजाकाले समस्तं वेति । समस्तं चतुर्विधम् । क्रमस्तु पाठक्रम-श्रौतक्रमाभ्यामुक्त एवेति भावः । तदयं मथितोऽर्थः–परपूजानन्तरं षोढान्यास-स्ततोऽणिमाद्या एकादश, ततो बाह्यान्तरौ चक्रेश्वरीन्यासौ, ततो मूलदेव्यादिका एकादश, ततः करशुद्धिश्चतुरासनं रक्षाषडङ्गं वाग्देव्य इति चतुष्कम्, नवयोनि-[विद्या]न्यासौ द्वौ, पुनः करशुद्ध्यादित्रयम्, श्रीकण्ठादिरेकः, पुनर्वाग्देव्यस्ततोऽग्नि-चक्रादिस्तत्त्वन्यासः परान्यासश्चेति त्रयं संहत्य चतुश्चत्वारिंशन्न्यासास्ततोऽपर-पूजापरापरपूजान्यतराङ्गं पात्रासादनादीति क्रमेणानुष्ठानमिति सिध्यति ॥ १६-१७ ॥

**षट्त्रिंशत्तत्त्वपर्यन्तमासनं परिकल्प्य च ।**
**गुप्तादियोगिनीनां च मन्त्रेणाऽथ बलिं ददेत् ॥ १८ ॥**

क्षित्यादिशिवान्तानां षट्त्रिंशतस्तत्त्वानां मध्ये पूर्वपूर्वस्योपर्युत्तरोत्तरस्य विभावन-पूर्वकं क्षित्यप्तेजोवाय्वित्यादिसदाशिवशक्तिशिवान्तमुच्चार्य 'तत्त्वात्मकयोगपीठाय नमः' इति मन्त्रेण तदुपरि ब्रह्मरूपः स्वयमुपविष्ट इव विभावयेत् । तथा च **कल्पसूत्रम्– 'पीठमनुनाऽऽसने समुपविष्टः'** इति । ईदृशस्याऽऽसनस्य परितः कल्पनं नाम तत्त्वाधिकरणकोपवेशनविभावनादिचक्रालङ्कारान्तावयवक एकः पदार्थः, तेषामवयवानामासनदार्ढ्यार्थत्वेनाऽऽसनभावनेतिकर्त्तव्यतारूपत्वात् । ततश्चाऽऽसनं परिकल्प्य समस्तं कुर्यादिति पूर्वेणान्वयाच्चक्रालङ्कारोत्तरं न्यासजालं विदधीतेत्यर्थः सिद्धः । परिकल्प्येत्यस्य ददेदित्यनेनान्वयेऽथेतिपदस्य वैयर्थ्यापत्त्या पूर्वश्लोकोक्तक्रिय-यैवान्वयस्य वक्तव्यतयाऽऽसनन्या अथा(सा)परपूजान्यासयोः पाठप्राप्तक्रमस्याप्यनयैव श्रुत्या बाधोऽस्त्विति तु न शङ्क्यम्, विहितस्त्वात्मपूजन इति क्तप्रत्ययस्यापि श्रुतित्वेन श्रुतिपाठोभयेन केवलश्रुतेरेव सङ्कोचनीयत्वात् । अथाऽऽसनोपवेशनस्यावयवानेव विवृणोति–गुप्तेत्यादिभिः । गुप्ताया आदिर्गुप्तादिरिति षष्ठीतत्पुरुष एका प्रकटे-त्यर्थः । गुप्तादिश्च गुप्तादयश्चेति एकवचनबहुवचनान्तयोर्द्वन्द्वापवादैकशेषेण गुप्तादय इति रूपं प्रकटाद्या नवेत्यर्थः । तासां योगिनीनां मन्त्रेण समष्टिमन्त्र इति प्रसिद्धेन समस्तप्रकटेत्यादिरूपेण बलिमन्नोदकादिरूपं ददेत्, दद्यात् । मान्त्रवर्णिक्य एव बलिदेवताः । अथेतिशब्द उपवेशनविभावनरूपप्रथमावयवानन्तर्यं बोधयति । दद दान इत्यात्मनेपदित्वेन प्रसिद्धाद्धात्वन्तरादनुदात्तत्वलक्षणस्याऽऽत्मनेपदस्यानित्यत्वात्

परस्मैपदे सति ददेदिति रूपम् । इदं बलिदानमप्यासपर्यासमाप्त्यासनीयविघ्ननिरासार्थत्वादवान्तरप्रकरणाच्चाऽऽसनस्यैवाङ्गम् ।

**प्राञ्चस्तु**–आसनशब्दः श्रीचक्रपरः । गुप्तादीत्येतत्प्राक्समस्तप्रकटेत्यस्याध्याहारः । बलिशब्दः पुष्पाञ्जलिपरः । तेन न्यासजालानन्तरं स्वात्मानं श्रीचक्रत्वेन विभाव्य समष्टिमन्त्रेण स्वशिरसि पुष्पाञ्जलिं निक्षिपेदित्यर्थ इति व्याचख्युः । तदिदं 'न विधौ परः शब्दार्थः' इति न्यायविरुद्धं **कल्पसूत्रा**दिक्रमविरुद्धं चेत्युपेक्षितम् ॥ ९८ ॥

**पिण्डरूपपदग्रन्थिभेदनाद् विघ्नभेदनम् ।**
**गुह्यहृन्मुखमूर्धसु विद्यान्यासेन सुन्दरि ॥ ९९ ॥**

**'पिण्डः कुण्डलिनी शक्तिः'** इत्यादि**स्वच्छन्दसंग्रहो**क्तरीत्या पिण्डशब्देन मूलाधारमुच्यते । पदशब्देन सामीप्यान्मणिपूरम् । रूपशब्देनाप्याज्ञाचक्रम् । एतेषु त्रिषु क्रमेण ब्रह्मविष्णुरुद्रग्रन्थयः सन्ति । एवं गुह्यशब्देन लिङ्गम्, मुखशब्देन ललाटम् । गुह्यादिचतुष्टये वाग्भवादिकूटत्रयं मूलविद्या चेति चतुष्टयस्य न्यासेन ग्रन्थित्रयस्य भेदनं भवति । तेन चाऽऽन्तरविघ्ना भिद्यन्त इत्यर्थः । **केचित्** तु ग्रन्थिपदेन ब्रह्मरन्ध्रमुच्यते । तत्र तुरीयबीजस्य न्यासः काय इति व्याचक्षते ॥ ९९ ॥

एवमान्तरं विघ्ननिरासमुक्त्वा भौमनाभसदिव्यभेदेन त्रिविधानां बाह्यविघ्नानां निरसनोपायमाह–

**यागमन्दिरगांश्चैव विघ्नानुत्सार्य मन्त्रवित् ।**
**अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ॥ १०० ॥**
**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।**
**पार्ष्णिघातेन भौमांश्च तालेन च नभोगतान् ॥ १०१ ॥**
**अस्त्रमन्त्रेण दृष्ट्या च दिव्यान् विघ्नान् व्यपोहयेत् ।**
**दिक्षूर्ध्वाधस्ततो वह्निप्राकारं परिभावयेत् ॥ १०२ ॥**

अपसर्पन्त्वितिश्लोकात्मकं मन्त्रमुच्चरन् वामपार्ष्णिं भूमावभिहन्यात् । तेन भौमविघ्ननिरासः । मन्त्रार्थस्तु स्पष्टः । वामकरतले दक्षमध्यमातर्जनीभ्यामभिघातरूपेण तालेनान्तरिक्षगतान् विघ्नान् हन्यात् । अत्रापि पूर्वमन्त्रस्यैव करणत्वम्, 'ये भूता विघ्नकर्तारः' इति मन्त्रलिङ्गस्याविशेषेण प्रयोगसमवेतार्थप्रकाशकत्वात् । अत एव विघ्नानुत्सार्येत्यत्र भौमनभोगते द्वे एव विघ्नविशेषणे । मन्त्रविदिति कथनं तयोर्निरास एव मन्त्रस्य करणत्वमिति द्योतनायेति सङ्गच्छते । परं तु प्रतिप्रधानन्यायेन मन्त्रो न द्विरावर्तनीयः, द्वितीयावृत्तौ भूमिसंस्थिता इत्यंशस्यासमवेतार्थप्रकाशकत्वापत्तेः । अतः सकृदेव मन्त्रमुच्चरन् पार्ष्णिघाततालौ यौगपद्येन कुर्वन् विघ्न-

द्वयनिरासं कुर्यादिति निष्कर्षः । अनेनैव न्यायेन दिव्यविघ्ननिरासेऽपि करणत्वेन प्राप्तमिमं मन्त्रमपवदति– अस्त्रेति । पञ्चदश्या हृदयादिषडङ्गन्यासे षष्ठो मन्त्रो यस्तेनेत्यर्थः । अस्त्राय फडिति जातिमात्रेणेत्यन्ये । फट्पदमात्रेणेत्यपि **केचित्** । दृष्ट्या क्रूरदृष्ट्याऽवलोकनेन । ततो दशदिक्षु वह्निमयं प्राकारं परितो भावयेत् ॥ १००-१०२ ॥

**सामान्यार्घ्येण देवेशि ! मार्त(र्ता)ण्डं परिपूजयेत् ।**
**प्रकाशशक्तिसहितमरुणाकल्पमुज्ज्वलम् ॥ १०३ ॥**
**ग्रहादिपरिवारं च विश्वतेजोऽवभासकम् ।**

पात्रासादनविधौ हि पद्धतिकाराः कलशः सामान्यार्घ्यं विशेषार्घ्यमात्मपात्रं गुरुपात्रं शक्तिबटुकभोगादिपात्राणि चेति यथायथं लिखन्ति । तेषु सामान्यार्घ्यविधानेन तत्पात्रमासाद्य तत्रत्यजलेन प्रकाशशक्तिसमेतं मार्त(र्ता)ण्डं पूजयेत् । अरुणा आकल्पा भूषणानि यस्य तम् । ग्रहाः सोमादयोऽष्टौ । आदिशब्देन माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्वका गृह्यन्ते । षडङ्गानि गृह्यन्त इत्यन्ये ॥ १०३-१०३$\frac{१}{२}$ ॥

**सौम्याग्नेययुतैर्देवि ! रोचनागुरुकुङ्कुमैः ॥ १०४ ॥**
**मूलमुच्चारयन् सम्यगालिखेच्चक्रराजकम् ।**
**योगिनीमूलमन्त्रेण क्षिपेत् पुष्पाञ्जलिं ततः ॥ १०५ ॥**
**मणिमुक्ताप्रवालैर्वा विलोमं मूलविद्यया ।**
**अशून्यं सर्वथा कुर्याच्छून्ये विघ्ना अनेकशः ॥ १०६ ॥**

गोरोचनादित्रयं सौम्याग्नेयद्रवाभ्यां मर्दितं चक्रलेखने कारणम्, लेखनी तु **'लेखन्या हैमतारया'** इति **ज्ञानार्णवे** कथिता । सौम्याग्नेयपदे परान्यासप्रकरणेऽनुपदमेव व्याख्याते । कुण्डगोलोद्भवे इति यावत् । तदुक्तं **कुमारीकल्पे** चक्रराजं प्रकृत्य–

**'एतत्तु विलिखेत्ताम्रे कुण्डगोलविलेपिते ।**
**स्वयम्भुकुसुमैर्युक्ते कुङ्कुमागुरुसेविते ॥'**

इति । **स्वतन्त्रे**ऽपि–

**'इत्थं विन्यस्तदेहस्तु चक्रराजं लिखेत् सुधीः ।**
**स्वर्णे वा रजते ताम्रे पाषाणे वाऽष्टधातुषु ॥**
**स्वयम्भुकुसुमं कुण्डगोलोत्थं रोचनाऽगुरुः ।**
**काश्मीरमृगनाभी च मद्यं च मलयोद्भवम् ॥**
**एष गन्धः समाख्यातः सर्वदा चण्डिकाप्रियः ।**
**एतेन गन्धयोगेन योनिचक्रं समालिखेत् ॥'** इति ।

**प्राञ्चस्तु**–सौम्यं कर्पूरम्, **'घनसारश्चन्द्रसंज्ञः'** इति **कोशात्** । आग्नेयं काश्मीरम्, **'काश्मीरजन्माग्निशिखम्'** इति **कोशात्** । एतत्पञ्चकं कारणेन मर्दितं सत्कारणमिति व्याख्यन् । ते परान्यासप्रकरणे मूलकृता सूचितं सौम्याग्नेयपदयोरर्थं स्वयमुपपाद्यापि कथमिह व्यस्मार्षुः । यत्तु पूर्वतन्त्रे सिन्दूरादेर्निरपेक्षकारणत्वमुक्तं तदीदृशद्रव्यालाभेऽनुकल्पत्वेन ज्ञेयम् । **नव्या**स्तु–यदा भूमौ भूप्रस्तारो लिख्यते तदा कुङ्कुमरजोभिः पूरणं मेरुप्रस्तारश्चेत् सिन्दूररजोभिस्ताम्रादिपट्टे चेद्रोचनादिपङ्केन लेखनमिति व्यवस्थामाहुः । तत्र प्रमाणं मृग्यम्, भवदभिमते **ज्ञानार्णवतन्त्रे**–

**'भूप्रदेशे समे शुद्धे सिन्दूररजसाऽपि वा ।**
**कुङ्कुमस्य रजोभिर्वा भूमौ चक्रं समालिखेत् ॥'**

इति श्लोके प्रत्युत सम इति पदेन भूप्रस्तारस्यैवाभिमतिध्वननेन मेरुप्रस्तारस्य भवत्तन्त्रानभिमतत्वात् । यत्तु **'श्रीचक्रमपि देवेशि मेरुरूपं न संशयः'** इति **अर्णव**वचनम्, तत् **'एतच्चक्रं मेरुरूपश्रीविद्यार्णैः समुद्धृतम्'** इति वचनान्तरे मेरुरूपमिति सबिन्दुकपाठमपलप्य श्रीविद्यार्णपदेन समस्ततामङ्गीकृत्य नवार्णमेरुनामकमन्त्रान्तरस्य निखिलश्रीविद्यामन्त्रघटकत्वात्तादृशाक्षरैरेव चक्रोत्पत्तेः, **'लकारः पृथिवीबीजं तेन भूबिम्बमुच्यते'** इत्यादि तत्रैव कथनाच्च सर्वानुगतत्वरूपधर्मवत्त्वमात्रेण सादृश्याभिप्रायमिति भवद्भिरेव व्याख्यातत्वेन विरोधाच्च । यदपि भूप्रदेशे भूमावितिपदद्वयवैयर्थ्यापातादसम इति च्छित्त्वा भूमावेव मेर्वानुगुण्येन विषमे प्रदेशे लिखेदिति व्याख्येयमिति । तदपि न, लिखेदितिक्रियाया अपकर्षेण द्वयोरपि भिन्नवाक्यत्वेन तद्घटकपदद्वयस्य वैयर्थ्याभावात् । एतत्तन्त्रेऽपि 'भूप्रदेशे समे शुद्धे' इत्येतत्समानच्छायेन वाक्येन भूप्रस्तारस्यैव ध्वनिततया तत्संवादायैवमेव व्याख्यातुमुचितत्वाच्च । अस्तु वा **तन्त्रराजगौरीयामला**दिसम्मतस्य मेरुप्रस्तारस्येह ध्वननमात्रं तथाऽपि रोचनाकुङ्कुमाभ्यां चेति विधौ सिन्दूररजसेति विधौ च तृतीयाविभक्तेरविशेषेऽपि क्वचिच्छुष्कचूर्णपूरणं क्वचित्पङ्केन लेखनमिति पूर्वोक्ता व्यवस्था वेति द्वयमप्यप्रमाणकमेवेति दिक् । उच्चारयन्निति तु स्वार्थे णिच्, करशुद्धिं तु कारयेन्निषादस्थपतिं याजयेदित्यादिवदाचार्यस्य प्रयोजककर्तृत्वमभिप्रेत्य वा । **प्राञ्चस्तु** उच्चारयँल्लेखयेत्, उच्चरन्नालिखेदिति पदद्वयाध्याहारेण स्वयं लिखेत् परहस्ताल्लेखयेद्वेति व्याचक्षते । एतत्पक्षे यस्य हस्ताच्चक्रं लेखनीयं स मूलोच्चारणादिकार्युपासक एवापेक्षित इति निर्बन्धो निष्प्रमाणक आपद्यते । **'लेखनाभ्यासशीलस्तु लिखेद्यन्त्राणि नापरः'** इति वचनानुसार्यनुपासकशिल्पिहस्ताल्लेखनशिष्टाचारोऽपि विरुध्यते । योगिनीमूलमन्त्रेण ततस्तस्मिंश्चक्रे क्षिपेत् । चक्रमशून्यकरणेनालङ्कुर्यात् ।

पुष्पालाभे त्वाह–मणीति । एतत्पक्षे समष्टिमन्त्रमपवदति--विलोममिति । प्रातिलोम्यं च कूटानां न तु पञ्चदशाक्षराणामिति मन्तव्यम् । विघ्नाः सपर्यासमाप्ति-पर्यन्तमुपवेशनरूपस्याऽऽसनस्यान्तराया भौमादयः । एतेनेदृशचक्रालङ्कारस्य विघ्ननि-रासार्थत्वध्वननद्वाराऽऽसनपदार्थस्यायं चरमावयव इति ध्वनितम् । तेनाऽऽसनं परिकल्प्येति ल्यपा चक्रं विलिख्यालङ्कृत्य **'न्यासजालं विदधीत'** इति **कल्पसूत्रे** स्फुटीकृतः क्रमः सूचितो भवति । यस्त्वासनावयवानां व्युत्क्रमः **कल्पसूत्रे** दृश्यते स **तन्त्रान्तर**मूलक इति द्रष्टव्यम् ॥ १०४-१०६ ॥

सामान्यार्घ्यस्यावान्तरप्रकरणेन प्राप्तमासनपदार्थाङ्गत्वमपवदितुमाह--

**श्रीचक्रस्याऽऽत्मनश्चैव मध्ये त्वर्घ्यं प्रतिष्ठयेत् ।**

**आगमशास्त्र**स्यानित्यत्वात्प्रतिष्ठयेदित्यत्र न पुगागमः । यद्यपि मध्यशब्दोऽत्र देशविशेषवचनो न केवलवचनस्तथाऽपि चक्रात्ममध्यदेशनिर्णयस्य चक्रलेखनात्पूर्वम-सम्भवाच्चक्रलेखनोत्तरमेवार्घ्यस्थापनं कुर्यादित्यर्थः सामर्थ्यरूपाल्लिङ्गाल्लभ्यते, लैङ्गिकत्वादेव वाऽऽसनन्यासयोः **श्रुत्या** विहितः क्रमो नानेन बाध्यते । तेनास-नोपवेशनादिवह्निप्राकारविभावनान्तं कृत्वा चक्रं विलिख्य पुष्पाञ्जलिं दत्त्वा पूर्वोक्तां परां पूजां विधाय पात्रासादनं कुर्यादिति क्रमः सिध्यति । **कल्पसूत्रे**ऽप्येवम् । यद्यपि सामान्यार्घ्येतिकर्तव्यतायाश्चतुरस्रान्तरालस्थेत्यादिग्रन्थेनोत्तरत्र कथनादप्ययं क्रमः सिध्यत्येवेति न पाठक्रममात्रेणाऽऽसनपदार्थावयवसन्दंशेन सामान्यार्घ्यस्यानुष्ठानं प्रसज्यते । नापि मार्त(र्ता)ण्डपूजायाः । तस्याः सामान्यार्घ्यकरणकत्वेनार्थक्रमेण पाठ-क्रमबाधात्, तथाऽप्युत्तरग्रन्थस्य विशेषार्घ्येतिकरणकत्वेनाप्यत्र कर्तव्यताविधायकत्व-पक्ष इदं प्रयोजनमस्योपपद्यते । अत्राऽऽत्मशब्दः स्वासनस्थानपरः । श्रीचक्रशब्दस्तु बिन्दुस्थानपरः । तथैव सम्प्रदायात् । आभ्यामवधिभूताभ्यामर्धमन्तर्वेदि मिनोती-त्यादाविव देशविशेषो लक्ष्यते । तस्य [मध्य]भागे पात्रासादनं विधीयते । स च मध्यभागो लक्षितदेशस्य त्रेधा विभागमन्तरेणानुपपद्यमानस्तमाक्षिपति । स च विभागः समं स्यादश्रुतत्वादिति न्यायात् सम एव । ततश्च लिखितस्य स्थापितस्य वा चक्रस्य बिन्दुस्थानात् स्वासनस्थानपर्यन्तो यावान् देशस्तं देशं त्रेधा समं विभज्य पूर्वापरभागयोरेकैकं भागं परित्यज्य [मध्य]भागे पात्राण्यासादयेदिति सिध्यति । स चैकैको भागो द्वादशद्वादशाङ्गुल इति तु **तन्त्रान्तर**लभ्योऽर्थः । पात्रासादनं प्रक्रम्य–

**'साध्यसाधकयोर्मध्ये षट्त्रिंशदङ्गुलं भवेत् ।**
**द्वादशाङ्गुलमूर्ध्वं च अधोभागे तथाङ्गुलम् ॥**
**द्वादशाङ्गुलं मध्यस्थं तत्र संस्थापयेद् बुधः ।'**

इति वचनात् । तथाङ्गुलं द्वादशाङ्गुलमित्यर्थः । एतेनाथ पुरतो विहाय निजविष्टरादरत्निमवनिमिति **प्रपञ्चसारसंग्रहे** चक्रलेखनं स्वासनादरत्निं परित्यज्य परतो हस्तमात्रभूमौ तदाधारपीठे स्वनाभिसमसूत्रोच्चे कार्यमिति सम्प्रदाय इत्युक्तं **शंकरानन्दनाथेन** ॥ १०६$\frac{१}{२}$ ॥

अथ सामान्यार्घ्यस्थापनमाह पञ्चभिः –

**चतुरश्रान्तरालस्थकोणषट्के सुरेश्वरि ॥ १०७ ॥**
**षडासनानि सम्पूज्य त्रिकोणस्यान्तरे पुनः ।**
**पीठांश्च चतुरो देवि ! का पूजा ओ इति क्रमात् ॥ १०८ ॥**
**अर्चयित्वाऽर्घ्यपादे तु वह्नेर्दश कला यजेत् ।**
**तत्र पात्रं प्रतिष्ठाप्य तत्र सूर्यकला यजेत् ॥ १०९ ॥**
**पात्रे सूर्यकलाश्चैव कभादिद्वादशार्चयेत् ।**
**विधृते तु पुनर्द्रव्ये षोडशेन्दुकला यजेत् ॥ ११० ॥**
**अमृतेशीं च तन्मध्ये भावयेच्च नवात्मना ।**
**नवात्मना ततो गौरि ! तर्पयेद्धातुदेवताः ॥ १११ ॥**
**आनन्दभैरवं चैव वौषडन्तेन तर्पयेत् ।**

अत्र 'यो वै संवत्सरमुख्यं भृत्वाऽग्निं चिनुयात्' इति वैश्वानरादिहविस्त्रय-क्रमविधायके वाक्य उद्देश्यकोटौ निवेशादेव संवत्सराख्यधारणाभावपक्षस्य कण्ठरवेण वचनान्तरेणाविहितस्यापि विधेयताक्षेपोऽङ्गीक्रियते, तथेह यन्त्रलेखनादिकति-पदार्थानामेकवाक्य उद्देश्यकोटौ निवेशादेव विधिरुन्नेयः । तेनायं समुदितार्थः– त्रिकोणवृत्तषट्कोणचतुरस्रात्मकं मण्डलं देव्याः स्वस्य च मध्यस्थे स्ववामभागे गन्धादिना कुर्यात्, **'विधाय वामभागे तु चतुरस्रं हि मण्डलम्'** इति **ज्ञानार्णवे** वामपदेन देवीवामापेक्षया स्ववामस्य पुरःस्फूर्तिकत्वेनोपस्थितत्वात् । देवीवामभाग एव मण्डलकरणेन सामान्यार्घ्येण पूजासमर्पणक्रियायां प्रयोगसौकर्यलाभात् स्वदक्षिणभाग एव सामान्यार्घ्यस्थापनम् । अत एव परिवारदेवतातर्पणैकप्रयोजनकलशस्थापन-विधिवाक्ये **'मण्डलं वामतः कृत्वा'** इत्यत्र स्ववामभागस्यैव ग्रहणमिति तु **नव्याः** । तच्चिन्त्यम्, स्ववामभागस्य पुरःस्फूर्तिकत्वाविशेषेऽपि प्रयोगसौकर्यमात्रावलम्बेन व्याख्यावैषम्यस्यायुक्तत्वात् । ततः स्वाग्रादिप्रादक्षिण्येन षट्सु कोणेषु सुधार्ण-वासनादीनि षडासनानि त्रिपुरादिचक्रेश्वरीमन्त्रषट्केन क्रमात् पूजयेत् । ततस्त्रिकोणस्य मध्ये बिन्दुस्थाने मूलविद्यया कामरूपपीठमभ्यर्च्य स्वाग्रादिप्रादक्षिण्येन त्रिभिः कूटैः पूर्णगिरिजालन्धरौड्यानपीठान् कोणान्तर्भागे पूजयेत्, अन्तरशब्देनैव पूजनीयचतुष्क-सहितेन चतुर्णां स्थानानामुपस्थितेः सम्भवात् । ततोऽर्घ्यपाद आधारे, 'ऐं अग्नि-मण्डलाय दशकलात्मनेऽर्घ्यपात्राधाराय नमः' इति मन्त्रेणार्चयित्वा स्थापिते 'यं

धूम्रार्चिषे नमः' इत्यादिभिर्दशभिर्मन्त्रैर्वह्निकलादशकं स्वाग्रादिप्रादक्षिण्येनैव वर्तुलाकारं पूजयेत् । तस्मिन्नाधारे हेमादिनिर्मितं पात्रं शङ्खं वा 'क्लीं सूर्यमण्डलाय द्वादशकलात्मनेऽर्घ्यपात्राय नमः' इत्यर्चयित्वा प्रतिष्ठाप्य तस्मिन् सूर्यकलास्तपिन्यादीर्द्वादश वृत्ताकारं पूजयेत् । ताश्च सूर्यकलाः कादिद्वादश भादिद्वादश संयोज्य जातैर्मन्त्रैः पूजयेत् । अत्र भादीत्यादिशब्देन प्रातिलोम्येन बकारादिडकारान्ता गृह्यन्ते, सम्प्रदायात् । न तु सम्भवन्तोऽपि मकारादयः । तेन 'कं भं तपिन्यै नमः, खं बं तापिन्यै नमः' इत्यादयो मन्त्रा भवन्ति । तत्र 'सौः सोममण्डलाय षोडशकलात्मनेऽर्घ्यामृताय नमः' इति मन्त्रेण शुद्धजलमापूर्य कारणाद् बिन्दुमात्ररूपं द्रव्यं दत्त्वा, 'अं अमृतायै नमः' इत्यादिभिर्मन्त्रैः सोमकलाषोडशकं पूजयेत् । ततो नवाक्षरात्मककूटमन्त्रेणामृतेशीं कारणाधिदेवतां शुद्धजले विभावनापूर्वकमर्चयित्वा पुनर्नवाक्षरात्मककूटान्तरमन्त्रेण डाकिन्यादिषट्कं सप्तकं वा नमोऽन्तेन पूजयेत् । तेनैवाऽऽनन्दभैरवं वषडन्तेन शुद्धजलमध्य एव तर्पयेत् । नवाक्षरात्मककूटद्वयोद्धारो **ज्ञानार्णवे** यथा–

**'शिवचन्द्रौ मातृकान्तं कालशक्राम्बुवह्नयः ।**
**वायुश्च वामकर्णेन योजितो बिन्दुनादिना ॥**
**बीजमेतत्समुच्चार्य तथा चाऽऽनन्दभैरवम् ।**
**ङेन्तं शिखामन्त्रयुक्तं पुनर्बीजं समालिखेत् ॥**
**चन्द्रं हित्वाऽऽदिमं कुर्यात् कर्णे वामाक्षि योजयेत् ।**
**सुधादेव्यै ततो वौषडयमानन्दभैरवः ॥'**

इति । शिवो हः । चन्द्रः सः । मातृकान्तः क्षः । कालो मः । शक्रो लः । अम्बु वः । वह्नी रः । वायुर्यः । वामकर्ण ऊकारः । स च बिन्दुनादाभ्यां युक्तः । एतद्बीजान्त आनन्दभैरवाय वषडित्येको मन्त्रः । पुनस्तस्मिन्नेव शिवचन्द्रयोर्व्यत्यासेनोकारस्थान ईकारयोगेण च कूटान्तरं कृत्वा तदन्ते सुधादेव्यै वौषडित्यपरो मन्त्रः । एतद्द्वयमपि मिलित्वैक एव मन्त्र इत्यपि **केचित्** । अत्र द्वितीयमन्त्रोऽमृतेश्याः । प्रथममन्त्रकूटान्ते 'डाकिन्यै नमः' इत्यादियोजनेन षट् सप्त वा मन्त्राः कार्या इति विवेकः । अत्रोक्तानां कलादिमन्त्राणां तन्त्रभेदेन भूयोवैलक्षण्यदर्शनादिहैदंपर्येणैकस्याप्यनुद्धाराद्विकल्पः ॥ १०७-१११ $\frac{१}{२}$ ॥

एवं सामान्यार्घ्येतिकर्तव्यतां सविस्तरं विधाय तदतिदेशपूर्वकं विशेषार्घ्यमर्धश्लोकेनोपदिशति–

**तथैवार्घ्यं विशेषेण साधयेत्साधकोत्तमः ॥ ११२ ॥**

यथा सामान्यार्घ्यः साधितस्तथैवार्घ्यान्तरं साधयेत् । स त्वम्बुसामान्येनायं तु विशेषजलेनेति विशेषः । अत एव [पूर्व**चतुःशत्या**मम्बुकरणकसामान्यार्घ्यविधिरुक्तः–

**'हेमादिपात्रे साधारे स्थापयेदर्घ्यमम्बुना'** (१/१३२)इ]तिश्लोकद्वयेन । तत्र चत्वारः पक्षाः पूर्वम**स्माभिः** प्रदर्शिताः । तेषु यदि सामान्यार्घ्यविधिपरत्वपक्षस्तदाऽत्रत्येतिकर्तव्यतायास्तत्रत्येतिकर्तव्यतया सह समुच्चयः । विशेषार्घ्यविधिरिति **मनोरमाकार**पक्षे तु तत्रैव समुच्चयः । विशेषार्घ्येऽम्बुनो मेलनविधिरिति पक्षेऽप्येवम् । विशेषालाभे प्रतिनिधिरिति चन्द्रिकापक्षे पूतीकेष्विव सोमधर्मा अम्बुन्यपि विशेषधर्मा भवन्ति । वस्तुतस्तु–तत्र विधिरिति पक्षे तद्धर्माणां विभज्य कथनस्वारस्यभङ्गापत्तेः सामान्यार्घ्यविधिपर एव स ग्रन्थो युक्तः, अम्बुनेतिपदस्वारस्यात् । उपपदविभक्त्यपेक्षया कारकविभक्तेर्बलीयस्त्वाच्च । तत्रोत्पन्नस्य सामान्यार्घ्यस्य **'तर्पयेत्तेन योगिनीः'** इतिवत् **'मार्त(र्ता)ण्डं परिपूजयेत्'**(८।१०३) इत्यपि विनियोगविधिः । **'श्रीचक्रस्याऽऽत्मनश्चैव'**(८।१०७) इति तु तस्यैव देशकालविधिः । तदुत्तरैः सार्धैः पञ्चभिः श्लोकैर्विशेषार्घ्यस्य विधिः । तत्र चरमार्ध उत्पत्तिविधिः । पूर्वश्लोकपञ्चके तदितिकर्तव्यताविधिरिति विवेकः, उत्पत्तिविधेरुत्तरत्रैवेतिकर्तव्यता वर्णनीयेति निर्बन्धे मानाभावात्, अन्यथा **'विधृते तु पुनर्द्रव्ये'** (८/११०) इत्युक्तिस्वारस्यविरोधापत्तेः । द्रव्यपदस्य जले तान्त्रिकाणां स्वारसिकप्रयोगाभावात्, बिन्दुप्रक्षेपस्य **'मैत्रावरुणं पयसा श्रीणाति'** इत्यादिवत्संस्कारमात्रस्य पात्राधिकरणकद्रव्यविधारणरूपत्वाभावेन तथा निर्देशायोगाच्च, **कल्पसूत्र-ज्ञानार्णवा**दिषु कलापूजाया आधारमण्डलस्थामृतेश्यादिपूजनस्य च विशेषार्घ्य एव विधिदर्शनेन बहुविसंवादापत्तेश्च, सामान्यार्घ्यस्थापन ईदृशविस्तारस्य **तन्त्रान्तरे**ऽनुपलम्भाच्च । न च हेमादिपात्रं सामान्यार्घ्ये **तन्त्रान्तरे** न दृश्यते, शङ्ख एव तु प्रायेण विधीयत इति वाच्यम्, तत्रापि हेमादीत्यादिपदेन शङ्खस्यापि ग्रहणसम्भवेन भूयोविसंवादाभावात् । एतेन यत् **प्राचां** व्याख्यानं पञ्चभिः श्लोकैः सामान्यार्घ्यविधिस्तन्मध्य एव **'विधृते तु पुनर्द्रव्ये'** (८/११०) इत्यादिना विशेषार्घ्यविधिस्तथैवार्घ्यमित्यनेन सामान्यार्घ्यधर्मातिदेश इति, तत्पूर्वापरविरोधान्नाऽऽदर्तव्यम् । न चेह पञ्चभिरेव श्लोकैर्विशेषार्घ्यविधिरस्त्विति वाच्यम्, तयोरर्घ्यपदव्यवहारस्य क्वाप्यभावात् । न चैवं सत्युत्तरग्रन्थे गुरुभ्य आत्मने च द्रव्यविनियोगो विधीयमानो द्रव्याभावाद्विरुध्येतेति वाच्यम्, विशेषार्घ्यस्यैव तत्रापि करणत्वात् । अत एव **कल्पसूत्रं विशेषार्घ्यं विधाय, 'तद्बिन्दुभिस्त्रिः शिरसि गुरुपादुकामिष्ट्वाऽऽर्द्रं ज्वलति.....त् स्वाहेति तद्बिन्दुमात्मनः कुण्डलिन्यां जुहुयाएतदर्घ्यशोधनमिति शिवम्,** इति । प्रकृततन्त्रेऽपि विशेषार्घ्यविध्यव्यवहितोत्तरमेव गुर्वादिपूजाकथनेन मृदस्ति पात्रं कुर्विति वाक्ययोरिव पूर्ववाक्योदितस्योत्तरवाक्योपात्ते करणत्वभानात् । यत्तु **नव्यैः**–तथा सति देवीविनियोगात् पूर्वं स्वस्मै विनियोगादुच्छिष्टदोषः स्यादित्यतस्तयोः पात्रयोराक्षेप इत्युक्तम् । तन्न, पात्रान्तरेण विशेषार्घ्यात् किञ्चिज्जलमुद्धृत्य गुर्वादिपूजने नोच्छिष्टदोषप्रसक्तिस्तावन्मात्रस्यै-

वाऽऽक्षेपात् , भैरवाय निवेदनोत्तरमेव स्वस्मै विनियोगाच्च, रागतः प्राप्तभक्षण एव दोषप्रसक्त्या वैधे निषेधस्याप्रवृत्तेश्च । अन्यथा पाशुकहविःशेषभक्षणादावपि 'न मांसमश्नीयात्' इति निषेधातिक्रमदोषप्रसक्त्यापत्त्या बहुव्याकुली स्यात् । एतेनासंस्कृतद्रव्येणैवाऽऽत्मपूजनं कार्यमिति केषाञ्चित्साहसमपास्तम् । तस्मादेतत्तन्त्रानुसारेण द्वयोरेव पात्रयोः स्थापनमिष्टम् । यत्तु कलशस्थापनं **पद्धतिकारै**र्लिख्यते तदपि **दक्षिणामूर्तिसंहिता-ज्ञानार्णव-कल्पसूत्रा**दिषु न दृश्यते । अत एव केवलसामयिकपूजायामेव तत्स्थापनमित्युपदिशन्ति वृद्धाः । **नव्या**स्तु—

**'अनेन चन्द्रं सम्पूज्य पूजार्हः सकलो भवेत् ।**
**एवं सम्पूज्य सकलं श्रीविद्यां परितो यजेत् ॥**
**चक्रमभ्यर्च्य सकलं विधिवत् परमेश्वरि ।'**

इत्यादि**ज्ञानार्णव**श्लोकेषु सर्वत्र सकलपाठं प्रामादिकत्वेनाधिक्षिप्य कलशपदस्यैव प्रामाणिकत्वात्कलशस्थापनं तत्तन्त्रकारस्येष्टमिति क्लेशेन समर्थयन्ते ॥ ११२ ॥

अनेनैव विशेषार्घ्योदकेन गुरुन् पूजयेदित्याह—

**गुरुपादालिमापूज्य भैरवाय ददेत् पुनः ।**
**तदाज्ञाप्रेरितं तत्तु गुरुपङ्क्तौ निवेदयेत् ॥ ११३ ॥**

तत्पात्रस्थं जलं पात्रान्तरेण गृहीत्वा स्वशिरसि विभाविता परशिवादिस्वगुरुपर्यन्तपरम्परां पादुकामन्त्रेण पात्रान्तरोद्धृतार्घ्योदकाक्षतैरभ्यर्च्य स्वहृदयस्थिताय कामेश्वराय कामेश्वरीसहिताय तज्जलं दत्त्वाऽऽज्ञां गृहीत्वा दिव्यसिद्धमानवौघाख्यगुरुपङ्क्तित्रयं पुनः स्वशिरसि पूजयेदित्यर्थः । **प्राञ्च**स्तु—विशेषार्घ्यपात्रमेवाऽऽललाटमुद्धृत्य तज्जलेन स्वशिरसि परशिवादिपरम्परामोघत्रयं च सन्तर्प्य पुनर्भैरवात्मकाय स्वगुरवे शिरस्येव समर्प्य तस्य गुरोराज्ञया प्रत्यक्षगुरुपङ्क्तौ निवेदयेदिति व्याचक्षते । तदयुक्तम्, **'यावत्पूजासमाप्त्यर्घ्यपात्रचालनं न कार्यम्'** इति **तन्त्रसारो**क्तनिषेधविरोधात्, प्रत्यक्षगुरुपङ्क्तेः कादाचित्कत्वेन नित्यवच्छ्रवणविरोधाच्च, भैरवपदस्य गुरुपरत्वेन व्याख्याने मानाभावाच्च ॥ ११३ ॥

**तदीयं शेषमादाय शिवाग्नौ विश्वतस्त्विषि ।**
**पादुकां मूलविद्यां च जपन् होमं समाचरेत् ॥ ११४ ॥**
**महाप्रकाशे विश्वस्य संहारवमनोद्यते ।**
**मरीचिवृत्तीर्जुहुयान्मनसा कुण्डलीमुखे ॥ ११५ ॥**
**अहन्तेदन्तयोरैक्यमुन्मन्यां स्रुचि कल्पितम् ।**
**मथनोद्रेकसम्भूतं वस्तुरूपं महाहविः ॥ ११६ ॥**

**हुत्वा हुत्वा स्वयं चैव सहजानन्दविग्रहः ।**
**स्वप्रथाप्रसराकारं श्रीचक्रं पूजयेत् सुधीः ॥ ११७ ॥**

गुरुसम्बन्धिनं हविःशेषं गृहीत्वा गुरुपादुकामन्त्रं मूलविद्यां च जपन्विश्वतस्त्विषि सर्वतः प्रसृमरतेजस्के शिवाग्नौ स्वात्माभिन्ने वह्नौ जुहुयात् । कामाग्नाविति पाठेऽपि स्वसंविद्रूपः कामेश्वर एवाग्निरिति व्याख्येयम् । स्वात्मानं वह्नित्वेन विश्वं स्वमरीचित्वेन विभाव्य जुहुयादित्यर्थः । अत्र जपन्निति शतृप्रत्ययेन मन्त्रयोर्होमसमान-कालिकत्वोक्त्या क्रियमाणानुवादितैव युक्ता युवा सुवासा इतिवन्न तु परवीरसीतिवत्करणमन्त्रत्वमिति सूचितम् । तेन मन्त्रसमाप्तिं यावत्पुनः पुनर्हविःशेषं निःशेषकरणेन जुहुयादिति ध्वनितम् । अत एव च **'हुत्वा हुत्वा स्वयं चैव'** इति वीप्सोपपद्यते । तेन प्रतिहोमं प्रतिप्रधानन्यायेन मन्त्रयोरामनहोममन्त्रस्येव नाऽऽवृत्तिरपि तु वेदिप्रोक्षणमन्त्रस्येव सकृदेव मन्त्रयोः प्रयोगः । होमसंख्या तु हविःशेषस्य निःशेषप्रतिपत्तिपर्यन्तत्वादनियतैव । वस्तुतस्तु श्लोकत्रयेण विधित्रयम् । तेनाभ्यासात्कर्मभेदः । ततश्च समुच्चितमन्त्रद्वयस्य त्रिरावृत्तिसमकालं होमत्रयमेवेति ज्ञेयम् । पात्रहविरादीनां वासनापूर्वकं द्वितीयहोममाह–महाप्रकाश इति । प्रकाशः स्वात्माभिन्नोऽग्निरेव । तस्य महत्त्वं तु सर्वव्यापकत्वात्, निरिन्धनदीप्तत्वाद-निर्वाणत्वाच्च । तथा च **तन्त्रान्तरे मन्त्रलिङ्गम्**–

**'अन्तर्निरन्तरमनिन्धनमेधमाने**
**मोहान्धकारपरिपन्थिनि संविदग्नौ ।**
**कस्मिंश्चिदद्भुतमरीचिविकासभूमौ**
**विश्वं जुहोमि वसुधादिशिवावसानम् ॥'**

इति । संहारो नाशो वमनं सृष्टिः । तयोः कृत्ययोस्तदिच्छासाध्यत्वादेव प्रकाशस्य तदुद्यतत्वम्, **'स्वेच्छयैव जगत्सर्वं निगिरत्युद्गिरत्यपि'** इति वचनात् । तमग्निं कुण्डलिन्या मुखे विभाव्य पात्रं मनस्त्वेन भावयित्वा तदीयमरीचिरूपा वृत्तय एव हविरिति विभाव्य जुहुयात् । बहिर्मुखतया प्रसरन्तीर्वृत्तीरन्तर्मुखीकृत्य स्वात्मनि योजयेदिति भावः । तथा च **मन्त्रलिङ्गम्** –

**'धर्माधर्महविर्दीप्त आत्माग्नौ मनसा स्रुचा ।**
**सुषुम्णावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥'**

इति । मनसेति तृतीया तु सहार्थ इति **प्राञ्चः** । तत्पक्षे शुद्धेर्मनस्त्वेन वासना कार्या । **'पलेन मनसा सार्धम्'** इति **वृद्धानामुक्तेरिति** समर्थनम् । प्रकारान्तरेण वासनापूर्वकं तृतीयां पूर्णाहुतिमाह–अहन्ता स्वात्मनिष्ठा । इदन्ता विश्वनिष्ठा । तयोरैक्यमस्त्व-(मेका)धिकरणवृत्तित्वमिति मथनक्रियाविशेषणम् । तयोः सामानाधिकरण्यमनाहार्यं

यथा भासेत तथा मथनस्य विभावनस्योद्रेकेणाऽऽवर्तनेन सम्भूतं सम्यग्घनं(गुद्भूतं) वस्तुरूपं वास्तविकं तत्त्वं रूप्यते विषयीक्रियते यस्मिंस्तादृशमात्मनिर्विकल्पक-विज्ञानमेव महाहविरुन्मन्यां पूर्वोक्तलक्षणायां स्रुचि कल्पितं भावितं शिवाग्नौ जुहुयादि-त्यनुषङ्गेण तादृशं ज्ञानमपि स्वात्मन्येव लीनं कुर्यादित्यर्थः । श्रूयते च **ब्रह्मबिन्दूपनिषदि**–

**'घृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानम् ।**
**सततं मन्थयितव्यं मनसा मन्थानभूतेन ॥'**

इति । ईदृशभावनानिष्कर्षश्च **सूतगीतायाम्** उक्तः –

**'शास्त्राचार्योपदेशेन तर्कैः शास्त्रानुसारिभिः ।**
**सर्वसाक्षितयाऽऽत्मानं सम्यङ्निश्चित्य सुस्थिरः ॥**
**स्वात्मनोऽन्यतया भातं समस्तमविशेषतः ।**
**स्वात्ममात्रतया बुद्ध्वा पुनः स्वात्मानमद्वयम् ॥**
**शुद्धं ब्रह्मेति निश्चित्य स्वयं स्वानुभवेन च ।**
**निश्चयं च स्वचिन्मात्रे विलाप्याविक्रियेऽद्वये ॥**
**विलापनं च चिद्रूपं बुद्ध्वा केवलरूपतः ।**
**स्वयं तिष्ठेदयं साक्षाद् ब्रह्मवित्प्रवरो मुनिः ॥**
**ईदृशीयं परा निष्ठा श्रौती स्वानुभवात्मिका ।'** इति ।

**प्राञ्चस्तु**–अहन्ता प्रमा । इदन्ता प्रमेयम् । तयोरैक्यं प्रमाणम् । तत्त्रितय-सामरस्यरूपं वस्त्विति व्याख्यन् । तदक्षराननुगुणत्वाच्चिन्त्यम् । एवंभावनापूर्वका-हुतित्रयोत्तरं सहजोऽकृत्रिम आनन्द एव विग्रहः शरीरं यस्य तादृशः सन्, शून्याकाराद्विसर्गान्तादित्यत्र वर्णितस्वरूपः सुधीः समाहितचित्तः सन्नेव स्वप्रथाप्रस-राकारं स्वीयस्फुरत्तालहरीप्रसारत्वेन तत्रैव वर्णितं श्रीचक्रं पूजयेत् । स्वप्रथाप्रसरा-कारमिति विशेषणेन परापरपूजालक्षणं स्मारितम् । तेन च पूर्वतन्त्रोक्तां केवलामपरां पूजामपेक्ष्य मध्यमपूजैव सर्वदा कर्तुमुचितेति ध्वनितम्, अद्वैतपा(भा)नगन्धविधु-रायास्तदभ्याससहितपूजातोऽत्यन्तमपकृष्टत्वात् ॥ ११४-११७ ॥

**गणेशं दूतरीं चैव क्षेत्रेशं दूतिकां तथा ।**
**बाह्यद्वारे यजेद्देवि देवीश्च स्वस्तिकादिकाः ॥ ११८ ॥**

गणेशक्षेत्रपालयोर्दूतरीदूत्यौ क्रमेण शक्ती । एतन्मिथुनद्वयं द्वारशाखयोरभ्यर्च्य स्वस्तिकासरस्वतीश्रीदुर्गाभद्रकाल्यादिका देव्यो बाह्यद्वारे यष्टव्याः ॥ ११८ ॥

**ततश्चान्तस्त्रिकोणेऽपि गुरुपङ्क्तिं त्रिधा स्थिताम् ।**
**तदन्तश्च महादेवीं तामावाह्य यजेत् पुनः ॥ ११९ ॥**

त्रिकोणेऽप्यन्तर्बिन्दोः पश्चाद्भागे पङ्क्तित्रयेणोपविष्टां दिव्यसिद्धमानवौघात्मिकां मुनिवेदनागसंख्यां गुरुपङ्क्तिं यथासम्प्रदायमिष्ट्वा तदन्तर्बिन्दुचक्रे तां प्रसिद्धां महादेवीमावाह्य पुनरुपचारैस्तामेव यजेत् ॥ ११९ ॥

तामेव विशेषयन्नुपचाराणां वासनामाह–

**महापद्मवनान्तस्थां कारणानन्दविग्रहाम् ।**
**मदङ्कोपाश्रयां देवीमिच्छाकामफलप्रदाम् ॥ १२० ॥**
**भवतीं त्वन्मयैरेव नैवेद्यादिभिरर्चयेत् ।**

महापद्मवनं सहस्रारकमलं तदन्तस्थाम् । कारणभूतो य आनन्दो विषयानन्दबिन्दुसन्दोहमूलभूतो ब्रह्मानन्दः, **'एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'** इति **श्रुतेः** । अथवा कारणे हेतौ जातः कारणः । तत्र जात इत्यण् । स चासावानन्दश्च स एव विग्रहः स्वरूपं यस्या महादेव्यास्ताम्, **'महत्यै वा एतद्देवतायै रूपं यन्मधु'** इति **श्रुतेः** । मदङ्कोपाश्रयां परमशिवपर्यङ्कनिलयां त्वां त्वन्मयैरेवोपचारैरर्चयेत् । **'ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्'** इति **भगवद्वचनात्** ।

**'अर्पयेत् सह गन्धेन पृथिवीं कुसुमेन खम् ।**
**धूपेन वायुं दीपेन तेजोऽन्नेन रसं सुधीः ॥'**

इत्यादिवचनैरुपचाराणां पञ्चभूतात्मकत्वेन सम्प्रदायार्थप्रकरणे–**'पञ्चभूतमयं विश्वं तन्मयी त्वं सदाऽनघे'** (७।२८) इत्युक्तत्वेन चोपचाराणां देवीमयत्वमिति तु **प्राञ्चः** । इच्छाकाम इच्छाविषयः । उपचारेषु पाद्यस्य प्राथम्येऽपि नैवेद्यस्यैवाऽऽद्यत्वेन ग्रहणं तु **विशुद्धेश्वरतन्त्रे–**

**'उक्तेष्वेषूपचारेषु यत्किञ्चिद(न्न)लभय(भेद्य)दि ।**
**तत्कल्पनीयं मनसा मूलबीजत्रयोपरि ॥**
**पादुकां पूजयामीति त्रिधा पुष्पं विनिक्षिपेत् ।'**

इति वचनेन प्रत्यक्षोपचारासम्भवे मानसिकस्य विधानं नैवेद्यातिरिक्तविषयमिति विशेषद्योतनार्थम् । अत एवाऽऽहुः **नव्याः** – बालातोऽतिदेशात्प्राप्तस्यापि **'नैवेद्यं षड्रसोपेतम्'** इत्यादिना पुनर्विधिस्तु **'मनःकल्पितरूपं वा त्रिपुरायै निवेदयेत्'** इति पद्धतौ विहितस्य विकल्पस्य निरासार्थमिति । अथवा षष्ठीतत्पुरुषबहुव्रीह्योर्नैवेद्यादिपदयोः शब्दतः सारूप्यादेकशेषः । वस्तुतस्तु नैवेद्यान्तैरर्चयेदित्येवार्थः, व्युत्क्रमे

तस्यैवाऽऽदित्वात् । देवतान्तरोपास्तौ पुष्पान्तपूजोत्तरमेवाऽऽवरणपूजाया विहिताया इहापवादार्थमित्थमुक्तिः । तेन **कल्पसूत्रै**कवाक्यता सङ्गच्छते, तत्र नैवेद्यान्तानामेव चतुःषष्टेरुपचाराणामावरणार्चनात्पूर्वं विधानात् । नैवेद्यमादयश्चेति द्वन्द्वसमास एव वाऽङ्गीकरणीयः ॥ १२०-१२०$\frac{1}{2}$ ॥

**त्रिकोणे तत्स्फुरत्तायाः प्रतिबिम्बाकृतीः पुनः ॥ १२१ ॥**
**तत्तत्तिथिमयीर्नित्याः काम्यकर्मानुरूपिणीः ।**

अत्रार्चयेदित्यनुषङ्गः । त्रिकोणे मध्यत्र्यस्रे तत्तत्तिथ्यभिन्ना नित्याः पूजयेत् । **ज्ञानार्णवे** तु त्र्यस्रबिन्दोर्मध्ये महात्रिकोणान्तरं विभाव्य तत्र पूजयेदित्युक्तमिति **नव्याः** । परं तु **'विभाव्य च महात्र्यस्रम्'** इति **अर्णव**वाक्ये **तन्त्रान्तर-कल्पसूत्रयो**रानुगुण्यापत्यैकस्यैव त्रिकोणस्य महत्त्वेन विभावनमात्रमुच्यत इति व्याख्यातुं युक्तत्वान्नातीव **नव्यो**क्तावेव विश्वसनीयम् । **तन्त्रराजे** तु बिन्दावेव पूजनमुक्तम् । चतुरस्रान्तराले वा तत्पूजेति त्वावरणान्ते वक्ष्यते । एतासां नामानि तु शास्त्रारम्भे मूल एवोक्तानि । तन्मन्त्रोद्धारस्तु **कल्पसूत्रे तन्त्रराजे** चैकरूपः । **ज्ञानार्णवा**दौ तु विलक्षणः । तस्या देव्या या स्फुरत्ता तदात्मिका देवीप्रतिबिम्बरूपा ज्ञानेन देवीसमानवेषतया ध्यातव्या इत्युक्तं भवति । उक्तं च **स्वतन्त्रतन्त्रे**—

**'नवावरणशक्तीनां ध्यानं देव्याः समं भवेत् ।**
**कामाङ्कयन्त्रादन्यत्र भूषावर्णायुधादिकम् ॥**
**तत्समं परमेशानि चक्रस्थानामशेषतः ।'**

इति । **संहिता**यामपि—**'अथवा रश्मयः सर्वा देवीरूपेण चिन्तयेत्'** इति । तत्तत्तिथिमयीरिति तत्तत्पदबहुवचनाभ्यामिदमुक्तं भवति—आदौ तत्तत्तिथिनित्यां सम्पूज्य पश्चात्सर्वास्तिथिनित्याः पूजयेदिति । तत्प्रकारश्चोक्तो **ज्ञानार्णवे**—

**'एतस्मिन्समये देवि तिथिनित्यां प्रपूजयेत् ।**
**कामेश्वर्यादिका नित्या विचित्रान्ता महेश्वरि ॥**
**प्रतिपत्पौर्णमास्यन्तास्तिथिरूपाः प्रपूजयेत् ।**
**विभाव्य च महात्र्यस्रमप्रदक्षोत्तरक्रमात् ॥'**

इत्यादिना रेखात्रये पञ्च पञ्च मध्ये षोडशीं च सङ्कीर्त्य—

**'प्रतिपत्तिथिमारभ्य पौर्णमास्यन्तमद्रिजे ।**
**एकैकां पूजयेन्नित्यां महासौभाग्यमाप्नुयात् ॥**
**कृष्णपक्षे महेशानि पूजयेत्तिथिमण्डलम् ।**
**विचित्राद्या वरारोहे यावत्कामेश्वरी भवेत् ॥**

**पूजनीया विलोमेन अन्यत्र परमेश्वरि ।**

**कलाः षोडश देवेशि यस्तु चन्द्रकलाः क्रमात् ॥**

**स सौभाग्यं महादेवि प्राप्नोति गुरुशासनात् ।**

**कामेश्वर्यादिका नित्याः पूजयित्वा क्रमात्ततः ॥**

**तिथिनित्यां त्रिधा देवि पूजयेद्भाग्यहेतवे ।**

**पुनः श्रीत्रिपुरां नित्यां यजेत् सौभाग्यहेतवे ॥'** इति ।

अत्रैतस्मिन् समय इत्यर्धेन तिथिनित्यार्चनस्यापूर्वो विधिः । समय इति तु पाठ-प्राप्तक्रमानुवादः । तिथिनित्यामित्येकत्वस्योपादेयगतत्वेन विवक्षितत्वादुपस्थितत्वाच्च तत्तत्तिथिनित्याया एकस्याः पूजनं कुर्यादित्यर्थः । ततः कामेश्वर्यादिका इति श्लोकेन पञ्चदशानामपि नित्यानां पूजनान्तरं विभाव्य चेत्यादिना तदपेक्षितेतिकर्तव्यतां च विधाय विसर्गे षोडशीं यजेदित्यनेन त्रिपुरसुन्दर्या एव महानित्यायाः पूजनान्तरं विहितम् । ततोऽस्यैव पूजनत्रयस्य विवरणायोत्तरो ग्रन्थः । तत्र प्रतिपत्तिथिमार-भ्येत्यनेनैकैकनित्यापूजायाः शुक्लकृष्णपक्षभेदेन व्यवस्थितक्रमविधानम् । मन्त्रोद्धार-नित्यान्यासादिषु कामेश्वर्यादिक्रमस्यैव क्लृप्तत्वेन तादृशक्रमे चित्रो(त्रा)[या इ]व तासां व्युत्क्रमेऽपि त्रिपुरसुन्दर्याश्चित्रातः प्रागव्यवस्थानेनैव पूजनं तदपूजनमेव वा मा प्रसाङ्क्षीदतः कलाः षोडशेत्यनेन पुनस्तत्कीर्तनेन कामेश्वर्युत्तरं तत्पूजाप्रापणेन दृढीकरणम् । एवं गुरुशासनादित्यन्तेन ग्रन्थेन तिथिनित्यापूजनप्रकारो योऽयमुक्तः स नित्यः । पञ्चदश नित्याः प्रथमत्र्यस्रेखास्थितपञ्चदशस्वरेषु पूजा(ज्या) **'विसृष्टौ षोडशीं मूलविद्यया चाभ्यर्च्य मध्ये'** इति **कल्पसूत्रे** तु प्राथमिक्यैकैकनित्यापूजा कृष्णपक्षे व्युत्क्रमश्चेति द्वयमेव नास्तीति विशेषः । ततः कामेश्वर्यादिका इति ग्रन्थेन तु पूजनत्रयोत्तरं पुनरप्येकैकनित्यापूजनं त्रित्वसंख्याविशिष्टमेकविंशतिमनुब्रूयादित्या-दिवत् काम्यं विधीयते । परं तु न तन्नित्यस्य बाधकम्, पुनःशब्देन काकाक्षिन्यायेन पूर्वोत्तरयोरन्वितेन समुच्चयस्य वाचनिकत्वात् । एवं च लक्ष्मीकामश्चेत्पूर्वोक्तं पूजनत्रयं कृत्वा तत्तत्तिथिनित्यां त्रिः सम्पूज्य त्रिपुरसुन्दरीं पूजयेदित्यर्थः । तदिदं द्योतयितुमुक्तं मूले – काम्यकर्मानुरूपिणीरिति । स्वस्वकामनासदसद्भावानुगुण्येन पूजयेदिति तदर्थः । **केचित्** तु–त्रिधापूजनादिकमपि नित्यमेवेत्याहुः । एतत्पक्षाभि-प्रायेण **प्राञ्चो**ऽपि काम्यकर्मपदं नित्यचक्रार्चनपरमेव, बहुफलकपदत्वेन सर्वेषामुपास-कानामिच्छाविषयत्वादिति व्याचक्षते । **परे** तु–तृतीयपूजनोत्तरं त[त्त]त्तिथिनित्यां सकृदेव पूजयेत् । प्रथमपूजायां द्वितीयपूजायां च द्विःपूजितत्वेन तेन सह त्रैविध्योक्तिरनुवाद इति मन्यन्ते । **अन्ये** तु–कामेश्वर्यादिका नित्या विचित्रान्ता इत्यादिकं शुक्लप्रतिपदभिप्रायेणैवोक्तम् । तदिदमुपलक्षणं तत्तत्तिथिनित्याप्राथम्य-तत्पूर्वतिथिनित्याचारम्ययोः(र्चारम्भयोः) । ततश्च शुक्ले द्वितीयायां भगमालिन्यादि-

कामेश्वर्यन्ताः पूज्याः । तृतीयायां नित्यक्लिन्नादिभगमालिन्यन्ता इत्यादिकः क्रमः । एवं कृष्णपक्षे विचित्राद्या इत्यादेरप्युपलक्षणत्वाच्चित्रादिकामेश्वर्यन्ता ज्वालामालिन्यादिचित्रान्ताः सर्वमङ्गलादिज्वालामालिन्यन्ता इत्यादिः कृष्णप्रतिपदादिषु क्रम इत्याहुः । **नव्या** अप्येतदनुमन्यन्ते । तादृशव्याख्यायां मूलं त उभय एव जानते । समूलकत्वे यथासम्प्रदायं व्यवस्थेति द्रष्टव्यम् ॥ १२१-१२१$\frac{१}{२}$ ॥

अथ त्रैलोक्यमोहनादिचक्रेषु प्रतिचक्रं योगिन्यश्चक्रं चक्रेश्वरी सिद्धिर्मुद्रा चेति पञ्चानां पदार्थानां पूर्वतन्त्रोक्तपूजाक्रमेण वासना उपदिशति–

**तत्र प्रकटयोगिन्यश्चक्रे त्रैलोक्यमोहने ॥ १२२ ॥**
**मातृकास्थूलरूपत्वात् त्वगादिव्यापकत्वतः ।**
**योगिन्यः प्रकटा ज्ञेयाः स्थूलविश्वप्रथात्मनि ॥ १२३ ॥**

तत्र नवावरणदेवीनां मध्ये, नित्यापूजनोत्तरदेशे वा । त्रैलोक्यमोहनचक्रस्य ज्येष्ठाशक्तिनिवृत्तिशक्त्यादिरूपा वासनाः पूर्वमुक्तास्तत्र पूजनीया देवताः प्रकटयोगिन्य इत्युच्यन्ते । [ता]स्वणिमाद्यष्टकं(के) [प्रकटत्वं] परापश्यन्त्यादिचतुर्विधा मातृका [तत्रत्या] स्थूला वैखरीनामिका, अकचटतपय[शवर्गरूपा तद्रूपत्वादित्यर्थः । तथा चोक्तं] शास्त्रारम्भ एव द्वादशश्लोक्याम्– **'वन्दे तामष्टवर्गोत्थमहासिद्ध्यष्टकेश्वरीम्'** (१।१०) इति । ब्राह्म्याद्यष्टकस्य प्रकटरूपतामाह–त्वगादीति । **'त्वगसृङ्मांसमेदोस्थि-मज्जशुक्राणि धातवः'** इति सप्त धातवो **वैद्यके** प्रसिद्धाः । ओजोनामको धातुरष्टम इति तु **वेदभाष्ये** । एतेषां चाभिमानिन्यो देवता ब्राह्म्याद्याः क्रमादष्टौ । तासां च शरीरे स्थितिर्भ्रूमध्यनितम्बनाभिहृदयकण्ठास्यनासाललाटादिस्थानावच्छेदेनेति **प्राचां** ग्रन्थेषु प्रसिद्धम् । ततश्च लिङ्गशरीराद्यपेक्षया त्वगादिघटितशरीरस्य स्थूलत्वात्तदीय-देवतानामपि प्रकटत्वम् । नन्वेवं सति प्राप्तिसिद्धिसर्वकामसिद्ध्योस्**तन्त्रान्तरे** पूजनीयत्वेनोक्तस्य मुद्रादशकस्य च कथं प्रकटत्वमित्याशङ्क्य सर्वानुगतं निर्वक्ति–स्थूलेति । स्थितत्वाच्चेति शेषः । विश्वस्य षट्त्रिंशत्तत्त्वात्मकस्य या प्रथा स्थूला क्षितिरूपा तदात्मनि चक्रे भूगृहे स्थितत्वादपि प्रकटत्वमित्यर्थः । एतेन यत् **सुन्दरीतापिन्यां** श्रूयते– 'साणिमाद्यष्टकं भवति समात्रष्टकं भवति सप्रकटं भवति' इति, तत्प्राप्तिसिद्ध्यादेरुपलक्षणपरत्वेन व्याख्येयमिति ध्वनितम् ॥ १२२-१२३ ॥

अणिमादीनां ध्यानान्याह दशभिः –

**अणिमाद्या महादेवि सिद्धयोऽष्टौ व्यवस्थिताः ।**
**तास्तु रक्ततरा वर्णैर्वराभयकरास्तथा ॥ १२४ ॥**
**धृतचिन्तामहारत्ना मनीषितफलप्रदाः ।**

वर्गाष्टकाभेदाभिप्रायेण श्रुतावष्टत्वोक्तिरिति द्योतनायाष्टावित्युक्तम् । वराभयेति । पाशाङ्कुशौ वामदक्षयोर्दधतीरिति तु **मन्त्रमहोदधौ** । चिन्तामहारत्नं चिन्तामणिनामकं रत्नम् । तच्छिरसा दधती ॥ १२४-१२४ $\frac{1}{2}$ ॥

**ब्राह्म्याद्या अपि तत्रैव यष्टव्याः क्रमशः प्रिये ॥ १२५ ॥**
**ब्रह्माणी पीतवर्णा च चतुर्भिः शोभिता मुखैः ।**
**वरदाभयहस्ता च कुण्डिकाक्षलसत्करा ॥ १२६ ॥**

तत्रैव द्वितीयवीथ्यां द्वितीयरेखायां वा । कुण्डिका कमण्डलुः । अक्षोऽक्षमाला ॥ १२५-१२६ ॥

**माहेश्वरी श्वेतवर्णा त्रिनेत्रा शूलधारिणी ।**
**कपालमेणं परशुं दधाना पाणिभिः प्रिये ॥ १२७ ॥**

एणं हरिणम् ॥ १२७ ॥

**कौमारी पीतवर्णा च शक्तितोमरधारिणी ।**
**वरदाभयहस्ता च ध्यातव्या तु सुरेश्वरि ॥ १२८ ॥**

शक्तिः सैन्तीति महाराष्ट्रभाषया प्रसिद्धमायुधम् । तोमरो लोड इति प्रसिद्धः खलूरिकायां विद्यमानः ॥ १२८ ॥

**वैष्णवी श्यामवर्णा च शङ्खचक्रगदाब्जकान् ।**
**हस्तपद्मैश्च बिभ्राणा भूषिता दिव्यभूषणैः ॥ १२९ ॥**

चक्रं सुदर्शनाख्यं सहस्रारम् । गदा भाषया गदा इति प्रसिद्धा । अब्जकः पद्मः । **'वा पुंसि पद्मं नलिनम्'** इत्यादि**कोशे** वा पुंसीत्यस्य पुष्कराम्भोरुहाणि चेत्यन्तमन्वयात् पुंलिङ्गता ॥ १२९ ॥

**वाराही श्यामलच्छाया पोत्रिवक्त्रसमुज्ज्वला ।**
**हलं च मुसलं खड्गं खेटकं दधती भुजैः ॥ १३० ॥**

पोत्री वराहः । **'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः'** इति **अमरः** । हलं लाङ्गलम् । खेटकं चर्म ॥ १३० ॥

**ऐन्द्री तु श्यामलच्छाया वज्रोत्पललसत्करा ।**

इन्द्राणी श्यामलेन्द्रनीलमणिवर्णा छाया कान्तिर्यस्याः सा ॥ १३०$\frac{1}{2}$ ॥

**चामुण्डा कृष्णवर्णा च शूलं डमरुकं तथा ॥ १३१ ॥**
**खड्गं वेतालकं चैव दधाना दक्षिणैर्भुजैः ।**
**नागखेटकघण्टाश्च दधानाऽन्यैः कपालकम् ॥ १३२ ॥**

वेतालो भूतपिशाचाधिपतिर्देवताविशेषः ।नागः सर्पः ।अन्यैर्वामैः ॥ १३१-१३२ ॥

**महालक्ष्मीस्तु पीताभा पद्मे दर्पणमेव च ।**
**मातुलुङ्गफलं चैव दधाना परमेश्वरि ॥ १३३ ॥**

पद्मे कमलद्वयम् । मातुलुङ्गो बीजपूरः ॥ १३३ ॥

**एवं ध्यात्वा यजेदेताश्चक्रेशीं त्रिपुरां ततः ।**
**कर्मेन्द्रियाणां वैमल्यात्करशुद्धिकरी स्मृता ॥ १३४ ॥**
**करशुद्धिभवा सिद्धिरणिमा चात्र संस्थिता ।**

एता अणिमादिमहालक्ष्म्यन्ताः । त्रिपुराख्या त्रैलोक्यमोहनचक्रेश्वरी तस्यास्तद्विद्यायाश्च करशुद्धिकरीति नाम निर्वक्ति–कर्मेन्द्रियाणामिति । करयोः कर्मेन्द्रियविशेषरूपत्वात् करपदं कर्मेन्द्रियसामान्योपलक्षकम् । तेषां वैमल्यं नाम तत्कृतदुरितक्षालनं तत्कर्तृत्वं प्रवृत्तिनिमित्तीकृत्य तत्पदं प्रवर्तत इत्यर्थः । प्रतिचक्रमेकैका सिद्धिस्तत्तच्चक्रेश्यभेदेन विभाव्यैव पूजनीयेत्याह–करशुद्धिभवेति । नवमचक्रे योनिमुद्रा पूजनीयेति मूलकृतैवाग्रे वक्ष्यते । तेन ज्ञापकेनात्र चकारात् सर्वसंक्षोभिणीमुद्राऽपि पूज्येत्यर्थो वर्णनीयः ॥ १३४-१३४$\frac{1}{2}$ ॥

अथ द्वितीयावरणवासनामाह–

**षोडशस्पन्दसन्दोहचमत्कृतिमयीः कलाः ॥ १३५ ॥**
**प्राणादिषोडशानां च प्राणानां प्राणनात्मिकाः ।**
**बीजभूतस्वरात्मत्वाकलनाद्ब बीजरूपगाः ॥ १३६ ॥**
**अन्तरङ्गतया गुप्तयोगिन्यः संस्थिता मताः ।**
**कामाकर्षणरूपाद्याः सृष्टिप्राधान्यतः प्रिये ॥ १३७ ॥**
**सर्वाशापूरकाख्ये तु चक्रे वामेन पूजयेत् ।**
**पाशाङ्कुशधरा एता रक्ता रक्ताम्बरावृताः ॥ १३८ ॥**

**प्राणशुद्धिमयी सिद्धिर्लघिमा भोक्तुरात्मनः ।**
**त्रिपुरेशी च चक्रेशी पूज्या सर्वोपचारकैः ॥ १३९ ॥**

षोडशसंख्या ये स्पन्दाः स्पन्दनशीलाः प्राणाः प्राणापानादयः पञ्च, एकादशेन्द्रियाणीत्येवं षोडश । एतेषां मध्ये वायुचलनमेव स्पन्दनम् । इन्द्रियेषु स्वस्वविषयाभिमुख्यमेव स्पन्दनम् । एते सर्वेऽपि प्राणपदवाच्यत्वात् स्पन्दाः, **'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति'** इति **श्रुतौ** प्रथमप्राणपदस्य प्राणादिवृत्तिपञ्चकपरत्वेन द्वितीयप्राणपदस्यैकादशेन्द्रियपरत्वेन च **भगवत्पादभाष्यकारै**र्व्याख्यातत्वात्, 'सप्त गतेर्विशेषितत्वाच्च' इति **उत्तरमीमांसा**द्वितीयाधिकरणे तथा निर्णयाच्च । एतेषां षोडशप्राणानां सन्दोह एकीकरणमेव चमत्कृतिः, अनवरतस्पन्दनस्वभावानामेकत्र स्तम्भनस्यासाध्यत्वेन चमत्काराधायकत्वात् । सम्यग्दोहः प्रपूरणमिति व्युत्पत्त्या स्वात्मैकतानतारूपा परिपूर्तिरेव चमत्कारस्तदाधायिकास्तदभिन्ना वा तन्मयीः । अमुमेवार्थं विवृणोति–प्राणादीति । षोडशप्राणानां प्राणनं जीवनं तदात्मिकाः, तेषां स्वात्मैकतानतापरित्यागेन विषयान्तरसञ्चारस्यैव मरणरूपत्वात् । उक्तं च **क्रमोदये–'स्थैर्यमेव चमत्कारो विना विषयसङ्गतिम्'** इति ।

**प्राञ्चस्तु**– पञ्च भूतानि दशेन्द्रियाणि मनश्चेति षोडश स्पन्दास्तत्त्वानि, सन्दोहः समूह इति पूर्वार्द्धं व्याख्याय प्राणादयो नागकूर्मादयश्चेति दश वायवोऽन्ये षड्वायवस्तु **आगमान्तरे** मृग्याः, एवं षोडश प्राणा इत्युत्तरार्द्धं व्याचक्षते । बीजभूता अनुस्वारैः सहिताः, तत्साहित्यमन्तरेण वर्णानां बीजत्वाभावात् । तादृशस्वरात्मताया आकलनेन बीजरूपं सृष्टिबीजत्वं गच्छन्तीति तथा त्वगादिधात्वपेक्षयाऽन्तरङ्गत्वाद् गुप्ततया संस्थिता गुप्तयोगिन्य इति मताः कामाकर्षिण्याद्याः कलाः सर्वाशापूरकचक्रे पूजयेत् । इतिशब्दाध्याहारे योगिनीशब्दे न द्वितीयापेक्षा । द्वितीयार्थे प्रथमा विभक्तिरिति तु **प्राञ्चः** । एताः सृष्टिबीजभावापन्नत्वेन वामाशक्तिप्रधानत्वाद्वामेन स्वाग्राद्यप्रादक्षिण्येनैव पूजयेत् । वाममार्गेणेति व्याख्यानं त्वाग्रहमात्रम् । एतासां ध्यानमाह–पाशेति । **'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः'** इति **श्रुत्यु**क्तलक्षणस्य संघातात्मकस्य भोक्तुरात्मनो ये षोडश प्राणास्तच्छुद्ध्यभिन्ना लघिमा सिद्धिस्त्रिपुरेशी, चकारात् सर्वविद्राविणीमुद्रा च पूज्येत्यर्थः ॥ १३५-१३९ ॥

तृतीयावरणवासनामाह–

**प्रकृत्यष्टकरूपस्थाः कवर्गाद्यष्टवर्गगाः ।**
**अनङ्गकुसुमाद्याश्च सर्वसंक्षोभकारके ॥ १४० ॥**
**चक्रे चात्यन्तरङ्गत्वादेता गुप्ततरा मताः ।**
**पाशाङ्कुशधनुर्बाणकरा रक्ताः समर्चयेत् ॥ १४१ ॥**
**तत्तदाकारबुद्ध्यात्मभोग्यभोक्तुर्महीशितुः ।**
**पिण्डादिपदविश्रान्तिसौन्दर्यगुणसंयुता ॥ १४२ ॥**

**चक्रेश्वरी बुद्धिशुद्धिरूपा च परमेश्वरी ।**
**महिमासिद्धिरूपा च पूज्या सर्वोपचारकैः ॥ १४३ ॥**

**सांख्यतन्त्रे** हि पञ्चविंशतिस्तत्त्वानि गणितानि–प्रकृतिर्महानहङ्कारः, पञ्च-तन्मात्राणि, पञ्चभूतानि, दशेन्द्रियाणि, मनः, पुरुषश्चेति । तेषामाद्या सर्वेषां प्रकृतिर्न कस्यापि विकारः । द्वितीयाद्याः सप्त तु स्वपूर्वपूर्वेषां विकाराः स्वोत्तरोत्तरेषां प्रकृतयश्च । नवमाद्याः षोडश तु स्वपूर्वविकारा एव । न कस्यापि प्रकृतयः । पञ्चविंशस्तु न कस्यापि विकारो न कस्यापि प्रकृतिश्चेति वस्तुस्थितिः । तदेतदुक्तम् **आर्यकृष्णेन सांख्यसप्तत्याम्**–

**'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।**
**षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥'**

इति । एतेषु प्राथमिकं तत्त्वाष्टकं प्रकृतिरूपत्वात् प्रकृत्यष्टकपदेनेह गृह्यते । स्पष्टमन्यत् । त्रिपुरसुन्दर्याख्यचक्रेश्वरीवासनामाह–तत्तदिति । घटपटाद्याकारबुद्धिरूपं यद्भोग्यं तस्य भोक्ताऽत एव महीशिता भूपतिरिव तस्य पिण्डादिपदेषु मूलाधारानाहताज्ञासहस्राख्येषु चतुर्षु स्थानेषु या प्रत्येकं विश्रान्तिः संसारकदध्वाटनजन्यश्रमनिवृत्तिपूर्वकसहजानन्दावाप्तिः, सैव सौन्दर्याख्यो गुणः, तेन संयुता तत्प्रदात्री । तदुक्तं च–

**'पिण्डे मुक्ता पदे मुक्ता रूपे मुक्ताः षडानन ।**
**रूपातीते तु ये मुक्तास्ते मुक्ता नात्र संशयः ॥'**

इति । ईदृशी या बुद्धिशुद्धिः **'ऋतम्भरा तत्र प्रज्ञा'** इति **योगसूत्रोक्त**सत्यग्राहित्व-लक्षणा तद्रूपा परमेश्वरी त्रिपुरसुन्दरीनाम्नी चक्रेश्वरी तद्रूपैव महिमासिद्धिश्चकारात् सर्वाकर्षिणीमुद्रा च पूज्येत्यर्थः ॥ १४०-१४३ ॥

चतुर्थावरणवासनामाह –

**द्वादशग्रन्थिभेदेन समुल्लसितसंविदः ।**
**विसर्गान्तदशावेशाच्छाक्तानुभवपूर्वकम् ॥ १४४ ॥**
**उन्मेषशक्तिप्रसरैरिच्छाशक्तिप्रधानकैः ।**
**तथैवाकुलसङ्घट्टरूपैर्वर्णचतुष्टयैः ॥ १४५ ॥**
**वेद्योष्मरूपसाद्यर्णैर्मिश्रेच्छाभावितैरपि ।**
**कुलशक्तिसमावेशरूपवर्णद्वयान्वितैः ॥ १४६ ॥**
**शक्तेः सारमयत्वेन प्रसृतत्वान्महेश्वरि ।**
**सम्प्रदायक्रमायाताश्चक्रे सौभाग्यदायके ॥ १४७ ॥**

व्याकरणतन्त्रे चतुर्दशाक्षरोऽयं परणकारेणाण्प्रत्याहारः । स एव मन्त्रतन्त्रे भूतलिपिमन्त्र इत्युच्यते । तथा च तदुद्धारः–**'पञ्चह्रस्वाः सन्धिवर्णा व्योमवाय्वग्नि-कन्धराः'** इति । कं च धरा चेति विग्रहः । एते च वर्णा वैखरीरूपत्वेन भासमाना अपि मध्यमारूपा एवेति सम्प्रदायः । चतुर्दशारचक्रस्थाश्चतुर्दशदेवतास्तु भूतलिपिवर्णा-भिमानिशक्तिकदम्बतः प्रसृताः । वर्णास्तु मूलाधारस्थकुलकुण्डलिन्याः षट्चक्रभेदे-नाकुललिङ्गेन योगान्निर्गत्य(च्छ)दमृतानुभवदशायामेव सर्वेऽपि प्रायेणोत्पन्नाः । तत्रा-कुलाल्लिङ्गादकारः । इच्छाशक्तेरिकारः । तदुन्मेषशक्तेरुकारः । इच्छोन्मेषमिश्रि-तायाः कुण्डलिन्या ऋकारलृकारौ । अकुलस्य तादृशकुण्डलिन्याः सङ्घट्टनादेकार ओकारश्च । ताभ्यामकुलस्य पुनः सङ्घट्टादैकार औकारश्च । एवमन्येषां वर्णानामु-त्पत्तिः **परापञ्चाशिका-सौभाग्यसुधोदया**दिषु वर्णिताऽनुसन्धेया । तदिदमाह–द्वादशेति । प्रतिचक्रमध ऊर्ध्वं चेति द्वौ द्वौ ग्रन्थी । तेषां भेदनेनोर्ध्वं लसितायाः संविदः कुण्डलिन्याः । विसर्गः षोडशस्वरस्तदन्तस्य षोडशान्तस्य ब्रह्मरन्ध्रस्य दशायां य आवेशस्तस्माज्जायमानो यः शाक्तानां कौलिकानामनुभवस्तत्पूर्वकं यथा भवति तथोत्पन्नैश्चतुर्दशभिर्वर्णैरुपलक्षितायाः शक्तेः शक्तिसमष्टिरूपकुण्डलिन्याः सारमयत्वेन निष्कर्षरूपेण प्रसृतत्वादेता देवताः सम्प्रदाययोगिन्य इत्युच्यन्ते । ईदृशार्थस्य **सम्प्रदाय**क्रमायातत्वादिति योजना । तान् वर्णानाह– उन्मेषेति द्वाभ्याम् । एतेषां तृतीयाबहुवचनान्तानां पदानां चतुर्दशभिरिति विशेष्यमध्याहार्यम् । वेद्योष्मरूपसाद्यर्णै-रित्येव वा विशेष्यम् । उन्मेषशक्तितः प्रसरो यस्योकारस्य तद्वद्भिः । अर्शआद्यच् । इच्छाशक्तिः प्रधानोपजीव्या यस्येकारस्य तद्वद्भिः । अकुलस्यार्थात् पूर्वोक्ताभ्यां भाविभ्यां च यः सङ्घट्टस्तद्रूपं वर्णानां चतुष्टयमेतद्रूपं येषु तैः । तद्रूपैरित्यस्य योग्यतया सन्ध्यक्षरेष्वेवाऽऽर्थिकी विशेषणता । **प्राञ्च**स्तु–अकुलेन सङ्घट्ट इति व्याख्याय वर्णचतुष्टये तस्य विशेषणत्वं मन्यमाना अप्यकुलपदेनाकारमपि स्वातन्त्र्येणोद्धरन्ति । तद् दुर्घटम्, विशेषणत्वेनान्वितस्य स्वातन्त्र्यायोगात्, तथात्वे चतुष्टयैरित्यस्य विरोधात्, तस्य चतुर्भिरित्येव भवतां व्याख्यानात् । वेद्यायाः संविद्रूपाया वह्निकुण्डलिन्या ऊष्मरूप उष्णस्पर्शरूपो यो वर्णो रेफः, रेफाधिकारे **'श्रीकण्ठ ऊष्मा हृदयम्'** इति **नान्दनात्** कोशात् । तस्योष्मणः सादिरिति विशेषणम् । विशेष्यविशेषणभावे कामचारान्न पूर्वनिपातः । स्वस्याऽऽदिना यकारेण सहित इत्यर्थः । वेद्योष्मरूपः सादिरर्णो येषु तैः । यकारसहितरेफवद्भिरिति यावत् । अथवा वेद्योष्मणो रूपं स्वरूपं येषु तैः । आदिसहितैश्च तैरर्णैश्चेति विग्रहः । **प्राञ्च**स्तु–वेद्यस्य षट्त्रिंशत्तत्त्वात्मनः संकल्परूपा ऊष्माणः शषसहास्तदन्यतमरूपो यः सादिः सकार आदिर्यस्य स हकारः, स पुनरादिर्ययोस्तौ यकाररेफौ, व्योमादिभूतपञ्चक-

वर्णेषु तयोर्हकारात् परत्वात् । तेन हयरैस्त्रिभिर्वर्णैरित्यर्थः । द्वितीयस्याऽऽदिशब्द-स्याध्याहार इति व्याचख्युः । तन्मन्दम्, अध्याहृतेनाऽऽदिशब्देन सह श्रुतस्य सादिशब्दस्य समासायोगात्, समासे सत्यप्यन्यपदार्थयोर्यकाररेफयोरेव क्रियान्वयित्वेन समस्यमानसादिपदार्थस्य हकारस्य क्रियान्वयालाभाच्च । मिश्ररूपयेच्छया भाविता-वृकारलृकारौ तद्वद्भिः । कुलेत्यकुलस्याप्युपलक्षणम् । समावेशेत्यधिकरणे घञन्तम् । कुलशक्तिश्च समावेशौ च तत्स्वरूपे ये वर्णद्वये । अकारहकाररूपवर्णयुगलवकार-लकाररूपवर्णयुगले, ताभ्यां युगलाभ्यामन्वितैः । अकुलकुण्डलिन्यकाररूपा, तत्समावेश-स्थानं सहस्रारस्येन्दुमण्डलममृतमयं वकाररूपम् । कुलकुण्डलिनी हकाररूपा, तत्समावेशस्थानं मूलाधारं पार्थिवमण्डलं लकाररूपम् । एवं चतुर्भिरन्वितैरिति यावत् । **प्राञ्चस्तु**–कुलशक्त्योः समावेशाविति तत्पुरुषमङ्गीकृत्य वकारलकारद्वयमात्र-मुद्धरन्ति । तन्न, अकारहकारयोरलाभेन न्यूनत्वापत्तेः, त्वदुक्तोद्धारयोरसम्भवस्यो-क्तत्वात् ॥ १४४-१४७ ॥

**निरन्तरप्रथारूपसौभाग्यबलयोगतः ।**
**अन्वर्थसंज्ञके देवि अणिमासदृशीः शुभाः ॥ १४८ ॥**
**सर्वसंक्षोभिणीपूर्वा देहाक्षादिविशुद्धिदाः ।**
**ईशित्वसिद्धिरपि च प्रोक्तरूपपुरत्रये ॥ १४९ ॥**
**योगादिक्लेशभेदेन सिद्धा त्रिपुरवासिनी ।**
**एताः सम्पूजयेद् देवि सर्वाः सर्वोपचारकैः ॥ १५० ॥**

निरन्तरप्रथा भेदाविषयकज्ञानं तद्रूपमेव सौभाग्यं तदेव बलं तद्विषयको योगोऽ-वयवशक्तिस्तस्याः सत्त्वादन्वर्थके योगरूढपदवाच्ये सौभाग्यदायकाख्ये चक्रे स्थिताः सर्वसंक्षोभिण्याद्या देवताः । तासां ध्यानमाह–अणिमेति । वराभयकराश्चिन्तामणिधरा इत्यर्थः । **'दर्पणपाशवामकराः पानपात्राङ्कुशदक्षकराः'** इति तु **बृहत्तन्त्रे** । ता देहस्येन्द्रियाणां त्वगादिधातूनां च विशोधिकाः । तद्रूपैवेशित्वसिद्धिः । चकारात् सर्व-वशङ्करीमुद्रा त्रिपुरवासिन्याख्या चक्रेश्वरी चेत्येताः पूजयेत् । त्रिपुरवासिनीपदं निर्वक्ति–प्रोक्तेति । तत्र तत्रोक्तं यत्पुरत्रयं प्रमातृप्रमाणप्रमेयरूपं त्रिपुटीत्वेन प्रसिद्धं तद्विषयको योगः सम्बन्धः । स च प्रमात्रादिभेदेन व्यवस्थितः । आदिपदेन भेदभानम् । तेन यः क्लेशः । भेदज्ञानस्य भयजनकतायाः **'य एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति द्वितीयाद्वै भयं भवति'** इत्यादि**श्रुति**सिद्धत्वात् । योग एवाऽऽदिक्लेशः प्रथमदुःखमिति **केचित्** । तस्य भेदेन नाशेन सिद्धा व्युत्पन्ननामा । तेन वासिनीशब्दः काष्ठतक्षणसाधनवासीशब्दवच्छेदनार्थक इत्युक्तम् ॥ १४८-१५० ॥

सनातनानां नादानां नवरन्ध्रस्थितात्मनाम् ।
महासामान्यरूपेण व्यावृत्तध्वनिरूपिणी ॥ १५१ ॥
अस्थिरस्थिरवेद्यानां छायारूपैर्दशार्णकैः ।
कुलकौलिकयोगिन्यः सर्वसिद्धिप्रदायिकाः ॥ १५२ ॥
श्वेता वराभयकराः श्वेताभरणभूषिताः ।
स्वंप्रथामननत्राणयोगादन्वर्थसंज्ञके ॥ १५३ ॥
सर्वसिद्धिप्रदाद्यास्तु चक्रे सर्वार्थदायके ।
लोकत्रयसमृद्धीनां हेतुत्वाच्चक्रनायिका ॥ १५४ ॥
त्रिपुराश्रीर्महेशानि मन्त्रशुद्धिभवा पुनः ।
वशित्वसिद्धिराख्याता एताः सर्वाः समर्चयेत् ॥ १५५ ॥

अध आरभ्योर्ध्वं प्रसृतायां सुषुम्णायां दश पर्वाणि तेषां मध्ये नवावकाशास्त एव रन्ध्रपदेनोच्यन्ते । तादृशदशस्थानान्यभिव्याप्य यावच्छरीरपातं जायमानो नादानुसन्धानाभ्यासपाटवेन श्रूयमाणो नादो मध्यमा वागित्युच्यते । स एकोऽपि नादस्तत्तत्स्थानावच्छिन्नः सन् दशभिर्नामभिरभिलप्यते–अविकृतः शून्यः स्पर्शो नादो ध्वनिर्बिन्दुः शक्तिर्बीजमक्षरमारब्धश्चेति । एवं दशधा विभक्तो यो ध्वनिस्तद्रूपिणा महासामान्यरूपेण विभाजकोपाधिदशकव्यापकेन सर्वानुगतमध्यमात्वेन धर्मेणोपलक्षिता इत्यर्थः, मध्यमास्वरूपा इति यावत् । वेद्या विषयाः पञ्च भूतानि, तानि कार्य-कारणभेदेन द्विविधानि । तेषु कार्याण्यस्थिराणि मिथ्यात्वात् । कारणानि स्थिराणि सत्यत्वात्, **'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'** इति **श्रुतेः** । तानि च कार्याणि स्थूलभूतानि व्योमादीनि कारणानि भूतसूक्ष्माणि शब्दादीनि पञ्च पञ्च, तेषां छायारूपैः प्रकाशरूपैर्दशार्णकैः कवर्गचवर्गोभयात्मकैर्दशभिर्वर्णैरुपलक्षिताः । तदिदमुक्तं चक्रसङ्केत एव–

**'भूततन्मात्रदशकप्रकाशालम्बनत्वतः ।**
**द्विदशारस्फुरद्रूपं क्रोधीशादिदशार्णकम् ॥'** (६।७६)

इति । एतेनैतत् **प्राचां** व्याख्यानम् । अस्थिरवेद्यानि कर्मेन्द्रियगोचरा वचनादीनि, स्थिरवेद्यानि ज्ञानेन्द्रियगोचराः शब्दादीनि, तत्प्रतिबिम्बरूपैष्टवर्गतवर्गोभययोगे सर्वेषां वर्णानां स्थितिरूपता तदभावे तदभाव इत्यर्थः, मातृकान्यासत्रैविध्यविदां स्पष्टत्वात् । कुलं त्रिपुटी, कौलिकश्चिद्रूपात्मा । तयोरभेद एव योगः, तद्वत्यः । कुलमिन्द्रियाणि, कौलिका विषया योगः, कार्यकारणभाव इति तु **प्राञ्चः** । आसां ध्यानमाह–श्वेता इति । स्वस्यैव प्रथा सर्वात्मत्वेन प्रसरः । तस्य मननं युक्तिभिरनुचिन्तनं [त]देव त्राणं(ण)रूपत्वात् सर्वपुरुषार्थात्मक(कं) तद्दातृत्वरूपाद्योगादवयवशक्तेः सत्त्वादन्वर्थ-संज्ञके सर्वार्थदायकचक्रे स्थिताः सर्वसिद्धिप्रदाद्या दश देवताः । त्रिपुराश्रीपदमपि

त्रिभुवनसमृद्धिकारणवाचकत्वादन्वर्थमित्याह—लोकत्रयेति । लोकत्रयशब्दोऽपि त्रिपुटीपर एवेति **अन्ये** । वशित्वसिद्धेर्वासनामाह—मन्त्रशुद्धीति । उक्तमननत्राणरूपशुद्धिजन्येत्यर्थः । उपलक्षणमेतदुन्मादिनीमुद्रायाः ॥ १५१-१५५ ॥

षष्ठावरणवासनामाह—

**ऊर्ध्वाधोमुखया देवि कुण्डलिन्या प्रकाशिताः ।**
**कुलेच्छया बहिर्भावात् कादिवर्णप्रथामयीः ॥ १५६ ॥**
**निगर्भयोगिनीवाच्याः स्वरूपावेशरूपके ।**
**सर्वरक्षाकरे चक्रे सर्वावेशकरे पराः ॥ १५७ ॥**
**सर्वज्ञाद्याः स्थिताश्चैता हस्तपुस्ताक्षमालिकाः ।**
**मातृमानप्रमेयाणां पुराणां परिपोषिणी ॥ १५८ ॥**
**त्रिपुरामालिनी ख्याता चक्रेशी सर्वमोहिनी ।**
**विद्याशक्तिविशुद्धिं च सिद्धिं प्राकाम्यसंज्ञिताम् ॥ १५९ ॥**
**एताः सर्वोपचारेण पूजयेद्देवताः क्रमात् ।**

कुण्डलिन्या ऊर्ध्वयो(र्ध्वाधो)यातायातदशायामुत्पन्नाः सर्वज्ञादिदेव्यः । अत एव निगर्भपदवाच्याः, नितरां गर्भे स्थितत्वात् । नन्वीदृशरहस्यस्थले समुत्पन्नाः कथं प्रकटा जाता इत्यत आह—कुलेच्छयेति । कुलस्य त्रिपुट्या निर्माणेच्छया ताः शक्तयो बहिरागताः । अत एव वैखरीरूपकादिवर्णमय्यो जाताः । अत्र कादिशब्दो यथाश्रुतः कवर्गचवर्गरूपवर्णदशकपर इति **प्राञ्चः** । चक्रसङ्केताविरोधाय मकारादिदशकपर इत्यपि क्लिष्टं व्याख्यातुं युक्तम् । **'कादिकालीति शक्तीस्तः'** इति **तन्त्रराजे** मतद्वयकर्तृत्वेन शक्तिद्वयस्य प्रसिद्धत्वादिह कादिशब्दः शक्तिपरो मतकर्तृत्वलक्षणया कालीपरो वा । शक्तिशब्दस्तु प्र(म)कारपरत्वेन शक्त्यादिनवपर्यन्तेति श्लोके व्याख्यात एव । **'मः काली क्लेशितः कालो महाकालो यमो रविः'** इति **कोशात्** कालीशब्दोऽपि मकार एव, ककार एव वा काल्यादिशब्दैकदेशः, **'ककारात्तु प्रभञ्जनः'** (७।२९) इत्यत्र कामकलाशब्दैकदेशवत् । न च मन्वस्रे चक्रसङ्केते टकारादय उक्ताः । पूजासङ्केते त्वण्प्रत्याहारी(र)गाश्चतुर्दश वर्णा उक्ता इति परस्परविरोधः कथं न परिहृत इति वाच्यम्, तत्र परिहारस्यासम्भवेन विकल्पस्यैव न्याय्यत्वात्, सम्भवत्यविरोधेऽष्टदोषदुष्टविकल्पस्यायुक्तत्वात् । स्वं निजं रूपं ब्रह्म तस्याऽऽवेशोऽनावृतत्वेन भानम् । भूतोऽहमित्याकारकभान एव भूतावेश इतिव्यवहारदर्श[न]करम् । अत एव सर्वरक्षाकरणनामकं चक्रम्, सर्वात्मत्वविषयकावरणभङ्गस्यैव रक्षापदार्थत्वात् । हस्तयोः पुस्तकमक्षमाला च यासां ता इति

तु सर्वज्ञादीनां ध्यानमुक्तम् । सप्तमीविशेषणे बहुव्रीहाविति हस्तपदस्य पूर्वनिपातः । त्रिपुरमालिनीपदे मल 'मल्ल धारणे' इति धातुतो निष्पन्नोऽपि मालिनीशब्दः पोषणार्थकः, धातूनामनेकार्थत्वादित्याशयेन निर्वक्ति–मात्रिति । त्रिपुरापदे दीर्घस्तु 'छन्दोव्याकरणयोर्विरोधे छन्दो बलीयः' इति परिभाषानुसारात् । विद्याप्तिकामाः शक्तेः पञ्चदश्या विशेषेण शुद्धिस्तदीय[या]वत्फलदानसामर्थ्याधानम् । तदात्मिका प्राकाम्यसिद्धिः । प्राकाम्यपदं च व्याख्यातं **वृद्धैः** –

> **'द्रवः संघातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः ।**
> **व्यक्तोऽव्यक्ततरश्चापि प्राकाम्यं ते विभूतिषु ॥'**

इति । चकारान्महाङ्कुशामुद्रां च पूजयेत् ॥ १५६-१५९ $\frac{१}{२}$ ॥

सप्तमावरणवासनामाह–

> **निरुद्धवायुसङ्घट्टस्फुरितग्रन्थिमूलतः ॥ १६० ॥**
> **हृदयान्तरसंवित्तिशून्यपुर्यष्टकात्मना ।**
> **बीजरूपस्वरकलास्पृष्टवर्गानुसारतः ॥ १६१ ॥**
> **रहस्ययोगिनीर्देवि संसारदलनोज्ज्वले ।**
> **सर्वरोगहरे चक्रे संस्थिता वीरवन्दिते ॥ १६२ ॥**
> **वशिन्याद्या रक्तवर्णा वरदाभयमुद्रिताः ।**
> **पुस्तकं जपमालां च दधानाः सिद्धयोगिनीः ॥ १६३ ॥**
> **शुद्धविद्याविशुद्धिं च भुक्तिसिद्धिं महेश्वरि ।**
> **ईश्वरीं त्रिपुरासिद्धिं पूजयेद् बिन्दुतर्पणैः ॥ १६४ ॥**

प्राणापानयोर्निरोधेनान्यतरस्मिन्नन्यतरस्य सङ्घट्टः **'अपाने जुह्वति प्राणं प्राणेऽपानं तथा परे'** इति **गीतावचने** प्रसिद्धेः । तेन स्फुरितौ कार्योन्मुखतयोच्छूनौ ग्रन्थी ऊर्ध्वाधःस्थितग्रन्थिद्वयं यस्य तादृशान्मूलाधारचक्रादुत्पन्ना इति शेषः । हृदयान्तरे संवित्तिर्ज्ञानं यस्य तत् । मनसैव ज्ञेयं न तु चक्षुरादिबाह्येन्द्रियगम्यमिति यावत् । अत एव शून्यमिव सूक्ष्मतममित्यर्थः । ईदृशं पुर्यष्टकम्–

> **'कर्मेन्द्रियाणि खलु पञ्च तथा पराणि**
> **बुद्धीन्द्रियाणि मनआदिचतुष्टयं च ।**
> **प्राणादिपञ्चकमथो वियदादिकं च**
> **कामश्च कर्म च तमः पुनरष्टमीयुः(मञ्च) ॥'**

इतिश्लोके परिगणितस्थूलपुर्यष्टकसमानजातीयम् । तदात्मना स्वरूपेणोपलक्षिताः । बीजरूपा बिन्दुविशिष्टाः स्वरकला अकारादिस्वरषोडशकम् । [ताभिः] स्पृष्टाश्च ते

वर्गाश्च कचटतपयशाख्याः । एवमष्टानां सबिन्दुकानां वर्गाणामनुसारतस्त[द]नन्तरोच्चारिताः । सूक्ष्मत्वादेव रहस्ययोगिनीपदवाच्या वशिन्याद्याः संसारात्मकरोगहारके चक्रे संस्थिताः । ईश्वरीं रोगहरणसमर्थां चक्रेश्वरीम् । अहन्तेदन्तयोरैक्यबुद्धिः शुद्धविद्या, तस्या अपि विशुद्धिश्चिन्मात्रे विलापनरूपा, यया तां भुक्तिसिद्धिं चकारात् खेचरीमुद्रां च पूजयेत् । वीरवन्दित इति सप्तमी वा सम्बुद्धिर्वा । स्पष्टमन्यत् ॥ १६०-१६४ ॥

अष्टमावरणवासनामाह–

**शक्तित्रयात्मिका देवि चिद्धामप्रसराः शिवा ।**
**संवर्ताग्निकलारूपाः परमातिरहस्यकाः ॥ १६५ ॥**
**पूर्णापूर्णस्वरूपायाः सिद्धेर्हेतुः सुरेश्वरि ।**
**सर्वसिद्धिमया(प्रदा)ख्ये तु चक्रे त्वायुधभूषिते ॥ १६६ ॥**
**स्थिताः कामेश्वरीपूर्वाश्चतस्रः पीठदेवताः ।**
**आयुधा अपि रक्ताभाः सा(स्वा)युधोज्ज्वलमस्तकाः ॥ १६७ ॥**
**वरदाभयहस्ताश्च पूज्या ध्यातृफलप्रदाः ।**
**त्वदीयाश्च मदीयाश्च पुंस्त्रीवश्यविधायिनः ॥ १६८ ॥**
**त्वगसृङ्मांसमेदोस्थिमज्जार्णान्ताः सुरेश्वरि ।**
**द्वितीयस्वरसंयुक्ता एते बाणास्त्वदीयकाः ॥ १६९ ॥**
**वामादीनां पुराणां तु जननी त्रिपुराम्बिका ।**
**परस्वातन्त्र्यरूपत्वादिच्छासिद्धिर्महेश्वरि ॥ १७० ॥**
**एताः सर्वोपचारेण पूजयेत्तु वरानने ।**

त्रिकोणवासनावसरे तिस्रस्तिस्रः शक्तयो या वर्णितास्तदात्मिकाः कामेश्वर्यादयस्तिस्रो देवताश्चैतन्यमरीचिप्रसररूपत्वादेव परमा उत्कृष्टाश्च ता अतिरहस्यरूपाश्च, संवर्तः प्रलयः कल्पस्तत्कालिकाग्निज्वालातुलया ध्यातव्याः । पूर्णापूर्णेति वीप्सयाऽत्यन्तपूर्णतोच्यते । तादृशी सिद्धिर्जीवन्मुक्तिस्तां प्रति तिस्रः समुदिता हेतुः । अत एव तदाधारचक्रस्य सर्वसिद्धिप्रदसंज्ञा । आयुधानां पार्थक्येनाऽऽवरणान्तरत्वशङ्कामपाकुर्वन्नाह–आयुधेति । पीठेति । कामरूपपूर्णगिरिजालन्धरपीठाद्यधिष्ठात्र्य इत्यर्थः । **'अष्टाचक्रा नवद्वारा'** इति **श्रुतौ** बिन्दुचक्रस्य त्रिकोणचक्र एवान्तर्भावमभिप्रेत्य चक्राष्टकत्वकथनमिति ध्वननाय प्रधानदेवतया सह चतस्र इत्युक्तम् । तिस्र इत्येव तु तदर्थ इति तु **प्राञ्चः** । आयुधा अपीत्यत्र वा चतस्र इत्यस्यान्वयः । आयुधशक्तय-

श्चतस्रोऽपि स्वस्वायुधं हस्ताभ्यां शिरसि धृत्वा स्थिताः । आयुधशब्दादाचारार्थे 'क्विबन्तादप्रत्ययात्' इति सूत्रेणाकारः प्रत्ययस्ततष्टाप् । पुंलिङ्गश्छान्दसोऽयं शब्द इति तु **प्राञ्चः** । वस्तुतस्तु अष्टमावरणेऽपि ओड्यानपीठाधिष्ठात्री प्रधानदेवताऽपि पूजनीयेति द्योतनाय चतस्रः पीठदेवता इत्युक्तम् । तथा च **कल्पसूत्रम्–'त्रिकोणे वाक्कामशक्तिसमस्तपूर्वाः कामेश्वरीवज्रेश्वरीभगमालिनीमहादेव्यो बिन्दौ चतुर्थी । तिसृणामासा[मनन्तर]मभेदाय मूलदेव्याः पूजा । कामेश्वर्यादिचतुर्थी नित्यानां षोडशी योगिनीचक्रदेवीनां नवमी बिन्दुचक्रस्था चेत्येकैव । न तत्र मन्त्रदेवताभेदः कार्यः । तन्महादेव्या एव । चतुर्षु स्थानेषु विशेषार्चनमावर्तते'** इति । त्वदीयाः पुंवश्यं मदीयाः स्त्रीवश्यं विदधते । स्त्रीशब्दस्य पूर्वमप्रयोगादेव न समासान्तप्रत्ययः । देवीबाणबीजान्युद्धरति– त्वगिति । त्वग् यकारः, यकाराधिकारे **'त्वग्वाली व्यापको वायुः'** इति **कोशात्** । असृग् रेफः, **'रो रक्तः क्रोधनो रेफः'** इति **कोशात्** । मांसं लकारः, तदधिकारे **'पिनाकी मांससंज्ञकः'** इति **कोशात्** । मेदो वकारः, **'वो मेदो वरुणः सूक्ष्मः'** इति **कोशात्** । अस्थिमज्जार्णवो(यो)रन्तश्चरमः शुक्रवर्णः सकारः पञ्चम इत्यर्थः, शषसाधिकारेषु **'सौख्यनामा कुमारोऽस्थि', 'सुश्रीरूष्मा वृषो मज्जा', 'दक्षपादो भृगुः शुक्रम्'** इति **कोशे**भ्यः । द्वितीयस्वरस्त्रिपुराचक्रेश्वरीमन्त्रे द्वितीयो वर्णः । मातृकाक्रमे चेद् बिन्दुसंयुक्ता इति शेषः । आयुधान्तरबीजोद्धारस्तु चतुर्थपटल एव कृतः । वामाज्येष्ठारौद्र्य एव पुरत्रयं तदम्बिका चक्रेश्वरी । अत्यन्तं स्वातन्त्र्यमेवेच्छासिद्धिः । तुशब्दाद् बीजमुद्राऽपि ॥ १६५-१७०$\frac{१}{२}$ ॥

नवमावरणवासनामाह–

**सर्वानन्दमये देवि परब्रह्मात्मके परे ॥ १७१ ॥**
**चक्रे संवित्तिरूपा च महात्रिपुरसुन्दरी ।**
**स्वैराचारेण संपूज्या त्वहन्तेदन्तयोः समा ॥ १७२ ॥**
**महाकामकलारूपा पीठविद्यादिसिद्धिदा ।**
**महामुद्रामयी देवी पूज्या पञ्चदशात्मिका ॥ १७३ ॥**
**तत्तत्तिथिमयी नित्या नवमी भैरवी परा ।**
**प्रतिचक्रं तु मुद्रास्तु चक्रसङ्केतचोदिताः ॥ १७४ ॥**

सर्वानन्दमयनामकं बिन्दुचक्रं परब्रह्मरूपमेव । तत्र सा परापररहस्ययोगिन्यपि संवित्तिरूपैव, परं तु न वृत्त्यात्मकज्ञानरूपा, किं तु सर्ववृत्तिष्वनुगता वृत्तेर्वृत्तिप्रागभावस्य वृत्तिध्वंसस्य च साक्षिणी वृत्त्योः सन्धौ चानुभूयमानेति ध्वनयन्नाह–अहन्तेति । वेदकविषयिणी वृत्तिरहन्ता । वेद्यविषयिणी त्विदन्ता,

**'यज्ज्ञानमहमो ज्ञानं यज्ज्ञानमिदमस्तथा ।**
**तयोरपि च यज्ज्ञानं [तज्ज्ञानं] विद्धि मे वपुः ।'**

इति परशिवोक्तेः । स्वैराचारेण कर्मकाण्डोक्तनिर्बन्धनिर्मुक्तेनाऽऽचारेण, परशिव-निष्ठमहास्वातन्त्र्यानुभवेन चेत्यर्थः, **'अगणनं कस्यापि'** इति **कल्पसूत्रात्** । महाकामकलारूपत्वं तु प्रागुक्तम् । पीठविद्यादिसिद्धिः प्राप्तिसिद्धिः, कामरूपादिपीठा-धिपत्यवाग्भवादिविद्यादिर(धिप)त्यकामेश्वर्यादिदेवतात्मकत्वप्राप्तिरूपत्वात् । महामुद्रा योनिमुद्रा । **कुलार्णवे** पराप्रासादप्रकरणस्थे **'वनमालां नभोमुद्रां महामुद्रामनुक्रमात्'** इति वचने महामुद्रापदस्यान्तःप्रवेशिताङ्गुष्ठसंहताञ्जलिपरत्वेन साम्प्रदायिकैर्व्याख्यानेऽप्यत्र **प्राचीनै**र्योनिमुद्रापरत्वेन व्याख्यानात् । पञ्चदशात्मिका, अक्षरपञ्चदशात्मिका कामेश्वर्यादितिथिनित्यारूपा वा । 'जायते वर्धते' इत्यादिकागामिदशापञ्चकरूपा वा । अस्तीति दशायाः स्वाभाविकत्वादनुक्तिः । तत्तत्तिथिमयी प्रतिपदादितिथिस्वरूपा । नित्या सादनामककलारूपा । अनवमीति छेदेन सर्वोत्तमा । नवमीति छेदेन नवचक्रेश्वरीणां मध्ये चरमा । भैरवी सर्वेषामपि भयङ्करी, **'भीषाऽस्माद्वातः पवते'** इत्यादि**श्रुतेः** । परापश्यन्त्यादित्रयातीता । पूज्येत्यन्वयः । नवसु चक्रेषु पूजनीयत्वे-नोक्तानां मुद्रादेवीनां वासनास्तु चक्रसङ्केत एव कथिता इत्यर्थः ॥ १७१-१७४ ॥

**नित्यक्लिन्नादिकाश्चैव काम्यकर्मानुसारतः ।**
**चतुरस्रान्तराले वा त्रिकोणे वा यजेत् सुधीः ॥ १७५ ॥**

नित्यक्लिन्ना तृतीया तिथिनित्या । आदिना भेरुण्डादिपरिग्रहः । चकारात् कामेश्वरीभगमालिनीवज्रेश्वरीणाम्, तासामेव त्रिकोणे पूजाप्रकरणे निर्दिष्टत्वात् । ततश्च या तिथिनित्यापूजा पूर्वमुक्ता तस्या यथा प्रधानदेवतायाः प्राथमिक-पूजोत्तरमवसरस्तथा द्वितीयवारपूजोत्तरं कालोऽपि वैकल्पिक इति द्योतनायेह पुनस्तत्कीर्तनम् । **'करशुद्धिं पुनश्चैव'** (८।९१) इत्यादाविव पुनरादिशब्दाभावात्तु न द्विः पूजनं नित्यानां तत्तद्द्विःपाठस्य क्रमद्वैविध्यार्थकत्वेनोपक्षीणत्वाद् अनन्यपर-पुनःश्रवणरूपाभ्यासस्याभावान्न कर्मभेदः । **प्राञ्च**स्तु– कामेश्वरीभगमालिन्योः पूर्वं पूजितत्वादवशिष्टानां त्रयोदशनित्यानामेवेदं पार्थक्येन पूजान्तरमित्याहुः । तन्न, वज्रेश्वर्या अपि पूजितत्वेन द्वादशानामेव पूजापत्तेः, कामेश्वर्यादित्रयस्य नामैक्येऽपि मन्त्रभेदेन देवताभेदस्यावश्यंभावाच्च । तृतीयचक्रेश्वर्यास्त्रिपुरसुन्दरीनामधेयकत्वेऽपि मन्त्रवैलक्षण्येन मूलदेवताया भेदस्यैव सिद्धान्तसिद्धत्वात् । अत एव **कल्पसूत्रे 'तन्महादेव्या एव । चतुर्षु स्थानेषु विशेषार्चनमावर्तते'** इत्युक्तं न पञ्चस्विति । न च तिथिनित्यात्मककामेश्वर्यादीनां तन्त्रभेदेन मन्त्रभेददर्शनेऽपि कथं न भेद इति वाच्यम्, अवैकल्पिकमन्त्रभेदस्यैव देवताभेदव्याप्यत्वात्, तयोर्मन्त्रयोः शाखान्तरन्यायेन विकल्पितत्वात् । एतेन कामेश्वर्यादित्रयस्य तिथिनित्यातो ध्यानभेदोऽपि सङ्गच्छते ।

काम्यकर्मानुसारत इति तु पूर्वमेव व्याख्यातम् । **प्राञ्चस्तु**–तत्रत्यं काम्यकर्मपदं नित्यकर्मपरत्वेन व्याचक्षाणा इहत्यं तु वश्यादिकामनानुरूपवर्णध्यानपुष्पादिभिरिति व्याचक्षते । तत्र वैषम्यं त एव जानते । चतुरस्रान्तराले चतुरस्ररेखाद्वयमध्यवीथ्याम् 'साणिमाद्यष्टकं समात्रष्टकं भवति' इति **श्रुतौ** प्रथमपटले पूजाप्रकरणे चरमपटले वासनाप्रकरणे च रेखाद्वयपक्षस्यैवाऽऽश्रितत्वेन वीथ्यन्तराभावेन विनिगमना-विरहस्यानाशङ्क्यत्वात्, एकरेखापक्षरेखात्रयपक्षयोरप्येकत्र क्लृप्तन्यायेनैकपुरोडा-शायां बहुपुरोडाशायामिव चान्तरालनिर्णयस्य सम्भवात् । भूगृहषोडशारयोर्मध्य-परत्वेनान्तरालपदं **प्राञ्चो** व्याख्यन् । तन्मन्दम्, षोडशारस्यानुपात्तत्वात् । वस्तुतस्तु–चक्रलेखनार्थपरिगृहीतत्रिहस्तभूमौ बिन्दुप्रभृतिवृत्तत्रयान्तलेखनोत्तरमभितः किञ्चिदूना-धिकैकादशाङ्गुलात्मको भूभागोऽवशिष्यते । तस्मिन्नेकरेखात्मकभूपुरपक्षे सा रेखा परिगृहीतभूमेरन्तभागे लेख्या, अन्यथा तावतः परिग्रहस्य वैयर्थ्यापत्तेः । ततश्चानेकरेखापक्षे रेखे तत्तदन्तरेव लेख्ये सम्पद्येते न बहिः । अत एव पर्यन्तरेखादिक्रमेणैव प्रथमद्वितीयादिव्यवहारश्चक्रन्यासे सङ्गच्छते । तथा च प्रकृतेऽन्तरालपदेन प्रथमोपस्थितत्वादाद्यरेखान्तर्भागे परामृष्टे सत्येकरेखात्मक-भूगृहाभिप्रायेण **प्राचां** व्याख्याऽपि साध्व्येवेति ध्येयम् ॥ १७५ ॥

**न्धैः पि तै लि ग ना शि अ धूपैराराध्य देवताः ।**
**चक्रपूजां विधायेत्थं कुलदीपं निवेदयेत् ॥ १७६ ॥**
**अन्तर्बहिर्भासमानं स्वप्रकाशोज्ज्वलं प्रिये ।**
**पुष्पाञ्जलिं ततः कृत्वा जपं कुर्यात् समाहितः ॥ १७७ ॥**

षट्सप्ततितमश्लोकस्य प्रथमश्चरणो व्याकुलाक्षरः । तत्रालिः प्रथमः । स्पष्ट-मन्यत् । शुद्ध्या हेतुं गृहीत्वा प्रथमपटले**ऽस्मदु**क्तरीत्या तर्पयेदित्यर्थः । अ[त्र] गन्ध-पदस्य बहुवचनान्तत्वाद् द्रव्यविशेषपरता । स चोपचारे करणत्वात्तृतीयान्तत्वेन निर्दिष्टः । ते[न] च तत्करणोपचारस्यैव निरूढलक्षणयोपस्थित्या तदाद्युत्कर्षविधिः । न चैवं सति नैवेद्यादिभिरर्चयेदित्यावरणप्राक्कालिकविधीनैं(धौ नै)वेद्यान्तपदस्य वैय-र्थ्यापत्तिः । तालवृन्तान्तैरित्येव वक्तुमुचितत्वादिति वाच्यम्, वैयर्थ्यापत्त्यैव गन्धाद्यु-पचाराणामावरणार्चनात् पूर्वपरभेदेन द्विःसमर्पणस्य कल्पनात् । अत एव **ज्ञानार्णव** आवरणेभ्यः पूर्वं स्मर्यते–**'उपचारैः षोडशभिः सम्पूज्य परदेवताम्'** इति । आवरणानन्तरमपि पुनः स्मर्यते–**'उपचारैः समभ्यर्च्य गन्धपुष्पाक्षतादिभिः'** इति । धूपैरिति तु पूर्ववदेव धूपाद्युपचाराणां समुच्चितोत्कर्षबोधनार्थम् । तेनाऽऽवरणोत्तरं गन्धादिकान् वा पुनः समर्पयेद् धूपादिकानेव वेत्यर्थः । तथा चाऽऽवरणान्ते **कल्पसूत्रम्**– **'पूर्ववद् धूपदीपमुद्रातर्पणनैवेद्यादि दत्त्वा'** इति । अत्राऽऽदिपदेन ताम्बूलादेश्चतुःषष्टिबहिर्भूतस्य परिग्रहः । चक्रपूजापदवाच्यमेतावदेवेति ध्वनयंस्त-दुत्तराङ्गं विधत्ते–चक्रेति । प्रज्वालितकुलद्रव्यात्मको दीपः कुलदीपः । कुलद्रव्यमात्र-

करणकत्वस्य समासावगतनैरपेक्ष्यस्य रथन्तरसामेति वेदे उदकाशना इति लोकेऽपि क्लृप्तत्वात् । तद्वासनं विधत्ते—अन्तर्बहिरिति । तथा च **मन्त्रलिङ्गम्—**

**'अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभो(भम्) ।**
**[त्रिधा दीपं परिभ्राम्य] त्रिधा(कुल)दीपं निवेदयेत् ॥,**

इति । इत्थमितिपदेन चक्रपूजाप्रकरणसमाप्तिध्वननाज्जपस्य तत्प्रकरणे पाठाभाव-ज्ञापनेन पुष्पाञ्जलिं ततः कृत्वेति तु केवलं कालार्थ एव संयोगो नाङ्गाङ्गिभाव इति ध्वननद्वारा जपस्य प्राधान्यमित्यपि सूचितम् । अत एव जपेतिकर्तव्यतासमाप्तौ फलसंयोगोऽपि स्मर्यते—

**'एवं चिन्तयमानस्य जपकाले तु पार्वति ।**
**सिद्धयः सकलास्तूर्णं सिद्ध्यन्ति त्वत्प्रसादतः ॥'**

इति । यत्तु तदनन्तरं पुनरपि पूजाङ्गानां परामर्शो न जपस्य [तत्]सन्दंशान्तःपातेन तदङ्गत्वमप्यस्तीति द्योतनैकफलकम् । तेनार्चनाभावे स्वतन्त्रस्यापि जपस्यार्चनकरणे तदङ्गत्वमिति फलितोऽर्थः । तेन **'बहिरन्तस्थमुभयमवेष्टिसववत्'** इति **शाण्डिल्य-सूत्रोक्त**न्यायेन जपस्य द्विविधः प्रयोग इति सिद्धम् ॥ १७६-१७७ ॥

निगदादिभेदेन जपत्रैविध्यं पञ्चमे पटले प्रतिपादितम् । तेषु निगदोपांशुजपावपेक्ष्य मानसस्यैवोत्तमतायास्तत्रैव प्रतिपादनात्तदितिकर्तव्यतामेव विस्तरेणोपदिशति—

**कूटत्रये महादेवि कुण्डलीत्रियतेऽपि च ।**
**चक्राणां पूर्वपूर्वेषां नादरूपेण योजनम् ॥ १७८ ॥**
**तेषु प्राणाग्निमायार्णकलाबिन्द्वर्धचन्द्रकाः ।**
**रोधिनीनादनादान्ताः शक्तिर्व्यापिकयाऽन्विता ॥ १७९ ॥**
**समना चोन्मना चेति द्वादशान्ते स्थिताः प्रिये ।**
**मूलकुण्डलिनीरूपे मध्यमे च ततः पुनः ॥ १८० ॥**
**सृष्ट्युन्मुखे च विश्वस्य स्थितिरूपे महेश्वरि ।**
**केवलं नादरूपेण उत्तरोत्तरयोजनम् ॥ १८१ ॥**
**शबलाकारके देवि तृतीये द्वादशी कला ।**

आद्यं सहस्रारं विषुनामकं मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतं विशुद्धि लम्बिकाग्रं भ्रूमध्यं चेति नवसु स्थानेषु त्रैलोक्यमोहनादिसर्वानन्दमयान्तानि नव चक्राणि क्रमेण वर्तन्त इति तु चक्रसङ्केते सकलभावनाकथनावसरे प्रतिपादितम् । तेषु त्रीणि त्रीणि चक्राण्येकैकं कूटमित्येवंरीत्या नवचक्राणां कूटत्रयस्य चाभेदात्तत्तत्स्था-

नेष्वेव तत्तत्कूटं विभावनीयम् । ततश्चाकुलचक्रस्य मूलमारभ्य मूलमाधारस्याग्रपर्यन्त-मूर्ध्वोर्ध्वं ककाराद्यक्षरपञ्चकं भूपुरषोडशदलाष्टदलैर्यथाभागमभिन्नं वह्निसमानवर्णं विभाव्यम् । तदग्रे हि या वह्निकुण्डलिनी तिष्ठति तस्याश्च वाग्भवीयहल्लेखान्त्य-कामकलायाश्चाभेदश्चिन्त्यः, तयोरेकस्थानपातित्वात् । एतदीयबिन्द्वर्धचन्द्रादिसूक्ष्माक्षर-नवकं तु केवलनादरूपत्वात् कामराजकूटान्तर्गताक्षरषट्कशरीरघटकनादेन सहाभिन्नं विभावयेत् । कामराजाक्षराणि तु स्वाधिष्ठानमूलमारभ्यानाहताग्रपर्यन्तमूर्ध्वोर्ध्वं चतुर्दशारबहिर्दशारान्तर्दशारैर्यथाभागमभिन्नानि सूर्यसमानवर्णानि प्रथमकूटीयवह्नि-वर्णनादशबलितानि विभावनीयानि । हृदयाग्रे हि या सूर्यकुण्डलिनी तिष्ठति तस्याश्च कामराजकूटीयहल्लेखास्थकामकलायाश्चाभेदं चिन्तयेत्, तयोरप्येकस्थानपातित्वात् । तदीयबिन्द्वादिनवकं तु पूर्ववदुत्तरकूटशरीरघटकनादेन सहाभिन्नं चिन्तनीयम् । ततः शक्तिकूटाक्षराणि चत्वारि शशिसमानवर्णानि पूर्वपूर्वतरकूटीयसूर्यवह्निवर्णनादाभ्यां शबलिततराणि विशुद्धिमूलमारभ्य भ्रूमध्याग्रान्तमूर्ध्वोर्ध्वमष्टकोणत्रिकोणबिन्दुचक्रै-र्यथाभागमभिन्नानि चिन्तनीयानि । आज्ञाग्रे हि या सोमकुण्डलिनी तिष्ठति तस्याश्च शक्तिकूटीयहल्लेखास्थकामकलायाश्चैकस्थाननिपातित्वादभेदमनुसन्दध्यात् । एतदीय-बिन्द्वादिनवकं तु पार्थक्येन ललाटमध्यप्रदेशमारभ्योपर्युपरि नवसु स्थानेषु सकलनिष्कलभावनोक्तप्रकारेण समाहिततयाऽनुसन्दधीतेति समुदायार्थः । प्रथम-द्वितीयकूटयोः सृष्टिस्थितिरूपत्वेन तत्रोत्तरोत्तरसंहाररूपस्य बिन्द्वादिनवकस्या-पह्नवस्तृतीयकूटस्य संहाररूपत्वेन तत्र तस्य स्पष्टं विभावनमिति रहस्यम् । अक्षरार्थो यथा– कूटत्रये वाग्भवादिबीजत्रये, कुण्डलीत्रितये तत्तच्चरमेकारे, ईकाराधिकारे **'वैष्णवी बैन्दवी जिह्मा'** इति **कोशात्** । अत्र जिह्मपदस्य कुण्डलिनीपर्यायमात्रोप-लक्षणत्वात् । तत्तदीकारघटकहार्धकलापरं कुण्डलीपदमिति तु **प्राञ्चः** । चक्राणां त्रैलोक्यमोहनादीनां पूर्वपूर्वेषाम् । सृष्टिस्थितिलयानाख्यास्त्वि(ख्यानां त्वि)ति शेषः । नादरूपेण योजनं तत्तत्कूटीयनादतादात्म्यं त्रिचक्रगतम् । प्राथमिकचक्रत्रयं सृष्टि-चक्रनामकं वाग्भवकूटसम्बन्धिनादाभिन्नमित्यादिरर्थः । चक्रपदमेव चाऽऽवृत्त्या मूलाधारहृदयाज्ञास्थिति(त)कुण्डलिनीवाचकम् । बहुवचनात् कपिञ्जलन्यायेन त्रित्व-लाभः । एताश्च कुण्डलिन्य आधारादिष्वेव सन्तीति **स्वच्छन्दतन्त्रे–'तत्राऽऽधारं च हृद्बिन्दुस्थानं च परिकीर्तितम्'** इति ।

अत्र बिन्दुस्थानपदं भ्रूमध्यपरमिति तु **प्राचीनै**रेव व्याख्यातम् । यद्यपि ग्रहन्यासप्रकरणे बिन्दुस्थाने **'सुधासूतिम्'** (८।२२) इति श्लोकस्थबिन्दुस्थानपदस्य ललाटमध्यपरत्वेन तैरेव व्याख्यातत्वादिहापि तथैव व्याख्यातुं युक्तम्, प्रत्युतं ललाटमध्य एव सोमकुण्डलिन्या अङ्गीकारे तृतीयकूटान्त्यसपरार्धकलाया अपि तन्मते

तत्रैव विभाव्यत्वेन सामानाधिकरण्यादभेदविभावनानुगुण्यात्, तथाऽपि प्रथमद्वितीय-कूटान्त्यसपरार्धकलयोस्तन्मते स्वाधिष्ठानविशुद्ध्योरापतन्त्योराधारहृदयस्थाभ्यां कुण्ड-लिनीभ्यां सह वैयधिकरण्यस्यावश्यंभावादेकांशेन सामानाधिकरण्यलाभोऽप्यप्रयोजक इति तेषामाशयः । ततश्च चक्राणां कुण्डलिनीनां कुण्डलीत्रितये योजनमित्यन्वयः । कुण्डलीत्रितय इत्येकेनैव पदेन हार्धकलानां कुण्डलिनीनां च परामर्शादभेदविभावन-लाभ इति **प्राञ्चः** ।

न च--**'दीपाकारोऽर्धमात्रश्च ललाटे वृत्त इष्यते'** (६/२८) इति वचनाल्ल-लाटस्यैव बिन्दुस्थानत्वं युक्तमिति वाच्यम्, भ्रूमध्यस्योक्तरीत्या बिन्दुचक्रस्थानत्वेन **'कुचन्दनेन शाक्तानां भ्रूमध्ये बिन्दुरिष्यते'** इति तिलकविधिना च तस्यापि बिन्दुस्थानत्वात् । तेषु कूटानां मध्ये प्राणो हकारः, हकाराधिकारे **'[न]कुलीशो निशा प्राणः'** इति **कोशात्** । अग्नी रेफः । मायार्णकला हृल्लेखाक्षरस्थ ईकारः, **'कला तुरीया भेरुण्डा'** इतीकाराधिकारे **कोशात्** । मायार्णपदेनैवेकारः । स एव कलेति तु **प्राञ्चः** । बिन्द्वाद्युन्मनान्तानां नवानां स्वरूपाणि चक्रसङ्केत एव व्याख्यातानि । उन्मना चेति । वर्तत इति शेषः । तेषु प्राणाद्युन्मन्यन्तेषु । एताव(श्च) द्वादशान्ते स्थिता ललाटमध्यादूर्ध्वभागे स्थितत्वेन वर्णिताः । बिन्द्वादिनवकमिति यावत् । तेषां विश्वस्य सृष्ट्युन्मुखे सृष्टिचक्रात्मकभूगृहादिचक्रत्रयाग्रे मूलकुण्डलिनीरूपे मूलाधारस्थकुण्डलिन्य-भिन्नवाग्भवान्त्यस्वरोपरि स्थितानां विश्वस्य स्थितिरूपे मध्यमे च स्थिति-चक्रात्मकमन्वस्रादिचक्रत्रयान्ते मध्यमसूर्यकुण्डलिन्यभिन्नमध्यमकूटान्त्यस्वरोपरि च पुनः श्रुतानां केवलं तत्तदाकारादिविभावनमन्तरेणोत्तरोत्तराभ्यां द्वितीयतृतीयकूटाभ्यां क्रमेण योजनमभेदं च । शबलाकारके वह्निसूर्यसोमवर्णानां मेल[ने]न चित्रितस्वरूपे तृतीये कूटे । द्वादशीकलोन्मनोन्मन्यन्तनवकम् । एतानि चेति शेषः । एवं त्रयाणां कर्मणां **'भावयन्'** (८/१८३) इत्युत्तरश्लोकस्थेन शत्रन्तेनान्वयः । **प्राञ्चस्तु**--द्वादशान्त इत्यत्र द्वादशेति छित्वा हकारादयो द्वादश प्रतिकूटमन्ते स्थिता इति व्याचक्षते । तन्न, यतो बिन्द्वादिनवकमात्रवाचकपदान्तरभावेन द्वादशानामपि नादरूपेणो-त्तरोत्तरयोजनापत्त्या तुरीयकूज(ट)जप एव पर्यवसानं स्यात् । न च तद् भवतामपीष्टम् ।। १७८-१८१$\frac{१}{२}$ ।।

**शून्यषट्कं सुरेशानि अवस्थापञ्चकं पुनः ॥ १८२ ॥**
**विषुवत्सप्तरूपं च भावयन् मनसा जपेत् ।**

मयूरपिच्छस्थचन्द्रकतुल्यानि पञ्च शून्यानि निराकारमेकं शून्यमित्येवं सम्प्रदायलब्धानि षट् शून्यानि । जाग्रत्स्वप्नसुषुप्तितुर्यतुर्यातीताख्याः पञ्चावस्थाः ।

प्राणो मन्त्रो नाडी प्रशान्तं शक्तिः कालस्तत्त्वं चेति वक्ष्यमाणलक्षणानि सप्त विषुवन्ति । चकारान्नवचक्राणि पूर्वोक्तानि, मनसा भावयंस्तच्चिन्तनसमकालं जपेत्, उक्तरीत्या मनसाऽक्षराणि विभावयेदित्यर्थः ॥ १८२-१८२ $\frac{१}{२}$ ॥

क्रमेण शून्याद्यष्टादशकं विवृणोति—

**अग्न्यादिद्वादशान्तेषु त्रींस्त्रीन् त्यक्त्वा वरानने ॥ १८३ ॥**
**शून्यत्रयं विजानीयादेकैकान्तरितं प्रिये ।**
**शून्यत्रयात् परे स्थाने महाशून्यं विभावयेत् ॥ १८४ ॥**

तृतीयहृल्लेखास्थहकारमारभ्योन्मन्यन्ताक्षराणि महाबिन्दुरेक इति त्रयोदशानां स्थानानां मध्ये हकार ईकारोऽर्धचन्द्रः शक्तिर्महाबिन्दुस्तदूर्ध्वं चेति षट्सु स्थानेषु षट् शून्यानि चिन्तयेदित्यक्षरस्वारस्यलब्धः समुदितार्थः । यथा– हकारादीनि पूर्वोक्त-स्थानान्यनुवर्तनेनानूद्य तेष्वेकैकान्तरितमितिपदेन हकारमारभ्य विषमस्थानेषु समस्थानपरित्यागे म[हा]शून्यस्थानविधिः । अनेन विधिना सप्तमादिविषमेष्वपि तत्प्राप्तावग्न्यादीत्यादिना तदपवादः । अग्नी रेफः । तमारभ्य गणनायां द्वादशो महाबिन्दुः । एतेषु स्थानेषु त्रयं त्रयं परित्यज्यैकैकं शून्यं जानीयात् । अर्धचन्द्रशक्ति-महाबिन्दुषु त्रीणि शून्यानि विद्यादित्यर्थः । अस्य विधेः प्राप्त्या(प्ता)प्राप्तविवेकेन शक्तिर्म(म)हाबिन्दो(न्द्वो)रेव पर्यवसानम् । एकैकान्तरितविधेरेव वा हकारेकार-योरेव पर्यवसानम् । शून्यत्रयात् परे महाबिन्दुतोऽप्यूर्ध्वं महाशून्यं निराकारमित्यर्थः । वस्तुतस्तु–अस्मिन् पक्षे रोधिन्याद्यष्टमान्तेष्वित्येवोक्त्वा शून्यद्वयं विजानीयादिति कुतो नोक्तमिति चोद्यमवतरति, तस्मादन्यथा व्याख्येयम् । शून्यत्रयं पूर्ववत् । एकैकान्तरितमित्यप्यग्न्यादिस्थानोद्देशेनैव न पुनः प्राणाद्युद्देशेन, तदनुवृत्तौ मानाभावात् । महाशून्यस्य षष्ठस्य पार्थक्येन निर्देशबलादेव विधिः शून्यद्वयपर एव । एकैकान्तरितं द्वयमिति पाठोपलम्भे तु न कोऽपि विवादः । ततश्च रेफबिन्द्वर्धचन्द्रशक्तिमहाबिन्दुतदूर्ध्वस्थानेषु षट् शून्यानि भवन्ति । अथवोत्तरत्र **'वह्निं मायां च कालं च चेतनामर्धचन्द्रकम्'** इत्यनेन तुर्यस्वरबिन्दोर्मध्ये कालस्य स्थानं पृथगेव गणयिष्यते, तत उन्मन्येव द्वादशी । एतत्पक्षे महाबिन्दावेव महाशून्यं युक्तमुपपद्यते । तेन रेफकालबिन्दुनादान्तोन्मनामहाबिन्दुषु षट् शून्यानीति सिद्धम् । **प्राञ्च**स्तु–रेफमारभ्याऽऽद्वादशान्ताद्रेफो बिन्दू रोधिनी नादान्तो व्यापिकोन्मनेति त्रीन् पुनस्त्रीनेवं षट् त्यक्त्वा शून्यत्रयं शून्यषट्कं जानीयात् । तच्चैकैकान्तरित-मेकश्चैकश्चेति द्वयं द्वयोर्द्वयोर्मध्यस्थमित्यर्थः । तेन हकारेकारयोर्मध्ये रेफस्तत्स्थान एकं शून्यमित्यादिक्रमेण रेफबिन्द्वादिस्थानषट्के शून्यानि भवन्ति । शून्यत्रयाच्छून्य-

षट्कस्य मध्ये परे चरम उन्मनास्थाने षष्ठं महाशून्यं गगनात्मकं भावयेत् । तेनार्थादन्येषां चन्द्रकतुल्यता । तदुक्तं **विज्ञानभैरवभट्टारकैः**–

**'शिखिपक्षचित्ररूपैर्मण्डलैः शून्यपञ्चकम् ।'**
**ध्यायतोऽनुत्तरे शून्यं परं व्योमतनुर्भवेत् ॥'**

इतीति व्याचक्षते । तदिदमतीवासुन्दरम्, अग्नित आरम्भ उन्मनाया द्वादशत्वाभावात् सप्तम्या द्वितीयार्थे लक्षणाया अनुशासनविरुद्धत्वाच्च, एकैकेति वीप्साप्राये पठितस्य त्रींस्त्रीनित्यस्य भिन्नपदत्वायोगाच्च, षस्यं सागं (षण्णां स्थानं) विधाय पुनस्तेष्वेव षट्सु शून्यस्थानविधानस्य सन्दर्भविरुद्धत्वाच्च । पृथिव्यादिषु नवसु विभून् परित्यज्य मूर्तत्वं ज्ञेयमित्युक्ते विभुष्वेव मूर्तत्वमित्यभानात् । न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयमितिवच्छून्यानामग्न्यादिस्थानापत्तिरित्युक्तौ गिरापदानुच्चारणवद्रेफाद्यविभावनापत्तेः । अग्न्यादिद्वादशान्तेष्विति सप्तम्या तेषामेव शून्याधिकरणत्वमित्युक्तौ तु त्रींस्त्रीनित्येतत्सामानाधिकरण्येन तदीयव्याख्याया विरोधः । त्रींस्त्रीनित्येतस्य विशेष्यत्वेन हकारादीनित्येतस्याध्याहारापत्तिश्च, त्रित्रित्यागकीर्तनवैयर्थ्यं च । किं च, त्रयपदस्य षट्कपरत्वेऽत्यन्ताप्रसिद्धलक्षणापत्तिः । शून्यत्रयपदस्याऽऽवृतौ तु स एव द्विवारदोषः । एकश्चैकश्चेति व्याख्याने सरूपाणामित्येकशेषापत्तिः । एकैकव्यवधानार्थकत्वेन सामञ्जस्येऽन्तरपदस्य मध्यार्थकत्वमाश्रित्य तथा व्याख्यानस्य सुतरामयोगः । प्राथमिकेषु पञ्चसु द्विद्विमध्यस्थत्वेऽपि षष्ठस्याक्षरद्वयमध्यस्थत्वायोगश्च । तदर्थं द्वादशपदस्य महाबिन्दुपरत्वोक्तौ तु रेफादिमहाबिन्द्वन्तेषु द्वयोर्द्वयोर्मध्य एकैकं शून्यमिति पर्यवसानादीकारबिन्द्वादिक्रमेण महाबिन्दावेव षष्ठशून्यनिवेशापत्त्या तद्दोषतादवस्थ्यम् । रेफमारभ्य निवेशे प्रथमशून्यस्य परिगणितद्वादशान्यतमद्वयसम्पुटीकरणाभावतादवस्थ्यम् । तदर्थमग्नेरादिर्हकार इति व्याख्यायां प्रभृत्यर्थकादिपदान्तराभावः । महाबिन्दोस्तदा त्रयोदशत्वेन द्वादशपदविरोधश्च । द्वादशस्यान्त इति व्याख्याने चरमावधिवाचकान्तपदान्तराभावः । हकारमहाबिन्दोरेवोपादाने बहुवचनविरोधश्च । एवं शून्यत्रयादिति दिग्योगलक्षणपञ्चम्या निर्धारणषष्ठ्यर्थकत्वमप्यनुशासनविरुद्धमेवेत्यास्तां तावत् ॥ १८३-१८४ ॥

अथावस्थापञ्चकस्य लक्षणैर्वाचकाक्षरैस्तैस्था(स्तत्स्था)नैश्च सह भावनामाह–

**प्रबोधकरणस्याऽथ जागरत्वेन भावनम् ।**
**वह्नौ देवि महाजाग्रदवस्था त्विन्द्रियद्वयैः ॥ १८५ ॥**
**आन्तरैः करणैरेव स्वप्नो मायावबोधनः ।**
**गलदेशे सुषुप्तिस्तु लीनपूर्वस्ववेदनम् ॥ १८६ ॥**

**अन्तःकरणवृत्तीनां लयतो विषयस्य तु ।**
**पूर्वार्णानां विलोमेन भ्रूमध्ये बिन्दुसंस्थिता ॥ १८७ ॥**
**चैतन्यव्यक्तिहेतोस्तु नादरूपस्य वेदनम् ।**
**तुर्यरूपं तस्य चात्र वृत्तार्धादिस्तु संग्रहः ॥ १८८ ॥**
**तुर्यातीतं सुखस्थानं नादान्तादिस्थितं प्रिये ।**
**अत्रैव जपकाले तु पञ्चावस्थाः स्मरेद् बुधः ॥ १८९ ॥**

अथ शून्यषट्कविभावनकथनान्तरमवस्थाविभावनं कथ्यत इति भावः । न पुनरनेन विभावनयोरानन्तर्यमुच्यते, तयोस्तत्तदक्षरविभावनसमकालं व्यवस्थितक्रमत्वेन क्रमान्तरानपेक्षणात् । इन्द्रियद्वयैर्ज्ञानेन्द्रियकर्मेन्द्रिययोरेकैकयोर्युगलानि पञ्च तैर्दशभिरिति यावत् । एतैर्यत्प्रबोधकरणं प्रबोधो ज्ञानेन्द्रियाणां व्यापारः, करणं कर्म, तच्च कर्मेन्द्रियाणां व्यापारः । उभयेषां स्वस्वविषयाभिमुख्यमिति यावत् । तस्य जागरत्वेन जागरपदवाच्यत्वेन भावनं पण्डितपामरसाधारणो व्यवहारोऽस्तीति शेषः । प्रकृते तु सैव जाग्रदवस्था महती चिन्तनीया सर्वकालनिद्राक्षयरूपा वह्नौ प्रकृतत्वात्तार्तीयरेफे तद्बोध्या, तत्स्थान एव च विभाव्येत्यर्थः । **प्राञ्च**स्तु–दशभिरिन्द्रियैः प्रमातुर्व्यवहार एव प्रबोधः । स एव जागरस्तस्य करणं हेतुभूतः प्रकाशस्तस्य जागरत्वेन विभावनं रेफे कार्यमिति व्याचक्षते । आन्तरैः करणैरन्तःकरणचतुष्केण । एवकारेण पूर्वोक्तबहिरिन्द्रियनिवृत्तिः । प्रबोधकरणस्येत्यनुवर्तते, अन्तःकरणस्य ज्ञानकर्मेन्द्रियोभयरूपत्वात् । तेन मनोमात्रजन्यप्रबोधकर्मणोः स्वप्न इति भावनमस्ति । स च मायावबोधनस्तार्तीयेकारबोध्यः । अथापि गलदेश एव सा स्वप्नावस्था चिन्तनीया । अन्तःकरणवृत्तीनां यावान् विषयस्तस्य सर्वस्यापि लयो हि **'सुषुप्तिकाले सकले विलीने'** इत्यादि**श्रुति**षु सिद्धः । अत एव वृत्तीनामपि स्वविषयत्वादेव लयः । वृत्तिलये सति सूक्ष्मरूपेण विद्यमानमप्यन्तःकरणं लीनप्रायमेव । तस्मिन् विशेषणे लीने सति तद्विशिष्ट आत्माऽपि तथैव । ततश्चात्र लीनपूर्वं इत्यत्र पूर्वपदेन विशेषणीभूतमन्तः[करणं] पूर्वत्वोपचारात् । तथा च लीनपूर्वो गलितान्तःकरणो यः स्व आत्मा तस्य वेदनमाविद्यकवृत्तिविषयता, सैव सुषुप्तिरित्युच्यत इत्यर्थः, सुषुप्तौ हि सुखमज्ञानमहं चेत्येतत्त्रितयमात्रविषयिकास्तिस्रोऽविद्यावृत्तयः सन्तीति **वार्तिककारै**रुक्तत्वात् । तासां च परस्परमवच्छेद्यावच्छेदकभावनाङ्गीकारादहमज्ञोऽहं सुखीति प्रत्ययस्य न सुषुप्तिकाले आपत्तिरिति तदाशयविदः । सा च सुषुप्त्यवस्था बिन्दौ स्वनिष्ठवाच्यतानिरूपितवाचकतासम्बन्धेन संस्थिताऽपि भ्रूमध्य एव चिन्तनीया, भ्रूमध्ये बिन्दौ च संस्थितेति वा योजना । स च बिन्दुस्तृतीयकूटस्थ एवेति द्योतनायाऽऽह–पूर्वार्णानां विलोमेनेति । पूर्वमुख(द्ध)ता अर्णाः पूर्वार्णा इति मध्यमपदलोपी समासः । निर्धारणे षष्ठी । पूर्व**चतुःशत्यां** हि

कादिविद्यातृतीयकूटमात्रं प्रातिलोम्येनोद्धृतम् । ततश्च विलोमेन पूर्वोद्धृतवर्णानां मध्ये यो बिन्दुस्तत्र संस्थितेत्यर्थः ।

**प्राञ्च**स्तु–विषयशब्देन विश्वव्याप्तिवाचिना तादृशव्याप्तिमत्तृतीयकूटमुच्यते । तस्य यो बिन्दुस्ततः पूर्वे ये वर्णाश्चत्वारस्तेषां विलोमेनाऽऽनुलोम्येनेति यावत्, विलोमेनैवोद्धृतानां पुनर्विलोमत्वकथनेनाऽऽनुलोम्य एव पर्यवसानात् । ईदृशानुलोम्यक्रमेण तृतीयकूटस्य यद्देहे स्थानं लम्बिकाग्रमक्षरत्रयस्य भ्रूमध्यं च हृल्लेखायास्तत्रत्यायास्तस्या ऊर्ध्वो यो बिन्दुर्ललाटस्थानीयस्तत्र भावनीया सुषुप्तिरिति लापयन्ति । तत्क्लिष्टं बहुतराध्याहारकलितं भ्रूमध्यपदवैयर्थ्यापादकं च । विषयशब्दो हि 'विष्लृ व्याप्तौ' इति धातोर्निष्पन्न इति तु भ्रममात्रम्, 'षिञ् बन्धने' इति धातोः पचाद्यचि व्युपसृष्टत्वे 'परिनिविभ्यः सेवसितसय०' इत्यादिना षत्वे तन्निष्पत्तेः । तुर्यावस्था नाम चैतन्याभिव्यक्तिहेतुर्यो नादस्तस्यानुसन्धानात्मिका दशा । सा बिन्द्वर्धचन्द्ररोधिनीनादेषु भावनीया । वृत्तं चार्धं चाऽऽदिर्यस्य चतुष्कस्य तद्वृत्तार्धादि तस्य तुर्यस्य च संग्रहः सम्बन्धो वाच्यवाचकभाव आधाराधेयभावश्चेत्यर्थः । नादान्तादेरुत्तरत्र परामर्शानुसारादिह चतुष्कलाभः । **प्राञ्च**स्तु–वृत्तस्यार्धमर्धचन्द्रः । तदादित्रिष्वेव तुर्या भावनीयेत्याहुः । तन्न, अर्धचन्द्रस्य वृत्तापेक्षया काल[त] आकारतश्च समांशार्धरूपतयाऽर्धपदस्य पूर्वनिपातापत्तेः । बिन्दोः पूर्वत्रैवान्वय इति पक्षे त्वादौ तदर्धे रोधिन्यामित्यादाविवानन्यगतिकत्वात् स्वीकार्यम् । नादानुसन्धानमन्तरेणैव के[व]लसुखरूपतया स्थानं तुर्यातीतदशा । सा नादान्तादिपञ्चके वाच्यत्वादिना स्थिता भावनीया । एवंरीत्याऽत्रैव तृतीयकूट एव पञ्चावस्थाश्चिन्तयेदित्यर्थः ॥ १८५-१८९ ॥

अथ विषुवसप्तकं सलक्षणमाह–

**योगः प्राणात्ममनसां विषुवं प्राणसंज्ञकम् ।**
**आधारोत्थितनादे तु लीनं बुद्ध्याऽऽत्मरूपकम् ॥ १९० ॥**
**संयोगेन वियोगेन मन्त्रार्णानां महेश्वरि ।**
**अनाहताद्याधारान्तं नादात्मत्वविचिन्तनम् ॥ १९१ ॥**
**विषुवन्नादसंस्पर्शात् नाडीविषुवमुच्यते ।**
**द्वादशग्रन्थिभेदेन वर्णान्नाड्यन्तरे प्रिये ॥ १९२ ॥**

विषुवशब्दस्तकारान्तोऽकारान्तश्च, मत्वर्थीयाधिकारे **'अन्येभ्योऽपि दृश्यते'** इति सूत्रेण विषुशब्दाद्वप्रत्ययमतुपोर्विकल्पेन विधानात्, **'समरात्रिन्दिवे काले विषुवद्विषुवं च तत्'** इति **अग्निपुराणाच्च** । समाभ्यामुभाभ्यां तृतीयस्य व्याप्तिर्हि विषुशब्दस्य

प्रवृत्तिनिमित्तम् । अत एव गवामयनेऽपि पूर्वोत्तरपक्षाभ्यामशीत्युत्तरशताहस्वरूपाभ्यां संदष्टस्याह्नो विषुवत्संज्ञा सङ्गच्छते । साम्यानादरेण व्याप्तिमन्मात्रार्थकं वा विषुव-पदम् । प्रकृतेऽपि तादृशधर्मवत्त्वादेव परस्परसमपरिमाणस्य सम्बन्धः प्राणविषुवम् । त्रयाणामपि हृदयमेव स्थानं प्रसिद्धत्वान्नोक्तम् । तत्रैव विषुवप्रकरणेऽपि शिष्यात्मानं विचिन्तयेदिति । तदुभयत्र शिष्यपदं साधकमात्रपरम्, स्वात्मेत्येव तु तदर्थः । **केचित्** तु भावनास्थानस्य मूलानुक्तत्वेन न्यूनतां मन्यमानाः प्राणशब्दः ककारात्मकवायुपर इति व्याचक्षते । तन्न, ककारस्य त्रैविध्येन भावनास्थले त्रिकोटिकविकल्पापत्तेः । तस्य व्राप्यात्मकत्वाभावाच्च । न च **'ककारात्तु प्रभञ्जनः'** (७/२९) इति वचनात्तथात्वमिति मन्तव्यम्, तत्रत्यककारस्य कामकलाक्षरपरतायाः पूर्वं प्रतिपाद-नात् । न च कामकलयैव स(स्व)राभेदश्चिन्त्यतामिति वाच्यम्, तस्याश्चतुष्ट्वेन चतुष्कोटिकविकल्पापत्तेः । आत्मनो हृदयस्थत्वात्तत्सामानाधिकरण्याय द्वितीयकूटस्थ-कामकलयैवाभेदविभावनमिति चेत्, तर्हि [तत्] घद्व(घट्ट)कुट्यामेव प्रभातं सम्पन्नमिति कृतं प्राणपदस्य निरर्थिकया लक्षणया । शिष्यात्मप्राणमनसामित्यत्र शिष्यपदस्य त्रिष्वप्यन्वयस्य भासन (नं) तत्स्वारस्यविरुद्धं च । वस्तुतस्तु मूलाधारे ब्रह्मेति प्रसिद्धस्य रवस्य वायुकुण्डलीसंयोगात्तद्व्युत्पत्तिः । स एव रवो नाभिपर्यन्तमागत्य पवनेन मनसा च युज्यते । स एव च हृदयमागतः पवनेन बुद्ध्या च संयुज्यते । अतः स एव स्थानत्रये परा पश्यन्ती मध्यमेति नामत्रयं क्रमेण भजत इति तु **सौभाग्यभास्करे** वर्णितम**स्माभिः** । इदमेव च प्राणविषुवपदवाच्यमिति स्थानत्रये मिलित्वैका भावनेति ज्ञेयम् । तेनाऽऽत्मशब्दोऽत्र बुद्धिपरो द्रष्टव्यः । मूलाधारादुत्थितो नादः षट्चक्राणामुभयतो विद्यमानं ग्रन्थिद्वयद्वयं भिन्दन् सुषुम्णानाडीमध्यमार्गेण ब्रह्मरन्ध्रपर्यन्तं यातीति स्थितिः । स च नादो वाग्भवकूटीयो द्वितीयतृतीयकूटाक्षरेषु प्रविशंस्तदभिन्न एवेति । अक्षरद्वयसन्धौ तु तेभ्यो भिन्नोऽपि भवति । यथाऽन्तःकरणवृत्तिपरम्परायामनुप्रविष्टा चित्तत्तद्रूपैव भासते, वृत्तिद्वयसन्धौ तु ताभ्यां भिन्नैव भासत इति ब्रह्मविदामनुभवः । यथा वा मणिमालान्तःप्रविष्टं सूत्रं मणिगर्भेषु भिन्नं न भासते, मणिद्वयसन्धिषु तु पृथग्भासते ।

इयांस्तु विशेषः– सूत्रस्य मणिभ्योऽत्यन्तं भेदात्तद्गर्भेऽपि भेदेनैवावस्थितिः । नादस्य त्वक्षरगर्भे तदभेदेन, अक्षराणामपि नादपरिणामरूपत्वात् । तदिदं मन्त्रार्णानां संयोगेन वियोगेनेत्यनेन प्रतिपादितम् । अत्र मन्त्रपदेन योग्यतया द्वितीयतृतीयकूटे एव परामृश्येते न प्रथमम् । **प्राञ्च**स्तु–संयोगपदं कूटत्रयसमष्टिरूपतुर्यबीजपरम्, वियोगपदं च व्यष्टिरूपबीजत्रयपरमिति व्याचख्युः । तदयुक्तमिति स्पष्टम् । तादृशं नादं वाग्भवान्त्यस्थानमारभ्य हृदयस्थं कामराजकूटान्त्याक्षरपर्यन्तमुद्गतं विभाव्य तस्मिन् स्वजीवात्मनो लयं विचिन्त्य ततः कवलितजीवात्मानं नादमूर्ध्वमुद्गमय्य

ब्रह्मरन्ध्रान्तं प्राप्तं विचिन्तयेत् । तदिदं मन्त्रविषुवमुच्यते । अत्रानाहताद्याधारान्तमित्यत्राऽऽधाराणां मूलाधाराद्याज्ञान्तानामन्तं चरमं ब्रह्मरन्ध्रं तदभिव्याप्येत्यभिविध्यर्थकस्याऽऽङः प्रश्लेषेण व्याख्येयम्, **'हृदयाद् ब्रह्मरन्ध्रान्तं विषुवन्मन्त्रसंज्ञकम्'** इति **तन्त्रान्तरा**नुसारात् । आधारान्तान्तमिति वक्तव्येऽन्तपदमेकमेव तन्त्रेण प्रयुक्तं द्विरन्वयितव्यमिति **प्राचा**मुक्तिस्तु नाऽऽदर्तव्या । विषुवन्नादेत्यत्रादन्तस्तकारान्तो वा पदच्छेदः । अथेदृशस्य नादस्य द्वादशग्रन्थिभेदनपूर्वकं योऽयं सुषुम्णानाडीप्रवेशः स एव नाडीविषुवमित्युच्यते । अत्र वर्णादिति पदं बीजत्रयशिखरवर्तिकामकलाक्षरार्थकत्वेन **प्राचीनै**र्व्याख्यातम् । वाग्भवान्तिमादीकारादित्येव तु युक्तम् । ल्यब्लोपे पञ्चमी । ईकारमारभ्येत्यर्थः ॥ १९०-१९२ ॥

**नादयोगः प्रशान्तस्तत् प्रशान्तेन्द्रियगोचरम् ।**
**वह्निं मायां च कालं च चेतनामर्धचन्द्रकम् ॥ १९३ ॥**
**रोधिनीनादनादान्तान् शक्तौ लीनान् विभावयेत् ।**
**विषुवं शक्तिसंज्ञं तु तदूर्ध्वं नादचिन्तनम् ॥ १९४ ॥**
**तदूर्ध्वं कालविषुवमुन्मनान्तं महेश्वरि ।**
**मुनिचन्द्राऽष्टदशभिस्त्रुटिभिर्नादवेदनम् ॥ १९५ ॥**
**चैतन्यव्यक्तिहेतुश्च विषुवं तत्त्वसंज्ञकम् ।**
**परं स्थानं महादेवि निसर्गानन्दसुन्दरम् ॥ १९६ ॥**

नादयोगो नाडीसम्बद्धो नादो यस्मात् कारणाच्छक्तौ प्रशान्तो लीनो भवति तत्तस्मात् कारणादिदं प्रशान्तविषुवमित्युच्यते । शक्तौ नादस्य लयकथनादेव तत्( ?) पूर्वतत्स्वर्ण(द्वर्णा)नतिक्रम्य तावत्पर्यन्तमलीनो भावनीय इत्यर्थलब्धेरेवार्थं( ?)-तुर्यस्वरबिन्द्वोर्मध्ये स्थलान्तरं चिन्तनीयमिति द्योतनाय तत्साहित्येन तानि स्थानानि गणयति—वह्निमिति । वह्नी रेफः, मायेकारः । कालो लपुप्रपलतरो( ?) मकारः । **'महाकालो यमोऽन्तकः'** इति **कोश**सत्त्वेऽपि महापदत्यागेन कालपदमात्रप्रयोगान्मकारश्रुतिमात्रमिह गृह्यत इति मन्तव्यम् । कालशब्दः कलापर इति तु **प्राञ्चः** । एतत्पक्षे कलाशब्दात् स्वार्थे तद्धितो वाच्यः, परं तु स **स्वच्छन्दतन्त्र**विरुद्धः, **'मकारं बिन्दुमेव च'** इत्युक्तेः । चेतनाऽनुस्वारः, **'अक्रूरश्चेतना नादः'** इति **कोशात्** । अर्धचन्द्रादयो व्याख्यातचराः, एता[न]नुक्रम्येति शेषः । तदिदं प्रशान्तविषुवं प्रशान्तेन्द्रियाणां नियमितेन्द्रियाणां गोचरो विषयः । तरलकरणानामसुलभ इति भावः । गोचरपदे क्लीबत्वमार्षम् । अथ लीयमानस्य दीपादेः सूक्ष्मीभूय पुनः

स्थूलीभावदर्शनात्तदनुसारेण शक्तौ लीनस्य नादस्य पुनरुज्जीवनेन व्यापिकामुत्क्रम्य समनायां लयचिन्तनं शक्तिविषुवम् । ततः पुनरुज्जीव्योन्मन्यां लयः कालविषुवम् ।

**'शक्तिमध्यगतो नादः समनान्तं प्रसर्पति ।**
**तच्छक्तिविषुवं प्रोक्तमुन्मन्यां कालसंज्ञितम् ॥'**

इति **स्वैरतन्त्रात्** । अथायमेव नादो यद्यविच्छिन्नतया सार्धनिमेषत्रयोत्तरं सप्तदशाधिकशतत्रयत्रुटिपरिमितकालपर्यन्तमुच्चरितश्चेत्तदन्ते चैतन्याभिव्यक्तिर्भवति । तदिदं तत्त्वविषुवम्, तत्त्वव्याप्तिकारित्वात् । मुनयः सप्त । चन्द्र एकः । तेन दश सहस्राण्यष्टौ शतानि सप्तदश च त्रुटयो भवन्ति । त्रुटीनां सहस्रत्रयमेको निमेषः । तदुक्तम्–

**'स्वस्थे नरे समासीने यावत् स्पन्दति लोचनम् ।**
**तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः ॥**
**तत्परस्य शतांशस्तु त्रुटिरित्यभिधीयते ।'**

इति । एवं नव चक्राणि षट्शून्यानि पञ्चावस्थाः सप्त विषुवन्तीत्येतत्सप्तविंशतिषू-[कृ]तकोलाहलातीतं तु परं स्थानं स्वाभाविकानन्दसुन्दरमित्यर्थः ॥ १९३-१९६॥

एतच्चिन्तनस्य क्रत्वर्थत्वेऽपि पुरुषार्थतामप्याह–

**एवं चिन्तयमानस्य जपकाले तु पार्वति ।**
**सिद्धयः सकलास्तूर्णं सिद्ध्यन्ति त्वत्प्रसादतः ॥ १९७ ॥**

स्पष्टम् ॥ १९७॥

जपविधिमुपसंहरन् कतिचिद्गुणविधीनाह–

**एवं कृत्वा जपं देव्या वामहस्ते निवेदयेत् ।**
**अनामाङ्गुष्ठयोगेन तर्पयेच्चक्रदेवताः ॥ १९८ ॥**
**त्स्यं सं था द्यं म मां त म देव्यै तु विनिवेदयेत् ।**
**कौलाचारसुसंयुक्तैर्वीरैस्तु सह पूजयेत् ॥ १९९ ॥**

**'गुह्यातिगुह्यगोप्त्री त्वम्'** इतिमन्त्रार्थानुसन्धानपूर्वकं जलप्रक्षेपो जपनिवेदनम् । तदुद्दिश्याधिकरणविधिः । तर्पणोद्देशेन तत्त्वमुद्राविधिः । निवेदनोद्देशेन व्याकुलाक्षर-पादेन प्रथमादित्रयविधिरितरोपलक्षणम् । पादुकाचारसमयाचारोभयपरवीरसाहित्य-विधिना कौलाचारपरिभ्रष्टसाहित्यपरिसंख्या ॥ १९८-१९९ ॥

एवं नित्यपूजां विधाय नैमित्तिकार्चनान्याह–

**नित्यं पुष्यदिने वारे सौरे च परमेश्वरि ।**
**गुरोर्दिने स्वनक्षत्रे चतुर्दश्यष्टमीषु च ॥ २०० ॥**

**चक्रपूजां विशेषेण योगिनीनां समाचरेत् ।**
**चतुःषष्टिर्यतः कोट्यो योगिनीनां महौजसाम् ॥ २०१ ॥**
**चक्रमेतत् समाश्रित्य संस्थिता वीरवन्दिते ।**
**अष्टाष्टकं तु कर्तव्यं वित्तशाठ्यविवर्जितम् ॥ २०२ ॥**
**त्वमेव तासां रूपेण क्रीडसे विश्वमोहिनी ।**

**कुलार्णवे** नैमित्तिकार्चनानि यद्यपि भूयांसि विहितानि सन्ति, तथाऽपि तेष्वत्यन्तमावश्यकान्येतावन्ति । गुरोर्दिने नाथस्य जन्मदिने व्याप्तिदिने च स्वस्य जन्मनक्षत्रे । चतुर्दश्यष्टमीष्विति बहुवचनात् पक्षद्वयेऽपि । विशेषेण नित्यपूजामपेक्ष्य योगिनीवीराधिक्यभक्ष्यभोज्याद्याधिक्यादिना विशेषद्रव्येण वेत्यर्थः । तेन नित्यपूजायां विशेषद्रव्यालाभेऽपि प्रतिनिधिना निर्वाहः सूचितः । उक्तं च **कल्पसूत्रे**–**'मपञ्चकालाभेऽपि नित्यक्रमप्रत्यवमृष्टिः'** इति । चतुःषष्टिरिति । नवानां चक्राणां मध्ये प्रतिचक्रमित्यर्थः । सम्भूय पञ्चार्बुदानि षट्कोट्यः षष्टिर्लक्षा योगिनीनां भवन्ति । अष्टाष्टकं नाम मिथुनभोजनात्मकः कर्मविशेषः । असिताङ्गभैरवादयो मङ्गलनाथादयश्चेत्यप्यष्टौ । अनयोरेकस्मिन्नष्टक एकैकस्मान्मिथुनादष्टावष्टौ कन्या उत्पन्नाः । अन्यस्मिंस्तु पुमांसः । तासां तेषां च परस्परविवादरु(हा)देकैकमिथुनयुगलांशभूतान्यष्टावष्टौ मिथुनानि सम्पन्नानि । सम्भूय चतुःषष्टिः । तेषां नामानि सहस्राक्षरीमन्त्रे तदीयन्यासादिषु च **तन्त्रे** प्रसिद्धानि । तानि च मिथुनानि शिवशक्तिरूपाण्येव महाचतुःषष्टिकोटियोगिनीगणसमष्टिरूपाण्यपि । अत एतद्भोजनमात्रं यथाविभवमवश्यं कारणीयम्, तद्भोजनेतिकर्तव्यता **कुलार्णवे** नैमित्तिकपटले द्रष्टव्या । तुशब्देन तत्रैवोक्तानां श्रीकष्ठाद्येकपञ्चाशन्मिथुनभोजनादीनामिच्छादित्रिशक्तिभोजनान्तानां **ब्रह्माण्डपुराणा**द्युक्तसहस्रभोजनत्रिशतभोजनादिकर्मणां चानावश्यकता ध्वनिता । मध्यमभूगृहे चतुःषष्टिमिथुनानां पूजनमष्टाष्टकमुच्यत इति तु **प्राचां** भ्रम एव । वित्तशाठ्यविवर्जितमिति स्वारस्यविरुद्धं च ॥ २००-२०२$\frac{१}{२}$ ॥

शास्त्रोपसंहारं नान्तरीयकतया ध्वनयन्ननधीयानं दण्डयति–

**अज्ञात्वा तु कुलाचारमयष्ट्वा गुरुपादुकाम् ॥ २०३ ॥**
**योऽस्मिन् शास्त्रे प्रवर्तेत तं त्वं पीडयसे ध्रुवम् ।**
**एवं ज्ञात्वा वरारोहे कौलाचारपरः सदा ॥ २०४ ॥**
**आवयोः शबलाकारं ये च्च वे द्यं द त नि म ।**
**त्वत्प्रथाप्रसराकारास्त्वय्येव परिभावयेत् ॥ २०५ ॥**

**त्वामिच्छाविग्रहां देवीं गुरुरूपां विभावयेत् ।**
**शेषं गुरोर्निवेद्याऽपि पश्चादात्मनि योजयेत् ॥ २०६ ॥**

**कल्पसूत्रे**– **'व्यवहारदेशसात्म्य(स्वात्म्य)'** इत्यारभ्य **'परे च शास्त्रानुशिष्टाः'** इत्यन्तेन ग्रन्थेनोक्त आचारः कुलाचारः । गुरुपादुकामयष्ट्वेत्यत्र संज्ञापूर्वक-विधेरनित्यत्वान्न सम्प्रसारणम् । गुरुप्रसादमन्तरेणैव चौर्यादिना विज्ञायेत्यर्थः । प्रासङ्गिकं समाप्य पूजाकृत्यशेषमुपदिशति–आवयोः शबलाकारं शिवशक्ति-सामरस्यरूपम् । अत्रैकः पादो व्याकुलाक्षरः । शबलपदेनैव शुद्धेर्लभः, द्वितीयस्यैव शिवरूपा(प)[ताया] **स्तन्त्रे** कथनात् । त्वत्प्रथाप्रसर एवाऽऽकारो यासां ता अणिमादिदेवतास्त्वय्येव परिभावयेत् । तास्तेजोरूपमात्रविग्रहा विभाव्य श्रीमूलदेव्याः शरीरे प्रविष्टाश्चिन्तयेत् । ततस्त्वां स्वेच्छया गृहीतवपुषं मूलदेवीं स्वगुरुरूपां ब्रह्मरन्ध्रस्थितनाथरूपेण परिणतां चिन्तयेत् । ततो विशेषार्घ्यपात्रेऽवशिष्टं द्रव्यं प्रत्यक्षाय ब्रह्मरन्ध्रस्थिताय वा गुरवे निवेद्य तदुच्छिष्टं स्वात्मनि जुहुयात् ॥ २०३-२०६ ॥

**योगिनीनां महादेवि ! बटुकायाऽऽत्मरूपिणे ।**
**क्षेत्राणां पतये मह्यं बलिं कुर्वीत हेतुना ॥ २०७ ॥**

**तन्त्रान्तरे** गणपत्यादिकुरुकुल्लादिबलय उक्ताः, तेष्वावश्यका योगिनीबटुकक्षेत्र-पालबलय इत्यर्थः । **कल्पसूत्रे** तु–**'सर्वभूतबलिरेकः'** एवोक्तः । हेतुनेत्यनेन बलिपात्रासा-दनमाक्षिप्यते, विशेषार्घ्यस्य निःशेषीकरणात् । वस्तुतस्तु पाठक्रमबाधेनार्थक्रमादादौ बलिदानं ततो हविःशेषप्रतिपत्तिः । तेन **कल्पसूत्रै**कवाक्यताऽपि सम्पद्यते ॥ २०७ ॥

**द नू द्यं म ब नू खा नू म व पि स्वेच्छाचारपरः स्वयम् ।**
**अंहन्तेदन्तयोरैक्यं भावयन् विहरेत् सुखम् ॥ २०८ ॥**

व्याकुलाक्षरोऽत्र प्रथमश्चरणः । पूजाबहिःकालेऽप्यनवरतं स्वस्य जगतश्चाभेदं विभावयन्नेव लौकिकवैदिकव्यवहारेषु संसरेत् । तेन बाह्यसन्तापानाक्रमणात् सुखैक-रूप एवावतिष्ठते ॥ २०८ ॥

शास्त्रोत्तरार्धमुपसंहारपूर्वकं गोपयति–

**एतत्ते कथितं दिव्यं सङ्केतत्रयमुत्तमम् ।**
**गोपनीयं प्रयत्नेन स्वगुह्यमिव सुव्रते ॥ २०९ ॥**
**चुम्बके ज्ञानलुब्धे च न प्रकाश्यं त्वयाऽनघे ।**
**अन्यायेन न दातव्यं नास्तिकानां महेश्वरि ॥ २१० ॥**

गोपनीयं परशिष्येभ्य इति शेषः, परपुरुषेभ्य एव गोपनीयेन गुह्येनोपमितत्वात् । स्वशिष्येष्वपि कतिचित्परिसंचष्टे–चुम्बक इति । श्रीविद्यामूलमात्रजपपरस्तदीय-

कर्मजालज्ञानरहस्यज्ञानजालयोरनासक्तश्चुम्बकस्तदनुष्ठानरतिहीनः । शास्त्रान्तरज्ञान-साधारण्येनैतच्छास्त्रीयपाण्डित्यमात्रेच्छुर्ज्ञानलुब्धस्तयोः प्रदर्शनीयमपि न, किमुत न देयमिति वक्तव्यम् । न चैवं सति **'ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं श्रयेत्'** इति विधेरननुष्ठानलक्षणमप्रामाण्यमापद्येतेति वाच्यम्, कुरुक्षेत्रे प्रतिग्रहनिषेधस्य तत्र दानविधेश्च परस्परोपमर्दकत्वेऽपि निषेधमतिक्रम्य प्रवृत्तं ब्राह्मणं गृहीत्वा दानविधीनां प्रामाण्योपपादनवदिहापि तत्सम्भवात्, तत्रत्यज्ञानलुब्धपदस्य सानुष्ठानज्ञानलुब्धपर-त्वाद्वा । यस्त्वनुतिष्ठासति जिज्ञासति च तस्मै सच्छिष्यायाप्यन्यायेन गुरूपसदनदीक्षा-नियमस्वाध्यायाध्ययनपरिपालनादिक्रमोल्लङ्घनेन न देयम्, नास्ति परलोक इति बुद्धिमतां तु सुतरां न देयमित्यर्थः ॥ २०९-२१० ॥

एवं शास्त्रमुपदिश्यान्ते न्यूनातिरिक्तदोषपरिजिहीर्षया स्वगुरुं स्मरति–

**एवं त्वयाऽहमाज्ञप्तो मदिच्छारूपया प्रभो ।**

एवं त्वयेति । प्रभो स्वामिनि मदिच्छारूपं धृतवत्या त्वया मदाचार्ययाऽहं त्वच्छिष्य आज्ञप्तोऽस्मि । प्रभुपद[मेतदेव द्योतयति] ॥ २१० $\frac{१}{२}$ ॥

**सङ्केतं योऽभिजानाति योगिनीनां भवेत्प्रियः ॥ २११ ॥**
**सर्वेप्सितफलप्राप्तिः सर्वकाम्यफलाश्रयः ।**
**यतोऽपि दृश्यते देवि ! कथञ्चिन्न विचिन्तयेत् ॥ २१२ ॥**

**॥ इति श्रीनित्याषोडशिकार्णवस्य अष्टमः पटलः ॥**

सङ्केतत्रयज्ञानमार्गेण योगिनीनां दयापात्रं भवति । सर्वेप्सितफलानां प्राप्तिर्यस्य स एव(वं) तादृशश्च भवति । शास्त्रसमाप्तिद्योतनायैतदेव विशेषणमावर्तयन्नाह– सर्वकाम्यफलाश्रय इति । एतच्छास्त्रपरमरहस्यसारं निरूप्य **'भूयः स्यात् प्रोक्तमिलनम्'** इति **शैवशास्त्रान्तिमसूत्रार्थमर्धेन** संक्षिप्याऽऽह– यतोऽपीति । [यतः] सर्वत्र स्वयमेव दृश्यतेऽतः स्वापेक्षया भिन्नं किमपि न चिन्तयेदित्येतदुपासनासारमिति सर्वं शिवम् ॥ २११-२१२ ॥

**इति श्रीभास्करोन्नीते नित्याषोडशिकाम्बुधेः ।**
**व्याख्याने सेतुबन्धाख्ये विश्रामोऽभवदष्टमः ॥**

एवं द्वादशोत्तरशतद्वयश्लोकैरष्टमः पटलः । संहत्य सप्तदशोनोत्तरच[तुःशती । उभयोश्च]तुःशत्योर्योगेन शास्त्रस्याष्टौ शतानि सार्धत्रयोदशाधिकानि श्लोकानां भवन्ति । तेषु **'गणेशग्रहनक्षत्र'** (१।१) इत्यादिका द्वादशश्लोकी मङ्गलाचरणरूपा तन्त्राद् बहिर्भूतैवेति तत्रैवोक्तम् । यतोऽपीत्यन्तिममर्धं च बहिर्भूतमित्यष्टशती-समाख्योपपन्ना, एकश्लोकाधिक्यस्याल्पान्तरत्वात्, पञ्चाशल्लिपिभिरिति व्यवहार

